भृत्या नरं समाश्रित्य ययुः शोचनीयताम् । तत्सुतं तु समालम्ब्य मनुं भुवनवन्द्यताम्[1] ॥२८३॥

वास्याश्रितः किल समाश्रयणीयलभ्यां निन्द्यां गतिं व्रजति सर्वजनार्चितां वा ।
गच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः पुष्पाश्रयी सुरशिरोभुवि रूढिमेति ॥२८४॥

सिद्धः सिद्धः सदेहोयमिति शब्दं सुरा दिवि । प्राघोषयंस्ताडयन्तः[1] पटहं यत्र वासरान् ॥२८५॥

उत्पलाक्ष इति ख्यातिं पेशलाक्षतया[1] गतः । तत्सूनुस्त्रिंशतं सार्धां वर्षाणामन्वशान्महीम् ॥२८६॥

तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं[1] पुरं व्यधात् । क्ष्मां सप्तत्रिंशतिं[2] वर्षाण्यत्र मासांश्च भुक्तवान् ॥२८७॥

हिरण्यकुल इत्यस्य हिरण्योत्सकृदात्मजः । षष्टिं षष्टिं वसुकुलस्तत्सूनुरभवत्समाः ॥२८८॥

अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः । तस्यात्मजोभून्मिहिरकुलः कालोपमो नृपः ॥२८९॥

दक्षिणां सान्तकामाशां स्पर्धया जेतुमुद्यता । वह्निपातुत्तरहरिद्यमारान्यमिवान्तकम् ॥२९०॥

सांनिध्यं यस्य सैन्यान्तर्हन्यमानाशनोत्सुकान्[1] । अजानन्गृध्रकाकादीनग्रयाने धावतो जनाः ॥२९१॥

दिवारात्रं हतप्राणिसहस्रपरिवारितः । योभून्नृपालवेतालो विलासभवनेष्वपि ॥२९२॥

बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवम् । न बभूव नृशंसस्य यस्य घोराकृतेर्भृतः ॥२९३॥

स जातु देवीं संवीतसिंहलांशुक[1]कञ्चुकाम् । हैमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना ॥२९४॥

सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः । इति कञ्चुकिना पृष्टेनोक्तो यात्रामदात्ततः ॥२९५॥

तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसंगमः । यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः ॥२९६॥

स सिंहलेन्द्रेण समं संरम्भादुदपाटयत् । चिरेण चरणस्पृष्टप्रियालोकनजां व्यथाम्[1] ॥२९७॥

दूरात्तत्सैन्यमालोक्य लङ्कासौधैर्निशाचराः । भूयोपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे ॥२९८॥

स तत्रान्यं नृपं दत्त्वा तीव्रशक्तिरुपाहरत्[1] । पटं यमुषदेवाख्यं मार्तण्डप्रतिमाङ्कितम् ॥२९९॥

व्यावृत्य चोलकर्णाटलाटादींश्च नरेश्वरान् । सिन्धुरानिव गन्धेभो गन्धेनैव व्यदारयत् ॥३००॥

तस्मिन्प्रयाते प्राग्रेभ्यः शशंसुस्तत्पराभवम् । नगर्यो नरनाथेभ्यस्त्रुटदट्टालमेखलाः ॥३०१॥

काश्मीरं द्वार[1]मासाद्य श्वभ्रभ्रष्टस्य दन्तिनः । श्रुत्वा स आसजं घोषं तोषरोमाञ्चितोभवत् ॥३०२॥

तदाकर्णनसंरम्भे सहर्षोथ विरुद्धधीः । शतमन्यद्गजेन्द्राणां हठेन निरलोठयत् ॥३०३॥

स्पर्शोत्क्रान्ति यथा पापं कीर्तनं पापिनां तथा । संवृण्वतेतो नोक्ता तस्यान्यापि नृशंसता ॥३०४॥

को वेत्त्यद्भुत[1]चेष्टानां कृत्यं प्राकृतचेतसाम् । धर्मं सुकृतसंप्राप्तिहेतोः सोपि यदाददे ॥३०५॥

श्रीनगर्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरम् । होलडायां[1] स मिहिरपुराख्यं पृथुपत्तनम् ॥३०६॥

अग्रहाराञ्जगृहिरे गान्धारा ब्राह्मणास्ततः । समानशीलास्तस्यैव ध्रुवं तेपि द्विजाधमाः ॥३०७॥

२८३. [1]) Thus corr. by $A_2$ from $A_1$ °वन्द्यताम्. २८५. [1]) Thus $A_3$; $A_1$ प्रोद्घोषयन्ताड°. २८६. [1]) Thus corr. by later hand from $A_1$ पेशलाक्षितया. २८७. [1]) $A_2$ gloss स्वकीय, with note स्वनामाङ्कुरमणीरित्यपि पाठः.—[2]) A सप्तर्षि°. २९१. [1]) $A_2$ gloss हन्यमानानां लोकानां वदनं । अशनं । तदोत्सुकाः. २९४. [1]) $A_2$ gloss सिंहलद्वीप. २९७. [1]) Thus corr. by $A_2$ from व्यथम्. २९९. [1]) Thus corr. by $A_2$ from $A_1$ °शक्तिरपा°. ३०२. [1]) $A_2$ gloss तदारभ्य हस्तिवधः इति प्रसिद्धः प्रवेशपर्वते येन आघातो मिहिरकुलः. ३०५. [1]) $A_2$ वेत्स्यद्भुत°. ३०६. [1]) Emended; A होलाडायां. Cf. vii. 1228. viii. 733. 1432 (C.). 2909 (C.). 3216 (C.).

मेघागमः फणिभुजां प्रथितान्धकारः प्रीणाति हंसममलो जलदात्ययश्च ।
प्रीतेः समानरुचितैव भवेन्निदानं दातुः प्रतिग्रहकृतश्च परस्परस्य ॥३०८॥

स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः । भूरिरोगार्दितवपुः प्राविशज्जातवेदसम् ॥३०९॥

सोयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः । देहत्यागेस्य गगनादुच्चचारेति भारती ॥३१०॥

इत्यूचुर्ये मते तेषां स एव परिहारदः । खण्डयन्वीतघृणतामग्रहारादिकर्मभिः ॥३११॥

आक्रान्ते दारदैर्भौट्टैर्म्लेच्छैरशुचिकर्मभिः । विनष्टधर्मे देशेस्मिन्पुण्याचारप्रवर्तनम् ॥३१२॥

आर्यदेश्यान्स संस्थाप्य व्यतनोद्दारुणं तपः । संकल्प्य स्ववपुर्दाहं प्रायश्चित्तक्रियां व्यधात् ॥३१३॥

अत एवाग्रहाराणां सहस्रं प्रत्यपादयत् । गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे ॥३१४॥

क्षुरखड्गासिधेन्वादिपूर्णेयःफलके तदा । वह्निप्रदीप्ते सहसा पर्यन्ते स्वां तनुं जहौ ॥३१५॥

इत्येतस्मिञ्जनाम्नाये केचिद्व्यभिचारिणि । प्राहुः पुरुषसिंहस्य क्रौर्यं तस्याविगर्हितम् ॥३१६॥ कुलकम् ॥

ये नागेन रुषा दग्धे नगरे प्राभवन्खशाः । तेषां नाशाय वृत्तान्तं पूर्वोक्तं जगदुः परे ॥३१७॥

अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीम् । अशक्योन्मूलना मध्ये शिलाभूद्विघ्नकारिणी ॥३१८॥

ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः । यक्षः शिलायां बलवान्ब्रह्मचार्यत्र तिष्ठति ॥३१९॥

साध्वी स्पृशति चेदेनां निरोद्धुं न स शक्नुयात् । ततोपरेद्युः स्वप्नोक्तं शिलायां तेन कारितम् ॥३२०॥

तासु तासु कुलस्त्रीषु व्यर्थयत्नास्वथाचलत् । चन्द्रवत्याख्यया स्पृष्टा कुलाल्या सा महाशिला ॥३२१॥

कोटित्रयं नरपतिः क्रुद्धस्तेनागसा ततः । सपतिभ्रातृपुत्राणामवधीत्कुलयोषिताम् ॥३२२॥

इयं चान्यमते ख्यातिः प्रयते तथ्यतः पुनः । अभक्ष्या सनिमित्तापि प्राणिहिंसा गरीयसी ॥३२३॥

एवं क्षुद्रोपि यद्राजा संभूय न हतो जनैः । तत्कर्म कारयद्भिस्तैर्व्रतैरेव रक्षितः ॥३२४॥

प्रजापुण्योदयैस्तीव्रैश्चिरात्तस्मिन्क्षयं गते । बकस्तत्प्रभवः पौरैः सदाचारोभ्यषिच्यत ॥३२५॥

तत्रापि पूर्वसंस्कारादुच्चैःश्वासं दधे जनः । श्मशानविहिते लीलावेश्मनीव नृपास्पदे ॥३२६॥

अतिसंतापदाज्जातः स जनाह्लादकोभवत् । जलौघो जलदश्यामात्तपात्ययदिनादिव ॥३२७॥

लोकान्तरादिवायातं मेने धर्मं तदा जनः । अभयं च परावृत्तं प्रवासाद्गहनादिव ॥३२८॥

स बकेशं बकश्वभ्रे बकवत्यापगां तथा । कृत्वा पुरं परार्ध्यश्रीर्लवणोत्साभिधं व्यधात् ॥३२९॥

तत्र त्रिषष्टिर्वर्षाणां सत्रयोदशवासरा । अत्यवाह्यत भूपेन तेन पृथ्वीं प्रशासता ॥३३०॥

अथ योगेश्वरी काचिद्भट्टाख्या रजनीमुखे । कृत्वा कान्ताकृतिं काम्यामुपतस्थे विशां पतिम् ॥३३१॥

तया मनोहरैस्तैस्तैर्व्यञ्जनैर्ग्लपितस्मृतिः । स यागोत्सवमाहात्म्यं द्रष्टुं हृष्टो न्यमन्त्र्यत ॥३३२॥

पुत्रपौत्रशतोपेतः प्रातस्तत्र ततो गतः । चक्रवर्ती तया निन्ये देवीचक्रोपहारताम् ॥३३३॥

कर्मणा तेन सिद्धाया व्योमाक्रमणसूचकम् । जानुमुद्राद्वयं तस्या दृषद्यद्यापि दृश्यते ॥३३४॥

---

३०८. [1]) Edd. add before this verse the following verses, not found in A G R: भगिनीवर्गसम्भोगनिर्लज्जाम्लेच्छचेष्टाः । स्नुषासङ्गतिसक्ताश्च दारदाः सन्ति पापिनः ॥ वस्तुभाण्डैस्तथा भाण्डा भार्याविक्रयकारिणः । परोपभोगितास्तेषां निर्लज्जास्तर्हि जीवितः ॥—[2]) $A_2$ °निभिर्त.—[3]) Thus $A_2$; $A_1$ °भहहतथ. ३१०. [1]) Thus corr. by $A_2$ from $A_1$ न च. ३२९. [1]) Emended; A R G एकस्त°. ३२६. [1]) G च्चकाचासं. ३३२. [1]) Thus corr. by $A_2$ from $A_1$ °हरैस्तैस्तैर्वे°.

देवः शतकपालेशो मातृचक्रं शिला च सा । खेरीमठेषु तद्वार्तास्मृतिमद्यापि यच्छति ॥३३५॥
देव्या कुलतरोः कन्दः क्षितिनन्दोवशेषितः । ततस्तस्य सुतस्त्रिंशद्वत्सरानन्वशान्महीम् ॥३३६॥
द्विपञ्चाशतमब्दान्क्ष्मां द्वौ च मासौ तदात्मजः । अपासीद्वसुनन्दाख्यः प्रख्यातस्मरशास्त्रकृत् ॥३३७॥
नरः षष्टिं तस्य सूनुस्तावतीमक्षश्च तत्सुतः । वर्षानभूद्विभुर्योमं चाक्षवालमकारयत् ॥३३८॥
जुगोप गोपादित्योथ क्ष्मां सद्वीपां तदात्मजः । वर्णाश्रमप्रत्यवेक्षाकल्पितादियुगोदयः ॥३३९॥
सखोलखागिकाहाडिग्रामस्कन्दपुराभिधान् । शमाङ्गासंमुखांश्चाग्रहारान्यः प्रत्यपादयत् ॥३४०॥
ज्येष्ठेश्वरं प्रतिष्ठाप्य गोपाद्रावार्यदेशजाः । गोपाग्रहारान्कृतिना येन स्वीकारिता द्विजाः ॥३४१॥
भूक्षीरवाटिकायां[1] यो निर्वास्य लशुनाशिनः । खासटायां[2] व्यधाद्विप्रांश्छिन्नाचारविवर्जितान् ॥३४२॥
अन्यांश्चानीय देशेभ्यः पुण्येभ्यो वच्चिकादिषु । पावनानग्रहारेषु ब्राह्मणान्स न्यरोपयत् ॥३४३॥
उत्तमो लोकपालोयमिति लक्ष्म प्रशास्तिषु । यः प्राप्तवान्विना यज्ञं चक्षमे न पशुक्षयम् ॥३४४॥
सषड्दिनां[1] वर्षषष्टिं पालयित्वा स मेदिनीम् । भोक्तुं पुण्यपरीपाकं लोकान्सुकृतिनामगात् ॥३४५॥
गोकर्णस्तत्सुतः क्षोणीं गोकर्णेश्वरकृद्दधे । अष्टपञ्चाशतं वर्षांस्त्रिंशत्याह्नां विवर्जितान् ॥३४६॥
सूनुर्नरेन्द्रादित्योस्य खिङ्खिलान्याभिधोभवत् । भूतेश्वरप्रतिष्ठानामक्षयिण्याश्च कारकः ॥३४७॥
दिव्यानुग्रहभागुग्राभिधो यस्य गुरुर्व्यधात् । उग्रेशं मातृचक्रं च प्रभावोद्दामविग्रहः ॥३४८॥
भूत्वा षट्त्रिंशतं वर्षाञ्छतं चाह्नां विभुर्भुवः । स दैवैरनघांल्लोकानासदत्सुकृतैः कृती ॥३४९॥
युधिष्ठिराभिधानोभूदथ राजा तदात्मजः । यः सूक्ष्माक्षतया लोकैः कथितोन्धयुधिष्ठिरः ॥३५०॥
तेन क्रमागतं राज्यं सावधानेन शासता । अनुजग्मे मितं कालं पूर्वभूपालपद्धतिः ॥३५१॥
काले कियत्यपि ततो यात्यभाग्यवशादसौ । सिषेवे श्रीमदक्षीबो यत्किंचनविधायिताम् ॥३५२॥
नान्वग्रहीदनुग्राह्यान्स संजग्राह धीमतः । न प्रवृत्तोपचाराणां प्रागिवासीत्प्रियंकरः ॥३५३॥
दुर्विद्यपर्षदा साकं निर्विशेषं सभाजितैः । परिजह्रे[1] स दुर्जातो जाततेजोवधैर्बुधैः ॥३५४॥
सर्वत्र समदृष्टित्वं गुणोयं खलु योगिनः । अकीर्तिहेतुः स महान्दोषस्तु पृथिवीपतेः ॥३५५॥
नयद्भिर्गुणतां दोषान्दोषतां च गुणान्विटैः । स लुप्तप्रतिभश्चक्रे शनकैः स्त्रीजितोपमः ॥३५६॥
वाङ्मर्मच्छेदिनी दीर्घं नर्म शश्वत्कथा विटैः । अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ॥३५७॥
पुरो मिथ्या गुणग्राही परोक्षं दोषदर्शकः । असुस्थिरादरो भूभृत्सोभूद्द्वेष्योनुजीविनाम् ॥३५८॥
मनागनवधानेन स्खलतस्तस्य भूपतेः । इत्थं राज्यस्थितिरगादचिरेण विसूत्रताम् ॥३५९॥
उपेक्षितस्य निर्द्रोहैर्[1]अयत्नाजितात्मनः । अथ लब्धबलास्तस्य नाशाय द्रोहिमन्त्रिणः ॥३६०॥

३३९. [1]) Thus corr. by $A_2$ from $A_1$ प्रत्यवीक्षा°. ३४०. [1]) $A_2$ gloss आडेवारु.—[2]) $A_2$ gloss खम्बोरु.—[3]) $A_2$ शमाङ्गासा, with gloss हिमन् आसन. ३४१. [1]) $A_2$ gloss गोपकारु इति प्रसिद्धस्थले. ३४२. [1]) $A_2$ gloss भुकछेवारु इति भाषया प्रसिद्धस्थले.—[2]) $A_2$ gloss खोवरबले.—[3]) Emended; A R व्यधाश्चि°; G व्यधाग्नि°. ३४३. [1]) $A_2$ gloss वच्चिग्रामादिषु. ३४५. [1]) $A_2$ सपञ्चमासां. ३४७. [1]) Thus corr. from $A_1$ °ण्याश्च by $A_2$ which adds the glosses अविच्छिन्नजलदानप्रवाहिनी धर्मभक्तिरिति च प्रसिद्धा, and अक्षयिण्या इति पार्वतीयदेशासौ कश्मीरोपकण्ठवर्तिनि अछयीण्वा इति प्रसिद्धा: यासु ($A_2$ यस्यां) सततं [illegible]-भोजनं विधीयते. Of a third gloss by $A_2$ which has been smeared over with ink, only the following can be read: अद्यापि यद्वनिरक्षयि——.—[2]) Thus corr. by $A_2$ from $A_1$ कारकः. ३५०. [1]) Thus $A_2$; $A_1$ सूक्ष्माक्षितया. ३५४. [1]) Thus $A_2$; $A_1$ °जिह्रे. ३६०. [1]) $A_2$ gloss मंत्रिभिः.

प्रभोः संकोचिताशेषैश्वर्यैर्निरवग्रहम् । राज्यं जिहीर्षवो भूपाश्चक्रिरे भूम्यनन्तराः ॥३६१॥
तदनुमानिताः सर्वे ते ते[1] मामाविशाभयाः । आसन्राज्यामिषं प्राप्तुं श्येना इव ससंभ्रमाः ॥३६२॥
अथोत्पन्नभयो राजा न शशाक निजस्थितिम् । व्यवस्थापयितुं यन्त्रच्युतां कारुः शिलामिव ॥३६३॥
चिरं क्षुण्णे क्षमाभर्तुस्तस्मिन्राज्ये विसंस्थुले । उपायोऽस्य स्थितेर्हेतुर्नैकः कथन[1] पप्रथे ॥३६४॥
दृष्टदोषान्स्थितिं प्राप्तो[1] हन्यादस्मानसंशयम् । विचिन्त्येति न सामास्य जगृहुर्निजमन्त्रिणः ॥३६५॥
अथ निदधुस्ते संनद्धा बलैर्नृपमन्दिरं व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभीः संतन्वन्तो दिवापि तमोवृताः ॥३६६॥
तैर्गन्तुं स्वभुवो निवारितरणैर्दत्तावकाशो[1] ततस्त्यक्तश्रीर्नगरान्तरात्स नृपतिस्तात्पर्यतो निर्ययौ ।
आजानेयरजोऽङ्कुराजललनाप्रस्थानसंदर्शनक्षुभ्यत्पौरजनाकुलाजकणिकाकीर्णेन राजाध्वना ॥३६७॥
राज्याच्च्युतस्य बहुशः परिवाररामाकोशादिव तस्य रिपवो व्रजतोपजह्रुः ।
दूर्वीदृशो विगलितस्य नगेन्द्रभृङ्गाद्धक्कीफलादिव रभसादिव गण्डशैलाः ॥३६८॥
रम्यैः शैलपथैर्व्रजन्भ्रमवशाच्छायां श्रितः शाखिनामासीनप्रचलायितेन सुमहद्दुःखं विसस्मार सः ।
दूरात्पामरपूत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्त्वभूद्दृष्टो निर्झरवारिभिः सह मनः श्वभ्रे निमज्जन्निव ॥३६९॥
नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्वीरम्भःक्षोभप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
क्रान्त्वा श्रान्तैर्बिसकिसलयच्छायमुग्धाङ्कुलैस्तैरभ्युत्तङ्गे[1] निहिततनुभिर्मूर्छितं तस्य दारैः ॥३७०॥
पर्यन्ताश्रितटाङ्किलोक्य सुचिरं दूरीभवन्मण्डलं ग्रामागामन्त्रयितुं जहत्सु नृपतेर्दारेषु पुष्पाञ्जलीन् ।
क्षोणीपृष्ठविकीर्णपक्षतिमनस्तुण्डं स्वनीडस्थितैः लावेगं गिरिकन्दरासु पततां वृन्दैरपि क्रन्दितम् ॥३७१॥
स्तनयुगतलनद्धव्यस्तसूर्यांशुकानां विकचलनविलोलं वीक्ष्य दूरात्स्वदेशम् ।
अवहत रुदतीनां मौलिविन्यस्तहस्तं पथि नृपवनितानामश्रुभिर्निर्झराम्भः ॥३७२॥
प्रीतिस्थैर्यैरुचितवचनाक्षिप्तया शोकशान्त्या निर्व्याजाज्ञाग्रहणगुरुभिस्तैश्च तैश्चोपचारैः ।
तस्य स्नेहादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः ॥३७३॥

इति काश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः ॥
चतुर्दशाधिके वर्षसहस्रे नव वासराः । मासाश्च विगता ह्यस्मिन्नेकविंशतिराजसु ॥

---

३६२. [1]) $A_1$ had written च after ते ते; struck out. $A_2$ तदनुमानिता वैरिनृपा मामा°. ३६३. [1]) $A_2$ gloss यन्त्रवत् इति सेनायां कुद्दालो प्रसिद्धम्. ३६४. [1]) Thus corr. by $A_2$ from $A_1$ कस्य न. ३६५. [1]) Thus corr. by $A_2$ from $A_1$ प्रासान्ह°. ३६७. [1]) $A_2$ gloss धर्मद्वारे. ३६८. [1]) Thus corr. by $A_2$; $A_1$ °रामा:कौ°.—[2]) Thus corr. by $A_2$ from $A_1$ °विजहु:—[3]) $A_2$ विचलितस्य. ३६९. [1]) G has *sec. manu* the *v. l.* आसीनः प्रलयायितेन.—[2]) Thus $A_2$; $A_2$ gives the *v. l.* महत् for मनः between the lines and another *v. l.* पुनः in margin. ३७०. [1]) $A_2$ अभ्युत्सङ्गे. ३७१. [1]) Thus $A_2$; $A_1$ पर्वेस्ता°.—[2]) $A_2$ विपत्सु. ३७२. [1]) $A_2$ बलमबलानां, with gloss अबलानां बलं कर्तुं.—[2]) $A_2$ gloss कर्म. *Colophon.* [1]) $A_2$ adds before this the note रा १८ ॥ वं ॥ १७२ ॥.—[2]) $A_2$ चतुर्विंशा°.—[3]) Thus $A_2$; $A_1$ °नद्यविंशति रा°.

## ॥ द्वितीयस्तरङ्गः ॥

विहितमजगोशृङ्गामाभ्यां धनुर्घटितं मया नरकरटिनोर्देहार्धाभ्यां गणं परिगृह्णतः ।
विविधघटनावाल्लभ्यानां निधेरुचितां विभोर्जयति ललनापुंभागाभ्यां शरीरविनिर्मितिः ॥१॥
भूयोराज्यार्जनोद्योगस्तेनात्यज्यत भूभुजा । जरसा शमिवाण्या च कर्णमूलमवाप्तया ॥२॥
अनयाद्विनयोदात्तः समं स्वविषयेण तान् । विषयान्वशिनामग्र्यः स तान्पञ्चापि विस्मृतिम् ॥३॥
भावराज्येच्छया दुर्गागलिकायां[1] स्वमन्त्रिभिः । कालेन स्थापितो बद्धुस्त्यभ्यधायि तु कैरपि ॥४॥
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् । विक्रमादित्यभूभर्तुर्ज्ञातिरत्राभ्यषिच्यत ॥५॥
शकारिर्विक्रमादित्य इति स भ्रममाश्रितैः । अन्यैरत्रान्यथालेखि विसंवादि कदर्थितम् ॥६॥
इदं स्वभेदविधुरं हर्षादीनां धराभुजाम् । कंचित्कालमभुङ्क्तोज्ज्यं ततः प्रभृति मण्डलम् ॥७॥
असपूर्वापि तेनोर्वी सपूर्वेव महीभुजा । लालिता हृदयज्ञेन पत्या नववधूरिव ॥८॥
भुक्त्वा द्वात्रिंशतं वर्षान्भुवं तस्मिन्दिवं गते । जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत ॥९॥
पितुरेव समं कालं वृद्धिहेतोः स दिद्युते । विधुवत्पूर्णशीतांशुरिव शीतेतरार्चिषः ॥१०॥
अथ वाक्पुष्टया सार्धं देव्या दिव्यप्रभावया । भुवं तत्प्रभवो भुञ्जंस्तुञ्जीनोरञ्जयत्प्रजाः ॥११॥
दंपतिभ्यामियं ताभ्यामभूष्यत वसुंधरा । गङ्गामृगाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः ॥१२॥
मण्डलं साध्वधत्तां तौ नानावर्णमनोरमम् । शतह्रदापयोवाहौ माहेन्द्रमिव कार्मुकम् ॥१३॥
चक्राते च महाभागौ विभ्रमाभरणं भुवः । तुञ्जेश्वरं हरावासं कतिकाख्यं च पत्तनम् ॥१४॥
कश्मिन्मडवराज्यान्तःस्थाने चण्डातपोज्ज्वले[1] । तत्प्रभावेण फलितं वृक्षैस्तत्क्षणरोपितैः ॥१५॥
नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः[1] । द्वैपायनमुनेरंशस्तत्काले चन्दकोऽभवत् ॥१६॥
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता । प्रजासु दुःसहा जातु व्यापदैवी[1] व्यजृम्भत ॥१७॥
पाकोन्मुखशरच्छालिच्छन्नकेदारमण्डले । मासि भाद्रपदेऽकस्मात्पपात तुहिनं महत् ॥१८॥
तस्मिन्विश्वक्षयोद्युक्तकालाट्टहसितोपमे । न्यमज्जन्छालयः सार्कं प्रजानां जीविताशया ॥१९॥
अथासीत्क्षुत्परिक्षामजनप्रेतकुलाकुलः । प्राकारो[1] निरयस्येव घोरो दुर्भिक्षविप्लवः ॥२०॥
पत्नीमार्तिं सुतस्नेहं पितृदाक्षिण्यमातुरः । कुक्षिंभरिः क्षुदुत्क्रान्तो विसस्माराखिलो जनः ॥२१॥

---

१. [1]) Thus corr. by $A_2$ from $A_1$ °गौःशृङ्गा°.—[2]) Thus corr. by $A_2$ from $A_1$ प्रतिगृह्णतः.—[3]) $A_2$ gloss अभ्यस्ता. २. [1]) $A_2$ gloss जितेन्द्रियाणां. ४. [1]) $A_2$ gloss दुर्गाख्यम्. ६. [1]) $A_2$ स इति भ्रमम°; R G follow this reading and write °श्रित्य :.—[2]) $A_2$ विसंवादक°. १४. [1]) $A_2$ gloss कैव. १५. [1]) $A_2$ °तपोल्बणे. १६. [1]) Thus $A_2$, also R G; $A_1$ °कवेः. १७. [1]) $A_2$ gloss दैवैः कृतत्वाद्देवानां संबन्धिनी दैवी. २०. [1]) Thus $A_1$; altered by $A_2$ into प्रकारो.

क्षुत्पापाव्यस्मरलज्जामभिमानं कुलोन्नतिम् । अज्ञानाहंक्रियाग्रातो लोको[1] लक्ष्मीकटाक्षितः ॥२२॥
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता । पुत्रो वा पितरं त्यक्त्वा चकार स्वस्य पोषणम् ॥२३॥
कायास्थिशोषे बीभत्से स्वदेहेऽहंक्रियावताम् । अभूद्द्रोज्यार्थिनां युद्धं प्रेतानामिव देहिनाम् ॥२४॥
क्षताभिभाषी क्षुत्क्षामो घोरो दिक्ष्वक्षिणी क्षिपन् । एक एको जगज्जीवैरियेष स्वात्मपोषणम् ॥२५॥
तस्मिन्महाभये घोरे प्राणिनामतिदुःसहे । ददृशे लोकनाथस्य तस्यैव करुणार्द्रता ॥२६॥
निवारितप्रतीहारः स रक्षोपधिशोभिना । दर्शनेनैव दीनानामलक्ष्मीक्रममच्छिनत् ॥२७॥
सपत्नीको निजैः कोशैः संचयैर्मन्त्रिणामपि । क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत् ॥२८॥
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च । क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत[1] ॥२९॥
ततो निःशेषितधनः क्षीणान्नां वीक्ष्य मेदिनीम् । क्षपायामेकदा देवीमेवमूचे स[1] दुःखितः ॥३०॥
दैव्यस्मदपचारेण ध्रुवं केनापि दुस्तरा । जाता निरपराधानां जनानां व्यापदीदृशी ॥३१॥
धिङ्मामधन्यं यस्याग्रे लोकोऽयं शोकपीडितः । पश्यन्नशरणामुर्वीमनुमालो विपद्यते ॥३२॥
प्रजा निःशरणा एता अन्योन्यं बान्धवोज्झिताः । अरक्षतो भयेऽमुष्मिन्किं कार्यं जीवितेन मे ॥ ३३ ॥
यथा कथंचिल्लोकोऽयं दिनान्येतानि यत्नतः । मयातिवाहितः सर्वो न च कोऽपि व्यपद्यत ॥३४॥
अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिना । निर्विकचनाथ संजाता पृथिवी गतगौरवा ॥३५॥
तदिमाः सर्वतो मग्ना दारुणे व्यसनार्णवे । उपायः कतमस्तावत्समुद्धर्तुं क्षमः प्रजाः ॥३६॥
निरालोको हि लोकोऽयं दुर्दिनग्रस्तभास्करः । कालरात्रिकुलैर्विश्वकपरीत इव वर्तते ॥३७॥
हिमसंघातदुर्लङ्घ्य[1]क्षितिभृद्दुद्धनिर्गमाः । बद्धद्वारकुलायस्थखगवद्विवशा[2] जनाः ॥३८॥
शूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः । कालदौरात्म्यतः पश्य जाता निहतयोग्यताः ॥३९॥
आशाः काञ्चनपुष्पकुड्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यापूतवर्षिभिस्तिलकितं सेव्यैर्न किं मण्डलम् ।
पन्थानः सुचिरोपचार[1]रुचिरैर्व्याप्ता न कैः संस्तुतैस्तेषामत्र[2] वसन्ति निह्नुतगुणाः कालेन ये[3] मोहिताः ॥४०॥
तदेव गलितोपायो जुहोमि ज्वलने तनुम् । ननु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशम् ॥४१॥
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते । पौरान्पुत्रानिव पुरः सर्वतो वीक्ष्य निर्वृतान् ॥४२॥
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा । निपत्य तल्पे निःशब्दं[1] रुरोद पृथिवीपतिः ॥४३॥
निवातस्तिमितैर्दीपैरुद्ग्रीवैः कौतुकादिव । वीक्षमाणाथ तं देवी जगाद जगतीभुजम् ॥४४॥
राजन्प्रजानां कुकृतैः कोऽयं मतिविपर्ययः । येनेतर इव स्वैरमधीरोचितमीहसे ॥४५॥
यद्यसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता । तन्महीपाल महतां महत्त्वस्य किमङ्गनम् ॥४६॥
कः शक्रः कतमः स्रष्टा वराकः कतमो यमः । सत्यव्रतानां भूपानां कर्तुं शासनलङ्घनम् ॥४७॥
पत्यौ भक्तिर्व्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतम् । प्रजानुपालनेनन्यकर्मता भूभृतां व्रतम् ॥४८॥

---

२२. [1]) $A_1$ लोकोऽलक्ष्मी°. २९. [1]) Thus corr. by $A_2$ from $A_1$ उपेक्ष्यते. ३०. [1]) Thus corr. by $A_3$ from $A_1$ सु°. ३८. [1]) $A_3$ हिमसंपातदुर्लक्षक्षि°.—[2]) $A_2$ gloss बीडं. ४०. [1]) $A_3$ प्रचुरो°.—[2]) $A_3$ संस्तुतैरेषां°, with gloss एषां भूरमतिमद्वादीनाम् निह्नुतगुणाः ये शूराद्या अत्र अस्मिन्नेव देशे वसन्ति देशान्तरं न गच्छन्ति ते कालेन मोहिताः.—[3]) $A_2$ ते. ४३. [1]) Thus corr. by $A_3$ from $A_1$ °शङ्कं.

उषित्वा प्रतिमामध्ये क्व विपर्येति मद्वचः । प्रजापाल प्रजानां ते नास्त्येव सुकृतं भवम् ॥४९॥

इति संरम्भतः प्रोक्ते तयानुध्याय देवताः । प्रतिगेहं गतप्राणः कपोतनिवहोपतत् ॥५०॥

प्रातस्तन्नृपतिर्वीक्ष्य व्यरंसीन्मरणोद्यमात् । प्रजाश्च प्रत्यहं प्रीताः कपोतैर्जीवितं दधुः ॥५१॥

वस्त्वन्तरं किमपि तत्साध्वी नूनं ससर्ज सा । जनताजीवितावाप्त्यै न कपोतास्तु तेभवन् ॥५२॥

तादृशां नहि निर्व्याजप्राणिकारुण्यशालिनाम् । हिंसया धर्मचर्यायाः शक्यं क्वापि कलङ्कनम् ॥५३॥

अभवन्निर्मलं व्योम दैवीकृत्यैः सह क्रमात् । सार्धं भूपालशोकेन दुर्भिक्षं च शमं ययौ ॥५४॥

सा भूतिभिक्षोदयमग्रहारं द्विजन्मनाम् । सती कतीमुषं चक्रे रामुषं चापकल्मषा ॥५५॥

वर्षैः षट्त्रिंशता शान्ते पत्यौ विरहजो ज्वरः । तत्यजे ज्वलनज्वालानलिनप्रच्छदे तया ॥५६॥

सा यत्र शुचिचारित्रा विपन्नं पतिमन्वगात् । स्थानं जनैस्तद्वाक्पुष्टाटवीत्यद्यापि गद्यते ॥५७॥

चारुचारित्रया तत्र तया सत्रे प्रवर्तिते । नानापथागतानाथसार्थैरद्यापि भुज्यते ॥५८॥

आभ्यामभ्यधिकं कर्तुं शक्तिः कस्येति निश्चितम् । विचिन्त्यारोचकी धाता नापत्यं निर्ममे तयोः ॥५९॥

वेधाः परां धुरमुपैति परीक्षकाणामिक्षोः फलप्रजननेन कृतश्रमो यः ।
विस्मारितोङ्कुरसुधारसयोग्यतां तं तस्मादुदेत्य किमिवाभ्यधिकं विदध्यात् ॥६०॥

दीर्घदुर्दिननष्टार्कं राष्ट्रमात्मापचारतः । ज्ञात्वा राज्यमिसाहेहं सा चकारेति केचन ॥६१॥

ततोन्यकुलजो राजा विजयोष्टावभूत्समाः । पत्तनेन परीतं यश्चकार विजयेश्वरम् ॥६२॥

सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य भूपतेः । क्ष्मामाजानुभुजो राजा बुभोजाथ पृथुप्रथः ॥६३॥

अलोलकीर्तिकल्लोलदुकूलवलनोज्ज्वलाम् । बभार यद्भुजस्तम्भो जयश्रीसालभञ्जिकाम् ॥६४॥

तस्याभूदद्भुतोदन्तं भवभक्तिविभूषितः । राज्ञः संधिमतिर्नाम मन्त्री मतिमतां वरः ॥६५॥

नास्त्युपायः स संसारे कोपि योपोहितुं क्षमः । भूपालमस्सकारिणामेषां चपलकर्णताम् ॥६६॥

अत्यद्भुतमतिः शङ्क्यः सोयमुक्तेति बहिष्टैः । तस्मिन्धीसचिवे द्वेषस्तेनाप्राप्यत भूभुजा ॥६७॥ युग्मम् ॥

निवारितप्रवेशोथ सकोपस्तमहेतुकम् । निनाय हृतसर्वस्वं यावदायुर्दरिद्रताम् ॥६८॥

तस्य भूपतिविद्वेषभीष्मोष्मपरिशोषिणः । आप्यार्थं राजपुरुषा वार्तयापि न चक्रिरे ॥६९॥

गिरं गभीरो गृह्णाति क्ष्माभृद्यावत्तदग्रगाः । उक्तानुवादिनस्तावद्व्यक्तं प्रतिरवा इव ॥७०॥

स तु राजविरुद्धत्वदारिद्र्याभ्यां न विव्यथे । गतप्रत्यूहया प्रीतः प्राप्तया हरसेवया ॥७१॥

अथ भाव्यर्थमाहात्म्यात्पपथे मतिमन्दिरम् । राज्यं संधिमतेर्भावीत्यश्रुतापि सरस्वती ॥७२॥

नाचोदिता वाक्चरतीत्याप्तेभ्यः श्रुतवान्नृपः । ततः संभूतसंत्रासः कारावेश्मनि तं न्यधात् ॥७३॥

---

५०. ¹) $A_3$ देव्या. ५२. ¹) $A_3$ पतन. ५५. ¹) $A_2$ gloss कैमोह.—²) $A_2$ gloss रामोह. ६०. ¹) Thus $A_1$; $A_3$ योग्यताम्; G योग्यतासाह. explained by योग्यतयासौ गृहीतः and subsequently corrected into योग्यता तु.—²) $A_2$ gloss उत्पादयित्वा. ६४. ¹) G आलोल°.—²) Thus corr. by $A_2$ from $A_1$ °श्री°.—³) $A_2$ gloss पुत्तलिकाम्. ६५. ¹) $A_2$ °दन्तो. ६८. ¹) $A_3$ कोपवम्. ७२. ¹) Thus corr. by $A_2$ from $A_1$ नवम°; $A_2$ had explained in margin the original reading by a note which has been struck out: राज्यं सन्धिमतो (sic) भावीत्यश्रुतापि सरस्वती एव नवमन्दिरं पपथे सन्धिमतेर्वैराकस्य विपत्पूर्वकृत्यपरिपोषकत्वान्नवमन्दिरकल्पं तस्याश्रुतवाक् अवगमशुद्धिस्वार्थं येन च तदुपरि राजानीव क्रूरचेष्टोभूदिति भावः. ७३. ¹) Thus corr. by $A_2$ from $A_1$ सङ्कुल°.—²) Thus corr. by $A_2$ from $A_1$ न्यधात्.

तत्र तस्योग्रनिगडैः पीडिताङ्गेर्विशुष्यतः । पूर्णीभूद्द्वादशो वर्षो भूपतेश्चायुषोऽवधिः ॥७४॥
निष्पुत्रः स महीपालो मुमूर्षुर्दाहमाददे । रोगोत्थया पीडया च चिन्तया च तदीयया ॥७५॥
ऊष्मायमाणो विद्वेषवह्निना ज्वलतानिशम् । न विना तद्वधं मेने भवितव्यप्रतिक्रियाम् ॥७६॥
भाव्यर्थस्याबुधाः कुर्युरुपायं स्थगनाय यम् । स एवापावृतं द्वारं श्रेयं दैवेन कल्पितम् ॥७७॥
दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात् ।
तन्निर्वापणमिच्छतः प्रतनुते पुंसः समीपस्थिते[1] संतापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमम् ॥७८॥
अथ राजाज्ञया क्रूरैर्वधकर्माधिकारिभिः । निशि संधिमतिः शूले समारोप्य विपादितः ॥७९॥
प्रोतशूले भुवे तस्मिञ्शोकशङ्कुर्महीपतेः । निरगाद्रोगभग्नस्य पूर्वं पश्चात्तु जीवितम् ॥८०॥
सप्तविंशतिवर्षेषु यातेष्वस्मिन्निरन्वये । प्रशान्तभूमिपालाभूत्कतिचिद्दिवसानि भूः ॥८१॥
अथ संधिमतिं बुद्ध्वा तथा व्यापादितं गुरोः । ईशानाख्यस्य हृदयं विवशं वशिनोऽप्यभूत् ॥८२॥
शिरीष इव संसारे दुःखोच्छेदे मनीषिणाम् । हन्तानृशंस्यं तन्तुमिवैकमत्राशिष्यते ॥८३॥
स श्मशानभुवं प्रायादनायस्येव शुष्यतः । कर्तुं विनाथिनस्तस्य श्वोचितामन्त्यसत्क्रियाम् ॥८४॥
तं चास्थिशेषमद्राक्षीत्कृष्यमाणं बलाद्वृकैः । शूलमूलावबद्धास्थिखण्डावष्टम्भनिश्चलम् ॥८५॥
समीरणसमाकीर्णमुण्डरन्ध्राग्रनिर्गतैः । ध्वनितैरनुशोचन्तमिवावस्थां तथाविधाम् ॥८६॥
हा वत्स द्रष्टुमीदृक्के जीवाम्यद्येति वादिना । तस्याकृष्यत शूलान्तःप्रोतं तेनाथ कीकसम् ॥८७॥
वेष्टिताङ्ग्रिः शिरःशीर्णैस्तस्कन्धैर्धूलिधूसरैः । अनैषीत्तं स कङ्कालं वारयन्भषतो वृकान् ॥८८॥
उचितां सत्क्रियां कर्तुं ततस्तस्य समुद्यतः । भाले विधातृलिखितं श्लोकमेतमवाचयत् ॥८९॥
यावज्जीवं दरिद्रत्वं दश वर्षाणि बन्धनम् । शूलस्य पृष्ठे मरणं पुना राज्यं भविष्यति ॥९०॥
पादत्रयस्य दृष्टार्थः श्लोकस्यासीत्स योगवित् । द्रष्टव्ये तुर्यपादार्थप्रत्यये कौतुकान्वितः ॥९१॥
अचिन्तयच्च संभ्रान्तः कथमेतद्भविष्यति । उवाच च विधेः शक्तिमचिन्त्यां कलयंश्चिरम् ॥९२॥
तत्तत्कर्मव्यतिकरकृतः पारतन्त्र्यानुरोधात्सज्ज्ञाः सर्वे व्यवसितहठोन्मूलनाय प्रयत्नात् ।
चित्रं तत्राप्युदयति विधेः शक्तिरत्यद्भुतेयं यन्माहात्म्याद्विविधघटनासिद्धयो निर्निरोधाः ॥९३॥
मणिपूरपुरे पार्थं निहतं समजीवयत् । फणिकन्याप्रभावेण सर्वाश्चर्यनिधिर्विधिः ॥९४॥
द्रोणपुत्रास्त्रनिर्दग्धं मातुर्गर्भे परीक्षितम् । जीवयन्कृष्णमाहात्म्याद्धाता धुर्योऽधिकारिणाम् ॥९५॥
कथं भस्मीकृतं दैत्यैर्नागांस्तार्क्ष्येण भक्षितान् । पुनर्जीवयितुं को वा दैवादन्यः प्रगल्भते ॥९६॥
इत्युक्त्वा भाविनोऽर्थस्य द्रष्टुं सिद्धिं समुद्यतः । तत्रैव बद्धवसतिः कङ्कालं स ररक्ष तम् ॥९७॥
अथार्धरात्रे निर्निद्रस्तत्रैवाद्भुतचिन्तया । धूपाधिवासमीशानो घ्रातवान्दिव्यमेकदा ॥९८॥
उच्चण्डलाडनादण्डोद्धृष्टघण्टौघटांकृतैः । चण्डैर्डमरुनिर्घोषैर्घर्घरं श्रुतवान्ध्वनिम् ॥९९॥

७७. [1]) Thus corr. by later hand from $A_1$ °र्थस्य बुधाः. ७८. [1]) Another hand alters this to °स्थितेः. ८६. [1]) $A_2$ °समापूर्णमु° with gloss शिरः over मुण्ड. ९०. [1]) Thus $A_1$; $A_2$ पुनराज्यं. ९१. [1]) Thus corr. by later hand from $A_1$ °दृष्टार्थे.—[2]) $A_2$ gloss चतुर्थ —[3]) Thus corr. by later hand from $A_1$ °पादार्थे. ९२. [1]) Thus corr. by $A_2$ from $A_1$ कालयंश्चे°. ९९. [1]) $A_2$ gloss लाडना अन्तर्गता शलाका आण्डु इति भाषया.—[2]) $A_2$ °डमरुघोषैश्च.

उद्घाटिततमोरिः स ततः पितृवनावनौ । ददर्श योगिनीस्तेजःपरिवेषान्तरस्थिताः ॥१००॥
तासां संभ्रममालक्ष्य कङ्कालं चापवाहितम् । ईशानस्तां श्मशानोर्वीं धृतासिर्थकितो ययौ ॥१०१॥
अथापश्यत्तदृक्षब्धः शायितं मण्डलान्तरे । संधीयमानसर्वाङ्गं कङ्कालं योगिनीगणैः ॥१०२॥
चक्रसहचरसंभोगवाञ्छा मद्यपदेवताः । वीरालाभात्समाविश्य कङ्कालं तमपाहरन् ॥१०३॥
एकमेकं स्वमङ्गं च विनिधाय क्षणादथ । कुतोप्यानीय पुंलक्ष्म पूर्णाङ्गं तं प्रचक्रिरे ॥१०४॥
अथ पुर्यष्टकं भ्राम्यदनाक्रान्तान्यविग्रहम् । योगेनाकृष्य योगेश्वर्यस्तत्र संधिमतेर्न्यधुः ॥१०५॥
ततः सुप्तोत्थित इव स्रग्दिव्यविलेपनः । समभुज्यत ताभिः स यथेच्छं चक्रनायकः ॥१०६॥
ईशानस्तस्य देवीनां वितीर्णाङ्गाहर्ति पुनः । क्षपायां क्षीयमाणायां चकितः पर्यशङ्कत ॥१०७॥
नद्दंस्तद्रक्षया धीरः स च तत्स्थानमाययौ । तत्र योगेश्वरीचक्रं क्षिप्रमन्तरधीयत ॥१०८॥
अथाभूयत वाक्तासां माभूदीशान भीस्तव । मास्त्यकूहाविरस्माकं वृते चास्मिन्न वञ्चना ॥१०९॥
अस्मद्दराविश्यवपुःसंधितः संधिमानसौ । आर्यत्वादार्यराजश्च ख्यातो भुवि भविष्यति ॥११०॥
ततो दिव्याम्बरः स्रग्वी दिव्यभूषणभूषितः । ववन्दे संधिमान्प्रह्वः प्राक्पूर्वस्मृतिर्गुरुम् ॥१११॥
ईशानोपि तमालिङ्ग्य स्वप्नेष्वपि सुदुर्लभम् । भूमिकामाललम्बे कामिति को वक्तुमर्हति ॥११२॥
असारं च विचित्रं च संसारं ध्यायतोर्मिथः । विवेकविशदा तत्र प्रावर्तत तयोः कथा ॥११३॥
अथ वार्तां विदित्वेमां कुतोपि नगरौकसः । सबालवृद्धाः सामात्यास्तमुद्देशमाययुः ॥११४॥
पूर्वाकृतिविसंवादाद्भ्रमो नायं स इत्यथ । तेनाच्छिद्यत संवादिनिखिलान्पृच्छता वचः ॥११५॥
अथैनं शासितुं राष्ट्रं पौराणामपराजकम् । सोभ्यमन्यत कृच्छ्रेण निःस्पृहः शासनाद्गुरोः ॥११६॥
प्रापय्योपवनोपान्तं तं दिव्याकृतिशोभिनम् । सतूर्यं स्नापयामासुरभिषेकाम्बुभिर्द्विजाः ॥११७॥
नवराजोचिताचारे न स शिक्षामपैक्षत । दृष्टकर्मा समस्तास्तु निस्तुषाः प्रक्रिया व्यधात् ॥११८॥
स राजोचितनेपथ्यः पौराशीर्घोषशोभिनीम् । सौधोन्मिषल्लाजवर्षां ससैन्यः प्राविशत्पुरीम् ॥११९॥
तस्मिन्विरजसि प्राज्यमाक्रामति नृपासनम् । आचक्राम प्रजा व्यापच्च दैवी न च मानुषी ॥१२०॥
अहरन्हृदयं तस्य शृङ्गाररहितविभ्रमाः । नितम्बिन्यो वनभुवः शमिनो[2] न तु योषितः ॥१२१॥
वनप्रसूनसंपर्कपुण्यगन्धैस्तपस्विनाम् । कर्पूरधूपसुरभिः करैः स्पृष्टः स पिप्रिये ॥१२२॥
भूतेशवर्धमानेशविजयेशानपश्यतः । नियमो राजकार्येषु तस्याभूत्प्रतिवासरम् ॥१२३॥
हरायतनसोपानक्षालनाम्भःकणाङ्कितैः । संस्पृष्टः पवनैः सोभूदानन्दास्पन्दविग्रहः ॥१२४॥
पूर्वपूजापनयने निराडम्बरसुन्दरः । तेनैव द्रष्टुमशाथि चापितो विजयेश्वरः ॥१२५॥
लिङ्गपीठलुठत्स्नानकुम्भाम्भःक्षोभभूर्ध्वनिः । शयानस्याप्यभूत्तस्य वल्लभो वल्लकीप्रियः ॥१२६॥

१००. [1]) $A_2$ gloss तमोरिः चाह इति भावः. १०३. [1]) Thus corr. by $A_1$ from $A_1$ मद्यमदे°; $A_2$ in margin मद्यमदेन ताः इत्य॰ ध्याहर्त्तं.—[2]) Thus corr. by $A_2$ from $A_1$ तमुपाहरन्. १०४. [1]) Thus corr. by later hand from $A_1$ ततो.—[2]) Thus corr. by $A_2$ from $A_1$ पुंलिङ्ग°. १०५. [1]) Thus corr. by $A_1$ from भ्राम्यन्नना°.—[2]) $A_3$ योगिन्यः. १०६. [1]) स supplied by $A_2$. १०७. [1]) Thus corr. by $A_2$ from $A_1$ ईशानस्तस्य. ११०. [1]) $A_2$ राजा. ११९. [1]) Thus corr. by $A_2$ from $A_1$ ससैन्यां. १२१. [1]) $A_2$ gloss शृङ्गेषु अवहितः न स्वकः वीनां पक्षिणां वनः वनम् बाभिः ताः.—[2]) $A_2$ gloss शान्तस्य. १२५. [1]) Thus corr. by $A_2$ from $A_1$ निजय°

तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्बभौ । तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा ॥१२७॥
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्मणि प्रभोः । प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित् ॥१२८॥
प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य कल्पिता । सहस्रलिङ्गी तद्भृत्यैः सर्वतोद्यापि दृश्यते ॥१२९॥
तासु तासु स वापीषु लिङ्गव्याजादरोपयत् । स्वपुण्यपुण्डरीकाणां[1] जन्मनेऽक्षपरंपराम् ॥१३०॥
स्थाने स्थाने जलान्तश्च बहुसंख्यैर्निवेशितैः । अनयन्नर्मदाभङ्गिं शिवलिङ्गैस्तरङ्गिणीः ॥१३१॥
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये । पर्षदामद्य तद्भोगः कालेनान्तर्धिमागतः ॥१३२॥
अकरोत्स महाहर्म्यैर्महालिङ्गैर्महावृषैः । महात्रिशूलैर्महतीं महामाहेश्वरो महीम् ॥१३३॥
कृत्वा संधीश्वरं[1] देहसंधानपितृकानने । ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं[2] हरम् ॥१३४॥
थेडां च भीमादेवीं च देशांश्चान्यान्पदेपदे । स मत्प्रतिमालिङ्गैर्हर्म्यैर्निन्ये महार्घताम् ॥१३५॥
स्वयंभूभिश्च तीर्थैश्च पूतं भक्तिविभूषितः[1] । स एव भोक्तुमज्ञासीत्प्राज्ञः[2] कश्मीर[3]मण्डलम् ॥१३६॥
जातस्य निर्झराम्भोभिः पुष्पलिङ्गार्चनोत्सवे । राज्ञस्तस्य वनोर्वीषु मासः पक्षाक्रो ययौ ॥१३७॥
स चातिरम्यः काश्मीरो ग्रीष्मस्त्रिदिवदुर्लभः । हिमलिङ्गार्चनैः प्रायाद्दिनान्लघु कृतायताम् ॥१३८॥
फुल्लाब्जषण्डरुद्धाशाः प्राप्य पुष्करिणीतटीः । लक्ष्मीसखः स खण्डेन्दुचूडध्या[1]नपरोभवत् ॥१३९॥
नीलोत्पलवतीर्वापीरगस्त्योदयनिर्विषाः । अवगाह्य हरार्चाभिः शरदं निर्विवेश सः ॥१४०॥
सार्धं तपोधनैस्तैस्तैर्भजतो जागरोत्सवान् । तस्याभुवन्भुवो भर्तुरमोघा माघरात्रयः ॥१४१॥
अत्यद्भुतं राज्यलाभमित्थं सफलयन्कृती । पञ्चाशतं त्रिवर्षोनामत्यक्रामत्स वत्सरान् ॥१४२॥
शमव्यसनिनस्तस्य राज्यकार्याण्यपश्यतः । तस्मिन्काले प्रकृतयो विरागं प्रतिपेदिरे ॥१४३॥
अन्वैष्यत नृपस्ताभिः कश्चिद्राज्याय शुश्रुवे । राजपुत्रो जिगीषुश्च श्रीमान्यौधिष्ठिरे कुले ॥१४४॥
जुगोप गोपादित्याख्यं[1] कश्मीरेन्द्रजिगीषया । युधिष्ठिरप्रपौत्रं हि गान्धाराधिपतिस्तदा ॥१४५॥
वसन्नप्राप्तसाम्राज्यः[1] स तत्र तनयं क्रमात् । अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनम् ॥१४६॥
स तत्र पितुरादेशाद्वैष्णवान्वयजन्मनः । राज्ञः प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयंवरे ॥१४७॥
तत्र तं वारुणं छत्रं छायया राजसंनिधौ । भेजे वरस्रजा राजकन्यका चामृतप्रभा ॥१४८॥
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः । अजानन्नम्बुवाहस्य पाश्चात्येनेव वायुना ॥१४९॥
राज्ञा हि नरकेणैतद्वरुणादुष्णवारणम् । आनीतमकरोच्छायां न विना चक्रवर्तिनम् ॥१५०॥
तमन्तिकं पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितम् । श्रुत्वा निमन्त्रयामासुर्मन्त्रिणो वंशयोग्यया ॥१५१॥
अथार्यराजो विज्ञाय स्वराज्यं भेदजर्जरम् । प्रतिनक्ते न शक्तोपि तस्थौ तु त्यक्तुमुत्सुकः ॥१५२॥
अचिन्तयच्च सत्यं मे संप्रीतो भूतभावनः । सिद्धिविघ्नानमून्दीर्घानपाकर्तुं समुद्यतः ॥१५३॥
कृत्ये बहुनि निष्पाद्ये प्रमात्कौसीद्यमाश्रयन्[1] । प्रावृषीवाध्वगो दिष्ट्या मोहितोस्मि न निद्रया ॥१५४॥
स्वकाले[1] त्यजता लक्ष्मीं विरक्तां[2] बन्धकीमिव । हठनिर्वासनक्रीडा दिष्ट्या नासादिता मया ॥१५५॥

१३०. 1) Thus corr. by A₂ from A₁ °पुण्डरीकाक्षज°. १३४. 1) The *aksharas* श्वरं supplied by A₂ in space left by A₁.—2) A₂ gloss ईशभाद्रु इति प्रसिद्धस्थले. १३६. 1) A₂ °विशेषतः.—2) Thus A₂; A₁ प्राज्ञः.—3) Thus corr. by later hand from A₁ काश्मीर°. १३९. 1) Thus corr. by later hand from A₁ चूडाध्या°. १४५. 1) Thus corr. by A₁ from °स्वयाख्यः. १४६. 1) Thus A₂; A₁ वसन्नपास्तसा°. १४७. 1) A₂ कुशा. १५४. 1) A₂ glosses आलस्यम् and "न कर्म कौसीद्य.—2) Thus corr. by A₂ from A₁ °भवम्. १५५. 1) Thus A₁; A₂ स्वकुले.—2) Thus corr. by A₂ from A₁ सरक्ताम्.

चीलूपस्येव मे राज्यरङ्गस्मिन्वल्गतश्चिरम् । निर्व्यूढमपि वैरस्यं दिष्ट्या न प्रेक्षका गताः ॥१५६॥
दिष्ट्या सदैव वैमुख्यमुद्वेगद्योपयङ्भियः । त्यागक्षणे न भीतोस्मि विकत्थन इवाहवे ॥१५७॥
इति संचिन्तयन्नेतः सर्वत्यागोन्मुखो नृपः । मनोराज्यानि कुर्वाणो दरिद्र इव पिप्रिये ॥१५८॥
अन्येद्युः प्रकृतीः सर्वाः संनिपत्य सभान्तरे । ताभ्यः प्रत्यर्पयन्न्यासमिव राज्यं सुरक्षितम् ॥१५९॥
उज्झितं स्वेच्छया तस्य प्रयत्नेनापि नाशकत् । तं स्वीकारयितुं कश्चित्फणीन्द्रमिव कञ्चुकम् ॥१६०॥
अर्चालिङ्गमुपादाय सोथ प्रायादुदङ्मुखः । धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः ॥१६१॥
तस्य पादार्पितदृशो व्रजतो मौनिनः प्रभोः । पन्थानं जगृहुः पौरा निःशब्दस्रवदस्रवः ॥१६२॥
स विलङ्घितगव्यूतिरुपविश्य तरोरधः । जनमेकैकमुद्वाष्पं न्यवर्तयत सान्त्वयन् ॥१६३॥
पथि शिखरिणां मूले मूले विलम्ब्य जहज्जनान्मितपरिकरो गच्छन्नूर्ध्वं क्रमात्सममनुव्रजत ।
बहनवसुधाः संपूर्योच्चैर्जन्म निजात्पदादिव इव विनिर्यातः स्तोकैः कृतानुगमो जनैः ॥१६४॥
निःशेषं निकटास्त लोकमटवीमध्ये निरुन्धन्पदं शोकावेशसबाष्पगद्गदपदं संमान्य चोत्सार्य च ।
भूर्जत्वक्परिरोधमर्मरमरुद्विद्राणसिद्धाध्वगश्रेणीमौलिमणिप्रभोज्ज्वलगुहागेहं जगाहे वनम् ॥१६५॥
अथ वनसरसीतटद्रुमाधः पुटकघटोदरसंभृताम्बुपूराम् ।
वसतिमकृत वासरावसाने शुचितरुपल्लवकल्पितोरुतल्पाम् ॥१६६॥
शुक्रासक्तासितातपाः शबलितच्छायाभुवः शाड्वलैरुत्फुल्लामलमल्लिकानलमिलत्स्रुग्रजस्त्रीजनाः ।
सध्याना वनपालवेगुरिणितोन्मिश्रैः प्रपाताम्बुभिः श्रान्तं द्रुक्पथमागतास्तम नयचिरामदूराश्रयः ॥१६७॥
वनकरिरसितैः पदे पदे स प्रतिभटनां पटहध्वनेर्दधानैः ।
अमनुत रटितैश्च कर्करेटोः परिगलितां गमनोन्मुखत्रियामाम् ॥१६८॥
अन्येद्युर्विधिवदुपास्य पूर्वसंध्यामासन्ने नलिनसरस्यपास्तनिद्रः ।
क्ष्मापालः परिचितसोदराम्बुतीर्थे नन्दीशाध्युषितमवाप भूतभर्तुः ॥१६९॥
नन्दिक्षेत्रे त्रिभुवनगुरोः सोपतस्तत्र यावत्तस्थौ तावत्स्वेयमांभमताबाप्तये जायते स्म ।
भस्मस्मेरः सुघटितजटाजूटबन्धोक्षसूत्री रुद्राक्षाङ्को जरडमुनिभिः सस्पृहं वीक्ष्यमाणः ॥१७०॥
आस्यश्रीकण्ठव्रतजनितमहासत्क्रियो भैक्ष्यहेतोर्भिक्षादानोद्यताद्य प्रतिमुनिनिलयं संभ्रमात्तापसीषु ।
वृक्षैर्भिक्षाकपाले शुचिफलकुसुमश्रेणिभिः पूर्यमाणे मान्यो वैराग्ययोगेष्वनुपनतपरप्रार्थनालाघवोभूत् ॥१७१॥

६ ॥ १७१ ॥ आदितः ४३ ॥ ग्रं ५४३ ॥

इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः ॥
शतद्वये वत्सराणामष्टाभिः परिवर्जिते । अस्मिन्निवृत्तिं व्याख्याताः षट्प्रख्यातगुणा नृपाः ॥

१५६. [1]) Thus A$_1$; the *v. l.* of A$_2$ निर्व्यूढमपि has been struck out again; G R निर्व्यूढमपि. १६०. [1]) Thus corr. by later hand from A$_1$ तं च. १६४. [1]) Thus corr. by A$_2$ from A$_1$ स्तोकानुगमो. १६५. [1]) Thus A$_2$; A$_1$ निरुन्धनपदं.—[2]) Thus corr. by later hand from A$_1$ भूर्जत्वक्.—[3]) Thus corr. by A$_2$ from A$_1$ मर्मर.—[4]) The *akshara* णि supplied by A$_2$ in space left by A$_1$.—[5]) The gloss गोमजोवी, written by A$_4$ at the foot of the page, probably refers to this word. १६७. [1]) Thus corr. by A$_2$ from A$_1$ शाड्वलैश्चामल; the latter reading repeated in margin by A$_3$.—[2]) Thus G *sec. manu* and P; A R C °पालेषु°.—[3]) A$_3$ gloss पर्वताः. १६८ [1]) A$_2$ वनहरि° —[2]) Thus corr. by later hand from A$_1$° ध्वनैर्दे°.—
१७०. [1]) A$_1$ यावत्तस्थौ; supplemented as above by A$_2$. १७१. [1]) A$_2$ आस्यश्री°.—[2]) Thus corr. by A$_2$ from A$_1$ °वोरबो.
[3]) A$_2$ writes °ष्वनुपनत°, with figures indicating transposition.

## ॥ तृतीयस्तरङ्गः ॥

मुग्धे भामिनमर्थ्य कुम्भकुहरे मुक्ताः कुचाभोगिताः किं भालज्वलनेन कज्जलमतः स्त्रीकार्यमक्ष्णोः कृते ।
संधाने वपुरर्धयोः प्रतिवदत्येवं निषेधेप्यहेः कर्तव्ये प्रिययोत्तरानुसरणोद्युक्तो हरः पातु वः ॥१॥
अथोल्लसत्प्रभुप्राभवमानिन्युर्मेघवाहनम् । गान्धारविषयं गत्वा सचिवाधिष्ठिताः प्रजाः ॥२॥
रक्तप्रजस्य भूभर्तुः पश्चाल्लोकानुरञ्जनम् । तस्याज्ञायि जनैर्धौतक्षौमक्षालनसंनिभम् ॥३॥
स पुनर्बोधिसत्त्वानामपि सत्त्वानुकम्पिनाम् । चर्यामुदात्तचरितैरत्यशेत महाशयः ॥४॥
तस्याभिषेक एवाज्ञां धारयन्तोधिकारिणः । सर्वतोमारिमर्यादापटहानुदघोषयन् ॥५॥
कल्याणिना प्राणिवधे तेन राज्ञा निवारिते । निष्पापां प्रापिता वृत्तिं स्वकोशात्सौनिकादयः ॥६॥
तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः । क्रतौ घृतपशुः पिष्टपशुर्भूतबलावभूत् ॥७॥
स मेघवननामानमग्रहारं विनिर्ममे । मयुष्टग्रामकृत्पुण्यज्येष्ठं मेघमठं तदा ॥८॥
भोगाय देश्यभिक्षूणां वल्लभास्यामृतप्रभा । विहारमुच्चैरमृतभवनाख्यमकारयत् ॥९॥
देशैकदेशाल्लोर्नाम्नः प्राप्तस्तस्याः पितुर्गुरुः । स्तुन्यां तद्भाषया प्रोक्तो लोस्तोन्पास्तूपकार्यकृत् ॥१०॥
चक्रे नडवने राज्ञो यूकदेव्यभिधा वधूः । विहारमद्भुताकारं सपत्नीस्पर्धयोद्यता ॥११॥
अर्धे यद्भिक्षवः शिक्षाचारास्तत्रार्पितास्तया । अर्धे गार्हस्थ्यगर्ह्याश्च सस्त्रीपुत्रपशुश्रियः ॥१२॥
अथेन्द्रदेवीभवनमिन्द्रदेव्यभिधा व्यधात् । विहारं सचतुःशालं स्तूपं भूपप्रियापरा ॥१३॥
अन्याभिः खादनासम्माप्रमुखाभिर्निजाख्यया । देवीभिस्तस्य महिता विहारा बहवः कृताः ॥१४॥
अर्वाक्कालोद्भवस्यापि राज्यकालोस्य भूपतेः । न्यक्कृतादिनृपोदन्तैर्वृत्तान्तैरद्भुतोभवत् ॥१५॥
स बहिर्विहरञ्जातु भूभृद्भीतैरुदीरितम् । चौरश्चौरोयमित्यारादशृणोत्क्रन्दितध्वनिम् ॥१६॥
कः कोत्र बध्यतां चौर इत्युक्ते तेन सक्रुधा । शशामाक्रन्दितध्वानो न च चौरो व्यभाव्यत ॥१७॥
पुराद्वित्रैर्दिनैस्तस्य निर्गतस्याग्रतस्ततः । अभयमभयार्थिन्यो द्वित्रा दिव्यप्रभाः स्त्रियः ॥१८॥
ताः संभुतेप्सितास्तेन रुद्धाश्वेन कृपालुना । अभ्यभाषन्त सीमन्तपुञ्जिताञ्जलयो वचः ॥१९॥
देव दिव्यप्रभावेण भुवने भवता धृते । अपरस्माद्भयं जातु कस्य स्यात्करुणानिधे ॥२०॥
तदानीं तोयदा भूत्वा छादयन्तो नभस्तलम् । अकाण्डकङ्कापातशङ्किभिः कार्षकैर्मृषा ॥२१॥
पक्वशालिवनस्फीति[1]रक्षाक्षुभितमानसैः । नागास्त्वत्कोपसंरम्भभूमितां[2] गमिताः प्रभो ॥२२॥

२. [1]) A₂ gloss इयस्य. ५. [1]) A₂ gloss अमार अहिंसा. ८. [1]) A₂ °ज्येष्ठो.—[2]) A₂ तथा. ९. [1]) Thus A₂; A₁ चैत्य°.
१०. [1]) Thus A₁; corr. by later hand into देशैक°.—[2]) A₂ स्तुन्या. ११. [1]) A₂ यूक°. १४. [1]) A₂ gloss नृपपत्नीभिः.
२२. [1]) A °स्फाति°.—[2]) A₂ भूमिं तं.

तेऽस्माकं पततश्चौरश्चौर इत्यार्तभाषितम् । श्रुत्वा देवेन बध्यन्तामित्यवादि तदा क्रुधा ॥२३॥
तदा त्वदाज्ञामात्रेण न्यपतन्पाशवेष्टिताः । प्रसादः क्रियतां तेषामस्मत्करुणयाधुना ॥२४॥ चक्कलकम् ॥
तदाकर्ण्यैव तद्राज्ञा प्रसादविशदाननः । सर्वे ते बन्धनाद्वाचा त्यज्यन्तामिति शासितः ॥२५॥
तथा तस्याज्ञया राज्ञो नागा विधुतबन्धनाः । प्रणम्य चरणौ तूर्णं प्रययुः सपरिग्रहाः ॥२६॥
अथ ग्राहयितुं भूपानाज्ञां हिंसानिवृत्तये । स दिग्जयाय निर्व्याजधर्मध्वजो विनिर्ययौ ॥२७॥
अभूदभीतजनतावेक्षणश्लाघ्यविक्रमः । स्पृहणीयो जनस्यापि तदीयविजयोद्यमः ॥२८॥
प्रभावविजितान्कृत्वा सोऽहिंसादीक्षितान्नृपान् । अर्णसां पत्युरभ्यर्णमवापापजयार्जितः ॥२९॥
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः । युक्तिं द्वीपान्तराक्रान्तौ क्षणमन्तर्व्यचिन्तयत् ॥३०॥
अथ वेलावनोपान्तात्तेनार्ताक्रन्दितध्वनिः । मेघवाहनराज्येऽपि हतोऽहमिति शुश्रुवे ॥३१॥
तत्प्रायःशकुनेनान्तर्भणितः स द्रुतं ततः । संचारिण्यातपत्रेण सह तां ककुभमगात् ॥३२॥
अपश्यदथ केनापि चण्डिकायतनाग्रतः । नरं शबरसेनान्या हन्यमानमधोमुखम् ॥३३॥
अनात्मज्ञ धिगेतत्ते कुकर्मेति महीभुजा । तर्जितः स भयादेवं शबरस्तं व्यजिज्ञपत् ॥३४॥
शिशुर्मुमूर्षुर्मे राजन्नयं रोगार्दितः सुतः । कर्मैतद्दैवतैककामस्य श्रेयोलाभावहम् ॥३५॥
उपहारनिरोधेन सद्य एवं विपद्यते । बन्धुवर्गमशेषं च विदधेतज्जीवजीवितम् ॥३६॥
अरण्यगहनालब्धमनाथं देव रक्षसि । बहुलोकाभयं बालं कथमेतमुपेक्षसे ॥३७॥
अथाभ्यधान्महात्मा स वचोभिः शबरस्य तैः । बध्यस्य दृष्टिपातैश्च विक्लवैर्विवशीकृतः ॥३८॥
किरात कातरो मा भूः स्वयं संरक्ष्यते मया । बहुबन्धुस्तव सुतो बध्योऽप्ययमबान्धवः ॥३९॥
उपहारीकरोम्येष चण्डिकायै स्वविग्रहम् । मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयम् ॥४०॥
तदद्भुतमहासत्त्वचित्तौदात्त्यविस्मितः । उन्मिषद्रोमहर्षस्तं ततः स शबरोऽभ्यधात् ॥४१॥
अतिकारुण्यमिषतस्तथायं पृथिवीपते । कश्चिन्मतिविपर्यासप्रकारो हृदि रोहति ॥४२॥
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तम् । पृथिवीभोगसुभगं कथं कायमुपेक्षसे ॥४३॥
न मानं न यशो नार्थांश्च दारांश्च च बान्धवान् । न धर्मं न सुतान्भूपा रक्षन्ति प्राणतृष्णया ॥४४॥
तत्प्रसीद प्रजानाथ मा बध्येऽस्मिन्कृपां कृथाः । शिशुश्चैष प्रजाश्चैता जीवन्तु त्वयि जीवति ॥४५॥
उपाजिहीर्षुरात्मानं हन्तयोतार्थडम्बरैः । अर्चयन्निव चामुण्डामथोवाच स पार्थिवः ॥४६॥
सदाचारसुधास्वादे के भवन्तो वनौकसः । जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ॥४७॥
ध्रुवापायेन कायेन क्रीणतः कीर्तिमव्ययाम् । ममाभीष्टं[1] प्रमार्ष्टुं ते मूढ कोऽयमाग्रहः ॥४८॥
मा वोचः किंचिदपरं प्रहर्तुं चेद्घृणा तव । न किं निजः कृपाणो मे शक्तः प्रक्रान्तसिद्धये ॥४९॥
इत्युक्त्वा स स्वयं देहमुपहर्तुं समुद्यतः । खण्डनाय स्वमुण्डस्य विकोशं शस्त्रमाददे ॥५०॥
ततः प्रहर्तुकामस्य तस्य सुकुसुमैः शिरः । करश्च दिव्यवपुषा रुद्धः केनाप्यजायत ॥५१॥

३०. [1]) Thus corr. by later hand from $A_1$ °कैः. ३३. [1]) A R G here and elsewhere सबर°. ३६. [1]) $A_1$ एव. ४८. [1]) Thus corr. by later hand from $A_1$ °भीष्टं.





अथापश्यत्तथाभूतः कंचिद्दिव्याकृतिं पुरः । न चण्डिकां न तं व्याघ्रं न किरातं न दारकम् ॥५२॥

स तं विन्यस्तदावादीन्मां त्वं सत्त्ववशीकृतम् । विद्धि मध्यमलोकेन्दो वरुणं करुणानिधे ॥५३॥

यदेतत्त्वामुपास्तेद्य छद्म तन्मत्पुरात्पुरा । महाबलोदरद्रीमः पुराणप्रभुरत्तव ॥५४॥

रसातलैकतिलकं माहात्म्यवदिदं विना । उपद्रवाः प्राणहराः पौराणां नः पदे पदे ॥५५॥

तदिदं प्राप्तुकामेन त्वदौदार्यं परीक्षितुम् । कारुण्यमय मायेयं निरमायि मयेदृशी ॥५६॥

त्वदादिर्यो व्यधाज्जन्तून्व्यसून्वसुकुलात्मजः । प्रायश्चित्तममारेण चरसीव तदेनसः ॥५७॥

भयस्पृहाजनकयोर्धरणीधारणोचिते । शेषदेहे विषोद्गारफणारत्नौघयोरिव ॥५८॥

तमःप्रकाशावहयोस्तेजःक्रान्तदिगन्तरे । उषर्बुधे धूमजालज्वालापल्लवयोरिव ॥५९॥

क्रमाप्यायक्रियाभाजो रुद्रतेजस्विमण्डले । प्रावृड्व्योदच्छमेह्नि संतापासारयोरिव ॥६०॥

द्वयोरालोकितं चित्रं जन्मैकस्मिन्महाकुले । तस्य त्रिकोटिहन्तुश्च तत्राहिंसस्य च प्रभोः ॥६१॥ चक्कलकम् ॥

नम्रः सवाडवेशं स वदतो यादसां प्रभोः । चकार पूजां स्तोत्रेण छन्नेन च कृताञ्जलिः ॥६२॥

तं च स प्रतिगृह्णन्तं प्रणयादुष्णवारणम् । जगाद गुणिनामग्र्यो वरुणं धरणीधरः ॥६३॥

कल्पद्रुमाश्च सन्तश्च नार्हन्ति समशीर्षिकाम् । अर्थिनां प्रार्थिताः पूर्वे फलन्त्यन्ये स्वयं यतः ॥६४॥

अत्रालम्बिष्यत छद्म कथं नः पुण्यपण्यताम् । नाप्रार्थयिष्यत न चेदार्तोपकृतये भवान् ॥६५॥

वदान्यः संविभाग्येभ्यः पूर्णी कुर्यादनुग्रहम् । छायया प्याययन्दद्यात्फलान्यपि महीरुहः ॥६६॥

तदेवं विहितोदात्तसंविभागाभिचोदितः । जनोऽयं भगवन्किंचिद्वरं प्रार्थयते परम् ॥६७॥

वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात् । जेतुं द्वीपान्कथ्यतां तु युक्तिः पाथोधिलङ्घने ॥६८॥

इत्यर्थ्यमानोऽकथयद्भूमिपालं जलेश्वरः । तितीर्षो भवति स्तम्भं नीयतेऽम्भो मयाम्बुधेः ॥६९॥

ततो महाप्रसादोऽयमित्युक्ते पृथिवीभुजा । तिरोबभूव भगवान्वरुणः सोष्णवारणः ॥७०॥

अन्येद्युर्विस्मयस्मेरैर्बलैः सीमन्तयञ्जलम् । प्रभावस्तम्भितक्षोभं प्रोत्ततार स वारिधिम् ॥७१॥

गुणरत्नाकरः शैलं स रत्नाकरशेखरम् । नानारत्नाकरं सैन्यैरारुरोहाथ रोहणम् ॥७२॥

तत्र तालीतरुवनच्छायाध्यासितसैनिकम् । प्रीत्या लङ्काधिराजस्तमुपतस्थे विभीषणः ॥७३॥

समागमः स शुशुभे नरराक्षसराजयोः । वन्दिनादाद्भुतान्योन्यप्रथमालापसंभ्रमः ॥७४॥

अथ रक्षःपतिर्लङ्कां नीत्वालंकरणं क्षितेः । अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत् ॥७५॥

यदासीत्पिशिताशा इत्यन्वर्थं नाम रक्षसाम् । तदा तदाज्ञाग्रहणे प्रापि तद्रूढिशब्दताम् ॥७६॥

रक्षःशिरःप्रतिच्छन्दैः[1] स्थिरप्रणतिसूचकैः । सनाथशिखरान्प्रादात्तस्मै रक्षःपतिर्ध्वजान् ॥७७॥

पाराह्रादिनिभैः प्राज्ञैः कश्मीरेष्वधुनापि ये । राज्ञां यात्रासु निर्यान्ति ख्याताः पारध्वजाः पुरः ॥७८॥

इत्थमाराक्षसकुलं प्राणिहिंसां निषिध्य सः । स्वमण्डलं प्रति कृती न्यवर्तत नराधिपः ॥७९॥

---

५७. [1]) The *aksharas* व्यधाज्जन्तून्व्यसून्वसुकु and मारेण चरसीव तदेनसः supplied by $A_2$ in spaces left by $A_1$. ५८. [1]) भयस्पृहाजन supplied by $A_2$, as above. ६५. [1]) न supplied by $A_2$. ६६. [1]) Emended; A R G वदान्य:.—[2]) $A_1$ gloss अर्थिभ्यः.—[3]) Thus corr. by $A_2$ from $A_1$ दद्यात. ६७. [1]) Thus corr. by $A_2$ from $A_1$ तदवं. ७२. [1]) Thus $A_1$; $A_2$ आरु. ७४. [1]) दा supplied by $A_2$.—[2]) न्योन्य supplied by $A_2$ in space left by $A_1$. ७७. [1]) $A_1$ gloss प्रतिमाभिः.

ततः प्रभृति तस्याज्ञा सार्वभौमस्य भूपतेः । हिंसाविरतिरूपा क्वा न कैश्चिदुदलङ्घ्यत ॥८०॥
क्षुद्रैरप्याहितिभिर्नाप्सु सिंहाद्यैर्गहने न च । न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः ॥८१॥
अतिक्रामति कालेथ कोपि शोकाकुलो द्विजः । पुत्रं गदार्तमादाय द्वारि चक्रन्द भूपतेः ॥८२॥
दुर्गया प्रार्थितं राजन्पश्वाहारं विनैव मे । अनन्यसंततेः सूनुर्ज्वरेणाद्य विपद्यते ॥८३॥
यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि । एतद्विपत्तौ तत्कोन्यो निमित्तं प्रतिभाति मे ॥८४॥
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयताम् । ब्राह्मणस्य पशोर्वा स्यात्प्राणानां कियदन्तरम् ॥८५॥
तपःस्थानपि ये जघ्नुर्ब्राह्मणप्राणलब्धये । हा मातस्तेधुना भूमे प्रजापालास्तिरोहिताः ॥८६॥
इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे । आपन्नार्तिहरो राजा चिरमेवं व्यचिन्तयत् ॥८७॥
न वध्याः प्राणिन इति प्राक्प्रया समयः कृतः । विप्रार्थमपि किं कुर्यां स प्रतिज्ञातविप्लवम् ॥८८॥
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि । तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः ॥८९॥
नैति मे संशयभ्रान्तमेकपक्षावलम्बनम् । संभेदावर्तपतितं प्रसूनमिव मानसम् ॥ ९०॥
तत्स्वदेहोपहारेण दुर्गां तोषयता मया । प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः ॥९१॥
इति संचिन्त्य सुचिरं देहदानोद्यतो नृपः । श्वः प्रियं तव कर्तास्मीत्युक्त्वा विप्रं व्यसर्जयत् ॥९२॥
क्षपायां क्ष्मापतिमथ स्वमुपाहर्तुमुद्यतम् । निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मजम् ॥९३॥
इत्याद्यद्यतनस्यापि चरितं तस्य भूपतेः । पृथग्जनेष्वसंभाव्यं वर्णयन्तस्त्रपामहे ॥९४॥
अथवा रचनानिर्विशेषमार्गेण वर्त्मना । प्रस्थितां नानुरुन्धन्ति श्रोतृचित्तानुवर्तनम ॥९५॥
तस्मिन्नस्तंगते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः । अनादित्यमिवाशेषं निरालोकमभूज्जगत् ॥९६॥
अथ क्ष्माभृद्ररक्ष क्ष्मां श्रेष्ठसेनस्तदात्मजः । आहुः प्रवरसेनं यं तुञ्जीनं चाञ्जसा जनाः ॥९७॥
दोःस्तम्भसंभृतासक्तौ कृपाणमणिदर्पणे । संक्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत ॥९८॥
समातृचक्रं निर्माय यः पूर्वं प्रवरेश्वरम् । पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात् ॥९९॥
गृहाङ्गनमिव क्षोणीं गणयन्वशवर्तिनीम् । त्रिगर्तोर्वीं ग्राममध्ये प्रवरेशाय यो ददौ ॥१००॥
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनाम् । स समास्त्रिंशतं भूभृन्निस्त्रिंशाश्रयोभवत् ॥१०१॥
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ । साम्राज्ययुवराजत्वभाजने रक्षणं क्षितेः ॥१०२॥
बलाहतानां प्राचुर्यं विनिवार्यासमञ्जसम् । तोरमाणेन दीनाराः स्वाहताः संप्रवर्तिताः ॥१०३॥
मामवज्ञाय राज्ञेव कस्मादेतेन वल्गितम् । इति तं पूर्वजो राजा क्रोधनो बन्धने व्यधात् ॥१०४॥
चिरंस्थितिस्यक्तभुवस्तत्र तस्याञ्जनाभिधा । ऐक्ष्वाकस्यात्मजा राज्ञी वज्रेन्द्रस्यासत गुर्विणी ॥१०५॥
आसन्नप्रसवा भर्त्रा सा प्रपार्तेन बोधिता । सुतं प्रविश्य प्रासोष्ट कुलालनिलये क्वचित् ॥१०६॥
स कुम्भकारगेहिन्या काम्येव पिकशावकः । पुत्रीकृतो राजपुत्रः प्रथीमे पर्यवर्धत ॥१०७॥

८०—८१. [1])—[1]) These two verses have been supplied in margin by $A_3$. ८३. [1]) $A_3$ राजन्नुपहारं. ८८. [1]) $A_3$ प्राक्प्रीतिम समकल्पयम्. ९९. [1]) This verse is supplied by $A_3$ in margin.—[2]) $A_3$ gloss अमाः. १००. [1]) Thus $A_3$; $A_1$ °सवशे १०३. [1]) Thus A ; G R Edd. अमा°.—[2]) $A_3$ gloss सुवर्णमया रूपकसमानवाच्य.—[3]) $A_3$ gloss स्वाहताः स्वनामाक्षरमुद्राङ्कनेन आहताः संप्रवर्तिताः व्यवहारविषयाः कृताः. १०४. [1]) $A_3$ gloss तोरमाणेन. १०६. [1]) $A_3$ gloss प्रपार्तेन सलक्षेण.

अर्भविभ्याः कुलाल्याथ रक्षित्वा विदितोभवत् । रत्नसूतेर्भुजंग्याश्च मण्डल इव शेवधिः ॥१०८॥
पौत्रः प्रवरसेनस्य गिरा मातुर्नृपात्मजः । पैतामहेन नाम्नैव कुलाल्या ख्यापितोभवत् ॥१०९॥
वर्धमानः स संपर्कं न सेहे सहवासिनाम् । तेजस्विमैत्रीरसिकः शिशुः पद्म इवाम्भसाम् ॥११०॥
तं कुलीनैश्च भृत्यैश्च विद्याविद्भिश्च दारकैः । अन्वीतमेव ददृशुः क्रीडन्तं विस्मयाज्जनाः ॥१११॥
स्ववृन्दस्यास्युदारौजा राजा चक्रे स दारकैः । मृगेन्द्रशावः क्रीडद्भिर्वने बालमृगैरिव ॥११२॥
संविभेजेनुजग्राह वशीचक्रे च सोर्भकान् । अराजोचितमाचारं नैव कंचिदसेवत ॥११३॥
भाण्डादि कर्तुं मृत्पिण्डं कुम्भकारैः समर्पितम् । स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरंपराः ॥११४॥
तथा साश्चर्यचर्यः स क्रीडञ्जातु व्यलोक्यत । मातुलेन जयेन्द्रेण सादरं चाभ्यमन्यत ॥११५॥
आवेद्यमानं शिशुभिस्तं जयेन्द्रोयमित्यसौ । भूपालवत्सावहेलं पश्यन्नन्वमहीदिव ॥११६॥
संभाव्य तस्यावष्टम्भात्तमसामान्यवंशजम् । सादृश्याद्भगिनीभर्तुर्भागिनेयमशङ्कत ॥११७॥
सत्वरस्तस्य जिज्ञासारसेनानुससार तम् । प्राप्तस्तद्गृहमौत्सुक्यात्स्वसारं च व्यलोकयत् ॥११८॥
सा स चान्योन्यमुन्मन्यू पश्यन्तौ भ्रातरौ चिरात् । निःश्वासद्विगुणोष्माणि मुहुरश्रूण्यमुञ्चताम् ॥११९॥
कुलाल्या दारको भ्रातः कावेताविति पृष्टवान् । अकथ्यतेत्थं वत्सैषा मातायं मातुलश्च ते ॥१२०॥
पितुर्वधेन सक्रोधं तं कालापेक्षयाक्षमम् । शिक्षयित्वा जयेन्द्रोथ कार्यशेषाय निर्ययौ ॥१२१॥
वसिष्ठोत्पादनासज्ज्ये तस्मिन्नाशा यदृच्छया । बन्धात्त्यक्तो नृपरणिस्तोरमाणोस्तमाययौ ॥१२२॥
निवार्य मरणोद्योगं मातुर्निर्वेदखेदितः । ययौ प्रवरसेनोथ तीर्थोत्सुक्याद्दिगन्तरम् ॥१२३॥
रक्षित्वा दशमासोनाः क्ष्मामेकविंशतिं समाः । तस्मिन्क्षणे हिरण्योपि शान्तिं निःसंततिर्ययौ ॥१२४॥
तत्रानेहस्युज्जयिन्यां श्रीमान्हर्षापराभिधः । एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत् ॥१२५॥
भूपमद्भुतसौभाग्यं श्रीर्वैद्वरमसाभजत् । विहाय हरिबाहूंश्च चतुरः सागरांश्च यम् ॥१२६॥
लक्ष्मीं कृत्वोपकरणं गुणे येन प्रवर्धिते । श्रीमत्सु गुणिनोद्यापि तिष्ठन्त्युद्धुरकन्धराः ॥१२७॥
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः । शकान्विनाश्य येनादौ कार्यभारो लघूकृतः ॥१२८॥
नानादिगन्तराख्यातं गुणवत्सुलभं नृपम् । तं कविर्मातृगुप्ताख्यः सर्वास्थानस्थमासदत् ॥१२९॥
स गम्भीरस्य भूभर्तुरनुभावं महाद्भुतम् । विविधास्थानसंवृद्धस्तस्याभ्यूह्य व्यचिन्तयत् ॥१३०॥
सोयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः । परभागोपलम्भाय पूर्वेमुष्य महीभुजः ॥१३१॥
यस्मिन्नाजनि तत्त्वज्ञैः सूरिभिः संभृतश्रुतिः । नाञ्जलिर्दीयते जातु मानाय च गुणाय च ॥१३२॥
भङ्ग्यामुष्मिन्विदधती स्वाभिप्रायप्रकाशनम् । वैदग्ध्यवन्ध्यतां नैति बुद्धिः कुलवधूरिव ॥१३३॥
खिलीकृतखलालापे युक्तायुक्तविवेकिनि । नायाति सेव्यमानेस्मिन्स्वगुणोनर्थकारिताम् ॥१३४॥
भगामुवद्भिः सावद्यदुर्विधसमशीर्षिकाम् । जीवन्मरणमस्याग्रे गुणिभिर्नानुभूयते ॥१३५॥

---

१०८. ¹) A₃ gloss भूमेः  ११२. ¹) A₃ gloss अतिशयेन उदारं ओजः यस्य.  ११३. ¹) Thus corr. by later hand from A किंचिद°. ११६. ¹) A₃ gloss प्रवरसेनः. १२२. ¹) Thus A₁; A₁ has given a *varia lectio* in margin of which only वसिष्ठो- त्पाद- is legible (वसिष्ठोत्पादनासज्जे?) A₃ वसिष्ठोत्पादने सज्जे, with gloss कुम्भकारस्य कोलाहले सज्जे सति. १२७. ¹) G Edd. गुणी येन प्रवर्तितः. १२८. ¹) A₃ gloss कार्किनाशः  १२९. ¹) G *sec. manu* and Edd. समास्था°. १३२. ¹) A₃ अभिलषा°.

संभावनानुसारेण प्रवृत्तोस्माद्विवेकिनः । शोच्यते नाभिलोच्छ्रायं प्रीतिदायो महाशये: ॥१३६॥
गृह्णन्ननुगुणं स्वाम्यमुचितप्रतिपत्तिभिः । अन्तरङ्गः समस्तानामनुत्साहवर्धनः ॥१३७॥
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादने भ्रमः । अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रयः ॥१३८॥
मिथ्याख्यातगुणो नाप्तो नामात्यः कलहप्रियः । असत्यसंधः स्वैरो वा नास्थानेस्य महीपतेः ॥१३९॥
अश्लीलालापिनोन्योन्यं नर्मोक्त्या मर्मभेदिनः । अन्यमर्षेशासहनाः संहता नास्य सेवकाः ॥१४०॥
छन्दानुवर्तिनामेव निजविज्ञानवन्दिनाम् । सर्वज्ञमन्यतान्धानां मुखप्रेक्षी न पार्थिवः ॥१४१॥
अनेन सह संजातः संलापो विपुलोदयः । लभ्यते नान्तराच्छेत्तुं दुर्जातैर्जातु दुर्जनैः ॥१४२॥
सर्वदोषोज्झितं सेव्यं नृपमेवमिमं मम । समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः ॥१४३॥
गम्भीरश्च गुणज्ञश्च स्थिरबुद्धिश्च पार्थिवः । एष क्लेशमयं त्यक्त्वा निषेव्यः प्रतिभाति मे ॥१४४॥
न चास्माद्धनमादाय रञ्जितादन्यराजवत् । भ्राम्यतो भूतलेमुष्मिन्सेव्योन्यः प्रतिभाति मे ॥१४५॥
इति संचिन्त्य सुदृढं स नवामिव तां सभाम् । नारञ्जयच्च नास्ते स्म गुणिगोष्ठीषु मध्यगः ॥१४६॥
मृदुपूर्वं गुणानेवं दर्शयन्तं विशांपतिः । विशिष्टयोग्यताकाङ्क्षी विवेदाराधनोन्मुखम् ॥१४७॥
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः । उदात्तां सत्क्रियार्हत्वं वदत्यस्य गभीरता ॥१४८॥
इति संचिन्त्य राजापि ज्ञातुं तस्यान्तरं मतेः । नाकरोत्तस्य परीक्षार्थं यथावल्लाभसत्क्रियाः ॥१४९॥
स तेनानुपचारेण तमुदात्ताशयं नृपम् । स्वीकर्तुं विदधद्धीमान्सिषेवे प्रीतिमाश्रितः ॥१५०॥
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः । तस्य नोद्वेगमगमत्स्वकाय इव पार्थिवः ॥१५१॥
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया । शरन्निशाक्षणेनेव राज्ञो निन्ये प्रसन्नताम् ॥१५२॥
नर्मभिर्गर्भचेटानां द्वाःस्थानां निक्रियाक्रमैः । मिथ्यास्तवैर्विटानां च न स क्षोभमनीयत ॥१५३॥
प्रसन्नालापसंप्राप्तौ छायामह इवाचलः । प्रतिस्पर्धीव च क्रुध्यन्नावज्ञायामभूत्प्रभोः ॥१५४॥
वीक्षणं राजदासीनां राजशिष्टैः सहासनम् । राजाग्रे च कथां नीचैः कालविज्ञाचचार सः ॥१५५॥
स्वभावाद्राजपुरुषैः सजने राजनिन्दकैः । नास्मात्प्रभोरुपालम्भो लेभे पैशुन्यजीविभिः ॥१५६॥
वदद्भिरादरास्थैर्यं वैफल्याद्यन्वहं प्रभोः । निन्ये नोत्साहशैथिल्यं सेव्योत्साहासहिष्णुभिः ॥१५७॥
अन्योत्कर्षानपि वदन्प्रसङ्गेन निराग्रहः । स्वविद्याद्योतकः सोभूत्सभ्यानां हृदयंगमः ॥१५८॥
एवं स सेव्यमानस्तमुद्योगेन बलीयसा । अनिर्विण्णो मातृगुप्तः षडृतूनत्यवाहयत् ॥१५९॥
अथ तं कृशसर्वाङ्गं धूसरं जीर्णवाससम् । बहिर्जातु विनिर्यातो राजा वीक्ष्य व्यचिन्तयत् ॥१६०॥
वैदेशिको निःशरणो गुणवान्बान्धवोज्झितः । हा धिग्जिज्ञासुना कष्टं सोयमायासितो मया ॥१६१॥
कोस्याश्रयः किमशनं कानि प्रावरणानि वा । इत्यैश्वर्यविमूढेन मया हन्त न चिन्तितम् ॥१६२॥
वसन्तेनेव न मया शोभयाप्यपि योजितः । शीतवातातपैः शुष्यन्सोयं पुरुषपादपः ॥१६३॥

---

१३६. [1]) संभावनानुसार supplied by $A_2$ in space left by $A_1$. १३७. [1]) $A_2$ gloss प्रतिपत्तिः सत्कारः सत्क्रिया पूजनं मानमिति यावत्. १४५. [1]) Thus corr. by $A_2$ from $A_1$ भ्राम्यते. १४६. [1]) Thus corr. by $A_2$ from $A_1$ नारञ्जन°. १५२. [1]) $A_2$ gloss राज्ञा चक्षुषि.—[2]) $A_2$ gloss मार्गगुणेन. १५५. [1]) $A_2$ gloss राजपादुकैः. १५६. [1]) $A_2$ gloss मातृगुप्तात. १५९. [1]) Thus corr. by $A_2$ from $A_1$ अनिर्विणो.

अस्य ग्लानस्य भैषज्यं निर्विण्णस्य विनोदनम् । श्रान्तस्य वा श्रमच्छेदं को विदध्याद्दसंपदः ॥१६४॥
नास्मै चिन्तामणिं दध्यां नामृतं वा निवेदितः । मया वदयमेतावद्व्यामूढेन परीक्ष्यते ॥१६५॥
तदमुष्य गुणित्वस्य तीव्रसेवाश्रमस्य च । प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयाम् ॥१६६॥
इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति । स्वमसादोचिता काचिन्नत्यभासीव सत्क्रिया ॥१६७॥
ततः प्रावर्तत स्फारनीहारलवशालिभिः । दहद्भिवाङ्गं प्रालेयपवमानैर्हिमागमः ॥१६८॥
संततध्वान्तमिषतस्तीव्रशीतवशीकृताः । आशाश्चकाशिरे नीलनिचोलाच्छादिता इव ॥१६९॥
शीतार्त्या द्युमणावौर्वदहनोष्माभिलाषतः । द्रुतं यातीव जलधिं दिनानि लघुतां ययुः ॥१७०॥
अथ दीपोज्ज्वले धाम्नि लसद्दीप्रहसन्तिके । कदाचिन्नृपतिर्दैवादर्धरात्रे व्यबुध्यत ॥१७१॥
स हेमन्तानिलैर्भूरिझांकारपरुषैः पुरः । दीपान्प्रकम्पितानीषत्प्रविष्टैर्धाम्नि दृष्टवान् ॥१७२॥
तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात्ततः । यामिकेषु बहिः सज्जः को वर्तत इति स्फुटम् ॥१७३॥
सुप्तप्रमेषु सर्वेषु याम्यकश्यान्तरात्ततः । राजन्नयमहं मातृगुप्त इत्यशृणोद्वचः ॥१७४॥
प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहम् । लक्ष्मीसांनिध्यरम्यं तदपृष्टोऽन्यैर्विवेश सः ॥१७५॥
दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः । बहिर्यियासुरूचेऽथ क्षणं तिष्ठेति भूभुजा ॥१७६॥
स भयद्विगुणीभूतशीतकम्पः प्रभोः पुरः । किं स्विद्वक्ष्यतीति विमृशन्नातिदूरेऽभ्युपाविशत् ॥१७७॥
अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तम् । सोऽभ्यधादेव यामिन्या यामः सार्धोऽवशिष्यते ॥१७८॥
ततो भूभृदुवाचैनं कथं सम्यक्त्रिशाक्षणः । त्वयावधारितो निद्रा कथं नाभूच्च ते निशि ॥१७९॥
अथ कृत्वा क्षणाच्छ्लोकमेतं तं स व्यजिज्ञपत् । अवस्थावेदनाद्दाशां दैन्यं वा स्वमुखमुद्यतः ॥१८०॥
शीतेनोद्धूषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥१८१॥
तदाकर्ण्य महीपालः साधुवादैः परिभ्रमम् । अभिनन्द्य कवीन्द्रं तं पूर्वस्थाने व्यसर्जयत् ॥१८२॥
अचिन्तयच्च धिङ्मां यः सगुणास्विन्नचेतसः । दुःखोत्तमं वचः शृण्वन्नेवमेवाधुना स्थितः ॥१८३॥
निरर्थकान्साधुवादानन्यस्येव विदन्मम । अयमज्ञातहृदयो दुःखमास्ते ध्रुवं बहिः ॥१८४॥
चिरं चिन्तयतो यत्नात्सदृशीमस्य सत्क्रियाम् । देयं महार्हमद्यापि न किंचित्प्रतिभाति मे ॥१८५॥
अथ वास्त्येव सूक्तेनं स्मारितोऽस्म्यधुना यथा । वर्तते राजरहितं काम्यं काश्मीरमण्डलम् ॥१८६॥
पात्रायास्मै मही तस्मात्सा मया प्रतिपाद्यते । अवधीर्य महीपालान्महतोऽप्यर्थनापरान् ॥१८७॥
इति निश्चित्य चतुरं क्षपायामेव पार्थिवः । गूढं व्यसर्जयद्दूतान्काश्मीरीः प्रकृतीः प्रति ॥१८८॥
आदिदेश च तान्यो वो दर्शयेच्छासनं मम । मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यताम् ॥१८९॥
अथ दूतेषु यातेषु लेखयित्वा स्वशासनम् । क्ष्मापतिस्तं क्षपाशेषं कृतकृत्योऽत्यवाहयत् ॥१९०॥

१६५. ¹) $A_2$ gloss अनेन इत्यर्थः. १६६. ¹) $A_3$ gloss सत्क्रियया. १६७. ¹) $A_3$ gloss चित्तविषयं न गता इत्यर्थः. १७१. ¹) $A_3$ gloss हसन्तिका मन्त्राशिका. १७३. ¹) $A_3$ gloss रात्रिजागरेषु पुरुषेषु. १७५. ¹) $A_3$ तदपृष्टो. १७६. ¹) Thus corr. by $A_3$ from $A_1$ °रूचे च. १८०. ¹) $A_3$ gloss अवस्थायाः आवेदनं तस्मात्. १८१. ¹) $A_3$ gloss सत्पात्रेभ्यो दत्ता. १८८. ¹) $A_3$ gloss सचिवान् प्रति.

मातृगुप्तस्तु नृपतेः संलापमपि निष्फलम् । ध्यात्वेव गृहीतवैराग्यस्तस्य कक्षमार इवाभवत् ||१९१||

अभ्यर्थ्यैव च कर्तव्यं कृतं शान्तोऽद्य संशयः । यत्राप्यस्याविकारस्य कथं द्विष्याम्यधुना सुखम् ||१९२||

गतानुगतिकत्वेन कोऽयमासीन्मम भ्रमः । जनप्रवादात्सत्त्वं येनास्य ज्ञातवानहम् ||१९३||

भुञ्जानाः पवनं सरीसृपगणाः प्रख्यापिता भोगिनो गात्रभ्रूनिवारका निगदिता विस्तीर्णकर्णा गजाः ।
यत्राभ्यन्तरसंभृतोष्मविकृतिः प्रोक्तः शमी स द्रुमो लोकेनेति निरर्गलं प्रलपता सर्वं विपर्यासितम् ||१९४||

अथ वा विश्वतेर्मुग्ध न काप्यनभिगम्यता । लक्ष्मीप्रणयिनो येन कृताः प्रणयिनां गृहाः ||१९५||

त्यागिनो निष्कलङ्कस्य को दोषोऽस्य महीपतेः । ममापुण्यं तु तद्विन्द्यां यच्छ्रेयःप्रतिबन्धकम् ||१९६||

रत्नोज्ज्वलाः प्रविकिरंल्लहरीः समीरैरब्धिः क्षिपेत यदि रत्नतटाभिमुख्यः ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां[1] दातुर्मनागपि न तस्य तु दातृतायाः ||१९७||

उद्यानफललुब्धानां वरं राजोपजीविनः[1] । न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये ||१९८||

निघ्नन्ति ये पशुपतेः किल पादमूले संप्राप्यते झटिति तैर्नहि भस्मनोऽन्यत् ।
ये तद्वृषस्य तु समुज्ज्वलशातकुम्भप्राप्त्या न कानि सुदिनानि सदैव तेषाम् ||१९९||

चिन्तयन्नपि पश्यामि न कंचिद्दोषमात्मनः । यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः ||२००||

अथ वानादृतोऽन्येन संप्राप्तोऽन्तिकमाप्नुयात् । कः फलेनाभिसंबन्धे गतानुगतिकात्प्रभोः ||२०१||

अन्तर्ये सततं लुठन्त्यगणितास्तानेव पाथोधरैरात्तानापततस्तरङ्गवलयैरालिङ्ग्य गृह्णन्नसौ[1] ।
व्यक्तं मौक्तिकरत्नतां जलकणान्संप्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्नोर्च्यते[2] स्वामिभिः ||२०२||

इदं संचिन्तयन्सोऽभूत्स्तोक्ये तस्मिन्निरादरः । खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी ||२०३||

प्रभातायां विभावर्यामास्थानस्थितो नृपः । आकार्यतां मातृगुप्त इति क्षत्तारमादिशत्[1] ||२०४||

ततः प्रधावितानेकप्रतीहारप्रवेशितः । प्रविवेश महीभर्तुस्त्यक्ताश इव सोऽन्तिकम् ||२०५||

तस्मै कृतप्रणामाय मुहूर्तादेव पार्थिवः । भ्रूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा ||२०६||

स्वयं च तमुवाचाङ्ग कश्मीरान्वेत्सि किं भवान् । गत्वा तत्राधिकारिभ्य एतच्छासनमर्प्यताम् ||२०७||

स ज्ञापितोऽस्मद्देहेन यो लेखं वाचयेत्पथि । संविदेषा[1] प्रयत्नेन विस्मर्तव्या न जातु चित् ||२०८||

अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशङ्कितः । सोऽबुद्ध दहनज्वालां न तु रत्नाङ्कुरद्युतिम् ||२०९||

यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते । निर्गर्वः पूर्ववद्राजा तस्थावार्यैः सहालपन् ||२१०||

अथाक्लेशोचितं[1] क्षाममपाथेयमबान्धवम् । दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः ||२११||

अहो नरेश्वरस्येयं यत्किंचनविधायिता । पृथग्जनोचिते[1] कर्मण्यर्हतो निदधाति यः ||२१२||

दुराशया धृतक्लेशं सेवमानमहर्निशम् । ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः ||२१३||

यथार्थं यं[1] पुरस्कृत्य सेवते सेवकः प्रभुम् । अनन्तरज्ञस्तथैव योग्यं तं किल मन्यते ||२१४||

---

१९७ ¹) A₂ °पर्ययेण. १९८. ¹) A₁ glosses राजोपजीविन: कुरवा:, तत्स्वामिन: तेषां स्वामिन: कर्तार: न वरं. २०२. ¹) Thus corr. by later hand from A₁ लुठन्ति स°.—²) Thus A₂; A₁ °ऽर्घ्यते. २०४. ¹) A₁ gloss द्वारस्थं. २०८ ¹) A₂ gloss विचार. २११. ¹) Thus corr. by later hand from A₁ अथ क्ले°. २१२. ¹) A₂ gloss पृथग्जना. २१४. ¹) Doubtful emendation; on account of an ink blot only the following is legible in the handwriting of A₁: यथाथ--- स्कृत्य. A₂ reads यथार्थं पुरस्कृत्य; this reading is found also in R. G and Edd. Read यथार्थं यं.

सुखार्थी नागारिप्रतिभटशयामास्तृत ध्रुवं जहौ शेषस्तल्पीकृततनु निवेश्यासुररिपुम् ।
यतस्तेनामुष्मिन्नधिगतवता क्लेशसहतां भमादावि न्यस्तं निरवधि धराभारवहनम् ॥२१५॥
अयमेतद्गृहीतेषु गुणवत्सु गुणाधिकम् । आत्मानं गुणवान्पश्यन्नास्थयैनमशिश्रियत् ॥२१६॥
अनन्तरज्ञः कोन्योस्माद्गुणान्दर्शयतोधिकान् । अस्मै गुणवते पूजां यश्चकार किलेदृशीम् ॥२१७॥
यो नानाद्युतिमत्पदार्थरसिकोसारेपि शाक्रायुधे सप्रेमा स विलोक्य बर्हमिह मे किं किं न कुर्यात्प्रियम् ।
इत्याविष्कृतबर्हराजि नटते यो बर्हिणोम्भोलवाचाम्यन्मुञ्चति तं विहाय जलद कोन्योस्ति शून्याशयः ॥२१८॥
गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव वर्त्मसु । नाभूदाश्चर्यमाहात्म्याद्विकल्पः कोपि चेतसि ॥२१९॥
अहंपूर्विकयोद्युक्तैर्निमित्तैः शुभशंसिभिः । स वितीर्णकरालम्ब इव न श्रममाददे ॥२२०॥
अपश्यत्स फणाकोटौ खञ्जरीटमहेः पथि । स्वप्ने प्रासादमारुह्य स्वं चोल्लङ्घितसागरम् ॥२२१॥
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः । एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ॥२२२॥
फलं मम तनीयोपि कश्मीरेषु भवेद्यदि । अनर्घदेशमाहात्म्यात्किं किं नातिशयेत तत् ॥२२३॥
अकृष्टफलकृष्टाः पन्थानो वल्लभातिथयो गृहाः । उपानमन्नच्छतोस्य सत्क्रियाश्च पदे पदे ॥२२४॥
इत्थं विलङ्घिताध्वा स लोलानोकहशाद्वलम् । मङ्गल्यदधिपाण्डाभं ददर्शाग्रे हिमाचलम् ॥२२५॥
सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः । प्रत्युद्ययुस्तं मरुतः पाल्यायाः संस्तुता भुवः ॥२२६॥
क्रमवर्ताभिधाने स प्रदेशो ग्रामवांस्ततः । ठक्कं काम्बुवनामानं योध्य शूरपुरे स्थितः ॥२२७॥
नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान् । काश्मीरिकान्महामात्यान्स्थितान्केनापि हेतुना ॥२२८॥
ततोपनीतप्राग्वेषः प्रावृतो धवलांशुकैः । स जगामान्तिकं तेषां दातुं नृपतिशासनम् ॥२२९॥
तं प्रयान्तं समुद्यद्भिः शकुनैः सूचितोदयम् । पान्थाः केप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमम् ॥२३०॥
श्रुत्वाथ विक्रमादित्यदूतः प्राप्त इति श्रुतम् । द्वाःस्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन् ॥२३१॥
आगच्छत प्रविशतेत्युच्यमानोथ सर्वतः । स तान्समस्तसामन्तानाससादानिवारितः ॥२३२॥
यथाप्रधानं सचिवैर्विहितोचितसत्क्रियः । ततः परार्ध्यमध्यास्त तन्निदर्शितमासनम् ॥२३३॥
कृतार्हणैरथामात्यैराज्ञां पृष्टो महीभुजः । शनैस्तच्छासनं तेभ्यो लज्जमान इवार्पिपत् ॥२३४॥
तेभिवन्द्य प्रभोर्लेखमुपांशु मिलितास्ततः । उन्मुच्य वाचयित्वैतमत्रोचन्विनयान्विताः ॥२३५॥
मातृगुप्त इति श्राव्यं भवतामेव नाम किम् । एवमेवैतदित्यूचे सोपि तान्विहितस्मितः ॥२३६॥
कः कोत्र संनिधातॄणामित्यभूयत वाक्ततः । राज्याभिषेकसंभारो दृश्यते स्म च संभृतः ॥२३७॥
ततः कलकलोत्तालभूरिलोकसमाकुलः । प्रदेशः क्षणमात्रेण सोभूत्क्षुभ्यन्निवार्णवः ॥२३८॥
अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः । संनिपत्य प्रकृतिभिर्मातृगुप्तोभ्यषिच्यत ॥२३९॥
तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठत् । सशब्दमभिषेकाम्बु रेवास्रोत इवाबभौ ॥२४०॥
अथ स्नातानुलिप्ताङ्गं सर्वाङ्गामुक्तभूषणम् । व्यजिज्ञपंस्तं राजानं क्रान्तराजासनं प्रजाः ॥२४१॥

---

२१७. ¹) $A_3$ gloss मूर्खपुरुषः. २१८. ¹) $A_3$ विलोक्य जलदमित्यन्वाहर्ता. २२५. ¹) Thus $A_1$; corr. by $A_3$ into °नोकह°, as also in G R. २२६. ¹) $A_3$ gloss पाल्याया इति प्रभूभाविच्छता तेनैवेरणं. २३५. ¹) $A_3$ gloss परैर्न श्रूयते यथानुपांशु परिकीर्तितम् $A_3$ adds मन्त्रकरणे. २४०. ¹) Thus $A_3$; $A_1$ °स्रेव, corr. by later hand into °स्रव.

अर्थितेन त्वयं दातुं विक्रमादित्यभूभुजा । निर्दिष्टः स्वकमानस्त्वं प्राप्य नः पृथिवीमिमाम् ॥२४२॥
मण्डलानि विलम्ब्यन्ते येनानेन प्रतिक्षणम् । मा भंक्त्वा मण्डलं राजन्स्वितिलक्ष्यं तदिदं परैः ॥२४३॥
कर्मभिः स्वैरयामस्य जन्मनः पितरौ यथा । राज्ञां तथान्ये राज्यस्य प्रभृत्यावेव कारणम् ॥२४४॥
इत्थं स्थितेपरं कश्चिन्मदीयोस्मीति शंसतु । न नेता भवतः राजन्यत्र मात्मा च लाघवम् ॥२४५॥
इति नैलघ्यमुक्तोपि संस्मरन्स्वामिसत्क्रियाम् । मातृगुप्तो महीपालः क्षणमासीत्कृतस्मितः ॥२४६॥
दानेन सुदिनं कुर्वन्नपराध्योर्जितेन सः । तथैव मङ्कलोदर्भं तद्दो निरवर्तयत् ॥२४७॥
पुरप्रवेशायान्येद्युरर्थ्यमानोथ मन्त्रिभिः । अद्भुतप्राभृतं दूतं राज्यदातुर्व्यसर्जयत् ॥२४८॥
देशौचित्यानुसारेण स्पर्धामिव च तां विदन् । स्वामिनो मनसि प्रीतः प्रागसं स्वममन्यत ॥२४९॥
अथाहूयापराम्भृत्यान्नवकुं सेवास्मृतिं प्रभोः । अल्पार्थाण्यपि सास्त्वानि[1] प्राहिणोत्स्वामृतानि सः ॥२५०॥
असामान्यान्गुणांस्तस्य स्मरन्पर्यश्रुलोचनः । स्वयं लिखित्वा श्लोकं च स्वकमेकं व्यसर्जयत् ॥२५१॥
नाकारमुद्वहसि नैव विकत्थसे त्वं दित्सां न सूचयसि मुञ्चसि सत्फलानि ।
निःशब्दवर्षणमिवाम्बुधरस्य राजन्संलक्ष्यते फलत एव तव प्रसादः ॥२५२॥
ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः । क्रमागतामिव महीं यथावत्सर्वपालयत् ॥२५३॥
त्यागे वा पौरुषे वापि तस्यौचित्योज्ज्वलात्मनः । क्ष्माभुजस्तर्कुकस्यैवं नाभूत्परिमितेच्छता ॥२५४॥
यष्टुं यज्ञान्प्रभूतोद्योगस्त्यागी विततदक्षिणाम् । पशुबन्धमनुध्याय करुणाकूणितोभवत् ॥२५५॥
अमारमादिदेशाथ यावद्राज्यं स्वमण्डले । चूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकम् ॥२५६॥
करम्भके कीर्यमाणे मातृगुप्तेन भूभुजा । वैतृष्ण्यमुज्झितक्षोभो न को नाम न्यषेवत ॥२५७॥
गुणी च दृष्टकष्टश्च वदान्यश्च स पार्थिवः । विक्रमादित्यतोप्यासीदभिगम्यः शुभार्थिनाम् ॥२५८॥
विशेषकतया तस्य प्राप्यता सुरभीकृताः । लक्ष्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु ॥२५९॥
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम् । आसमाप्ति ततो नापत्साध्वसाध्विति वा वचः ॥२६०॥
अथ ग्रथयितुं तस्मिन्पुस्तकं प्रस्तुते न्यधात् । लावण्यनिर्वाणभिया तदधः स्वर्णभाजनम् ॥२६१॥
अन्तरज्ञतया तस्य तादृश्या कृतसत्कृतिः । भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोर्पणम् ॥२६२॥
स मातृगुप्तस्वाम्याख्यं निर्ममे मधुसूदनम् । कालेनादत्त यद्ग्रामान्ममः स्वश्वरसद्मने[1] ॥२६३॥
इत्थमासादितराज्यस्य शासतः क्ष्मां क्षमापतेः । त्रिमासोना ययुस्तस्य सैकाहाः पञ्च वत्सराः ॥२६४॥
कृतार्थतां तीर्थतोयैराज्ञानेयो[1]नयन्पितॄन् । जातं तादृशमश्रौषीत्स्वस्मिन्देशे पराक्रमम्[2] ॥२६५॥
पितृशोकार्द्रता तस्य क्रोधेनान्तरधीयत । तरोरिवार्कतापेन नैशाम्बुलवसिक्तता ॥२६६॥
श्रीपर्वते पाशुपतप्रतिवेषस्तमागतम् । आचख्यावश्वपादाख्यः सिद्धः कन्दाशनं ददत् ॥२६७॥

---

२४३. [1]) [2]) $A_1$ indicates the *vv. ll.* चिरीबध्ये and चिरयं. २४५. [1]) Thus $A_3$; $A_1$ राजा. २४६. [1]) Thus corr. by later hand from $A_1$ °गुप्तम°; G R as above. २४७. [1]) $A_3$ gloss अस्वयाइवत्. २५०. [1]) Thus $A_1$; $A_3$ स्वाम्यानि, also G R; Edd. आयानि. २५२. [1]) तव supplied by $A_3$. २५४. [1]) Thus corr. by later hand from $A_1$ °चिरसौच°.—[2]) $A_3$ gloss आपकस्येव. २५५. [1]) Thus A; G R °कूजिती; Edd. °कूजिती. २५८. [2]) Emended: A R G वदन्यश्च. २६०. [1]) $A_3$ gloss काव्यं. २६१. [1]) $A_3$ राजाख:. २६३. [1]) $A_1$ gloss स्वदेवगृहाय. २६५. [1]) $A_3$ gloss प्रवरसेनः.—[2]) $A_3$ पराभवम्. २६७. [1]) $A_3$ gloss प्रवरसेनं.

जन्मान्तरे लब्धसिद्धिस्त्वामस्त्युपरि साधकम् । आकाङ्क्षमपृच्छद्राज्यार्थमभिलाषस्तु तमभवत् ॥२६८॥
सयत्नं तव कर्तुं तन्मनोरथममन्यथा । अथ मामित्थमादिश्य संसारमगशेखरः ॥२६९॥
गणोऽयं मामकः सिद्धो यस्तवोपरि साधकः । जन्मान्तरेऽस्य राज्येच्छां कुर्यामहमनन्यथा ॥२७०॥
भावं भवस्तद्भवतो भगवान्स्वप्नदर्शनः । साफल्यं नेष्यतीत्येवमभिधाय तिरोदधे ॥२७१॥
साम्राज्येच्छोः समामेकां तव तस्य तपस्यतः । लब्धस्मृतिः सिद्धगिरा प्रददौ दर्शनं शिवः ॥२७२॥
प्रतिवेद्य तमादिष्टवाञ्छितार्थसमर्पणम् । स जगद्भिर्जयोत्सिद्धं नरेन्द्रत्वमयाचत ॥२७३॥
उपेक्ष्य मोक्षं किं क्ष्माभृद्भोगानिच्छसि भङ्गुरान् । इति जिज्ञासुना भावं शंभुना सोऽभ्यधीयत ॥२७४॥
स तं बभाषे शंभुं त्वां बुद्ध्वा व्याजतपोधनम् । अभ्यर्थामिदमज्ञो न्वं न स देवो जगद्गुरुः ॥२७५॥
महान्तो ह्यर्थिताः स्वल्पं फलन्त्यल्पेतरं स्वयम् । उदन्यया वदान्योऽब्धिर्वाबुध्याब्धिं सं पयोर्थिने ॥२७६॥
अस्य वैकल्यकैवल्यलाभनिश्चलचेतसः । नो वेत्स्यभिजनस्याभिभूमिं मर्मव्यथावहाम् ॥२७७॥
जगत्परिवृढः प्रीतमीतिस्तं सफलार्थनम् । कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽभ्यभाषत ॥२७८॥
मज्जतो राज्यसौख्येषु सायुज्यांशाभिदूतिकाम् । महाकष्टाभ्रपादस्ते संज्ञां काले करिष्यति ॥२७९॥
इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः । आगच्छदभ्रपादं तमापृच्छ्याभिमतां भुवम् ॥२८०॥
ततो विदितवृत्तान्तो मातृगुप्ताभिषेचनात् । निषिध्य सचिवांस्तातानमात्यानब्रवीदिदम् ॥२८१॥
विक्रमादित्यमुत्सिक्तमुच्छेत्तुं यतते मनः । मातृगुप्तं प्रति न नो रोषेणाकलुषितं मनः ॥२८२॥
अपिबैरपि निष्पिष्टैः किं स्यात्क्लेशासहिष्णुभिः । ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ॥२८३॥
यान्यक्षान्युदयं द्विषन्ति शशिनः कोऽन्यस्ततोऽसंमतस्तानिर्माथिकरीन्द्रदन्तदलने यत्नाम कोऽयं नयः ।
सामर्थ्यप्रथनाय विश्रमसमैः स्पर्धां विधूयोज्झिता ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्ररूढा रुषः ॥२८४॥
त्रिगर्तानां भुवं जित्वा स व्रजन्नथ भूपतिः । विक्रमादित्यमशृणोत्कालधर्ममुपागतम् ॥२८५॥
तस्मिन्नहनि भूभर्त्रा शोकाग्निःश्वसंतानिशम् । नाशायि नाशि नास्वापि स्थितेनावनताननम ॥२८६॥
अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतम् । शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिम् ॥२८७॥
कैश्चिन्निर्वासितो मा स्विन्मदीयैरिति शङ्कितः । ययौ प्रवरसेनोऽस्य पार्श्वं मितपरिच्छदः ॥२८८॥
कृतार्हणं सुखासीनं ततः पप्रच्छ तं शनैः । विनयावनतो राजा राज्यत्यागस्य कारणम् ॥२८९॥
बभाषे तं क्षणं स्थित्वा सं निःश्वस्य विहस्य च । मतः स सुकृती राजन्येन भूमिभुजो वयम् ॥२९०॥
यावन्मूर्ध्नि रवेः पादास्तावद्द्योतयते दिशः । द्योतते नान्यथा किंचिद्ग्रावैव तपनोपलः ॥२९१॥

---

२६८. ¹) मस्तु supplied by A₂ in space left by A₁. २६९. ¹) ²) A₂ glosses आदिदेश and ईश्वरः. २७१. ¹) A₂ gloss अभ्रपादः. २७२. ¹) A₂ gloss प्रवरसेनस्य.—²) Thus A₁; corr. by later hand into °स्मृतेः, as found also in R. २७६. ¹) A₂ gloss स्वल्पमर्थिता बहु फलन्ति महान्तः.—²) A₂ gloss उदन्यया पिपासया.—³) Emended: A R G वदन्यो.—⁴) A₂ gloss शिवः. २७७. ¹) A₂ gloss पराभवं. २७८. ¹) A₂ gloss प्रभुः.—²) Thus corr. by A₂ from A₁ स फलार्थिनम्. २७९. ¹) Thus A₁; corr. by later hand into सांशुज्या°. २८०. ¹) A₂ अगमच्छ°. २८१. ¹) स supplied by A₂ in space left by A₁.—²) A₂ gloss विचार्य. २८४ ¹) A₂ gloss [illegible].—²) A₂ gloss धीरैः. २८६. ¹) Emended; A निश्वस°. २८९. ¹) A₂ gloss प्रवरसेनः. २९०. ¹) A₂ gloss मातृगुप्तः.—²) Thus corr. by later hand from A₁ निश्वस्य.—³) A₂ gloss [illegible]. २९१. ¹) Thus A₁; corr. by A₂ into द्योततेवान्यथा किं च which reading is found also in G R Edd.—²) A₂ gloss सूर्यकान्तः.

अथ राजाभ्यधात्केन राजन्नपकृतं तव । यदस्यापचिकीर्षायै तमीशमनुशोचसि ॥२९२॥

मातृगुप्तस्ततोवादीत्कोपस्मिनसिताधरः । अस्मानुत्सहते कश्चिन्नापकर्तुं बलाधिकः ॥२९३॥

नयता गण्यतामस्माननन्तरशेन तेन हि । न भस्मनि हुतं सर्पिर्नोप्तं वा सस्यमूषरे ॥२९४॥

उपकारं स्मरन्त्यनु कृतज्ञस्य वशंवदाः[1] । पदवीमुपकर्तॄणां यान्ति निश्चेतना अपि ॥२९५॥

निर्वाणमनुनिर्वाति तपनं तपनोपलः । इन्दुमिन्दुमणिः किं च पुष्यन्तमनुपुष्यति ॥२९६॥

पुण्यां वाराणसीं गत्वा तस्मात्क्रमसुखोन्मुखः । इच्छामि सर्वसंन्यासं कर्तुं द्विजजनोचितम् ॥२९७॥

मणिदीपमिवेशं[1] तमन्तरेणान्धकारिताम् । बिभेमि द्रष्टुमप्युर्वीं भोगयोगे कथैव का ॥२९८॥

इत्थं निरत्ययनिधेस्तस्य वाणीमाकर्ण्य विस्मितः । धीरः प्रवरसेनोपि व्याजहारोचितं वचः ॥२९९॥

सत्यं विश्वंभरा देवी भूपते रत्नसूरियम् । उत्पन्नया द्योतते धन्यैः कृतज्ञैर्या भवादृशैः ॥३००॥

अन्तरज्ञतया श्लाघ्यः कोन्यस्तस्मान्महीभुजः[1] । इत्थं जडे जगत्येकस्त्वां यथावद्विवेद यः ॥३०१॥

चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः[1] । धीर त्वयैव न स्यात्तु संचारो यदि दर्श्यते[2] ॥३०२॥

पाकश्चेत्क्षुभस्य मेघ तदसौ प्रागेव नादात्किमु स्वार्थश्चेत्स मयास्य किं न भजते दीनान्स्वबन्धूनयम् ।
मत्तो रन्ध्रदृशोस्य भीर्यदि न तत्क्षुब्धः किमेष त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः ॥३०३॥

अभ्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता । शतशाखीभवत्येव यावन्मात्रापि सत्क्रिया ॥३०४॥

तत्त्वं गुणवतामग्र्यस्तत्त्वज्ञैश्चाभिनन्दितः । परीक्षितो मणिरिव व्यक्तं बहुमतः सताम् ॥३०५॥

तस्मादनुगृहाणास्मान्मा स्म त्याक्षीर्नरेन्द्रताम् । ममापि ख्यातिमायातु गुणवत्पक्षपातिता ॥३०६॥

पूर्वं तेनाथ चरमं मयापि प्रतिपादिताम् । भवान्प्रतिप्रणयिनीं विदधातु पुनर्भुवम् ॥३०७॥

अव्याजौदार्यचर्यस्य श्रुत्वेति नृपतेर्वचः[1] । कृतस्मितो मातृगुप्तः शनैर्वचनमब्रवीत् ॥३०८॥

यान्यक्षराण्यन्तरेण वाच्यं वक्तुं न पार्यते । का गतिस्तदुपादाने मर्यादोल्लङ्घनं विना ॥३०९॥

अतः परुषमप्यत्र किंचिदेव मयोच्यते । अव्याजार्जवमप्येतदार्यत्वमवधीर्यते ॥३१०॥

सर्वः स्मरति सर्वस्य प्रागवस्थासु लाघवम् । आत्मैव वेत्ति माहात्म्यं वर्तमाने क्षणे पुनः ॥३११॥

पूर्वावस्था मदीया ते त्वदीया या च मे हृदि । ताभ्यां विमोहितावावां न विद्मोन्योन्यमाशयम् ॥३१२॥

राजा भूत्वा कथं मादृक्प्रतिगृह्णातु संपदः । कथमेकपदे सर्वमौचित्यं परिमार्जतु ॥३१३॥

असाधारणमौदार्यमाहात्म्यं तस्य भूपतेः । भोगमात्रकृते मादृक्किं साधारणतां नयेत् ॥३१४॥

अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते । भ्रियमाणेभिमाने मे केन ते[1] विनिवारिताः ॥३१५॥

यन्ममोपकृतं तेन तद्विना प्रत्युपक्रियाम् । जीर्णमेवाधुनाङ्गेषु प्रभवत्वेष निश्चयः ॥३१६॥

या गतिर्भूभुजोमुष्य मया तामनुगच्छता । पात्रापात्रविवेकृत्वख्यातिर्नेया प्रकाश्यताम् ॥३१७॥

एतावत्येव कर्तव्ये यातेस्मिन्कीर्तिशेषताम्[1] । भोगमात्रपरित्यागाद्विदध्यां सत्यसंधताम् ॥३१८॥

२९२. ¹) Thus corr. by later hand from $A_1$ वक्षस्तुप°. २९५. ¹) $A_2$ gloss मेन हर्षदेवेन. २९९. ¹) $A_3$ °वशीकृताः. २९८. ¹) $A_3$ gloss विक्रमादित्यं. ३०१. ¹) $A_3$ gloss हर्षदेवात्. ३०२. ¹) $A_3$ gloss वीथीषु.—²) दर्श्यते supplied by $A_3$ in space left by $A_1$. ३०७. ¹) Thus $A_1$; $A_3$ °व्याजिप्र°. ३०९. ¹) Thus corr. by $A_3$ from $A_1$ वाच्यवत्तार°. ३१०. ¹) This verse has been omitted by $A_1$ and supplied in margin by $A_1$; found in R G. ३१५. ¹) $A_2$ gloss ते भोगा इत्यर्थः. ३१८. ¹) $A_3$ gloss विक्रमादित्ये.

इत्युक्त्वा विरते तस्मिञ्जगाद जगतीपतिः । त्वदीया न मया स्पृह्यास्त्वयि जीवति संपदः ॥३१९॥
अथ वाराणसीं गत्वा कृतकाषायसंग्रहः । सर्वं संन्यस्य सुकृती मातृगुप्तोऽभवद्यतिः ॥३२०॥
राजा प्रवरसेनोऽपि काश्मीरोत्पत्तिमञ्जसा । निखिलां मातृगुप्ताय प्राहिणोद्दृढनिश्चयः ॥३२१॥
स हठापतितां लक्ष्मीं भिक्षाभुक्प्रतिपादयन् । सर्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत् ॥३२२॥
अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनाम् । त्रयाणामपि[1] वृत्तान्त एष त्रिपथगापयः ॥३२३॥
राजा प्रवरसेनोऽथ नमयन्नवनीधरान् । अकुण्ठलङ्घाः ककुभो वृद्धस्य यशसो व्यधात् ॥३२४॥
पीताब्धिर्लङ्घितोर्वीभृत्कुम्भयोनिरिवानयत् । तस्य प्रतापः प्रभवन्भुवनानि[1] प्रसन्नताम् ॥३२५॥
शुष्यत्तमालपत्राणि शीर्णताडीदलानि च । तत्सेनार्णवनीराणि चक्रेऽरिस्त्रीमुखानि च ॥३२६॥
स गङ्गालिङ्गिताङ्गस्य पूर्ववारिनिधेर्व्यधात् । सैन्येभमदनिष्पन्दैः कालिन्दीसंगमश्रियम् ॥३२७॥
रोधस्यपरपयोधेः कटकैः स्कन्धविकटैः । चकारोत्पाट्य सौराष्ट्रानसौ राष्ट्रविपाटनम् ॥३२८॥
यशोऽर्थिनः पार्थिवेषु द्वेषरागबहिष्कृतः । ववृधे धर्मविजयस्तस्य क्षितिशतक्रतोः ॥३२९॥
वैरिनिर्वासितं पित्र्ये विक्रमादित्यजं न्यधात् । राज्ये प्रतापशीलं स शीलादित्यापराभिधम् ॥३३०॥
सिंहासनं स्ववंश्यानां तेनाहितहृतं ततः । विक्रमादित्यवसतेरानीतं स्वपुरे पुनः ॥३३१॥
हेतूनुदीर्य विविधानमन्वानं पराजयम् । स[1] सप्त वारांस्तत्याज जित्वा मुम्मुनिं[2] भूभुजम् ॥३३२॥
धार्ष्ट्यादथाष्टमे वारे हेतुमाख्यातुमुद्यतम् । धिक्प्रभून्बध्यतां सोऽयमित्यूचे नृपतिः क्रुधा ॥३३३॥
अवध्योऽहं प्रभुत्वेन वीरेत्युक्त्वाभयोत्सुकः । मध्येसभं ननर्तास्य सोऽनुकुर्वन्कलापिनम् ॥३३४॥
नृत्तं केकां च शिखिनो[1] दृष्ट्वास्मै द्रविणं नृपः । अभयेन समं प्रादात्तालावचरणोचितम्[2] ॥३३५॥
वसतोऽस्य दिशो जित्वा प्रभुः पैतामहे पुरे । कर्तुं पुरं स्वनामाङ्कं प्रथते स्म मनोरथः ॥३३६॥
रात्रौ क्षेत्रं च लग्नं च दिव्यं ज्ञातुमथैकदा । स वीरो वीरचर्यायां निर्ययौ पार्थिवार्यमा ॥३३७॥
गच्छतः क्ष्मापतेस्तस्य मौलिरत्नाग्रबिम्बितः । बभार तारानिकरो रक्षासर्षपविभ्रमम् ॥३३८॥
अथानन्तचितालोकस्पष्टभीमतटद्रुमाम् । श्मशानप्रान्ततटिनीं पर्यटन्नाससाद सः ॥३३९॥
ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः । ऊर्ध्वबाहु महद्भूतं प्रादुरासीन्महौजसः ॥३४०॥
नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः । उल्काज्योतिःकृताश्लेषः कुलाद्रिरिव दिद्युते ॥३४१॥
तमथ प्रतिशब्देन घोरेणापूरयन्दिशः । अत्रासं विहसन्नुच्चैरुवाच क्षणदाचरः ॥३४२॥
संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तं च शूद्रकम् । त्वां च भूपाल पर्याप्तं धैर्यमन्यत्र दुर्लभम् ॥३४३॥
वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते । सेतुमेतं समुत्तीर्य पार्श्वमागम्यतां मम ॥३४४॥
इत्युदीर्य निजं जानुं रक्षः पारात्प्रसारयत्[1] । तन्महासरितो वारि सेतुसीमन्तितं व्यधात् ॥३४५॥
अङ्गेन रक्षःकायस्य ज्ञात्वा सेतुं प्रकल्पितम् । वीरः प्रवरसेनोऽथ विकोशां क्षुरिकां दधे ॥३४६॥

३२३. [1]) $A_1$ gloss त्रयाणां विक्रमादित्यमातृगुप्तप्रवरसेनानाम्. ३२५. [1]) $A_2$ gloss जलान्यपि. ३३२. [1]) $A_2$ gloss प्रवरसेनः.—[2]) Doubtful emendation: मुंमु has been supplied by $A_2$ in space left by $A_1$; $A_2$ has marked a different division of the words, जित्वाऽमुं । मुनिर्भूभुजम्, which is also indicated by the interlinear gloss of $A_2$ प्रतापशीलं; C reads मुम्मुनि°. For the name मुम्मुनि see iv. 167; v. 516; viii. 2180 (*C.*).—३३५. [1]) $A_2$ gloss शिखिवन्नृत्तं.—[2]) Thus $A_1$; $A_2$ तालार्थचरणो°. ३३८. [1]) Thus $A_2$; $A_1$ °ग्राङ्क°. ३४५. [1]) Thus apparently $A_1$; $A_2$ °यन्.

स तयोत्क्षिप्य तन्मांसं कृतसोपानपद्धतिः । अतश्चाद्य तत्स्थानं क्षुरिकाबलं उच्यते ॥३४७॥
पार्श्वस्थं तं लग्नमुक्त्वा प्रातस्तत्सूत्रपातनम् । दृष्ट्वा पुरं विधेहीति वदन्भूतं तिरोदधे ॥३४८॥
देव्या शारिकयाट्टेन यक्षेणाधिष्ठिते च सः । ग्रामे शारीटके पश्यत्सूत्रं वेतालपातितम् ॥३४९॥
भक्त्या प्रतिष्ठां प्राक्तस्मिञ्जिगीषौ प्रवरेश्वरम् । जयस्वामी स्वयं पीठे भित्त्वा बन्धमुपाविशत् ॥३५०॥
वेतालावेदितं लग्नं जानतो जगतीभुजा । स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोभवत् ॥३५१॥
नगरप्रातिलोम्याय भक्त्या तस्य विनायकः । प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ ॥३५२॥
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः । पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन्निवेशिताः ॥३५३॥
वितस्तायां स भूपालो बृहत्सेतुमकारयत् । ख्याता ततः प्रभृत्येव तादृशी सेतुकल्पना ॥३५४॥
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात् । मातुलः स नरेन्द्रस्य जयेन्द्रो विनिवेशनम् ॥३५५॥
बुभोज सिंहलादीन्यो द्वीपान्स सचिवोकरोत् । मोराकनामा मोराकभवनं भुवनाद्भुतम् ॥३५६॥
षट्त्रिंशद्गृहलक्षाणि पुरं तत्प्रथमे पुरा । यस्यास्तां वर्धनस्वामी विश्वकर्मा च सीमयोः ॥३५७॥
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल । निर्मितं तेन नगरं विभक्तैर्युक्तमापणैः ॥३५८॥
ते तत्राभ्रंलिहाः सौधा यानध्यारुह्य दृश्यते । वृष्टिस्निग्धं निदाघान्ते चैत्रे चोत्कुसुमं जगत् ॥३५९॥
तद्विना नगरं कुत्र पवित्राः सुलभा भुवि । सुभगाः सिन्धुसंभेदाः क्रीडावसथवीथिषु ॥३६०॥
दृष्टः क्रीडानगोन्यत्र न मध्येनगरं क्वचित् । यतः सर्वौकसां लक्ष्मीः संलक्ष्या सुपथादिव ॥३६१॥
वैतस्तं वारि वास्तव्यैर्बृहत्तुहिनशर्करम् । ग्रीष्मोष्मेद्धे स्ववेश्मसात्कं ततोन्यत्र लभ्यते ॥३६२॥
प्रतिदेवगृहं कोशास्ते तस्मिन्नर्पिता नृपैः । सहस्रशः शक्यते यैः क्रेतुं भूः सागराम्बरा ॥३६३॥
पुरे निवसतस्तस्मिंस्तस्य राजप्रजासृजः । शनैः साम्राज्यलाभस्य षष्टिः संवत्सरा ययुः ॥३६४॥
ललाटे शूलमुद्राङ्के जराभुग्नाः शिरोरुहाः । तस्य शंभुभ्रमासक्तिगङ्गाम्भोविभ्रमं दधुः ॥३६५॥
अथाश्वपादेनेशाननिर्देशात्तत्क्षणागतः । काश्मीरिको जयन्ताख्यो द्विजन्मायोजि पार्श्वगः ॥३६६॥
भ्रान्तोस्यध्वन्य नान्यस्माद्देशात्तेभिमतं भवेत् । राज्ञे प्रवरसेनाय लेख एष प्रदर्श्यताम् ॥३६७॥
इत्युक्त्वार्पितलेखोसावसमर्थः पथः पृथून् । गन्तुं प्रस्थानखिन्नोस्मि सद्यस्तेनेत्यगद्यत ॥३६८॥
श्राम्य तावत्त्वं स्पृष्टो द्विजः कापालिना मया । उक्त्वेति तेन क्षिप्तोसावत्रासन्ने दीर्घिकाजले ॥३६९॥
उन्मीलितेक्षणोद्राक्षीत्स्वं स्वदेशादथोत्थितम् । तस्थुषश्चार्चने राज्ञो भृत्यान्व्यग्राञ्जलाहृतौ ॥३७०॥
स्वमावेदयितुं तथा नीयमाने नृपान्तिकम् । अध्याक्षिप्तोक्षिपल्लेखं स स्नानकलशे ततः ॥३७१॥
प्रवरेशं स्नापयता कस्तं तत्कलशात्पुनः । राज्ञा लेखं वाचयित्वा जयन्तः प्रापितोन्तिकम् ॥३७२॥
कृतं कृत्यं महत्ते भोगा भुक्ता वयो गतम् । किमन्यत्करणीयं ते एहि गच्छ शिवालयम् ॥३७३॥
ततस्तं वृत्तसंकेतः संतोष्याभिमतार्पणात् । भित्त्वा तमश्मप्रासादं जगाहे विमलं नभः ॥३७४॥
जनैः स ददृशे गच्छन्कैलासतिलकां दिशम् । विषादे घटयन्व्योम्नि द्वितीयतपनोदयम् ॥३७५॥

---

३४७. 1) Thus corr. by A1 from A1 °भाल; G °वाल. ३४९. 1) Thus corr. by later hand from A1 °ष्ठितं.—2) A2 gloss ग्रामेह. ३५१. 1) स्य supplied by A3. ३५४. 1) Thus corr. by A2 from A1 तत्र. ३५५. 1) A gloss स्थापनम्. ३६२. 1) A3 °र्बृहत्तु°. ३६६. 1) Thus corr. by A2 from A1 °निर्दे°.

जयन्तेनाद्भुतोदन्तहेतुनावाप्य संपदः । स्वनामाङ्कप्रहारादिकर्मभिर्निर्मलाः कृताः ॥३७६॥
एवं स भुवनैश्वर्यं भुक्त्वा भूमिभृतां वरः । अनेनैव शरीरेण भेजे भूतपतेः सभाम् ॥३७७॥
प्रासादे प्रवरेशस्य सिद्धिक्षेत्रे समापतेः । स्वर्गद्वारप्रतिभटं द्वारमद्यापि लक्ष्यते ॥३७८॥
तस्य रत्नप्रभादेव्यां जातो राजा युधिष्ठिरः । अपासीत्त्रयमासोनाः क्ष्मां चत्वारिंशतिं समाः ॥३७९॥
सर्वरत्नजयस्कन्दगुप्तशब्दाङ्किताभिधाः । आसन्विहारचैत्यादिकृत्यैस्तत्सचिवा वराः ॥३८०॥
भवच्छेदाभिधं ग्रामं स्तुत्यं चैत्यादिसिद्धिभिः । यो व्यधात्सोस्य वज्रेन्द्रोप्यासीन्मन्त्री जयेन्द्रजः ॥३८१॥
दिक्कामिनीमुखोत्कीर्णकीर्तिचन्दनचित्रकाः । आसन्कुमारसेनाद्यास्तस्यान्येप्यग्र्यमन्त्रिणः ॥३८२॥
पद्मावत्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत् । लःखणापरनामा यो नरेन्द्रस्वामिनं व्यधात् ॥३८३॥
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ । अभूतां सुकृतोदन्तौ राज्ञी च विमलप्रभा ॥३८४॥
स विधायाधिकरणं लिखितस्थितये निजम् । द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः ॥३८५॥
तस्यानुजो धरणिभृद्रणादित्यस्ततोभवत् । तुञ्जीनापरनामानं यं जनाः प्राहुरञ्जसा ॥३८६॥
जगद्विलक्षणं यस्य शङ्खमुद्राङ्कितं शिरः । अपूर्वशार्वरीशान्तर्लीनभानुभियं दधे ॥३८७॥
रिपुकण्ठाटवीष्वासीद्यस्य धाराधरः पतन् । तद्वधूनेत्रकुण्डैस्तु जलाधिक्यमधार्यत ॥३८८॥
अपूर्वो यत्प्रतापाग्निः प्रविश्योर्वीं द्विषां न्यधात् । नारीनेत्रेषु नीरोर्मीन्मन्दिरेषु तृणाङ्कुरान् ॥३८९॥
यस्य पाणिप्रणयितां कृपाणे समुपागते । कबन्धेभ्यः परो नृत्तं न व्यधत्त द्विषद्बले[1] ॥३९०॥
तस्याप्यपोढमाहात्म्या देवी दिव्याकृतेः प्रिया । विष्णुशक्तिः क्षितिं प्राप्ता रणारम्भाभिधाभवत् ॥३९१॥
स हि जन्मान्तरे पूर्वं द्यूतकारोभवत्किल । कदापि प्राप निर्वेदं सर्वस्वं कितवैर्जितः ॥३९२॥
देहत्यागोद्यतोप्यासीत्प्राप्य किंचिद्विचिन्तयन् । न पर्यन्तेप्युपेक्षन्ते कितवाः स्वार्थसाधनम् ॥३९३॥
अवन्ध्यदर्शनां विन्ध्ये देवीं भ्रमरवासिनीम् । द्रष्टुमैच्छद्वराकाङ्क्षी निर्व्यपेक्षः स्वजीविते ॥३९४॥
भ्रमरैः शङ्कुपुच्छाद्यैः खण्ड्यमानस्य देहिनः । तदास्पदं हि विशतो दुर्लङ्घ्या पञ्चयोजनी ॥३९५॥
स वज्रशङ्कुपुच्छानां धीमांस्तेषां प्रतिक्रियाम् । देहेनश्वरपरित्याज्ये मन्वानोभून्नदुष्कराम् ॥३९६॥
प्रागयोवर्मणा देहं ततो महिषचर्मणा । तेन छादयता दत्तो मृल्लेपोथ सगोमयः ॥३९७॥
अथ भानुकरोच्छुष्कमृल्लेपावेष्टिताङ्गकः । स लोष्ट इव संचारी प्रतस्थे क्रूरनिश्चयः ॥३९८॥
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समम् । गुहा तेन ततः सान्द्रतमोभीमा व्यगाह्यत ॥३९९॥
अथोदतिष्ठन्गर्तेभ्यो घोरा भ्रमरमण्डलाः । पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्यरवैरिव ॥४००॥
ते तमुच्छुष्कमृल्लेपरेणुप्रणितलोचनाः । सहसा नाक्रमन्ते स्म प्रहरन्तोपि बाधितुम् ॥४०१॥
रेणुभिर्येन्धितदृशास्ते न्यवर्तन्त षट्पदाः । तेखण्डयंस्तु मृल्लेपं न्यपतन्ये नवा नवाः ॥४०२॥
तैः खण्ड्यमानमुखण्डैर्व्रजतो योजनत्रयीम् । क्रमान्मृत्कवचं तस्य पथि संक्षयमाययौ ॥४०३॥
ततो मुहुः प्रहरतां तेषां महिषचर्मणि । घोरश्चटचटाघोषः प्रादुरासीद्भयंकरः ॥४०४॥

३७७. [1]) Thus A₂; A₁ त्यक्त्वा. ३७८. [1]) A₂ सिद्धत्रं. ३७९. [1]) Thus corr. by A₂ from A₁ चतुर्विंशतिं. ३८१. [1]) A₂ gloss भौत्तो. ३८३. [1]) A₁ ल×खणा°. ३९०. [1]) A₂ indicates a *varia lectio* in the marginal note अन्यत्र कबन्धेभ्यः परं नृत्तं न व्यधत्त द्विषद्बलम्; over the last word the gloss कर्त्तृ by the same hand.

चतुर्थयोजनस्यार्धमतिक्रम्य विवेद सः । रणत्कारोर्मिरिफांस्तानयोवर्मनिपातिनः ॥४०५॥
धावंस्ततोतिवेगेन खण्ड्यमानेन षट्पदैः । स मांसवर्जमात्मोपि चिरं[1] धैर्येण नो पुनः ॥४०६॥
गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान् । धुन्वन्कराभ्यां मधुपान्धावति स्म स धीरधीः ॥४०७॥
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः । कराभ्यामक्षिणी रक्षन्देव्यायतनमासदत् ॥४०८॥
प्रशान्ते भृङ्गसंपाते प्रकाशमवलोकयन् । स देव्याः पादयोरग्रे पपातोत्क्रान्तजीवितः ॥४०९॥
स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः । अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ॥४१०॥
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा । स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ॥४११॥
प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीमनि याम् । घोराकारां स तां देवीं तदाद्राक्षीन्न तां पुनः[1] ॥४१२॥
ददर्श पुनरुद्यानलतावासे विलासिनीम् । स्थितां पुष्करिणीतीरे श्यामां पुष्करलोचनाम् ॥४१३॥
गृहीतहारमुक्तार्थां[1] बद्धां पीनस्तनाञ्जलिम् । महार्हैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकाम् ॥४१४॥
यावकाहारिणौ पादौ दधतीं कृच्छ्रचारिणौ । स्तनच्छद्ममुखं द्रष्टुं तपस्यन्ताविवान्वहम् ॥४१५॥
भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननाम् । हरिमध्यां शिवाकारां सर्वदेवमयीमिव ॥४१६॥
तां विभाव्यानवद्याङ्गीं निर्जने यौवनोर्जिताम् । निन्ये[1]वारितवामेन स कामेन विधेयताम् ॥४१७॥
दधती रूपमाधुर्यपूरच्छद्मामधृष्यताम् । अप्सराः प्रत्यभात्तस्य सा हि चित्ते न[1] देवता ॥४१८॥
कृपामृदुरवादीत्तं व्यथितोसि चिरं पथि । मुहुः सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः ॥४१९॥
स तां बभाषे शान्तो मे भवत्या दर्शनाच्छ्रमः । अदेवी किं तु भवती वरं दातुं कथं क्षमा ॥४२०॥
देवी जगाद तं भद्र कोयं ते मनसि भ्रमः । देवी वा श्यामदेवी वा वरीतुं त्वां तु ढौकयाम् ॥४२१॥
इति सोभीष्टसंप्राप्तौ कारयित्वा प्रतिश्रवम् । दूरमुत्क्रान्तमर्यादः संगमं तामयाचत ॥ ४२२॥
तमभ्यधात्सा दुर्बुद्धे कोयं तेनुचितो विधिः । प्रार्थयस्वेतरद्यस्मात्साहं भ्रमरवासिनी ॥४२३॥
देवीं तां जानतोप्यस्य नाभूद्व्यवहितं मनः । निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः ॥४२४॥
स तामुवाच सत्यां[1] चेद्देवि त्वं गिरमिच्छसि । प्रमाणीकुरु मद्वाणीमहमन्यन्न कामये ॥४२५॥
पूर्वमेव हि जन्तूनां योधिवासो निलीयते । तिलानामिव तेषां स पर्यन्तेपि न शीर्यते ॥४२६॥
देवी वा भव कान्ता वा भीमा वा शोभनापि वा । यादृशीं पूर्वमद्राक्षं तादृश्येवावभासि मे ॥४२७॥
तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम् । एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः ॥४२८॥
उत्सहन्ते हि संस्प्रष्टुं न दिव्या मर्त्यधर्मिणः । तद्गच्छ क्रूरसंकल्पेत्युक्त्वा सान्तर्दधे ततः ॥४२९॥
अभूम्यजन्मा भूयासं तया देव्येति[1] चिन्तयन् । प्रयागवटशाखामादहासीत्स वपुस्ततः ॥४३०॥
सोजायत रणादित्यो रणारम्भा च सा भुवि । मर्त्यभावेपि या नैव जहौ जन्मान्तरस्मृतिम् ॥४३१॥
रतिसेनाभिधश्चोलराजः सज्जोब्धिपूजने । तां तरङ्गान्तराल्लेभे रत्नराजिमिवोज्ज्वलाम् ॥४३२॥

४०६. [1]) A₂ चिरं. ४१२. [1]) Thus A₁; A₂ G पुर:; R and Edd. read पुन:. ४१४. [1]) Thus A₁; altered by A₂ to °मुक्तार्थाञ्चबद्धा. A₂ reads in margin गृहीतहारमुक्तार्था बद्धपीनस्तनाञ्जलिम्, with gloss मुक्ता एवार्घाः. G and R follow A₁. ४१७. [1]) A₂ writes ऽ after निन्ये. ४१८. [1]) This division of the words is indicated by A₁. ४२५. [1]) Thus corr. by later hand from A₁ सत्यं; सत्यां also in G and R. ४२९. [1]) A₂ देव्यो.

आ बाल्याद्व्यक्तदिव्योक्तिं तामलंकृतयौवनाम् । विद्याधरीं पृथिवीशेभ्यो नार्थिभ्योपि ददौ नृपः ॥४३३॥
रणादित्यनृपामात्ये दूत्यायाते तथैव तम् । प्रत्याख्यानेच्छुमाचख्यौ सैव तद्वरणं वरम् ॥४३४॥
तदर्थमेव कथितस्वोत्पत्तिं तां ततः पिता । सुतं कुन्तलभूभर्तुः सुहृदः प्राहिणोद्गृहान् ॥४३५॥
प्रहृष्टो विप्रकृष्टं तं देशं गत्वा व्यधत्त ताम् । परिणीय रणादित्यः शुद्धान्तस्याधिदेवताम् ॥४३६॥
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि । तं मायया मोहयन्ती न पस्पर्श कदाचन ॥४३७॥
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियम् । स्वयं सा भ्रमरीरूपा निर्जगाम बहिर्निशि ॥४३८॥
स नाम्ना स्वस्य देव्याश्च कृत्वा हरगृहद्वयम् । माहेश्वरः शैललिङ्गे कारयामास कारुभिः ॥४३९॥
श्वः प्रतिष्ठाप्रसङ्गे च सज्जे तल्लिङ्गयोर्द्वयम्[1] । देशान्तरागतः कश्चिद्दूषयामास दैववित् ॥४४०॥
स दृष्टप्रत्ययः शश्वत्तयोर्घटितलिङ्गयोः । अश्मखण्डैः समण्डूकैर्बभाषे गर्भमावृतम् ॥४४१॥
किंकर्तव्यतया मूढं प्रतिष्ठाविघ्नविह्वलम् । दिव्यदृष्टिः स्वयं देवी ततो राजानमब्रवीत् ॥४४२॥
राजन्गिरिसुतोद्वाहे पौरोहित्यं पुरा भजन् । स्वमर्चादेवमादत्त[1] पूजाभाण्डात्प्रजापतिः ॥४४३॥
तां विष्णोः प्रतिमां वीक्ष्य पूजितां तेन धूर्जटिः । शून्यामिव तदा मेने शक्तिरूपां विना शिवाम् ॥४४
निमज्जितैर्ढौकितानि रत्नान्यथ सुरासुरैः । पिण्डीकृत्य स्वयं चक्रे लिङ्गं भुवनवन्दितम् ॥४४५॥
तां विष्णुप्रतिमां तच्च लिङ्गमीशानपूजितम् । स्वयं प्रजासृजः पूज्यं कालेनादत्त रावणः ॥४४६॥
तेनाप्यभ्यर्च्यमानं तल्लङ्कायामभवच्चिरम् । देवद्वयं रावणान्ते नीतमासीच्च वानरैः ॥४४७॥
तिर्यक्तया ते कपयो मुग्धा हिमनगौकसः । शान्तौत्सुक्याः शनैर्देवौ न्यधुरुत्तरमानसे ॥४४८॥
प्रागेव सरसस्तस्मात्कुशलैः शिल्पिभिर्मया । तावुद्धृतौ प्रातरत्र प्राप्तौ द्रक्ष्यस्यसंशयम् ॥४४९॥
तयोः प्रतिष्ठा क्रियतामित्युक्त्वा पृथिवीभुजम् । देवी प्रयाता शुद्धान्तं सिद्धान्सस्मार खेचरान् ॥४५०॥
ते[1] ध्यातमात्राः[2] संप्राप्ता देव्यादेशेन पाथसः[3] । उद्धृत्य नृपतेर्धाम्नि देवौ हरिहरौ न्यधुः[4] ॥४५१॥
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः । प्रातर्नृपगृहे दृष्ट्वा परं विस्मयमाययौ ॥४५२॥
सज्जे प्रतिष्ठालग्नेथ[1] माहेश्वरतया नृपः । रणेश्वरप्रतिष्ठायां पूर्वं यावत्समुद्यतः ॥४५३॥
रणारम्भानुभावेन तावद्देवाद्भुताग्रहः । स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत् ॥४५४॥
कर्तुं प्रभावजिज्ञासां राज्ञ्यां[1] दत्तधनस्ततः । स स्वयंभूः स्वयं भक्तांस्तां[2]स्तान्ग्रामानदापयत् ॥४५५॥
कुम्भवासतया छन्नः सिद्धो ब्रह्माभिधो वसन् । परिज्ञाय तयोर्[1]देव्या प्रतिष्ठाकर्म कारितः ॥४५६॥
स वृत्तप्रत्यभिज्ञः सन्प्रतिष्ठाप्य रणेश्वरम् । व्योम्ना व्रजन्रणस्वामिप्रतिष्ठां गूढमादधे ॥४५७॥
जनास्त्वलक्षयन्यत्तु स्वयं पीठमवातरत् । इति केषामपि हृदि प्रवादो[1]द्यापि वर्तते ॥४५८॥
सा ब्रह्मप्रतिमं सिद्धं[1] देवी ब्रह्मविदां वरम् । अकारयत्समुद्दिश्य पराध्यं[2] ब्रह्ममण्डपम्[3] ॥४५९॥
रणारम्भास्वामिदेवौ दंपतिभ्यां व्यधीयत । मठः पाशुपतानां च ताभ्यां प्रद्युम्नमूर्धनि[1] ॥४६०॥

४४०. ¹) A₃ gloss शिवलिङ्गद्वयम्. ४४३. ¹) Thus A₃; A₁ °धत्त. ४५१. ¹)²)³) Thus corr. by later hand from A₁ °मात्र, पाथस.—⁴) Thus A₃; A₁ न्यधुः. ४५३. ¹) Thus A₁; A₃ °लिङ्गे. ४५५. ¹) Thus corr. by A₃ from A₁ राज्ञ— ²) Thus A₃; A₁ भक्तैस्तां°. ४५६. ¹) A₃ gloss हरिहरयोः. ४५८. ¹) Thus A₃; A₁ प्रवचो. ४५९. ¹) Thus corr. by hand from A₁ स.—²) Thus corr. by A₃ from A₁ पराध्यं.—³) Thus A₃; A₁ °मण्डपम्. ४६०. ¹) A₃ gloss प्रद्युम्नशारिकागिरौ.

आरोग्यशाला निरघात्पुण्यावसथाय रोगिणाम् । तेन सेनामुखीदेवीभवशान्स्वे च कारिता ॥४६१॥

ख्यातिं रणपुरस्वामिसंज्ञया सर्वतो गतम् । स सिंहरोत्सिकाग्रामे मार्तण्डं प्रत्यपादयत् ॥४६२॥

अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः । दक्षिणेस्मिन्रणेशस्य पार्श्वे देवोमृतेश्वरः ॥४६३॥

मेघवाहनभूभर्तृपत्न्या भिन्नाख्यया कृते । विहारेपि तया बुद्धबिम्बं साधु निवेशितम् ॥४६४॥

राज्ञे देव्यनुरक्ताय सानुक्रोशाय सैकदा । पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम् ॥४६५॥

मा भून्मोघास्य मत्प्रीतिरिति मत्वा तदर्पितम् । असाधयत्स तं प्राप्य वशान्तं वत्सरान्बहून् ॥४६६॥

कृत्वाष्टिकापथे कष्टं तपो[1] नन्दिशिलां गतः । भूरिभिर्वत्सरैर्मन्त्रसिद्धेः प्रणयितां ययौ ॥४६७॥

स्वनैश्च सिद्धिलिङ्गैश्च ज्ञाताभ्युदयनिश्चयः । चन्द्र[1]भागाजलं भित्त्वा नमुचेः प्राविशद्बिलम् ॥४६८॥

बिलप्रावृततां याते दिवसान्येकविंशतिम् । प्रविश्य पौरान्प्राभिन्ये दैत्यस्त्रीभोगभोगिताम् ॥४६९॥

एवं स भूपतिर्भुक्त्वा[1] भुवं वर्षशतत्रयम् । निर्वाणप्राप्त्यनिर्व्यूढि पातालैश्वर्य[2]मासदत् ॥४७०॥

सानुगे नृपतौ याते दैतेयदयितान्तिकम् । देवी सा वैष्णवी शक्तिः श्वेतद्वीपमगाहत ॥४७१॥

राजवंशेष्वनेकेषु राज्ञोर्वंशद्वये परम् । द्वयोरेवात्र निर्व्यूढिं प्रजावात्सल्यमागतम् ॥४७२॥

रणादित्यस्य गोनन्दवंशे रामस्य राघवे । लोकान्तरगतस्यापि ययौरंशभुजः प्रजाः ॥४७३॥

विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः । तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः ॥४७४॥

राजा ब्रह्मगलूनाभ्यां सचिवाभ्यां समं महीम् । सोपासीद्वासवसमो द्वाचत्वारिंशतिं समाः ॥४७५॥

चक्रे ब्रह्ममठं ब्रह्मा गलूनो लूनदुष्कृतः । रत्नावल्याख्यया वध्वा विहारं निरमापयत् ॥४७६॥

राज्ञोनन्तरजस्तस्य राजाभूत्तदनन्तरम् । नापितारातिभूपालो बालादित्यो बलोर्जितः ॥४७७॥

लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन् । यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोभजन्मुखम् ॥४७८॥

आसन्येरिमनोगाधबोधदण्डा इवाहताः । यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्ववारिधौ ॥४७९॥

प्रभावाङ्केन वङ्गाञ्जित्वा येन व्यधीयत । काश्मीरिकनिवासाय कालम्ब्याख्यो[1] जनाश्रयः ॥४८०॥

कश्मीरेषु धनोदग्रमग्रहारं द्विजन्मनाम् । राजा मडवराज्ये यो भेडरा[1]ख्यमकारयत् ॥४८१॥

त्रिशां विपादितारिष्टमरिष्टोत्सादनं[1] व्यधात् । वल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम् ॥४८२॥

भ्रातरो मन्त्रिणस्तस्य त्रयो मडसुरीकसोः । सेनोथ कारका[1] आसन्खङ्खनुप्रमालवाः ॥४८३॥

बभूव तस्य भूभर्तुर्भुवनाद्भुतविभ्रमा । तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी ॥४८४॥

तां वीक्ष्य लक्षणोपेतां मृगाक्षीं पितुरन्तिके । अमोघप्रत्ययो व्यक्तं व्याजहारेति दैववित् ॥४८५॥

भविता तव जामाता जगतीभोगभाजनम् । स्ववन्तमेव साम्राज्यं गोनन्दान्वयजन्मनाम् ॥४८६॥

सुतासंतानसाम्राज्यमनिच्छन्नथ पार्थिवः । दैवं पुरुषकारेण जेतुमासीत्कृतोद्यमः ॥४८७॥

---

४६६. [1]) Thus A; R G वंशान्तं; Edd. वसन्त. ४६७. [1]) Thus $A_3$; $A_1$ ततो. ४६८. [1]) Thus corr. by later hand from $A_1$ चान्द्र°. ४७०. [1]) Thus corr. by $A_2$ from $A_1$ भूत्वा.—[2]) Thus $A_3$; $A_1$ °लेश्वरम्. ४७२. [1]) $A_1$ gloss वंशे.—[2]) $A_3$ gloss द्वयोः रामरणादित्ययोः. ४७५. [1]) Emended; A R G °गल्लूरा°. ४८०. [1]) The words from कालम्ब्याख्यो to कारका in verse 483 have been supplied by $A_1$ at a later date and in a smaller handwriting, partly in space left for this purpose, partly in margin. ४८१. [1]) Thus corr. by $A_2$ from $A_1$ भेरडा°. ४८२. [1]) $A_2$ gloss रहौसाने. ४८३. [1]) See note to verse 480 above.

अराजान्वयिने[1] दत्वा नेयं साम्राज्यहारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे ॥४८८॥
हेतुं स रूपमात्रं कृत्वा जामातरं नृपः । अथाश्वघासकायस्थं चक्रे दुर्लभवर्धनम् ॥४८९॥
मातुः कार्कोटनागेन सुप्तायाः समीयुषा[1] । राज्यायैव हि संजातो राज्ञा नाज्ञायि तेन सः[2] ॥४९०॥
निधिन्वते हि शंसन्त्या धर्मेणायोग्यमापदात् । जिगीषयेव तत्रैव निदधाति विधिः शुभम् ॥४९१॥
मात्सर्येण जडङ्गतान्नियतवृचो धूमध्वजे योग्यतां ज्ञात्वा स्वां निदधत्स्वियं दिनपतिर्ह्रास्यः प्रयात्यस्तोन्मुखः ।
दैवं वेत्ति न यः शिखी तु परतो नामास्तु तत्संभवाः स्युर्दीपा अपि यद्गुणेन जगतस्तिग्मांशुविस्मारकाः ॥४९२॥
धिया भाग्यानुगामिन्या चेष्टमानो यथोचितम् । अभूत्सर्वस्य चक्षुष्यः स तु दुर्लभवर्धनः ॥४९३॥
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौबीरभाग्यसाम्यं च शनकैः श्वशुरोनयत् ॥४९४॥
पित्रोः प्रेयस्तयोर्दृप्ता[1] तारुण्यादिमदेन च । राजपुत्री यथावत्तु गणयामास नैव तम् ॥४९५॥
स्वैरिणीसंगमो भोगा युवानोभे पितुर्गृहम् । पत्युर्मृदुत्वमित्यस्याः किं नाभूच्छीलविघ्नकृत् ॥४९६॥
सा नित्यदर्शनाभ्यासाच्छनकैर्विघ्नता मनः । अनङ्गलेखा खङ्खेन समायुज्यत[1] मन्त्रिणा ॥४९७॥
रूढप्रेमसुखाभ्यासनष्टह्रीभीतिसंभ्रमा । धाष्ट्यं दिनादिनं यान्ती ततस्तन्मयतां ययौ ॥४९८॥
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह[1] ॥४९९॥
उपलेभे च शनकैस्तस्यास्तं शीलविप्लवम् । विरागलिङ्गैरपाङ्गैर्धीमान्[1]दुर्लभवर्धनः ॥५००॥
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव मोत्थाय पश्यन्ती सस्मितं पथः ॥५०१॥
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चलैः । तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ॥५०२॥
तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता । दिरंशां तस्य संलक्ष्य सखीभिर्बद्धसंकथा ॥५०३॥
तच्चुम्बने भुग्नकण्ठी तदाश्लेषेसहाङ्गका । तत्संभोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता[1] ॥५०४॥
अवेदि मायशो योपि प्रेमविक्रीतचेतना । निवेदयन्ती ह्रीःशील्यपिशाचावेशवैकृतम् ॥५०५॥ कुलकम् ॥
निगूढदारदौरात्म्यचिन्ताकृशवपुस्ततः । शुद्धान्तमविशज्जातु निशि दुर्लभवर्धनः ॥५०६॥
सोपश्यत्स्फुरत्कान्तिप्रज्वलत्स्वापनिःसहाम् । दुर्जार[1]भर्तुरङ्केषु प्रसुप्तामिव चक्रभाम्[2] ॥५०७॥
श्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ । निवेदयन्तीं[1] तत्कालमेव निर्वहणं रतेः ॥५०८॥
अन्यस्यापि क्रुधो हेतुं पुनरप्यक्षमावहाम् । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ॥५०९॥
प्रजिहीर्षुः स रोषेण विमर्शेन निवारितः । प्रहस्येव प्रहस्येव निवृत्तं स्वममन्यत ॥५१०॥
ततस्तथाविधः क्षुभ्यन्नकोपावेशसागरः । विचारवेलया तस्य बलात्क्रममनीयत ॥५११॥
नमस्तस्मै ततः कोन्यो गण्यते वशिनां धुरि । जीर्यन्ते येन पर्याप्ता ईर्ष्याविषविषूचिकाः ॥५१२॥
सोचिन्तयदहो कष्टाचेष्टा[1]रागानुगा इमाः । विचारवन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधो नराः ॥५१३॥

---

४८८. [1]) $A_2$ gloss अनृपकुलीनाय दत्ता. ४८९. [1]) कृत्वा जामा supplied by $A_2$ in space left by $A_1$. ४९०. [1]) Thus corr. by $A_2$ from $A_1$ समेयुषा.—[2]) Thus corr. by $A_2$ from $A_1$ सा. ४९२. [1]) Emended; A R G जडङ्ग°.—[2]) Thus $A_2$; $A_1$ स.—[3]) $A_2$ gloss दूरे इत्यर्थः. ४९५. [1]) $A_2$ gloss दर्पितमर्यादा. ४९७. [1]) Emended; A संमायु°. ४९९. [1]) $A_2$ छन्नम्. ५००. [1]) The text from मान्दुर्लभवर्धनः to the end of verse 507 below has been supplied by $A_2$, partly in space left by $A_1$, partly in margin. ५०४. [1]) Emended with Edd.; A °निद्रता. ५०७. [1]) $A_2$ दुर्जाल°, with v. l. as above.—[2]) See note to verse 500 above. ५०८. [1]) Thus corr. by $A_2$ from $A_1$ °यन्ती. ५१३. [1]) Thus corrected by $A_2$ from $A_1$ कष्टाः चेष्टा°.

क्षीति नामेन्द्रियार्थोयमिन्द्रियार्थो यथा परे । तथैव सर्वसामान्या वशिनामत्र काः क्षुधः ॥५१४॥
निसर्गतरला नारीः को नियन्त्रयितुं क्षमः । नियन्त्रणेन किं वा स्यादायस्तता स्मरणोचितम् ॥५१५॥ 515
यः शुनोरिव संघर्षे एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोपमानस्ततः परः ॥५१६॥
ममकारो मृगाक्षीषु क इवायं सचेतसाम् । स्वदेहेनुपपन्नोपि यः सोन्यत्र कथं मतः ॥५१७॥
उद्वेगोत्पादनाद्देषा मध्या चेत्प्रतिभाति मे । रागस्तर्हि स्मृतः कस्मान्मूलमुद्वेगशाखिनः ॥५१८॥
सप्तपातालनिक्षिप्तमूलो रागमहीरुहः । भूमिभूतमनुत्पाद्य द्वेषमुन्मूल्यते कथम् ॥५१९॥
द्वेषो नामैव दुर्धर्षो जितो येन विवेकिना । क्षणार्धेनैव रागस्य तेन नामापि नाशितम् ॥५२०॥ 520
वीक्ष्यैतद्दिव्यया दृष्ट्या रागिणां वाच्यमौषधम् । ईर्ष्या जेया ततो रागः स्वयमाद्याः पलायते ॥५२१॥
इति ध्यात्वालिखद्वर्णान्खड्गस्यांशुकपल्लवे । वध्योपि न हतो यत्त्वं स्मर्तव्यं तत्त्वयेत्यसौ ॥५२२॥
जनैरलक्ष्यमाणेथ याते दुर्लभवर्धने । त्यक्तनिद्रः स मन्त्री तंदृष्ट्वा वर्णानवाचयत् ॥५२३॥
दाक्षिण्यात्प्राणदस्यास्य खड्गः स मनसा तदा । विसस्मारानङ्गलेखां दध्यौ तु प्रत्युपक्रियाम् ॥५२४॥
तस्योपकर्तुरुचितं प्रतिकारमिच्छोश्चिन्ताविशन्न तु मनः स्मरबाणपङ्क्तिः ।
दृग्गोचरे परिचयप्रणयं प्रपेदे निर्निद्रता न तु कदाचन राजपुत्री ॥५२५॥ 525
भूत्वा सप्तत्रिंशतिमब्दान्स चतुर्भिर्मासैर्वन्ध्यौ मूर्धनि रत्नं नृपतीनाम् ।
तस्मिन्काले लोकमवापोज्ज्वलकृत्यो बालादित्यो बालशशाङ्काङ्कितमौलेः ॥५२६॥
पूर्वं विपन्नतनयेभिजनस्य शेषे गोनन्दसंततिरजायत तत्र शान्ते ।
प्राग्दन्तिभुग्ननलिनाथ हठप्रविष्टतोयौघपाटितबिसा नलिनीव हीना ॥५२७॥
अथ शिथिलितमुख्यामात्यवैमत्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि स कृतज्ञो राजजामातुरुच्चैर्व्यधित विधिवदिष्टं मूर्ध्नि राज्याभिषेकम् ॥५२८॥
कार्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणद्योतश्रेणिफणाङ्कुराङ्कितबृहद्बाहुर्महीमुद्वहन् ।
ज्ञातिप्रीतिससंतोषशेषफणभृत्संफुल्लदृक्पल्लवन्यासावर्जकहाटकाब्जपटलस्रग्धामशोभोभवत् ॥५२९॥
अथ विगलिता गोनन्दोर्वीभुजोभिजनाच्युतेरतिभुविनि भूः कार्कोटाहेः कुले व्यधित स्थितिम् ।
चिरपरिचितात्स्वर्गाभोगाध्वनः पतनं श्रिता त्रिभुवनगुरोः शंभोर्मौलाविवामरनिम्नगा ॥५३०॥ 530

१० ॥ ५३६ ॥ आदितः ५३ ॥ ग्रं १०६९॥

इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां तृतीयस्तरङ्गः ॥[1]

---

५१६. [1]) $A_2$ gloss विरोधः. ५२२. [1]) Thus corr. by $A_2$ from $A_1$ °ब्धाङ्गस्या°. ५२३. [1]) मन्त्री स supplied by $A_2$ in space left by $A_1$. ५२४. [1]) तदा वि supplied by $A_2$ in space left by $A_1$. ५२६. [1]) Thus $A_1$; altered by $A_2$ to बालार्क°.— [2]) $A_3$ gloss कनामित्यर्थः. ५२७. [1]) $A_2$ gloss तस्मिन्. ५२८. [1]) $A_3$ gloss सद्गुः. ५२९. [1]) Thus corr. by $A_2$ from $A_1$ कर्कोट°. *Colophon.* [1]) $A_1$ adds here लिखितश्चैव मया राजानकरत्नकण्ठेन.

## ॥ चतुर्थस्तरङ्गः ॥

तद्दीनव्यतिरेकमद्रितनयावेशेन मिश्रीभवत्स्विप्यत्यूहमिह व्यपोहतु वपुः स्थाणोरभद्राणि वः ।
वेण्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता जूटाहेरपि यत्र भाति दयितामूर्त्यैव पृक्ता तनुः ॥१॥
स महीं राजकन्यां च प्रापवानेकतः कुलात् । रत्नानां च सुतानां च राजाभूद्भाजनं शनैः ॥२॥
पतिगोपितदौःशील्या तुल्यसौभाग्यगौरवा । अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ॥३॥
शिशुरेवायुषोल्पत्वं दैवज्ञोक्तं विचिन्तयन् । राज्ञः सुतो मल्हणाख्यो मल्हणस्वामिनं व्यधात् ॥४॥
परिविशोककोटादौ प्रवृत्तप्रतिपत्तिना । अदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्ष्माभुजा ॥५॥
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिम् । षट्त्रिंशता स वर्षाणां क्ष्मात्रृषास्तमुपाययौ ॥६॥
अनङ्गदेव्यां संभूतस्तस्य दुर्लभकः सुतः । शशास वासवसमस्तनो वसुमतीं कृती ॥७॥
मातामहस्य यो मात्रा दौहित्रस्तनयीकृतः । प्रतापादित्य इत्याख्यां तत्कुलानुगुणां दधे ॥८॥
औडैनैडबिडालाग्रामभिधा यन्मन्त्रिणा कृताः । अग्रहारा हनुमता पुण्यानुमतसंपदा ॥९॥
प्रतापतापितारातिः प्रतापपुरपत्तनम् । मघवन्नगरस्पर्धि दीर्घबाहुर्व्यधत्त सः ॥१०॥
नानादिगन्तरायाततत्तत्क्रयिकसंकुले । नोणाभिधोवसत्तस्य देशे रौहीतको वणिक् ॥११॥
रौहीतदेशे जातानां निवेशार्थं द्विजन्मनाम् । महागुणो नोणमठं पुण्यज्येष्ठं चकार सः ॥१२॥
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः । अर्चितोभवदेकाहमुपचारैर्नृपोचितैः ॥१३॥
प्रातः सुखासिकां प्रेम्णा पृष्टोथ पृथिवीभुजा । शीर्षव्यथामकथयत्प्रजातां दीपकज्जलैः ॥१४॥
ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः । वसंस्तदास्पदेद्राक्षीत्क्षपायां मणिदीपकान् ॥१५॥
विलासित्वेन लक्ष्म्या च तादृश्या तस्य विस्मितः । अथ द्वित्राण्यहान्यासीत्तत्रैव स कृताहृणः ॥१६॥
एकदा तेन तत्कान्ता व्यलोकि ललिताकृतिः । श्रीनरेन्द्रप्रभा नाम हर्म्ये हिमकरानना ॥१७॥
उरोजपूर्णकुम्भाङ्का सदूर्वाहितविभ्रमा । मूर्तिमन्मङ्गलमिव स्मरस्यं च गृहस्य च ॥१८॥
हर्म्यस्य निर्जनतया स निःशङ्कविहारिणीम् । तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे ॥१९॥
सापि दर्शितमालीभिः किंचित्साचीकृतानना । अपश्यत्काश्यपीकान्तं भ्रान्तविभ्रान्तया दृशा ॥२०॥
प्राग्जन्मप्रेमबन्धाद्वा निदेशाद्वा मनोभुवः । सपक्षपातं सा तस्य दृष्ट्यैव विदधे मनः ॥२१॥
क्षणादलब्धस्पर्शोऽपि तां सौभाग्यसुधामयीम् । मज्जानमपि संस्पृश्य स्थितामिव विवेद सः ॥२२॥

१०. 1) $A_3$ gloss तापदृ. १२. 1) $A_3$ gloss स्थितये. १४. 1) Thus corr. by $A_3$ from $A_1$ प्रजातां. १५. 1) Thus corr. by $A_3$; $A_1$ seems to have read कृतागमः. १८. 1) $A_3$ gloss सक्तौ च तावूरू सदूरू ताभ्यां आहितो विभ्रमो यया.—2) च स्मरस्य supplied by $A_3$ in space left by $A_1$. २१. 1) Thus corr. by $A_3$ from $A_1$ निदेशाद्वा. २२. 1) Thus corr. by later hand from $A_1$ मज्जानामपि

हर्म्यस्तम्भच्छन्नगात्री क्षणं भूत्वा जगाम सा । व्यावर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः ॥२३॥
गृहीतहृदयस्तन्व्यास्तावतैव महीपतिः । स चिन्ताजिह्मनयनो राजधानीं शनैर्ययौ ॥२४॥
तत्र तस्य तदाकारध्यानाविहितचक्षुषः । सममन्तःपुरप्रीत्या प्रपेदे तानवं तनुः ॥२५॥
अचिन्तयत्स धिक्कष्टं कष्टोयमशुभावहः । अस्मिन्मे मानसोद्याने रागनामा विषद्रुमः ॥२६॥
अहो नु सुभगा रागवृत्तिर्धिरत्तं विजित्य या । विवेकादीन्व्यधाद्दूरे सुहृदः परिपन्थकान् ॥२७॥
भाव्यं कौलीनभीतेन येन भूमिभृता सता । तस्य मे दुःसहः कोयं सदाचार[1]विपर्ययः ॥२८॥
यत्र दारापहरणं राजैव कुरुते विशाम् । परः को नाम तत्रास्तु शासिता[1] नीत्यतिक्रमे ॥२९॥
विमृश्यन्निति भूपालो[1] विस्मर्तुमभवत्क्षमः । न पद्धतिं साधुसेव्यां न च तां दीर्घलोचनाम् ॥३०॥
तमथ प्रथितास्वास्थ्यं नेदीयोमरणं वणिक् । स जनाज्ज्ञातवृत्तान्तः सुजनो विजनेऽब्रवीत् ॥३१॥
इमामवस्थां प्राप्नोसि किं धर्मेण निरुध्यसे । न प्राणसंशये जन्तोरकृत्यं नाम किंचन ॥३२॥
यन्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्मसंशये । तेषामपीदृशे कृत्ये भूयते संयमव्ययः ॥३३॥
यशोनुरोधादुचितं[1] नापि देहमुपेक्षितुम् । स्वकीर्तिर्न परासूनां कीर्णा[2] कर्णरसायना ॥३४॥
माभून्मदनुरोधस्ते त्वत्प्रियार्थं हि पार्थिव । प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा ॥३५॥
एवमुक्तोऽपि नादत्ते तां चेत्तस्तां[1] सुरास्पदात्[2] । गृह्णतां नर्तकीभूत्वा नृत्तज्ञस्वान्मयार्पिता ॥३६॥
तेनेति प्रार्थ्यमाणः स बलिना च मनोभुवा । प्राग्लज्जामथ जग्राह कथंचित्तां सुलोचनाम् ॥३७॥
कृत्यैकदानैः सापास्ततादृक्चारित्रलाघवा । नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरम् ॥३८॥
क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतम् । प्रासोष्ट पार्थिववधूर्निधानमिव मेदिनी ॥३९॥
तस्याभिजनमालिन्यं[1] स्वच्छैरच्छेदि तद्गुणैः । शाणाश्मकषणैः[2] कार्ष्ण्यमाकरोत्थं मणेरिव ॥४०॥
धूमाद्ग्राहमलीमसाच्छुचि[1] पयः सूते घनस्योद्गमो लोहस्यातिशितस्य जातिरचलात्कुण्ठाश्ममालामयात् ।
किंचात्यन्तजडाज्जलाद्युतिमतो ज्वालाध्वजस्योद्भवो[2] जन्मावन्ध्य[3]नुकारिणो न महतां सत्यं स्वभावाः क्वचित् ॥४१॥
तारापीडोऽपि तनयः क्रमात्तस्यामजायत । अविमुक्तापीडनामा मुक्तापीडोऽपि भूपतेः ॥४२॥
वज्रादित्योदयादित्यललितादित्यसंज्ञकाः । प्रतापादित्यजाः ख्याताश्चन्द्रापीडादयोऽपि ते ॥४३॥
वर्षान्पञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः । पुण्यनिःश्रेणिभिः पुण्यामारुरोह दिवं शनैः ॥४४॥
राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोऽभवत् । पीडितेन्दुत्विषा कीर्त्या कलेः पीडां चकार यः ॥४५॥
एकपादाकृतिर्धर्मः समस्यैवोज्झितो नृपैः । शुद्धश्लोककृता येन पादैः संयोजितस्त्रिभिः ॥४६॥
यं क्षमाविक्रममुखाः परस्परविरोधिनः । सिषेविरे गुणास्तुल्यं दिव्योद्यानमिवर्तवः ॥४७॥
स्थाने स्थाने यदीया श्रीस्तुल्यमाप्याययन्त्यभूत् । द्रुमानुद्यानकुल्येव निखिलाननुजीविनः ॥४८॥
दोषांस्त्यक्त्वान्यभूपेषु यं शुद्धा श्रीरशिश्रियत् । मार्गाद्रिरोधकालुष्यं क्षिप्त्वा सिन्धुरिवार्णवम् ॥४९॥

२८. 1) चार supplied by $A_2$ in space left by $A_1$. २९. 1) सिता supplied by $A_2$ in space left by $A_1$. ३०. 1) पालो supplied by $A_2$ in space left by $A_1$. ३४. 1) Thus corr. by $A_3$ from $A_1$ °दुचितं.—2) Thus corr. by $A_2$ from $A_1$ कीर्णक°. ३६. 1) $A_1$ तथा.—2) $A_1$ gloss देवगृहात्. ४०. 1) $A_1$ gloss कुलदोषं.—2) Thus corr. by $A_2$ from $A_1$ °कफणैः. ४१. 1) Thus corr. by $A_1$ from धूमोद्गा°.—2) Thus corr. by $A_2$ from $A_1$ °ध्वमस्तो°—3) Thus A, with $A_3$ gloss भूमि R C Edd. wrongly जन्मावन्ध्य°.

कार्यज्ञो यो न सस्नेहे यस्कलेभूतिविमर्शी । परं समाचरंस्तुल्यं स्तूयमानस्त्रपां दधे ॥५०॥
अनीयत न योमात्यैर्विनयं तान्स्वाशिक्षयत् । वज्रं न भिद्यते कैश्चिद्भिनत्त्यन्यान्मणींस्तु तत् ॥५१॥
यस्याधर्मभयादासीत्संत्याज्यो धर्मसंक्षये । निजोपि पक्षः कुलिशत्रासादिव गरुत्मतः ॥५२॥
न्याय्यं दर्शयता वर्त्म तेन राज्ञा प्रवर्तिताः । स्थितयो वीतसन्देहा भास्वतेव दिनक्रियाः ॥५३॥
नियन्त्रितो यद्गणितिस्तद्गुणोदीरणादियम् । अतिप्रसङ्गभङ्गात्तस्तैव वाचामितः पुनः ॥५४॥
तस्य त्रिभुवनस्वामिप्रासादारम्भकर्मणि । चर्मकृत्कोपि न प्रादात्कुटीं क्षेत्रोपयोगिनीम् ॥५५॥
शश्वत्प्रतिभुतार्थानां नवकर्माधिकारिणाम् । नैसर्गिकापदयस्तः स्वत्रापातं न चक्षमे ॥५६॥
विज्ञापितोथ तैरेत्य तमर्थं पृथिवीपतिः । तानेव सागसो मेने चर्मकारं न तं पुनः ॥५७॥
सोभ्यधात्ताभ्धिगेतेषामप्रेक्षापूर्वकारिताम् । प्रागेव चैरपृष्ट्वा तं प्रविष्टं नवकर्मणि ॥५८॥
नियम्यतां विनिर्माणं यद्वान्यत्र विधीयताम् । परभूम्यपहारेण सुकृतं कः कलङ्कयेत् ॥५९॥
ये द्रष्टारः सदसतां ते धर्मविगुणाः क्रियाः । यद्यमेव विदध्मश्चेद्यातु न्याय्येन कोध्वना ॥६०॥
इत्युक्तवति भूपाले प्रेषितो मन्त्रिपर्षदा । पार्श्वात्पादुकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत् ॥६१॥
इच्छति स्वामिनं द्रष्टुं स च ब्रूते न चेन्मम । युक्तः प्रवेश आस्थाने बाह्यालयवसरेस्तु तत् ॥६२॥
अन्येद्युरथ भूपेन स बहिर्दत्तदर्शनः । पुण्यकर्मणि नो विघ्नः किं त्वमेवेत्यपृच्छयत ॥६३॥
प्रतिभाति गृहं यद्वेद्रम्यं तत्र ततोधिकम् । तदर्थ्यतां धनं वापि भूयैवं चाभ्यधीयत ॥६४॥
तूष्णीं स्थितं ततो भूपं चर्मकारो व्यजिज्ञपत् । दन्तांशुसूत्रैस्तत्सत्त्वमानं ज्ञातुमिवोद्यतः ॥६५॥
राजन्विज्ञाप्यते[1] किंचिद्यदस्माभिर्यथाशयम्[2] । न स्थेयमवलिप्तेनं तत्र श्रुत्वा सता त्वया ॥६६॥
नाहमूनः शुनो नास्ति[1] काकुत्स्थात्पार्थिवः पृथुः । क्षुभ्यन्तीवाद्य तल्लभ्याः संलापेस्मिन्किमावयोः ॥६७॥
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः । अहंताममताख्याभ्यां शङ्कुभ्यामेव बध्यते ॥६८॥
कङ्कणाङ्गदहाराद्रिशोभिनां भवतां यथा । निष्किंचनानामस्माकं स्वदेहेहंक्रिया तथा ॥६९॥
देवस्य राजधान्येषा यादृशी सौधहासिनी । कुटी घटमुखानद्धतमोरिस्तादृशी मम ॥७०॥
आ जन्मनः साक्षिणीयं मातेव सुखदुःखयोः । मठिका लोठ्यमानाद्य नेक्षितुं क्षम्यते मया ॥७१॥
नृणां यद्गेहभरणे दुःखमाख्यातुमीश्वरः । तद्विमानच्युतोमर्त्यो राज्यभ्रष्टोथ पार्थिवः ॥७२॥
एवमप्येत्य मद्वेश्म सा चेद्देवेन[2] याच्यते । सदाचारानुरोधेन दातुं तदुचितं मम ॥७३॥
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदम् । कुटीं जग्राह वित्तेन नाभिमानः शुभार्थिनाम् ॥७४॥
अथाचचर्मकारस्तं तत्र[1] स व्यञ्जिताञ्जलिः । राजन्धर्मानुरोधेन परवत्ता तवोचिता ॥७५॥
श्वविग्रहेण धर्मेण पाण्डुसूनोः पुरा यथा । धार्मिकत्वं तथा तेद्य मयास्पृहयेन वीक्षितम् ॥७६॥
स्वस्ति तुभ्यं चिरं स्थेया धर्म्या वृत्तान्तपद्धतीः । दर्शयन्नीदृशीः शुद्धाः श्रद्धेया धर्मचारिणाम् ॥७७॥

५०. [1]) Thus $A_3$; $A_1$ °चरस्तुत्यं. ५१. [1]) Thus $A_3$; $A_1$ मात्यैर्वि° G R Edd. follow $A_3$.—[2]) $A_3$ gloss [illegible]. ५२. [1]) Thus corr. by $A_1$ from $A_1$ यस्य ध°.—[2]) Thus $A_3$; $A_1$ °त्मता. ५३. [1]) $A_1$ gloss मन्देहा नाम राक्षसविशेषाश्च. ५४. [1]) $A_3$ gloss अस्मापि:. ६१. [1]) $A_1$ gloss चर्मकारस्य. ६६. [1]) $A_3$ विज्ञप्यसे.—[2]) Thus corr. by $A_1$ from [illegible]. ६७. [1]) $A_3$ नास्ति. ७३. [1]) $A_3$ उपेत्य.—[2]) Thus corr. by later hand from $A_1$ देव न; $A_3$ gloss नृपेण. ७५. [1]) $A_3$ तत:. ७६. [1]) $A_1$ मयाऽस्पृहयेन; $A_3$ gloss अधमेन.

एवं निष्कल्मषाचारः स चक्रे पावनीं भुवम् । राजा त्रिभुवनस्वामिकेशवस्य प्रतिष्ठया ॥७८॥
कृत्यैः प्रकाशदेव्याख्या प्रकाशाकाशकान्तिभिः । प्रकाशिकाविहारस्य तत्पत्नी कारयित्र्यभूत् ॥७९॥
गुरुर्मिहिरदत्ताख्यस्तस्योदात्तगुणोऽभवत् । विश्वंभरस्य[1] गम्भीरस्वामिनाम्नो[2] विधायकः ॥८०॥
सर्वाधिकरणस्थैर्योच्छेत्ता छलितकाभिधः । नगराधिकृतस्तस्य छलितस्वामिनं व्यधात् ॥८१॥
कदाचन सभासीनं दृष्ट्वा धर्माधिकारिभिः । प्रायोपविष्टा राजानं ब्राह्मणी काचिदब्रवीत् ॥८२॥
त्वयि प्रशासति महीमहो गर्हानिबर्हणे । सुखसुप्तस्य मे पत्युर्हृतं केनापि जीवितम् ॥८३॥
एषैव महती लज्जा सदाचारस्य भूपतेः । यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः ॥८४॥
कलिकालबलात्संबन्धस्यादृशैरपि दृश्यते । पापात्पापतरेऽमुष्मिन्दोषे कथमुदास्यते ॥८५॥
चिन्तयन्त्यपि नावैमि भर्तुः कंचिद्विरोधिनम् । निर्दोषस्य हि तस्यासन्सर्वतः शीतला दिशः ॥८६॥
अनसूयो निरुत्सेकः प्रियवाग्गुणवत्सलः । पूर्वाभिभाषी निर्लोभो न विद्वेष्यो हि कस्यचित् ॥८७॥
तस्य तुल्यवया बाल्यात्प्रभृत्यध्ययनेऽधमः । माक्षिकस्वामिवास्तव्यो विप्रः शङ्क्योऽभिचारवित् ॥८८॥
गुणदारिद्र्यनिर्निद्रैः क्षुद्रैः कौशलशालिनाम् । प्रसिद्धिस्पर्धया बन्धैर्बाध्यन्तेऽसूययासवः ॥८९॥
नापुंश्चलेयो दुःशीलो नाद्रोहो नित्यशङ्कितः । नावाचालो मृषाभाषी नाकायस्थः कृतप्रधीः ॥९०॥
नादातृगृहजो लुब्धो नानीर्ष्यो नित्यदुःखितः । नाजीजितः सर्वहास्यो नावृद्धः स्निग्धभाषितः ॥९१॥
नानन्त्यजः पितृद्वेषी नारागी निरपत्रपः । नाक्षुद्रविद्यः पापीयानिति भूतार्थसंग्रहः ॥९२॥ तिलकम् ॥
इत्युक्तवत्यां ब्राह्मण्यां तच्छङ्कावसतिं द्विजम् । आनीय परिशुध्यस्वेत्यभ्यधाद्वसुधाधिपः ॥९३॥
भूयो ब्राह्मण्यवादीत्तं ख्यातः खार्वोदरविद्यया । निःसंभ्रमः स्तम्भयितुं देव दिव्यक्रियामयम् ॥९४॥
म्लायद्वक्त्र इवावादीत्ततस्तां[1] मेदिनीपतिः । अदृष्टदोषे किं कुर्मो वयमत्राधिकारिणः ॥९५॥
नान्यस्मिन्नपि दण्डस्य प्रसक्तोऽनिश्चितागसि । किं पुनर्ब्राह्मणो दण्ड्यो यो दोषेऽपि[2] वधं विना ॥९६॥
उक्तेति विरते तस्मिन्द्विजजायाब्रवीत्पुनः । यतजः क्षणदाः क्षीणा राजन्ननशनस्य मे[1] ॥९७॥
नान्वगां परिणेतारं हन्तुः प्रतिचिकीर्षया । तत्राविहितदण्डेऽस्मिंस्त्यजाम्यनशनैरसून् ॥९८॥
तथा स्थितायां ब्राह्मण्यां कृतप्रायोपवेशनः । स्वयं त्रिभुवनस्वामिपादानुद्दिश्य सोऽभवत् ॥९९॥
त्रिरात्रोपोषितं तत्र राजानं रजनीक्षये । स्वप्नेस्वमोत्तमोबोधयत्तस्योक्तिं सत्त्ववाहनः । १००॥
ईदृङ्न युज्यते राजन्सत्यस्यान्वेषणं कलौ । निशीथे[1] कस्य सामर्थ्यं कर्तुं दिवि विकर्तनम्[2] ॥१०१॥
भवतस्त्वनुरोधेन सकृदेतत्प्रवर्त्यते । मत्प्रासादाङ्गनेऽमुष्मिन्शालिचूर्णं[2] विकीर्यताम् ॥१०२॥
प्रदक्षिणं कुर्वतोऽस्य त्रिरत्र यदि दृश्यते । ब्रह्महत्यापादमुद्रा पादमुद्रानुयायिनी ॥१०३॥

८०. [1]) A₃ gloss नारायणस्य.—[2]) A₂ gloss गम्भीरस्वामिनः. ८३. [1]) A₁ varia lectio महत्सु:. ८५. [1]) A₃ gloss अकालमरणं. ८७. [1]) A₃ gloss निरहङ्कारः. ८९. [1]) A₃ gloss रहितैः. ९५. [1]) Thus corr. by later hand from A₁ तैं ९६. [1]) A₃ gloss शूद्रादौ.—[2]) A₃ gloss सति. ९७. [1]) Thus A₃; A₁ राजन्नपि न शस्यते. ९८. [1]) A₃ gloss हन्तरि. १००. [1]) A₃ glosses नारायणः and सत्यस्य गरुडे ध्वजे. १०१. [1]) Thus corr. by A₃ from A₁ निषधि.—[2]) A₃ gloss सूर्य. १०२. [1]) A₃ भवतस्त्व°.—[2]) A₃ gloss पिष्टम्. १०३. [1]) A later hand, not met with elsewhere, adds in margin of A the following note: ब्रह्महत्या इति । यः कश्चिद्ब्रह्महत्यां करोति तस्य ब्रह्महत्या मूर्तिमती अदृष्टा या अनुगामिनी भवति । दुहिणशिरश्छेदेन महादेववत् । इत्यभिप्रायवानाह ब्रह्महत्येति विकीर्णे शालिचूर्णे प्रासादाङ्गने त्रिः परिक्रम्य यदि ब्रह्महत्यायाः कृत्याविशेषस्य पादमुद्रा चरणन्यासमुद्रानुगतं अस्य वधकस्य पादमुद्रानुगामिनी दृश्यते । ब्रह्महत्याचरणद्वयमुद्रा वधकाङ्घ्रिपादद्वयमुद्रा च यद्यनुभवविषयीभवति तर्हि एष एव द्विजो वधकः नहि शालिचूर्णयुक्ते अङ्गने पादचारेणैव कार्यमस्यः तेनानुमानं । अनेनैव वधः कृतः यतः पादमुद्राद्वयं अधिकं जातं । एवं ब्रह्महत्याचरणमुद्रा मुखस्वलतीति स्वयं भगवता उपायः सूचितः.—[2]) A₃ gloss द्विजसंबन्धि

तदेव वधको भूत्वा सदृशं दण्डमर्हति । राज्ञैव विधिः कार्यो दिने पापदर्शमा ॥१०४॥
अथ तत्कारयित्वा स दृष्टदोषे द्विजन्मनि । दण्डं दण्डधरश्चक्रे द्विजत्वाद्वधवर्जितम् ॥१०५॥
महीमघोना भर्तृघ्ने तस्मिन्विहितशासने । ततो द्विजन्मजाया सा कृताशीरभ्यधादिदम् ॥१०६॥
इयत्यवनिभृत्सर्गे गूढपापानुशासनम् । कार्तवीर्यस्य वा दृष्टं तव वा पृथिवीपते ॥१०७॥
दण्डधारे त्वयि क्ष्माप क्षितिमेतां प्रशासति । को वैरवोढ्योः पारमनासाद्यावसीदति ॥१०८॥
इत्थं कृतयुगध्येयैर्धर्म्यैर्वृत्तान्तवस्तुभिः । स्वल्पोपि राज्यकालोस्य पर्याप्तैः पर्यपूर्यत ॥१०९॥
अद्भुर्विष्टरपाथोजसंसर्गेण निरर्गलः । निबिडं जडिमा जाने व्यधत्त धियि संनिधिम् ॥११०॥
विभक्तवर्णशोभस्य तस्यासावन्यथा कथम् । माहेन्द्रस्येव धनुषो विदधे दृष्टनष्टताम् ॥१११॥
कारयित्वाभिचारं ते निग्रहोभयदं द्विजम् । तं यशःशेषतामीशं तारापीडोनुजोनयत् ॥११२॥
दुष्कर्मदुर्भगान्भोगान्भोक्तुं पापा गुणोन्नतम् । मृद्नन्ति कण्टकान्प्राप्तुं करभा इव केतकम् ॥११३॥
ततः प्रभृति भूपानां राज्येच्छूनां मुहुर्मति । दुष्टाः प्रवृत्ता राज्येस्मिन्नभिचारादिकाः क्रियाः ॥११४॥
श्रीचन्द्रापीडदेवस्य तत्क्षमित्वमपश्चिमम् । संस्मर्यमाणं कुरुते न कस्योत्पुलकं वपुः ॥११५॥
मुमूर्षुर्यस्तु लब्ध्वापि तं कृत्याधायिनं द्विजम् । परार्केन्यप्रयुक्तेस्मिन्को दोष इति नावधीत् ॥११६॥
विस्मृतः स कृतक्ष्माभृत्पङ्क्तिमध्येथ वेधसा । दत्त्वा काकपदं[2] नूनं न्यस्तः कलिनृपावलौ ॥११७॥
अष्टौ वर्षान्साष्टमासाननुगृह्येति मेदिनीम् । प्रविवेश वशी स्वर्गमनिशं[1] च सतां मनः ॥११८॥
भ्रातृद्रोहाज्जुगुप्सदां[1] प्रतापेन भयावहः । उवाह[2] तारापीडः स चण्डः क्ष्मामण्डलं[3] ततः ॥११९॥
पूर्णपात्रप्रतिभटं[1] द्विषां लुण्ठयता यशः । शिशोः प्रतापस्योत्पत्तौ कबन्धा येन नर्तिताः ॥१२०॥
तस्यातिदुष्टचेष्टस्य लक्ष्मीर्दीप्तापि सर्वतः । अभूदुद्वेगजननी श्मशानाग्नेरिव द्युतिः ॥१२१॥
मन्त्रैः प्रभावसांनिध्यं देवानां क्रियते द्विजैः । मत्वेति देवद्वेषी स द्विजानां दण्डमत्यजत्[1] ॥१२२॥
मासं[1] षड्भिर्दिनैरूनं वत्सरांश्च समा भुवि । स प्राभवद्गुरुद्रोहप्ररोहत्सुकृतात्ययः[2] ॥१२३॥
अथ गूढाभिचारेण विहितायुःक्षयो द्विजैः । स भ्रातुः सदृशीं शान्तिं प्रपेदे न पुनर्गतिम् ॥१२४॥
योयं परापकरणाय सृजत्युपायं तेनैव तस्य नियमेन भवेद्विनाशः ।
धूमं प्रसौति नयनान्ध्यकरं यमग्निर्भूत्वाम्बुदः स शमयेत्सलिलैस्तमेव ॥१२५॥
राजा श्रीललितादित्यः सार्वभौमस्ततोभवत् । प्रादेशिकेश्वरस्रष्टुर्विधेर्बुद्धेरगोचरः ॥१२६॥
प्रतापांशुच्छटाकूटैः पटवाससधर्मभिः । जम्बुद्वीपद्विपेन्द्रस्य येनातन्यत मण्डनम् ॥१२७॥
नयाञ्जलिषु बद्धेषु राजभिर्विजयोद्यमे । पार्थिवः पृथुविक्रान्तिर्युधि क्रोधं मुमोच यः ॥१२८॥
विनिःसरज्जनतया भयाद्गर्भानिवामुचन् । द्विषां वसतयो यस्य निशम्यास्कन्ददुन्दुभिम् ॥१२९॥

---

१११. [1]) $A_3$ gloss अक्षरा जाड्यं विना.—[2]) $A_3$ gloss भावी दृष्टः पश्चान्नष्टः. ११३. [1]) $A_3$ gloss उच्चाटना. ११७. [1]) $A_3$ gloss चन्द्रापीडः कृतयुगराजपङ्क्तिमध्ये.—[2]) $A_3$ gloss काकपदं काकवक्रो । इति भाषया लिपिविपर्ययः +. ११८. [1]) $A_3$ स्वर्गं विषदं (*विषादं). ११९. [1]) $A_3$ भ्रातृद्रोहाज्जुगुप्सा.—[2]) Thus corr. by $A_3$ from $A_1$ उवाच.—[3]) Thus $A_1$; $A_3$ मण्डली. १२०. [1]) $A_3$ gloss सदृशं. १२२. [1]) $A_3$ gloss अक्षिपदित्यर्थः. १२३. [1]) Thus corr. by $A_3$ from $A_1$ मासैः.—[2]) $A_3$ gloss पुण्यनाशः. १२४. [1]) The text from here to नयनान्ध्यकरं यम in following verse has been supplied by $A_3$ in space left by $A_1$. १२५. [1]) See note to preceding verse.

विलोलतिलकान्तैर्यः सनेत्राम्भोभिराननैः । निवापाञ्जलिदानानि द्विषां नारीरकारयत्[1] ॥१३०॥

क्षितिं प्रदक्षिणयतो रवेरिव महीपतेः । जिगीषोः प्रायशस्तस्य यात्रास्वेव यशो ययौ ॥१३१॥

करं पूर्वदिशो गृह्णन्प्रतापानलसंनिधौ । अन्तर्वेद्यां[1] महाराजः स्वकीर्त्युष्णीषभृद्बभौ ॥१३२॥

कन्यानां यत्र कुब्जत्वं[1] व्यधाद्गाधिपुरे मरुत् । तत्रैव शंसनीयः स पुंसां चक्रे भयस्पृशाम् ॥१३३॥

यशोवर्माद्रिवाहिन्याः क्षणात्कुर्वन्विशोषणम् । नृपतिर्ललितादित्यः प्रतापादित्यतां[1] ययौ ॥१३४॥

मतिमान्कन्यकुब्जेन्द्रः प्रत्यभात्कृत्यवेदिनाम् । दीनं यल्ललितादित्यं पृष्ठं दत्त्वा न्यषेवत ॥१३५॥

तत्सहायास्ततोऽप्यासन्निकाममभिमानिनः । कुसुमाकरतोऽप्युच्चैः सुरभिश्चन्दनानिलः ॥१३६॥

श्रीयशोवर्मणः संधौ सांधिविग्रहिको न यत् । नयं नियमनालेखे मित्रशर्मास्य चक्षमे ॥१३७॥

सोऽभूत्संधिर्यशोवर्मललितादित्ययोरिति । लिखितेनादिनिर्देशादमर्षत्वं[1] विदन्प्रभोः ॥१३८॥ युगलकम्[2] ॥

सुदीर्घविग्रहायस्तैः सेनानीभिरसूयिताम्[1] । औचित्यापेक्षतां[2] तस्य क्षितिभृद्बह्वमन्यत ॥१३९॥

[1]भीतः पञ्चमहाशब्दभाजनं तं व्यधत्त सः । यशोवर्मनृपं तं तु समूलमुदपाटयत् ॥१४०॥

अष्टादशानामुपरि प्राक्सिद्धानां तदुद्भवैः । कर्मस्थानैः स्थितिः प्राप्ता ततः प्रभृति पञ्चभिः ॥१४१॥

महाप्रतीहारपीडा[1] स महासंधिविग्रहः । महाश्वशालापि महाभाण्डागारश्च पञ्चमः ॥१४२॥

महासाधनभागश्चेत्येता यैरभिधाः श्रिताः । शाहिमुख्या येऽत्राभवन्नध्यक्षाः पृथिवीभुजः ॥१४३॥

कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥१४४॥

किमन्यत्कन्य[1]कुब्जोर्वी यमुनापारतोऽस्य सा[2] । अभूदाकालिकातीरं[2] गृहप्राङ्गणवद्वशे[3] ॥१४५॥

यशोवर्माणमुत्कृष्य हिमाद्रिमिव जाह्नवी । सुखेन प्राविशत्तस्य वाहिनी पूर्वसागरम् ॥१४६॥

पश्यद्भिर्जन्मवसुधां सेर्ष्याधोरणभर्त्सितैः । तन्मातङ्गैः कलिङ्गेभ्यः कथंचित्प्रस्थितं पथि ॥१४७॥

आकृष्टलक्ष्मीपर्यङ्कदन्तिसख्यादिवागताः । अशिश्रियंस्तं निःशेषा दन्तिनो गौडमण्डलात् ॥१४८॥

कटकेभघटाहस्तकृतवीचिकचग्रहः । अदृश्यतामगैस्तस्य गृहीतः पूर्ववारिधिः ॥१४९॥

वनराजिश्यामलेन[1] दिशं वैवस्वताङ्किताम् । स प्रतस्थेऽब्धितीरेण तत्कृपाणेन[2] तु द्विषः ॥१५०॥

तस्योर्ध्वजूटाः कर्णाटाः कृतप्रणतयोऽनयन् । सुवर्णकेतकीस्त्यक्त्वा प्रतापमवतंसताम् ॥१५१॥

तस्मिन्प्रसङ्गे रट्टाख्या[1] कर्णाटी चटुलेक्षणा । अपासीन्नृपतिर्भूत्वा पृथुश्रीर्दक्षिणापथम्[2] ॥१५२॥

विन्ध्याद्रिमार्गाः पर्याप्ता निष्पर्यन्तप्रभावया । दुर्गयेव तया देव्या कृता निहतकण्टकाः ॥१५३॥

ललितादित्यपादाब्जनखदर्पणमण्डले । स्वमूर्तिं वीक्ष्य संक्रान्तां प्रणता सापि पिप्रिये ॥१५४॥

---

१३०. 1) Thus corr. by $A_2$ from $A_1$ °कारयत्. १३२ 1) $A_2$ gloss प्रयागदेशो गङ्गायमुनयोरन्तरालभूमिरन्तर्वेदी. १३३. 1) $A_2$ gloss कुब्जत्वं. १३४. 1) $A_2$ प्रतापादित्यतां. १३८. 1) $A_2$ gloss सः मित्रशर्मा.—2) युगलकम् added by $A_2$. १३९. 1) Thus corr. by later hand from $A_1$ °तम्.—2) Thus A G R; Edd. °पेक्षितां. १४०. 1) $A_1$ has left before this verse a blank space for four lines, writing in the middle न लिखितमस्ति. १४२. 1) Thus A G R: perhaps to be emended to °पीडः. Cf. महाप्रतीहारपीडाधिकारं iv. 485. १४५. 1) Thus corr. by later hand from $A_1$ कान्य°.—2) तोऽस्य सा and कालिका supplied by $A_2$ in spaces left by $A_1$.—3) Thus $A_2$; $A_1$ अभूदाकालि°, altered by later hand to अभूदाकालि°. १४७. 1)–1) These words have been written twice by $A_1$, at the end of fol. 62 (here struck out again) and at the head of fol. 63. १५०. 1) 2) $A_2$ gives the notes वनराजिश्यामलेन दक्षिणां दिशं and तस्य राज्ञः कृपाणेन खड्गेन तु दुर्गादयो रिपवो वैवस्वताङ्कितां दिशं प्रतस्थिरे इत्यर्थः. १५२. 1) ट्ट supplied by $A_2$ in space left by $A_1$.—2) $A_1$ पृथुश्रीरक्षि°, corr. by later hand into °श्रीः.

तालीतरुतलाचान्तनारिकेररसोर्मयः । कावेरीतीरपवनैस्तद्योधाः क्लममत्यजन् ॥१५५॥
चन्दनाद्रेस्तदा स्कन्दत्रासभ्रश्यदहिच्छलात् । श्रीखण्डद्रुमदोःषण्डान्मण्डलाग्रा इवापतन् ॥१५६॥
उत्ताराश्मस्थिरं पदं क्षिप्त्वा द्वीपेष्वविघ्नतः । स कुल्याया इवाम्भोधेः क्षिप्रं चक्रे गतागतम् ॥१५७॥
ततोब्धिवीचिनिर्घोषैरुद्गीतजयमङ्गलः । प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ॥१५८॥
आक्रम्यं क्रमुकान्सम्यं कौङ्कणान्सम तापयन् । तुरगानिव तिग्मांशोः प्रतापस्तस्य पप्रथे ॥१५९॥
पश्चिमाब्धेर्मरुद्व्यस्तवीचेराविर्भवन्त्यभूत् । द्वारका तस्य सैन्यानां प्रवेशौत्सुक्यदायिनी ॥१६०॥
विन्ध्याद्रिस्तद्बलक्षुण्णधातुरेण्वावृताम्बरः । प्रत्यभात्त्यक्तमर्यादः कोपताम्र इवोन्नमन् ॥१६१॥
विशतां दशनश्रेण्यस्तस्यावन्तिषु दन्तिनाम् । महाकालकिरीटेन्दुज्योत्स्नया खण्डिताः परम् ॥१६२॥
सर्वतादिक्रमालोक्य जितप्रायांस्ततो नृपान् । स प्राविशत्तुविस्तीर्णमपथेनोत्तरापथम् ॥१६३॥
राजभिस्तस्य तत्रोच्चैः संग्रामोभूत्पदे पदे । कुलाद्रिभिरिवेन्द्रस्य पक्षच्छेदोद्यमस्पृशः ॥१६४॥
काम्बोजानां वाजिशाला जायन्ते स्म हयोज्झिताः । ध्वान्तच्छलात्तद्विरदैर्निरुद्धा महिषैरिव ॥१६५॥
तुःखाराः शिखरश्रेणीर्यान्तः संत्यज्य वाजिनः । कुण्ठभावं तदुत्कण्ठां निन्युर्दृष्ट्वा हयाननान् ॥१६६॥
श्रीन्वारान्समरे जित्वा जितं मेने स मुम्मुनिम् । सकृज्जयमरेर्वीरा मन्यन्ते हि घुणाक्षरम् ॥१६७॥
चिन्ता न दृष्टा भौट्टानां वक्त्रे प्रकृतिपाण्डुरे । वनौकसामिव क्रोधः स्वभावकपिले मुखे ॥१६८॥
तस्य प्रतापो दरदां न सेहेनारतं मधु । दरीणामोषधिज्योतिः प्रत्यूषार्क इवोदितः ॥१६९॥
कस्तूरीमृगसंस्पर्शी धूतकुङ्कुमकेसरः । सैन्यसीमन्तिनीस्तस्य संवस्कारोत्तरानिलः ॥१७०॥
शून्ये प्राग्ज्योतिषपुरे निर्जिहाने ददर्श सः । धूपधूमं वनप्लुष्टात्कालागुरुवनात्परम् ॥१७१॥
मरीचिकावतीर्णार्णोविभ्रमे वालुकाम्बुधौ । तद्गजेन्द्रा महाग्राहसमूहसमतां ययुः ॥१७२॥
तद्योधान्विगलद्धैर्यान्स्त्रीराज्ये स्त्रीजनोकरोत् । तुङ्गौ स्तनौ पुरस्कृत्य न तु कुम्भौ कपाटिनाम् ॥१७३॥
स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियाम् । संत्राससमभिलाषं वा निश्चिकाय न कश्चन ॥१७४॥
उत्तराः कुरवोविक्षंस्तद्भयाज्जन्मपादपान् । उरगान्तकसंत्रासाद्विलानीव महोरगाः ॥१७५॥
जयार्जितधनः सोथ प्रविवेश स्वमण्डलम् । भिन्नेभमौक्तिकापूर्णपाणिः सिंह इवाचलम् ॥१७६॥
जालंधरं लोहरं च मण्डलानीतराणि च । प्रसादीकृत्य विदधे राजत्वं सोनुजीविनाम् ॥१७७॥
पराजयव्यञ्जनार्थं नाना लिङ्गानि पार्थिवाः । उग्रेण माञ्जिस्तेन वहन्त्यद्यापि निर्मदाः ॥१७८॥
बन्धमुद्राभिधानाय पश्चाद्बाहू तदाज्ञया । तुरुष्का दधते व्यक्तं मूर्धानं चार्धमुण्डितम् ॥१७९॥
क्षितिभृद्दाक्षिणात्यानां तिर्यक्त्वज्ञापनाय सः । पुच्छं महीतलस्पर्शि चक्रे कौपीनवाससि ॥१८०॥
न तत्पुरं न स ग्रामो न सा सिन्धुर्न सोर्णवः । न स द्वीपोस्ति यत्रासौ प्रतिष्ठां न विनिर्ममे ॥१८१॥

---

१५५. [1]) Thus $A_3$; $A_1$ °रसोर्मेय° १५६. [1]) $A_3$ gloss मलयात्.—[2]) $A_3$ gloss प्रसभभयत्रस्तसर्पस्कन्दः.—[3]) $A_3$ gloss श्रीखण्डद्रुमा चन्दनद्रुमा एव दोर्षण्डा भुजसमूहा यस्य सः तथाविधात्.—[4]) $A_3$ gloss खड्गाः. १५७. [1]) $A_3$ gloss उत्तरणार्थे अश्मानः उत्ताराश्मानः. ये कुल्यायां मध्ये भवन्ति, to this gloss $A_3$ has added उटवटपल इति भाषया. १५९. [1]) Thus $A_1$; $A_3$ क्रमुकद्रुमान्कौ° —[2]) Thus $A_3$; $A_1$ तिग्मांशु १६१. [1]) Thus corr by $A_2$ from $A_1$ °रेणुवृता°. १६६. [1]) $A_1$ त×खाराः; $A_3$ G R तुःखाराः.—[2]) Thus corr. by later hand from $A_1$ °भावां.—[3]) Thus $A_3$, $A_1$ ननान्. १६७. [1]) Thus A: misread दुस्कनिम् in G R and Edd. $A_4$ gloss मुमेन् स्वान्. Cf iii 332; v. 516. viii 2180 (C). १६८. [1]) Thus $A_1$; corr. by later hand into भौट्टानां —[2]) $A_3$ gloss वानराणां.

कञ्चिद्वंशाख्यमुचितं कञ्चिच्च समयानुगम् । बाहुल्येन प्रतिष्ठानां स मानी[1] नाम संदधे ॥१८२॥
सुनिश्चितपुरं चक्रे दिग्जये कृतनिश्चयः । सगर्वो[1] दर्पितपुरं कृतवान्कृतकेशवम्[2] ॥१८३॥
फलं गृह्णन्फलपुरं पर्णोत्सं पर्णमाददत् । क्रीडारामविहारं[1] च क्रीडन्नाजौ विनिर्ममे ॥१८४॥
एकमूर्ध्वं नयन्नन्यमधः कर्षंस्तथापरम् । बद्ध्वा[1] व्यधान्निरालम्बं स्त्रीराज्ये नृहरिं च सः ॥१८५॥
दिगन्तरस्थे भूपाले तस्मिंस्तत्कर्मकृत्[1]किल । पुरं विधाय तन्नाम्ना तत्कोपफलमन्वभूत्[2] ॥१८६॥
ललिताख्यं पुरं तस्मिन्नादित्याय स भूपतिः । सग्रामां कान्यकुब्जोर्वीमभिमानोर्जितो ददौ ॥१८७॥
तेन हुष्कपुरे श्रीमान्मुक्तस्वामी व्यधीयत । बृहद्विहारो भूपेन सस्तूपश्च महात्मना ॥१८८॥
एकां कोटिं गृहीत्वा स दिग्जयाय विनिर्गतः । भूतेशाय ददौ शुद्ध्यै कोटीरेकादशागतः ॥१८९॥
स तत्र ज्येष्ठरुद्रस्य शिलाप्रासादयोजनम् । भूमिग्रामप्रदानं[1] च विदधे वसुधाधिपः ॥१९०॥
चक्रे चक्रधरे तेन वितस्ताम्भःप्रतारणम् । विनिर्मायारघट्टालीस्तांस्तान्ग्रामान्प्रयच्छता ॥१९१॥
सोऽखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त च । मार्तण्डस्याद्भुतं दाता द्राक्षास्फीतं च पत्तनम् ॥१९२॥
लोकपुण्ये पुरं[1] कृत्वा नानोपकरणावलीम् । प्रतिपादितवाञ्जिष्णुर्ग्रामैः[2] साकं स विष्णवे ॥१९३॥
ततः परं परीहासशीलो भूलोकवासवः । विहसद्वासवावासं[1] परिहासपुरं[2] व्यधात् ॥१९४॥
विरेजे राजतो देवः श्रीपरीहासकेशवः । लिप्तो रत्नाकरस्यापे मुक्ताज्योतिर्भरैरिव ॥१९५॥
नाभीनलिनकिञ्जल्कपुञ्जेनेवानुरञ्जितः । अचकात्काञ्चनमयः[1] श्रीमुक्ताकेशवो हरिः ॥१९६॥
महावराहः शुशुभे काञ्चनं कवचं दधत् । पाताले तिमिरं हन्तुं[1] ग्रहमिव रवेः[2] प्रभाः ॥१९७॥
गोवर्धनधरो देवो राजतस्तेन कारितः । यो गोकुलपयःपूरैरिव पाण्डुरतां दधे ॥१९८॥
चतुष्पञ्चाशतं हस्तानारोपयित्वा[1] महाशिलाम् । ध्वजाग्रे दितिजारातेस्तार्क्ष्यस्तेन निवेशितः ॥१९९॥
चक्रे बृहच्चतुःशालाबृहच्चैत्यबृहज्जिनैः । राजा राजविहारं स विरजाः सततोर्जितम् ॥२००॥
तोलकानां सहस्राणि चतुर्भिरधिकानि[1] सः । अशीतिं निदधे हेम्नो मुक्ताकेशवविग्रहे ॥२०१॥
तावन्त्येव सहस्राणि पलानां रजतस्य च । संधाय शुद्धधीश्चक्रे श्रीपरीहासकेशवम् ॥२०२॥
रीतिप्रस्थसहस्रैस्तु तेन तावद्भिरेव सः । व्योमव्यापिवपुः श्रीमान्बृहद्बुद्धो व्यधीयत ॥२०३॥
चतुःशालां च चैत्यं च तावता तावता व्यधात् । धनेनैवेति तस्यासन्पञ्च निर्मितयः समाः ॥२०४॥
राजतान्क्वापि सौवर्णान्क्वापि देवान्विनिर्ममे । पार्श्वेषु मुख्यदेवानां पार्थिवो[1] धनदोपमः ॥२०५॥
कियन्ति तत्र रत्नानि ग्रामान्परिकरांस्तथा[1] । स प्रादादिति कः शक्तः परिच्छेत्तुमियत्तया ॥२०६॥
अवरोधैरमात्यैश्च सेवकैश्च नरेश्वरैः । तत्र प्रतिष्ठाः शतशो विहिता भुवनाद्भुताः ॥२०७॥

---

१८२. [1]) Thus corr. by $A_3$ from $A_1$ मुनी. १८३. [1]) $A_2$ सदर्पो.—[2]) $A_2$ कृतधीः. १८४. [1]) $A_3$ क्रीडाराजवि°. १८५. [1]) Thus corr. by $A_3$ from $A_1$ कुब्जा. १८६. [1]) $A_2$ पुरनिर्माणाधिकारी.—[2]) स्की and न्व supplied by $A_3$. १८७. [1]) $A_2$ gloss त्रिग्राम. १९०. [1]) Thus corr. by later hand from $A_1$ भूमिग्रामे. १९१. [1]) Thus $A_2$; $A_1$ °चरस्तेन. १९३. [1]) Thus corr. by $A_2$ from $A_1$ पुरे.—[2]) Thus $A_2$; $A_1$ जिष्णुग्रामैः. १९४. [1]) Thus corr. by later hand from $A_1$ °वासं.—[2]) Over हासपुरं $A_2$ has written सपुर (for परिसपुर). १९६. [1]) $A_2$ अकाञ्चन, with gloss काञ्च शोभितकाञ्चनयो:. १९७. [1]) Thus corr. by $A_2$ from $A_1$ हर्तुं.—[2]) Thus G *sec. manu*; A रविप्रभाः. १९९. [1]) Thus corr. by later hand from $A_1$ हस्तान्रो°. २०१. [1]) The words from चतुर्भिर° to सहस्राणि in the following verse have been omitted by $A_1$ and supplied by $A_3$ in margin. २०५. [1]) Thus $A_2$; $A_1$ पार्थिवो. २०६. [1]) Thus $A_3$; $A_1$ °करं तथा.

राज्ञी कमलवत्यस्य कमलाहट्टकारिणी । राजतं विपुलाकारं कमलाकेशवं व्यधात् ॥२०८॥
अमात्यो मित्रशर्मापि चक्रे मित्रेश्वरं हरम् । श्रीकय्यस्वामिनं चक्रे लाटः कय्याभिधो नृपः ॥२०९॥
श्रीमान्कय्यविहारोपि तेनैव विदधेद्भुतः । भिक्षुः सर्वज्ञमित्रोभूत्क्रमाद्यत्र जिनोपमः ॥२१०॥
तुःखारश्चङ्कुणश्चक्रे स चङ्कुणविहारकृत् । भूपचित्तोच्चतं स्तूपं जिनान्हेममयांस्तथा ॥२११॥
ईशानदेव्या तत्पत्न्या खाताम्बु प्रतिपादितम् । सुधारसमिव स्वच्छमारोग्याधायि रोगिणाम् ॥२१२॥
ललितादित्यभूभर्तुर्वल्लभा चक्रमर्दिका । सहस्राण्यौकसां सप्त तत्र चक्रपुरं व्यधात् ॥२१३॥
आचार्यो भप्पटो नाम विदधे भप्पटेश्वरम् । अन्येपि रक्कुटेशाद्या बहवो बहुभिः कृताः ॥२१४॥
अधिष्ठानान्तरेप्यत्र चङ्कुणेनार्यमन्त्रिणा । सचैत्यः प्रकृतोदारो विहारो निरमीयत ॥ २१५॥
भिषगीशानचन्द्राख्यः श्यालश्चङ्कुणमन्त्रिणः । विहारमकरोल्लब्ध्वा तक्षकानुग्रहाच्छ्रियम् ॥ २१६॥
एवं हेममयीमुर्वीं स कुर्वन्नुर्वरापतिः । गुणैरौदार्यशौर्याद्यैर्मेरुमानमलङ्घयत् ॥२१७॥
हेलयापि विनिर्यान्ती वक्त्राद्वसुमतीपतेः । न कदाचन तस्याज्ञा देवैरप्युदलङ्घ्यत ॥२१८॥
तथाहि पूर्वपाथोधेस्तटे सकटको वसन् । आनीयन्तां कपित्थानीत्यादिदेश स जातु चित् ॥२१९॥
किंकर्तव्यतयान्धेषु पुरोगेषु स्थितेष्वथ । उपानयत्कपित्थानि दिव्यः कोपि पुमान्पुरः ॥२२०॥
अमार्दुपायनं गृह्णन्कृतसंज्ञो भ्रुवा प्रभोः । कस्य त्वमिति पप्रच्छ प्रतीहारः प्रसृत्य तम् ॥२२१॥
सोभ्यधात्तं कपित्थानि दत्त्वा राज्ञः प्रियाण्यहम् । प्रहितोत्र महेन्द्रेण नन्दनोद्यानपालकः ॥२२२॥
रहो महेन्द्रसंदिष्टं वक्तव्यं किंचिदस्ति मे । इति श्रुत्वा प्रतीहारः सभां चक्रे स निर्जनाम् ॥२२३॥
ततो दिव्यः पुमानूचे शक्रस्त्वां वक्ति भूपते । क्षन्तव्यं पथ्यमप्येतत्सौजन्याद्विधुरं वचः ॥२२४॥
तुर्ये युगेपि भूपाल दिक्पाला अपि ते वयम् । बिभृमो यत्प्रणम्याज्ञां श्रूयतां तत्र कारणम् ॥२२५॥
पुरा ग्रामगृहस्थस्य कस्यचित्पृथुसंपदः । जन्मान्तरे कर्मकरो हालिकोभूर्भवान्किल ॥२२६॥
एकदा तस्य ते ग्रीष्मे वाहयित्वा महावृषान् । श्रान्तस्य निर्जलेरण्ये क्षीणप्रायमभूद्वपुः ॥२२७॥
ततः स्वामिगृहात्क्षुत्तृट्खिन्नस्य भवतोन्तिकम् । वारिकुम्भीमपूपं च गृहीत्वा कश्चिदाययौ ॥२२८॥
निर्धौतपाणिपादस्त्वं भोक्तुं संप्रस्तुतस्ततः । विप्रं कण्ठगतप्राणमपश्यः पुरतोतिथिम् ॥२२९॥
स त्वामवोचन्मा भुङ्क्ष्व दुर्भिक्षोपहतस्य मे । कण्ठे यियासवः प्राणा वर्तन्ते भोजनं विना ॥२३०॥
वारितः पार्श्वगेनापि तस्मै त्वं प्रीतिपूर्वकम् । पूपार्धं वारिकुम्भीं च प्रादाः प्रियमुदीरयन् ॥२३१॥
पात्रे प्रसन्नचित्तस्य काले दानेन तेन ते । अखण्डितानामाज्ञानां शतमासीत्त्रिविष्टपे ॥२३२॥
तेन वारिप्रदानेन वाञ्छामात्रेपि दर्शिते । प्रादुर्भवन्ति सुस्वादा नद्यो मरुपथेष्वपि ॥२३३॥
सत्क्षेत्रप्रतिपादितैः प्रियवचोबद्धालवालावलिर्निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः ।
दातुस्तत्तदभीप्सितं किल फलं कालेतिबालोप्यसौ राजन्दानमहीरुहो विजयते कल्पद्रुमादीनपि ॥२३४॥

२०८. [1]) Thus A₁; A₂ कमलदेव्य°. २११. [1]) A₁ तु×खार°. २१२. [1]) Thus corr. by A₃ from A₁ सुधासरमिव. २१३. [1]) Thus A₂; A₁ चक्रमार्दिका°. G R copy both readings, Edd. follow A₂. २१४. [1]) Emended with Edd.; A भप्पटी.—[2]) Thus A₁; A₂ रक्कटेशा°. २१७. [1]) Thus corr. by A₃ from A₁ उर्वरी°. २२०. [1]) A₁; A₃ °पार्तेषु.—[2]) Thus corr. by A₂ from A₁ °मय-कापि°. २२१. [1]) A₁ gloss राज्ञोमे इत्यर्थः. २२६. [1]) Thus corr. by later hand from A₁ ग्रामे. २३०. [1]) Thus A₂; A₁ भुङ्क्षा (for भुङ्क्ष्वा?). २३४. [1]) A₂ °प्रतिपोषितः.—[2]) A₂ दत्ते तत्तदभीप्सितं किल फलं काले ह्यबाल्यादयौ.

अल्पावशेषास्तास्त्वद्य सन्त्याशास्तव भूपते । यथोलङ्घ्यं क्षपयतो यत्र तत्राविचारतः ॥२३५॥
अपि चेतरभूपालसुलभं महतः सतः । कस्माद्विचारशून्यत्वं तथापि हृदि रोहति ॥२३६॥
दिनानि कतिचिद्यानि कश्मीरेषु घनागमे । जायन्ते तानि पूर्वोक्ती फलानि शिशिरे कुतः ॥२३७॥
विगाहसे दिशं यां यां तत्र तत्रैव तत्पतेः । स्वदाशाग्रहणे यत्नः पूर्वदानप्रभावतः ॥२३८॥
आशां श्रितस्य माहेन्द्रीमाशा स्वल्पापि तेऽधुना । गृहीता कथमप्येषा शक्रेणाभग्नशक्तिना ॥२३९॥
विना प्रयोजनं मुख्यं तस्माद्दाशास्त्वया क्वचित् । नैवमेव पुनर्देया विरलाः सन्ति ता यतः ॥२४०॥
इत्युक्त्वान्तर्हिते तस्मिन्भूपालो विपुलाशयः । चिन्तयन्दानमाहात्म्यं परं विस्मयमाययौ ॥२४१॥
ततः प्रभृति तादृक्षयोग्यार्थप्राप्तिलालसः । परिहासपुरे चक्रे स्थिरां गुर्वीं स पर्विणीम् ॥२४२॥
सहस्रभक्तमित्येवं प्रख्यातायां सदक्षिणम् । लक्षमेकोत्तरं भक्तपात्राणां यत्र दीयते ॥२४३॥
अभिप्रायेण तेनैव पत्तनान्यूषरेषु सः । चक्रे यत्नेषु तृष्णार्तः कश्चिज्जातु पिबेदपः ॥२४४॥
संजग्राह स देशेभ्यस्तांस्तानन्तरविस्तरान् । विकचान्सुमनःस्तोमान्पादपेभ्य इवानिलः ॥२४५॥
तेन कङ्कणवर्षस्य रससिद्धस्य सोदरः । चङ्कुणो नाम भुःखारदेशान्नीतो गुणोन्नतः ॥२४६॥
स रसेन समातन्वन्कोशे बहुसुवर्णताम् । पद्माकर इवाब्जस्य भूभृतोभूच्छुभावहः ॥२४७॥
रुद्धः पञ्चनदे जातु दुस्तरैः सिन्धुसंगमैः । तटे स्तम्भितसैन्योभूद्राजा चिन्तापरः क्षणम् ॥२४८॥
ततोम्बुतरणोपायं तस्मिन्पृच्छति मन्त्रिणः । अगाधेम्भसि रोधःस्थश्चङ्कुणो मणिमक्षिपत् ॥२४९॥
तत्प्रभावाद्द्विधाभूतं सरित्तीरं ससैनिकः । उत्तीर्णो नृपतिस्तूर्णं परं पारं समासदत् ॥२५०॥
मणिमन्येन मणिना चङ्कुणोप्याचकर्ष तम् । सलिलं प्रागवस्थं च क्षणेन सरितामभूत् ॥२५१॥
परिभाव्याद्भुतं तस्य प्रशंसामुखराननः । प्रणयाच्चङ्कुणं राजा मणियुग्ममयाचत ॥२५२॥
स तमाह स्म विहसन्कर्मैमौ कुरुतो मणी । योग्यौ मत्पाणिगावेव किं स्यात्स्वीकरणेन वः ॥२५३॥
सामान्येष्वेव लभते सोत्कर्षं वस्तु संप्रथाम् । महत्सु तस्य का शोभा विविधोत्कृष्टवस्तुषु ॥२५४॥
प्रस्यन्दनं शशिमणेर्गणयन्ति तावद्यावत्स्थितो जलनिधेः पुलिनैकदेशे ।
स स्वीक्रियेत यदि तेन ततस्तदास्य स्यन्दः स्फुरन्नपि न तत्सलिले विभाव्यः ॥२५५॥
इत्युक्त्वा विरते तस्मिन्राजा सस्मितमब्रवीत् । संभावयसि किं रत्नमाभ्यामभ्यधिकं मम ॥२५६॥
अतोधिकतरं यद्वा किंचित्त्वं मम पश्यसि । तदादाय प्रयच्छेदं निष्क्रयेण मणिद्वयम् ॥२५७॥
ततो महान्प्रसादोयमित्युक्त्वा चङ्कुणोब्रवीत् । स्वायत्ते स्वामिनो रत्ने मह्यमिष्टं तु दीयताम् ॥२५८॥
गजस्कन्धेधिरोप्यैतन्मागधेभ्यो यदाहृतम् । दत्त्वा सुगतबिम्बं तज्जनोयमनुगृह्यताम् ॥२५९॥
सलिलोत्तरणोपायो मणी देवेन गृह्यताम् । संसारोत्तरणोपायः सुगतो मह्यमर्प्यताम् ॥२६०॥

---

२३६. 1) Thus $A_2$; $A_1$ चेतसि भूपाल सु°. २३८. 1) $A_2$ gloss तद्दिक्पालस्य. २४०. 1) Thus $A_2$; $A_1$ °दाशा स्त्वया. २४६. 1) A सु × खार°.—2) Thus corr. by $A_3$ from $A_1$ °देशानीतो. २४८. 1) Thus $A_1$; $A_2$ स्तिमित°. २५२. 1) $A_3$ प्रतिभाव्या°. २५४. 1) $A_3$ °त्कृष्टभूमिषु. २५५. 1) $A_3$ gloss चन्द्रकान्तस्य.—2) $A_3$ gloss शशिमणिः.—3) $A_3$ gloss जलनिधिना.—4) Thus corr. by $A_3$ from $A_1$ स्वर्न्द.—5) Thus corr. by $A_3$ from $A_1$ वभाव्यः. २५७. 1) Thus $A_3$; $A_1$ ततो.—2) Thus $A_1$; $A_3$ in margin कोऽपि त्वं. २५९. 1) $A_3$ gloss बुद्ध. २६०. 1) $A_2$ gloss मणी एव संसारतरणोपाय इत्यारोपः। अत एव गृह्यतामित्येकवचनान्तं क्रियापदम् मणी एव संसारतरणोपायस्त्वया गृह्यतामित्यन्वयः.

इति तेनार्थितो युक्त्या जिनबिम्बं ददौ नृपः । वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं वचः ॥२६१॥
स्वविहारेथ भगवांस्तेन विनिवेशितः । कपिशाभिः सकाषाय इव यो भाति कान्तिभिः ॥२६२॥
दृश्यतेद्यापि कटकैरायसैः परिवेष्टितः । गजस्कन्धनिबद्धस्य सूचको[1] यस्य विग्रहः[2] ॥२६३॥
अभिप्रायानुसारेण प्रकटीकुरुते प्रियम् । अहो महाप्रभावाणां भूपतीनां वसुंधरा ॥२६४॥
अशिक्षितं कदाचित्स स्वयं दमयितुं हयम् । निनायारण्यमेकाकी हयविद्याविशारदः ॥२६५॥
दूराद्विर्मानुषे तत्र ललनां ललिताकृतिम् । एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि ॥२६६॥
क्षणाच्च ते समापद्य गीतनृत्ते मृगीदृशौ । प्रणम्य किंचिद्गच्छन्त्यावपश्यदमयन्हयम् ॥२६७॥
तुरगं तं समारुह्य तत्रागच्छद्दिने दिने । दृष्ट्वा तथैव ते कान्ते गत्वापृच्छत्सविस्मयः ॥२६८॥
तमूचतुस्ते नर्तक्यावावां देवगृहाश्रिते । यः शूरवर्धमानोयं ग्रामस्तत्रावयोर्गृहम् ॥२६९॥
इहत्यजीवनभुजां मातॄणामुपदेशतः । अस्मत्कुलेन[1] नियतं नृत्तमत्र[2] विधीयते ॥२७०॥
रूढिः परंपरायाता सेयमस्मद्गृहे स्थिता । आवामन्योपि वा नात्र निमित्तं ज्ञातुमीश्वरः ॥२७१॥
एवं वचस्तयोः श्रुत्वा नृपोन्येद्युः सविस्मयः । तदुक्तां[1] मेदिनीं कृत्स्नां[2] कारुभिर्निरदारयत् ॥२७२॥
दूरं[1] निर्दतमृद्भिस्तैरथाद्राक्षीन्निवेदितम् । नृपतिः पिहितद्वारं जीर्णं देवगृहद्वयम् ॥२७३॥
उद्घाटितारैर्[1] वर्णैः पीठोत्कीर्णैर्निवेदितौ । अपश्यत्केशवौ तत्र रामलक्ष्मणनिर्मितौ ॥२७४॥
परिहासहरेः पार्श्वे पृथक्कृत्वा शिलागृहम् । स रामस्वामिनः श्रीमान्प्रतिष्ठाकर्म निर्ममे ॥२७५॥
देवोपि लक्ष्मणस्वामी तथैवाभ्यर्थ्य पार्थिवम् । चक्रमर्दिकया चक्रेश्वरपार्श्वे निवेशितः ॥२७६॥
दिग्जये पुरुषः कश्चित्कृत्तप्रत्ययनिग्रहः । अग्रे न्यक्षिपदात्मानं गजारूढस्य भूभुजः ॥२७७॥
तं कृत्तपाणिं प्राणान्तिकैर्व्रणैः शोणितवर्षिणम् । प्राणार्थिनं कारुणिकः स्ववृत्तान्तं पृष्टवान्नृपः ॥२७८॥
स तस्मै सिकतासिन्धुसंनिधस्थस्य भूपतेः । प्रख्यातमूचे सचिवमात्मानं हितकारिणम् ॥२७९॥
प्रणतिर्ललितादित्यनृपतेः क्रियतामिति । हितं कथयतः स्वस्य निग्रहं च ततो नृपात् ॥२८०॥ युग्मम् ॥
प्रतिजज्ञे च भूपेन तत्स्तत्स्वामिनिग्रहः । कृष्णव्रणोगदंकारैः स चाकार्यत सत्कृतैः ॥२८१॥
ततो विहितयात्रं तं स मन्त्री कृतसत्क्रियः । कदाचिदेवमवदद्विजने[1] जगतीभुजम् ॥२८२॥
एवंविधस्य कायस्य राजन्यत्परिरक्षणम् । तत्र वैरविशुद्ध्याशा विजृम्भयति मामियम् ॥२८३॥
बाष्पैर्जलाञ्जलिं दत्त्वा दुःखाय च सुखाय च । कृतकृत्यो ध्रुवं जह्यामग्रमानहतानसून्[1] ॥२८४॥
अपकृत्याधिकं शत्रोरपकारं जयेन्मितम् । गम्भीरं प्रतिनदेव निनादं नदतो गिरिः ॥२८५॥
इतो मासैस्त्रिभिर्गम्या भूः प्राप्या त्वरितं कथम् । यदा वा प्राप्यते वैरी तदा तत्रैव किं वसेत् ॥२८६॥
मासार्धलङ्घ्यं पन्थानं तस्मादुपदिशामि ते । गृहीत्वा सं जलं गम्यश्चमूनां किं तु निर्जलः ॥२८७॥
तद्भूमिजा बन्धवो[1] मे न वक्ष्यन्ति त्वदागमम् । सामात्यान्तःपुरो राजा छद्मनानेन गृह्यते ॥२८८॥

२६१. [1]) Thus corr. by $A_2$ from $A_1$ वस्त्र. २६३. [1]) Thus emended with Edd.; $A_1$ °स्कन्ध°.—[2]) Thus $A_1$; $A_2$ सूचकैर्यस्य. २७०. [1])[2]) $A_4$ glosses अस्मत्कुलजेन and देवगृहे. २७२. [1]) Thus corr. by $A_1$ from तदुक्तौ; $A_3$ °क्तां.—[2]) Thus $A_3$; $A_1$ कृत्स्नां. २७३. [1]) Thus $A_1$; altered by later hand to दूरनि°. २७४. [1]) $A_1$ gloss अक्षरैः. २७९. [1]) Thus corr. by $A_2$ from $A_1$ प्राख्यातं. २८०. [1]) $A_4$ gloss ललितादित्याय प्रणामं कुर्विति मदुक्तं हितमहितं श्रुत्वा तेन राज्ञा मम कर्णनासाद्यवयवाः कृत्ताः. २८२. [1]) Thus $A_2$, $A_1$ °द्विजेन. २८४. [1]) Thus $A_3$; $A_1$ जह्यात्र°. २८७. [1]) $A_2$ gloss बन्धाः.

इत्युक्त्वा सोकरोत्तस्य प्रवेशं वालुकार्णवे । पक्षे क्षीणे च कटको निस्तोयः समपद्यत ॥२८९॥
तत्राप्यहानि द्वित्राणि वहन्नेवाभवन्नृपः । तृष्णार्तं वीक्ष्य सैन्यं च मन्त्रिणं तमभाषत ॥२९०॥
उक्तकालाधिका यावद्वासरा गमिताः पथि । मुमूर्षु तृष्णया सैन्यं तदध्वा शिष्यते कियान् ॥२९१॥
ततो विहस्य सोवादीज्जिगीषो शेषमध्वनः । किं पृच्छस्यरिराष्ट्रस्य यमराष्ट्रस्य वा भवान् ॥२९२॥
त्वं हि स्वामिहितायैव समुपेक्ष्य स्वजीवितम् । मृत्युवक्त्रं सकटको मया युक्त्या प्रवेशितः ॥२९३॥
नेदं मरुमहीमात्रं भीमोयं वालुकार्णवः । नाम्भोत्र लभ्यते क्वापि कस्त्राता तेत्र भूपते ॥२९४॥
श्रुत्वेति प्रतना कृत्स्ना समभूद्दीनसौष्ठवा । करकाभिहतफला[1] स्तम्बशेषेव शालिभूः ॥२९५॥
संत्यक्तजीविताशानां भीरूणां क्रन्दितध्वनिम् । भुजमुद्यम्य शमयंस्ततो नृपतिरब्रवीत् ॥२९६॥
अमात्य तव कृत्येन प्रीताः स्वामिहितैषिणः । मरावप्यत्र शीतार्ता इव रोमाञ्चिता वयम् ॥२९७॥
अभेद्यसारे मयि तु व्यक्तमेवंविधोपि ते । प्रयासः[2] कुण्ठतां यातो लोहे वज्रमणाविव ॥२९८॥
मणिभ्रमाद्वह्निकणं[1] गृह्णन्दग्धा इवाङ्गुलीः । त्वं मिथ्यावयवांल्लूनानद्य शोचिष्यसि ध्रुवम् ॥२९९॥
निदेशेनैव[1] मे पश्य पयः सूतेद्य मेदिनी । रक्षितेनाम्बुवाहस्य रत्नं वैडूर्यभूरिव ॥३००॥
इत्युक्त्वा सोम्बु निष्क्रष्टुं कुन्तेनोर्वीं व्यदारयत् । उज्जिहीर्षुर्बिलस्ताम्भः शूलेनेव त्रिलोचनः ॥३०१॥
अथोज्जगाम पाताललक्ष्मीलीलास्मितच्छविः । रसातलात्सरित्सार्धं सैन्यानां जीविताशया ॥३०२॥
तस्य सेनाचराणां सा क्रमं चिच्छेद वाहिनी । वृथाव्ययीकृताङ्गस्य मन्त्रिणस्तस्य चेप्सितम् ॥३०३॥
लूनाङ्गो मङ्गलाशंसी स मन्त्री विफलश्रमः । स्वस्य भर्तुर्विदेशादौ[1] नगरीमन्तकस्ततः ॥३०४॥
राज्ञापि कुटिलाचारो निगृह्य स महीपतिः । निजस्य मन्त्रिणस्तस्य तुल्यावस्थो व्यधीयत ॥३०५॥
यथोपयोगं तेनैव स्थाने स्थाने प्रवर्तिताः । अद्यापि कुन्तवाहिन्यः प्रवहन्त्युत्तरापथे ॥३०६॥
सहस्रशः संभवन्तोप्यपरे भुवनाद्भुताः । अतिप्रसङ्गभङ्गेन तद्वृत्तान्ता न दर्शिताः ॥३०७॥
यन्निःशब्दजला वनाश्मपटले देशेतिघोरारवा यत्स्वच्छाः समये पयोदमलिने कालुष्यसंदूषिताः ।
दृश्यन्ते कुलनिम्नगा अपि परं दिग्देशकालाश्रिमी[1] तत्सत्यं महतामपि स्वसदृशाचारप्रवृत्तिप्रदौ ॥३०८॥
कलेर्वायं प्रभावः स्यान्नरनाथासनस्य वा । यत्सोपि भीमकलुषाः प्रवृत्तीः समदर्शयत् ॥३०९॥ युग्मम् ॥
अवरोधसखो राजा परिहासपुरे स्थितः । स जातु मदिराक्षीबः सचिवानेवमन्वशात् ॥३१०॥
कृतं प्रवरसेनेन यदेतत्प्रवरं पुरम् । तन्निर्दहत मन्यध्वे मत्पुरस्येव[1] चेच्छ्रियम् ॥३११॥
घोरामलङ्घ्यतामस्य श्रुत्वेत्याज्ञां महीपतेः । गत्वार्धवासकूटानि[1] तेदहन्वातुलानके ॥३१२॥
हर्म्याग्राद्वीक्षमाणस्तद्वह्निज्वालोज्ज्वलाननः । उल्कामुख इवाभूत्स हर्षाट्टहसितोत्कटः ॥३१३॥
क्षैब्यादिदोषकृतवतः प्रतिभासतेर्थो मिथ्यैव विभ्रममधिको विशदात्मनोपि ।
चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या तेजोमयं तिमिरदोषहतं हि चक्षुः ॥३१४॥

---

२९५. 1) A₂ gloss तुषवर्षणं. २९८. 1) Thus corr. by A₂; A₁ °मेवौविधोपि g.—2) Thus A₂; A₁ प्रयोग:. २९९. 1) Thus corr. by A₂ from A₁ वल्लकणं. ३००. 1) Thus Edd. and G *sec. manu*; A R and G *prima manu* विनेशेनैव. ३०४. 1) A₂ gloss ललितादित्य एव यमः. ३०८. 1) Thus corr. by A₂ from A₁ दिग्देश°; A₂ gloss दिशि देशः दिग्देशः स च कालश्च तौ. ३११. 1) Thus A₁; A₂ मत्पुरस्यैव. ३१२. 1) Thus corr. by A₂ from A₁ गत्वाभ्युपास°.

नैवं वेद्येकमपि तत्पुरं प्रवरभूपतेः । असंख्यपुरनिर्माता स विवेदाधिकं कुतः ॥३१५॥ युग्मम् ॥
क्षीणशक्त्यैव निर्ध्याय नगरप्लोषकिल्बिषम् । उष्णनिःश्वासबहुला यत्स्पर्शोनुशयाग्निना ॥३१६॥
तत्कुर्वतेन्तःसुषिरां गूढं येनातनुस्मयम् । दह्यन्ते जीर्णतरवः कोटरस्थानला इव ॥३१७॥
प्रातस्तमथ शोचन्तं सदुःखं वीक्ष्य मन्त्रिणः । विज्ञानिवर्तनायोचुः पुरप्लोषं मृषैव तत् ॥३१८॥
श्रुतेनष्टे नगरे निःशोकोभून्महीपतिः । स्वप्नान्तर्हरिते पुत्रे प्रबुद्धोय इव स्थिते ॥३१९॥
कार्यं न जातु तद्वाक्यं यत्क्षीबेन मयोच्यते । तान्युक्तकारिणोमात्यान्प्रशशंसेति सोब्रवीत् ॥३२०॥
प्रियमनुचितं क्ष्मापण्यस्त्रीक्षणप्रभुरीश्वरो रमयति यतो धिक्तान्भृत्यान्स्ववृत्तिसुखार्थिनः ।
नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि प्रसभमिह ये तैः पूतेयं महात्मभिरुर्वरी ॥३२१॥
अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः । अयमन्योपि दोषोभूदितरक्षितिपोचितः ॥३२२॥
दत्त्वापि यस्य मध्यस्थं श्रीपरिहासकेशवम् । जघान तीक्ष्णपुरुषैस्त्रिग्राम्यां गौडपार्थिवम् ॥३२३॥
गौडोपजीविनामासीत्सत्त्वमत्यद्भुतं तदा । जहुर्ये जीवितं धीराः परोक्षस्य प्रभोः कृते ॥३२४॥
शारदादर्शनमिषात्कश्मीरान्संप्रविश्य ते । मध्यस्थदेवावसथं संहताः समवेष्टयन् ॥३२५॥
दिगन्तरस्थे भूपाले प्रविविक्षूनवेक्ष्य तान् । परिहासहरिं चक्रुः पूजकाः पिहिताररिम् ॥३२६॥
ते रामस्वामिनं प्राप्य राजतं विक्रमोर्जिताः । परिहासहरिभ्रान्त्या चक्रुरुत्पाद्य रेणुशः ॥३२७॥
तिलं तिलं तं कृत्वा च चिक्षिपुर्दिक्षु सर्वतः । नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे ॥३२८॥
श्यामला रक्तसंसिक्तास्तेपतन्निहता भुवि । अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दोज्ज्वला इव ॥३२९॥
तदीयरुधिरासारैः समभूदुज्ज्वलीकृता । स्वामिभक्तिरसामान्या धन्या चेयं वसुंधरा ॥३३०॥
व्याघ्राकृतं भयं विरमति श्रीः पद्मरागाद्भवेन्नानाकारमपि प्रशाम्यति विषं गारुत्मतादश्मनः ।
एकैकं क्रियते प्रभावनियमात्कर्मेति रत्नैः परं पुंरत्नैः पुनरप्रमेयमहिमोदग्रैर्न किं साध्यते ॥३३१॥
क्व दीर्घकाललङ्घ्योध्वा शान्ते भक्तिः क्व च प्रभौ । विधातुरप्यसाध्यं तद्यद्गौडैर्विहितं तदा ॥३३२॥
लोकोत्तरस्वामिभक्तिप्रभावापि पदे पदे । तादृशानि तदाभूवन्भृत्यरत्नानि भूभृताम् ॥३३३॥
राज्ञः प्रियो रक्षितोभूद्गौडराक्षसविप्लवे । रामस्वाम्युपहारेण श्रीपरिहासकेशवः ॥३३४॥
अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदम् । ब्रह्माण्डं गौडवीराणां सनाथं यशसा पुनः ॥३३५॥
एवं नानाविधोदन्तैर्वासराः क्ष्मापतेर्ययुः । विरलाः स्वपुरे तस्य भूयांसस्तु दिगन्तरे ॥३३६॥
अनन्याक्रान्तपृथिवीसमालोकनकौतुकी । अपारं प्रविवेशाथ पुनरेवोत्तरापथम् ॥३३७॥
कर्तुं प्रभावजिज्ञासां प्रहितैर्धनदादिभिः । नैर्ऋतैः सह वृत्तान्तास्तस्य ते ते तदाभवन् ॥३३८॥
नाद्यापि या भुवो दृष्टा जाने भानुकरैरपि । राज्ञस्तस्य बभूवाज्ञा तत्र स्वैरविहारिणी ॥३३९॥
चिरमज्ञातवृत्तान्तैर्मन्त्रिभिः प्रहितस्ततः । प्रत्यावृत्तस्तस्य पार्श्वाद्दूतस्तानेवमुक्तवान् ॥३४०॥

---

३१७. [1]) $A_2$ gloss अन्तश्छिद्राः.—[2]) $A_2$ gloss मध्ये एव.—[3]) $A_2$ gloss क्रियाविशेषणम्.—[4]) $A_2$ gloss कर्मकर्तरि लकारः स्वयमेव दह्यन्ते। अन्तश्छिद्राः पुरुषास्तत्कार्यं कुर्वते। येन कार्येण अतनुस्मयं यथा भवति तथा स्वयमेव दह्यन्ते। यथा कोटरस्थानलास्तरवः स्वयमेव गूढं अन्तरेव दह्यन्ते ॥. ३३१. [1]) Thus corr. by $A_2$ from $A_1$ कर्मेति°.—[2]) Thus corr. by $A_2$ from $A_1$ परम°. ३३३. [1]) र supplied by $A_2$. ३३७. [1]) Thus corr. by $A_2$ from $A_1$ अनन्यक्रा° ३३९. [1]) $A_1$ ताम्र.

इत्यादिशति वः स्वामी कोयं मोहो भवादृशाम् । क्ष्मामिमां मे प्रविष्टस्य प्रतीक्षध्वे यदागमम् ।।३४१।।

नवं नवं प्रतिदिनं संत्यज्य विजयार्जनम् । स्वराष्ट्रं संप्रविष्टस्य किं कार्यं मम पश्यथ ।।३४२।।

विनिर्गतानां स्वभुवः सरितां सलिलाकरः । न निर्व्याजजिगीषूणां दृश्यते ह्यवधिः क्वचित् ।।३४३।।

तस्मादाचारसारं वो वक्ष्ये स्वविषयोचितम् । राज्यं तदनुसारेण निर्विघ्नं कुरुतानघाः ।।३४४।।

अन्तस्थैः सर्वदा रक्ष्यः स्वभेदः प्रभविष्णुभिः । चार्वाकाणामिवैषां हि भयं न परलोकतः ।।३४५।।

अपराधं विनाप्यत्र दण्ड्या गह्वरवासिनः । ते हि संभृतवित्ताः स्युर्दुर्भेद्या दुर्गसंश्रयाः ।।३४६।।

वर्षोपभोग्यान्यन्नानि क्षेत्रभूसंमिता वृषाः । ग्राम्याणां नातिरिच्यन्ते यथा कार्यं तथासकृत् ।।३४७।।

अधिकीभूतवित्ता हि वत्सरेणैव ते भृशम् । भवेयुर्डामराः क्रूरा नृपाज्ञातिक्रमक्षमाः ।।३४८।।

वस्त्रं स्त्रियः क्षुधा भोज्यमलंकारा हया गृहाः । आसाद्यन्ते यदा जातु ग्रामीणैर्नगरोचिताः ।।३४९।।

महादुर्गाण्युपेक्ष्यन्ते संरक्ष्याणि यदा नृपैः । यदा चानन्तरज्ञत्वं तेषां भृत्येषु दृश्यते ।।३५०।।

प्रदेशादेकतो रूढा यदा वृत्तिश्च शस्त्रिणाम् । अन्योन्योद्वाहसंबन्धैः कायस्थाः संहता यदि ।।३५१।।

कर्मस्थानानि वीक्षन्ते क्ष्मापाः कायस्थवद्यदा । तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्ययः ।।३५२।। चक्कलकम् ।।

चेष्टानुसारेणाचीय गूढमाशयसंविदम् । मयोक्तं हृदये कार्यमन्तरं राजबीजिनाम् ।।३५३।।

प्रत्यासत्तिं मदकरटिनो दानगन्धेन वायुर्गर्जोद्भूतिं प्रकटितरुचिश्चञ्चलैराम्बुदस्य ।

चेष्टा स्पष्टं वदति मतिमन्नैपुणोन्नेयतत्त्वा जन्तोर्जन्मान्तरपरिचितां निश्चलां चित्तवृत्तिम् ।।३५४।।

पुत्रः कुवलयादित्यो वज्रादित्यश्च मे समौ । भिन्नशीला तयोर्भ्रात्रोर्धीर्द्वैमातुरयोः पुनः ।।३५५।।

ज्यायान्राज्येभिषेक्तव्यः स च स्याद्गुलवान्यदा । तस्याज्ञातिक्रमः कार्यो भवद्भिर्नियमात्तदा ।।३५६।।

उत्सृजञ्जीवितं वापि राज्यं वापि स पार्थिवः । शोचनीयो न केनापि स्मरतेदं वचो मम ।।३५७।।

कार्यः कनीयांश्च नृपः प्रमादात्क्रियते यदि । नोल्लङ्घनीया तस्याज्ञा रक्ष्यश्च विषमोपि सः ।।३५८।।

पौत्रेषु मे कनीयान्यो जयापीडोस्ति दारकः । पितामहसमो भूया इति वाच्यः स सर्वदा ।।३५९।।

भर्तुर्गृहीतनैराश्याः साभिप्रायां प्रणम्य ताम् । आनर्चुः पश्चिमामाशां ते बाष्पार्धकगत्यजः ।।३६०।।

उवाच चङ्कुणो जातु संनिपत्याखिलाः प्रजाः । बाष्पैः पतिवियोगाभितप्तां सिञ्चन्निव वसुंधराम् ।।३६१।।

राज्ये कुवलयापीडो राजपुत्रोभिषिच्यताम् । सुगृहीताभिधो राजा गतः स सुकृती दिवम् ।।३६२।।

सहजे यस्य कृतिनो दैवतैः कोशवृद्धये । रससिद्धिरकस्मान्मे यस्मात्तास्तमुपागता ।।३६३।।

दूरस्थोपि हि भूभृत्स भाग्यशक्त्या कयाचन । कार्याणि घटयन्नासीद्दुर्घटान्यपि हेलया ।।३६४।।

अम्भोजानि घनाघनव्यवहितोप्युल्लासयत्यंशुमान्दूरस्थोपि पयोधरोतिशिशिरस्पर्शी करोत्यातपम् ।

शक्तिः काप्यपरीक्षितास्ति महतां स्वैरं दविष्ठान्यहो यन्माहात्म्यवशेन यान्ति घटनां कार्याणि निर्यन्त्रणाम् ।।३६५।।

सैकादशदिनान्सप्त मासान्षट्त्रिंशतं समाः । एवमाहृत्य स महीं प्रजाचन्द्रोस्तमाययौ ।।३६६।।

---

३४१. [1]) The words from प्रतीक्षध्वे to संप्रविष्टस्य in the following verse have been omitted by $A_1$ and supplied in margin by $A_2$. ३४३. [1]) Thus corr. by later hand from $A_1$ निर्व्याजं. ३४६. [1]) Thus $A_1$; altered by later hand to दुर्भेद्या which is found in R G. ३५४. [1]) $A_3$ gloss करटी हस्ती. ३५६. [1]) $A_4$ gloss कुवलयापीडः.—[2]) Emended; A °भिषेक्तव्यः. ३६५. [1]) Thus corr. by $A_3$ from $A_1$ °यन्त्रणम.

तुषारवर्षैर्बहलैस्तमकाण्डनिपातिभिः । आर्याणकाभिधे देशे विपन्नं केचिदूचिरे ॥३६७॥
राजश्रीं[1] प्रतिष्ठां स रक्षितुं चिरसंचिताम् । संकटे क्वापि दहनं प्राविक्षदिति केचन ॥३६८॥
केषांचित्तु मते भूभृद्वीयस्युत्तरापथे । सोमर्त्यदुर्लभां भूमिं प्रविष्टः कटकान्वितः ॥३६९॥
अत्यद्भुतानि कृत्यानि श्रुतान्यस्य यथा किल । विपत्तिरपि भूभर्तुस्तथैवात्यद्भुता श्रुता ॥३७०॥
यातोऽस्तं द्युमणिः पयोधिसलिलं केचिद्व्यविक्षोऽपरैः संप्राप्तो दहनं गतः किल परैर्लोकान्तरं कीर्त्यते ।
आयन्ते महतामहो निरुपमप्रस्थानहेवाकिनां निःसामान्यमहत्त्वयोगपिशुना वार्ता विपत्तावपि ॥३७१॥
ततः कुवलयापीडो भेजे कुवलयेशताम् । जातः कमलदेव्या यः श्रीमाञ्शक्र इवादितेः ॥३७२॥
त्यागेन चक्रे विशदां योऽनुरक्तां नृपश्रियम् । महोरगस्त्वचमिव स्वभावमलिनामपि ॥३७३॥
भ्राता तुल्यप्रभावेण कंचित्कालं हतप्रभः । स हुताशोष्मणाक्रान्तः प्रदीप इव नारुचत् ॥३७४॥
भृङ्गैरिवानुगैर्दानलोभात्पर्यायवृत्तिभिः । श्रीर्दुःस्थाभूत्तयोरन्तर्मत्तेभकटयोरिव ॥३७५॥
अथोभयधनादायिभृत्यचक्रिकया समम् । राजा कुवलयापीडो बभञ्जानुजमञ्जसा ॥३७६॥
राज्यं निष्कण्टकं कृत्वा ततः प्राप्तबलो नृपः । दिग्जयायोर्जितक्रान्तिः संभूतसंभृतसाधनः ॥३७७॥
एकस्तस्मिन्क्षणे मन्त्री तस्याज्ञामुदलङ्घयत् । स्मरन्वा तत्पितुर्वाचं भजन्वा दर्पविक्रियाम् ॥३७८॥
प्राप्तायामथ यामिन्यां तल्पे कोपाकुलो नृपः । तमाज्ञातिक्रमं ध्यायन्न निद्रां क्षणमप्यगात् ॥३७९॥
एवं कृतागसं हन्तुं सस्पृहस्य तदाभयात् । बहवः प्रत्यभासन्त वध्यास्तस्योद्यतक्रुधः ॥३८०॥
विचारशैलमथिता तस्य चित्तमहोदधेः । प्रकोपकालकूटस्य पश्चाच्छमसुधोदगात् ॥३८१॥
दध्यौ सोऽथ गतक्रोधः प्रवृद्धः प्राणिसंक्षयः । एतावान्कस्य नु कृते कर्तव्यः प्रत्यभान्मम ॥३८२॥
अकार्याण्यपि पर्याप्य कृत्वापि वृजिनार्जनम् । विधीयते हितं यस्य स देहः कस्य सुस्थिरः ॥३८३॥
कृतघ्नस्यास्य कायस्य हेतोरगलितस्मृतेः । हन्तव्याः कस्य पन्थानः प्रतिभान्त्यनपायिनः ॥३८४॥
दिशन्ति जन्तवो हन्त पच्यमानस्य नात्मनः । अवस्थां कालसूदेन कृतां तां तां क्षणे क्षणे ॥३८५॥
तैः पश्यद्भिरकारणस्मितसितं पाथोजकोशाकृति श्मश्रूद्भेदकठोरमद्य रभसादुत्पन्नताम्रप्रभम् ।
प्रातर्जीर्णवलक्षकेशविकृतं वृद्धाजशीर्षोपमं वक्त्रं नः परिहस्यते ध्रुवमिदं भूतैश्चिरस्थायुभिः ॥३८६॥
इत्याद्यनित्यताचिन्तादत्तशान्तिसुखादरः । राज्यं संत्यज्य स वनं प्लक्षप्रस्रवणं[1] ययौ ॥३८७॥
गच्छ भद्र वनायैव तपस्याधीयतां मनः । सापायाः क्षणभङ्गिन्य एवंप्राया विभूतयः ॥३८८॥
तेन संत्यजता राज्यं लिखितेन निजासने । वैराग्यवासनोत्सेकः श्लोकेनानेन सूचितः ॥३८९॥
अभग्नशमसंवेगलब्धसिद्धिर्नराधिपः । श्रीपर्वतावद्यापि भव्यानामेति दृक्पथम् ॥३९०॥
तथा याते प्रभोः पुत्रे मित्रशर्मा[1] शुचान्वितः । वितस्तासिन्धुसंभेदे सभार्यो जीवितं जहौ ॥३९१॥
राज्यं समां समासार्धां कृत्वा स वसुधाधिपः । निःश्रेयसाभिनिःश्रेणीं सुधीः सिद्धिं समासदत् ॥३९२॥

---

३६८. [1]) Thus A₂; A₁ °श्रद्धः. ३७१. [1]) Thus corr. by A₂ from A₁ परै°. ३७२. [1]) Thus corr. by A₂ from A₁ भुवन्नवे°; A₂ adds the gloss को भूमेः वलयः कुवलयः. ३७६. [1]) A चक्रि°. ३८०. [1]) This and the following verse have been omitted by A₁ and supplied in margin by A₂. ३८३. [1]) A₂ देहं नश्वरस्य सुस्थिरम्. ३८६. [1]) Thus A₂; A₁ श्मश्रूद्भेद ३८७ [1]) A₂ gloss नैमिषारण्यं. ३९१. [1]) A₄ gloss मन्त्री.

वज्रादित्यो बप्पियको ललितादित्य[1] इत्यपि। ख्यातोथ भूभृदभवद्यन्माता चक्रमर्दिका ॥३९३॥
स क्रूरचरितो भ्रातुः प्रजाह्लादविधायिनः। सुधांशोरिव दुर्वासा नूनं[1] विसदृशोभवत् ॥३९४॥
परिहासपुराल्लिप्स्यां नानोपकरणावलीम्। स जहार दुराचारो भूभुल्लोभवशंवदः ॥३९५॥
रागिणो भूमिपालस्य भूयस्योन्तःपुरस्त्रियः। बीजाभ्रस्येव बहवास्तास्ताः समभवन्प्रियाः ॥३९६॥
विक्रयेण प्रयच्छन्स म्लेच्छेभ्यः पुरुषान्बहून्। म्लेच्छोचितां व्यवहृतिं प्रावर्तयत मण्डले ॥३९७॥
सप्ताब्दान्वसुधां भुक्त्वा सोतिसंभोगजन्मना। जगाम संक्षयं क्ष्माभृत्क्षयरोगेण किल्बिषी ॥३९८॥
तस्मान्मञ्जरिकादेव्यां जातो राजा प्रजान्तकः। ततः पृथिव्यापीडोभूत्समासाश्चतुरः समाः ॥३९९॥
जातो मम्माभिधानायां बप्पियात्सप्त वत्सरान्[1]। संग्रामापीडनामाथ तमुत्पाट्याभवन्नृपः ॥४००॥
भ्रातरौ तौ समासाद्य राज्यं नैव व्यराजत। हेमन्तशिशिरावाप्य चण्डांशोरिव मण्डलम् ॥४०१॥
शान्तेथ संग्रामापीडे कनीयान्बप्पियात्मजः। राजा श्रीमाञ्जयापीडः प्राप राज्यं ततः क्रमात् ॥४०२॥
पितामहसमो भूयादित्यमात्यवचः स्मरन्। जिगीषुः संभृतबलो दिग्जयाय स निर्ययौ ॥४०३॥
स्वदेशादेव नयविद्दर्शी नीतैः समं नृपैः। वृद्धान्पप्रच्छ निर्गच्छन्कश्मीरद्वारगोचरान् ॥४०४॥
पितामहस्य नः सैन्यं कियन्निर्गच्छतोभवत्। इति ब्रूताद्य यात्रासु यूयं संख्यातसैनिकाः ॥४०५॥
कृतस्मितास्तमूचुस्ते किं प्रश्नेनामुना प्रभो। वस्तु कश्चिदतिक्रान्तं नानुकर्तुं क्षमोधुना ॥४०६॥
कर्णीरथानां तस्यासीत्सपादं लक्षमीशितुः। अशीतिस्तु सहस्राणि देवस्याद्य जयोद्यमे ॥४०७॥
तदाकर्ण्य जयापीडो बहु मेने न निर्जयम्। क्षिप्रं क्षितेः संकुचन्त्याः कालस्य बलवत्तया ॥४०८॥
जिगीषोः क्ष्माभुजस्तस्य भावमालोक्य तादृशम्। दध्युर्भोयशतां वृद्धा ललितादित्यभूपतेः ॥४०९॥
तस्य दूरप्रयातस्य स्यालो जज्जाभिधो बलात्। द्रोहेणाक्रम्य कश्मीरान्स्वयं भेजे नृपासनम् ॥४१०॥
दिने दिने राजसैन्यास्स्वदेशस्मारिणस्ततः। सैनिकाः संन्यवर्तन्त[1] स्वामिभक्तिपराङ्मुखाः ॥४११॥
प्रत्यापयिष्यन्स्वामेव शक्तिं परिकरं विना। निश्चिकाय जयापीडो युक्तां कांचित्तु संविदम् ॥४१२॥
अभङ्गुरास्तेभिमानास्तस्यैवासन्मनस्विनः। अत्यवर्तत यैरेव वैधात्रीरपि वामताः ॥४१३॥
स विसृज्य भुवं स्वां स्वां भूपतीननुयात्रिकान्। प्रयागमगमत्सैन्यैः परिमेयैर्निजैः समम् ॥४१४॥
तत्रावशिष्टानुच्चित्य वाजिनः स मनोजवान्। द्विजेभ्यो लक्षमेकोनं प्रददौ भूरिदक्षिणम् ॥४१५॥
संपूर्णमन्यो लक्ष यः प्रदद्यादत्र वाजिनाम्। तन्मुद्रयेयं मन्मुद्रा विनिधार्येत्युदीर्य च ॥४१६॥
श्रीजयापीडदेवस्येत्यक्षरैरुपलक्षिताम्। दिग्देशगामिनो मुद्रां गाङ्गस्य पयसो ददौ ॥४१७॥
तन्मुद्राङ्कं पयः पीत्वा गाङ्गमद्यापि निर्मलम्। चित्ते प्रवर्धते तापो भूपानामभिमानिनाम् ॥४१८॥
स्वदेशगमनानुज्ञां सैन्यस्याप्रमुखेन[1] सः। दत्त्वा[2] निशायामेकाकी निर्ययौ कटकान्तरात् ॥४१९॥
मण्डलेषु नरेन्द्राणां पयोदानामिवार्यमा। गौडराजाश्रयं गुप्तं जयन्ताख्येन भूभुजा ॥४२०॥
प्रविवेश क्रमेणाथ नगरं पौण्ड्रवर्धनम्। यस्मिन्सौराज्यरम्याभिः[1] प्रीतः पौरविभूतिभिः ॥४२१॥

---

३९३. [1]) $A_2$ ललितापीड. ३९४. [1]) $A_2$ दूरं. ४००. [1]) Thus $A_1$ R G; $A_2$ वत्सरान्. ४११. [1]) Thus $A_2$; $A_1$ स्वा न्यवर्तन्त. ४१९. [1]) Thus corr. by $A_2$ from $A_1$ °प्रमुखोथ सः. —[2]) Thus corr. by $A_2$ from $A_1$ कृत्वा (?). ४२१. [1]) Thus corr. by $A_2$ from $A_1$ तस्मिं° and प्रीतिं.

लास्यं स द्रष्टु[1]मविशत्कार्तिकेयनिकेतनम् । भरतानुगमालक्ष्यनृत्तगीतादिशास्त्रवित्[2] ॥४२२॥
ततो देवगृहद्वारशिलामध्यास्त स क्षणम् ।[1] ........................ ॥४२३॥
तेजोविशेषचकितैर्जनैः परिहृतान्तिकम् । नर्तकी कमला नाम कान्तिमन्तं ददर्श तम् ॥४२४॥
असामान्याकृतेः पुंसः सा ददर्श सविस्मया । अंसपृष्ठे[1]न धावन्तं करं तस्यान्तरान्तरा ॥४२५॥
अचिन्तयत्ततो गूढं चरत्येष भवेद्ध्रुवम् । राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः ॥४२६॥
एवं[1] महीभु[2]मभ्यासः पृष्ठस्थाः पर्णवीटिकाः । अंसपृष्ठेन येनाग्रे लसत्पाणि[3]ः प्रतिक्षणम् ॥४२७॥
लोलश्रोत्रपुटो मदोत्कमधुपापातास्ययोऽपि द्विपः सिंहो[1]ऽसत्यपि पृष्ठतः करिकुले व्यावृत्य विप्रेक्षिता ।
मेघोन्मुक्तशमेऽप्यशान्तवदनोद्गीर्णस्वरो बर्हिणश्चेष्टानां विरमेऽत्र हेतुविगमेऽप्यभ्यासदीर्घा स्थितिः ॥४२८॥
इत्यन्तश्चिन्तयन्ती सा कृत्वा संक्रान्तसंविदम् । सखीमभिन्नहृदयां विससर्ज तदन्तिकम् ॥४२९॥
प्राग्वत्पृष्ठे गते पाणौ पूगखण्डांस्तयार्पितान् । चक्रोक्षिपज्जयापीडः परिवृत्य ददर्श ताम् ॥४३०॥
भ्रूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः । ददत्यां[1] वीटिकास्तस्या वृत्तान्तमुपलब्धवान् ॥४३१॥
तया जनितदाक्षिण्यस्तैस्तैर्मधुरभाषितैः । सख्याः समाप्तनृत्ताया निन्ये स[1] वसतिं शनैः ॥४३२॥
अथाम्यपेशलालापा तथा तं सा विलासिनी । उपाचरत्परार्ध्यश्रीः सोऽप्यभूद्विस्मितो यथा ॥४३३॥
ततः शशाङ्कधवले संजाते रजनीमुखे । पाणिनालम्ब्य भूपालं शय्यावेश्म विवेश सा ॥४३४॥
ततः काञ्चनपर्यङ्कशायी मैरेयमत्तया । तयार्थितोऽपि शिथिलं विदधे नाधरांशुकम् ॥४३५॥
प्रवेशायामिव वृद्धाक्षस्तां सत्रपां ततः । दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत् ॥४३६॥
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी । किं तु कालानुरोधोऽयं सापराधं करोति माम् ॥४३७॥
दासस्तवायं कल्याणि गुणैः क्रीतोऽस्म्यकृत्रिमैः । अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि ॥४३८॥
कार्यशेषमनिष्पाद्य सज्जं मानिनि केचन । अभोगे कृतसंकल्पं सुखानां त्वमवेहि माम् ॥४३९॥
तामेवमुक्त्वा पर्यङ्कं साङ्गुलीयेन पाणिना । वादयन्निव निःश्वस्य श्लोकमेतं पपाठ सः ॥४४०॥
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत्कृत्स्नं[1] नो संध्यां भजते रविः ॥४४१॥
श्लोकेनात्मगतं तेन पठितेन महीभुजा । सा कलाकुशलाशासीन्महान्तं कंचिदेव तम् ॥४४२॥
गन्तुकामं च तं प्रातर्नृपं प्रणयिनी बलात् । अर्थयित्वा चिरं[1] कालमप्रस्थानमयाचत ॥४४३॥
एकदा वन्दितुं संध्यां[1] प्रयातः सरितस्तटम् । चिरायातो गृहं तस्या ददर्श भृशविह्वलम्[2] ॥४४४॥
किमेतदिति पृष्टाय तमूचे सा शुचिस्मिता । सिंहोऽत्र सुमहाकायो निपत्याहन्ति देहिनः ॥४४५॥
नरनागाश्वसंहारः कृतस्तेन दिने दिने । त्वय्यभूवं चिरायाते तद्भयेन समाकुला ॥४४६॥
राजानो राजपुत्रा वा तद्भयेन विशङ्किताः । गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते क्षणदाक्षणे ॥४४७॥
तामिति ब्रुवतीं[1] मुग्धां निषिध्य च विहस्य च । मत्तीड इव तां रात्रिं जयापीडोऽत्यवाहयत् ॥४४८॥

---

४२२. [1]) द्रष्टु supplied by $A_2$ in space left by $A_1$.—[2]) $A_1$ gloss भरताचार्यकृतगीतशास्त्रज्ञः ज्ञात्वा. ४२३. [1]) Here two padas seem to be wanting. ४२५. [1]) Thus $A_1$; $A_2$ °पृष्ठेष. ४२७. [1]) $A_2$ भुजं.—[2]) Emended; A गृहीतु°.—[3]) $A_1$ पाचस्या°. ४२८. [1]) Thus corr. by $A_2$ from $A_1$ सिंहः. ४३१. [1]) Thus corr. by $A_2$ from $A_1$ ददत्स्या. ४३२. [1]) Thus corr. by $A_2$ from $A_1$ स्व. ४४०. [1]) $A_2$ कथयन्निव. ४४१. [1]) Thus $A_2$; $A_1$ जगत्क्रियां. ४४३. [1]) $A_2$ चिरं. ४४४. [1]) $A_2$ स रजस्तम्.—[2]) Thus $A_1$; altered by later hand to °ह्वलाम्. ४४८. [1]) Thus corr. by later hand from $A_1$ ब्रुवतां.

अपरेद्युर्दिनापाये निर्गतो नगरान्तरात् । सिंहाक्रमणतीव्रेमुन्महावटतरोरधः ॥४४९॥
अदृश्यत ततो दूरादुत्फुल्लबकुलच्छविः । अट्टहासः कृतान्तस्य संचारीव मृगाधिपः ॥४५०॥
अध्वगान्येन यान्तं तमथ गन्धर्वगामिनम् । राजसिंहो¹ नदन्सिंहं समाह्वयत हेलया ॥४५१॥
स्तब्धश्रोत्रो व्यात्तवक्त्रः कम्प्रकूर्चः मदीमदृक् । उद्धस्तपूर्वकायान्तं सगर्जः समुपाद्रवत् ॥४५२॥
तस्य न्यस्याननबिले कफोणिं पततः क्रुधा । क्षिप्रकारी जयापीडो वक्षः क्षुरिकयाभिनत् ॥४५३॥
शोणितं गन्धगन्धेभसिन्दूराभं विमुञ्चता । एकप्रहारभिन्नेन तेनात्यज्यत जीवितम् ॥४५४॥
आमुक्तव्रणपट्टः स कफोणिमथ गोपयन् । प्रविश्य नर्तकीवेश्म निशि सुष्वाप पूर्ववत् ॥४५५॥
प्रभातायां विभावर्यां श्रुत्वा सिंहं हतं नृपः । प्रहृष्टः कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयम् ॥४५६॥
स दृष्ट्वा तं महाकायमेकप्रहृतिसंहतम् । साश्चर्यो निश्चिकायैनं प्रहर्तारममानुषम् ॥४५७॥
तस्य दन्तान्तरालग्नं केयूरं पार्श्वगार्पितम् । श्रीजयापीडनामाङ्कं ददर्शाथ सविस्मयः ॥४५८॥
स्यात्कुतोऽत्र स¹ भूपाल इति ब्रुवति पार्थिवे । जयापीडागमाशङ्कि पुरमासीद्भयाकुलम् ॥४५९॥
ततः पौरान्विमृश्यैवं जयन्तः क्षितिपोऽब्रवीत् । प्रवर्षावसरे भूयः कस्माद्वो भयसंभवः ॥४६०॥
श्रूयते हि जयापीडो राजा भुजबलोर्जितः । केनापि हेतुना भ्राम्यन्नेकाक्येव दिगन्तरे ॥४६१॥
राजपुत्रः कल्लट इत्युक्त्वा कल्याणदेव्यसौ । तस्मै निवेदिता दातुं निपुणेन सता मया ॥४६२॥
सोऽन्वेष्यतामेत्स्वयं प्राप्तस्तत्राहरणेच्छया । रत्नद्वीपं प्रतिष्ठासोर्निधावासादनं गृहात् ॥४६३॥
अस्मिन्नेव पुरे तेन भाव्यं भुजगशालिना । ब्रूयादेनं समान्वेष्य योऽस्मै दद्यामभीप्सितम् ॥४६४॥
वाचि सप्रत्ययाः¹ पौरा भूपतेः सत्यवादिनः । अन्विष्य कमलावासवर्तिनं तं न्यवेदयन् ॥४६५॥
सामात्यान्तःपुरोऽभ्येत्य प्रयत्नेन प्रसाद्य तम् । ततः स्ववेश्म नृपतिर्निनाय विहितोत्सवः ॥४६६॥
कल्याणदेव्यास्तेनाथ कल्याणाभिनिवेशिना । राजलक्ष्म्या स्वयंदत्ताया इव सोऽजिग्रहत्करम् ॥४६७॥
व्यधाद्धिनापि सामग्रीं तत्र शक्तिं प्रकाशयन् । पञ्च गौडाधिपाञ्जित्वा श्वशुरं तदधीश्वरम् ॥४६८॥
गतशेषं¹ प्रभुस्वकं सैन्यं संवाहयन्स्थितः । मित्रशर्मात्मजो देवशर्मामात्यस्तमाययौ ॥४६९॥
निजदेशं प्रति ततः स प्रतस्थे तदर्थितः । अग्रे जयश्रियं कुर्वन्प्रथमास्वेव सुलोचने¹ ॥४७०॥
सिंहासनं जिताद्राजो¹ कान्यकुब्जमहीभुजः । स राज्यककुदं राजा जहारोदारपौरुषः ॥४७१॥
तस्मिन्प्रविष्टे स्वभुवं स्फूर्जदूर्जितविक्रमे । सैन्यैः समं समित्सज्जैरज्जो योद्धुं विनिर्ययौ ॥४७२॥
शुष्कलेत्राभिधे ग्रामे तेन सार्धं सुदारुणः । जयापीडस्य संग्रामः सुबहूनि दिनान्यभूत् ॥४७३॥
अनुरक्तप्रजो राजा अज्जराज्यासहिष्णुभिः । युधि सोऽन्वीयमानोऽभूद्ग्राम्यादविकमण्डलैः ॥४७४॥
श्रीदेवो ग्रामचण्डालः ग्रामो ग्राम्यैः समं युधि । कोऽत्र अज्ज इति भ्राम्यन्योधान्पप्रच्छ सर्वतः ॥४७५॥
तृष्णार्तं स्वर्णभृङ्गारात्पिबन्तं वारि तस्य ते । रणमध्ये हयारूढं तं दूरात्समदर्शयन् ॥४७६॥

---

४५१. ¹) Thus corr. by $A_3$ from $A_1$ °सिंह. ४५२. ¹) Thus corr. by $A_3$ from $A_1$ कम्प°. ४५३. ¹) $A_2$ gloss छुरिका. ४५९. ¹) $A_2$ gloss इहास्मिन्. ४६५. ¹) $A_2$ gloss सविश्वासाः. ४६९. ¹) $A_2$ gloss प्रकृतं कथासम्बन्धं स्मारयति गतशेषमिति. ४७०. ¹) $A_2$ gloss कमलनर्तकीं कल्याणदेवीं च. ४७१. ¹) Thus $A_2$; $A_1$ °राजौ. ४७४. ¹) Thus $A_2$; $A_1$ सोन्वियमानो.


16

भ्रमन्क्षेपणीयं स क्षिप्यमाणं तदानने । लोष्टं हतो मया जज्ञ इत्यमोघक्रियोऽनदत् ॥४७७॥
साहायकाय राज्ञोऽर्थं वामीस्तुक्तार्पिताङ्गनः । मातुर्दत्तस्या जज्जस्य प्रतिज्ञातामयी वधम् ॥४७८॥
अश्मसंघर्षभीमास्यं मुमूर्षुं पतितं हयात् । विवेष्टमानं मेदिन्यां जज्जं त्यक्ता बन्धुनिजाः ॥४७९॥
स समर्थाहितापातचिन्तासन्ततदुःस्थितः । द्रोहार्जितेन राज्येन त्रिभिर्वर्षैरभुज्यत ॥४८०॥
न्यासापहाराहरणजा वेश्यानां कामिनश्च्युतात् । द्रोहोपनता राज्ञामस्थिरा एव संपदः ॥४८१॥
हते जज्जे जयापीडः प्रत्याहृत्य निजां श्रियम् । जगाह दोष्णा भूभारं कृत्स्नेन च सतां मनः ॥४८२॥
प्रपेदे यत्र कल्याणं स विरोधिवधान्नृपः । देशे कल्याणपुरकृत्तत्र कल्याणदेव्यभूत् ॥४८३॥
राजा मल्हाणपुरकृच्चक्रे विपुलकेशवम् । कमला सा स्वनाम्नापि कमलाख्यं पुरं व्यधात् ॥४८४॥
महाप्रतीहारपीडाधिकारं प्रतिपद्य सः । कल्याणदेवीदाक्षिण्यादकरोदधिकोन्नतिम् ॥४८५॥
उत्पत्तिभूमौ देशेऽस्मिन्दूरदूरतिरोहिता । कश्यपेन वितस्तेव तेन विद्यावतारिता ॥४८६॥
वचोमूर्खोचितमित्येव कस्मैचिद्ददते स्फुटम् । सर्वज्ञानान्ददच्चक्रे सर्वान्विद्याभियोगिनः ॥४८७॥
देशान्तरादागमय्य व्याचक्षाणान्क्षमापतिः । प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥४८८॥
क्षीराभिधाच्छब्दविद्योपाध्यायात्संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥४८९॥
भूपतेरात्मना स्पर्धी चक्षमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्धी शुद्धधीर्बह्वमन्यत ॥४९०॥
तावत्पण्डितशब्देऽभूद्राजशब्दादपि प्रथा । तैस्तैर्दोषैर्न तु म्लानिं कालान्तरवशाद्ययौ ॥४९१॥
नृपतौ विद्वदायत्ते राजसौमुख्यकाङ्क्षिभिः । गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ॥४९२॥
समग्रहीत्तथा राजा सोऽन्विष्य निखिलान्बुधान् । विद्वद्दुर्भिक्षमभवद्यथान्यनृपमण्डले ॥४९३॥
अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विद्वत्तया थक्कियाख्यस्तेन स्वीकृत्य वर्धितः ॥४९४॥
विद्वान्दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥४९५॥
स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम् । कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात् ॥४९६॥
मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥४९७॥
स स्वप्ने पश्चिमाशायां लक्षयन्नुदयं रवेः । देशे धर्मोत्तराचार्यं प्रविष्टं साध्वमन्यत ॥४९८॥
सचेताः संस्तवव्यक्तावित्रकृत्स्नो बभूव सः । भावानां भुज्यमानानामास्वादान्तरवित्नृपः ॥४९९॥
अपश्यद्भिर्महास्वादान्भावान्स्वादुविवेकिभिः । किं श्रेयमशनादन्यल्लक्ष्मापैरन्धैरिवोक्षभिः ॥५००॥

---

४७८. 1) A2 indicates by asterisks and the marginal note मण्डले: साहायकाय, a different reading in which this verse followed after verse 474.—2) Thus A3; A1 हिताधन:. ४७९. 1) Thus A1; A3 °संरोध°. ४८०. 1) Thus A3; A1 द्रोहार्जितेन. ४८१. 1) Thus corr. by A3 from A1 °द्रोपहता. ४८४. 1) A2 gloss मल्हो इति भाषया.—2) Doubtful: thus A2; A1 विरलके°; A3 मलकेशवम्.—3) Thus corr. by A3 from A1 स्वा.—4) A2 gloss कलमपुरं. ४८५. 1) Thus corr. by A2 from A1 °पेडाधि°. Cf. महाप्रतीहारपीडा iv. 142.—2) Thus A1; A3 °देवी and °न्नताम्. ४८६. 1) Thus G R Edd.; A हिमो. ४८७. 1) वेशाना supplied by A3 in space left by A1. ४८८. 1) A3 gloss प्रापय्य.—2) Thus A3; A1 °चक्षाण:, ४८९. 1) A2 gloss क्षीरस्वामिन:. ४९२. 1) Thus corr. by A1 from राजस°. ४९४. 1) Thus corr. by later hand from A1 थाक्कया°. ४९५. 1) A2 gloss महोद्भट आलङ्कारिकः. ४९६. 1) A3 °कारणम्.—2) A3 gloss मुख्य°. ४९८. 1) Thus A3; A1 कृत्स्नं.—2) Thus according to marginal note of A2 देशे धर्मोत्तराचार्यमित्यन्यादर्शे; A1 देशे धर्मोत्तराचार्ये. ५००. 1) Thus corr. by A2 from A1 °रन्धैरि°.

आकण्ठस्य चितां कृतानुमरणोद्योगप्रियालिङ्गनं पुण्ड्रेक्षुद्रवपानमुल्बणमहामोहप्लुतस्मृतेः ।
शीताशोकवतंसमाल्यवलयामोदश्च वाग्भावेन्द्राणां सुभगः स्वभावमहिमा निःशेषतस्मादृशः ||५०१||
मन्त्रिविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव । एकैव बिम्बिता मूर्तिः सहजगुणतां ययौ ||५०२||
आंकुर्वन्विगुणामाज्ञां लङ्केन्द्रात्सप्त राक्षसान् । तेनानयेति जगदे दूतो जानु पुरः स्थितः ||५०३||
साधिक्षिप्तधिकः सोऽथ गच्छन्पोताच्च्युतोऽम्बुधौ । प्राप पारं तिमिग्रासं तिमिमुत्पाट्य निर्गतः ||५०४||
प्रियमर्त्यो रामभक्त्या नृपाज्ञालेखवाचिनम् । स्वदेशमनयत्तं रक्षोभिस्तं विभीषणः ||५०५||
दूतं चित्तैः पूरयित्वा सरोगाधं च राक्षसैः । चक्रे जयपुरं कोट्टं त्रिविष्टपसमं नृपः ||५०६||
चतुष्कं च महाकारं विहारं च विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्मा स निर्ममे ||५०७||
तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्त्वा ध्रुवं बभाति संनिधिम् ||५०८||
अन्यत्कर्मान्तरं किंचित्कारयित्वा स राक्षसान् । व्यधात्काष्ठभिरेवाम्भ इति शंसन्ति केचन ||५०९||
स हि स्वप्ने जलान्तर्मे कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्माणं तथाविधम् ||५१०||
श्रीद्वारवत्यधिष्ठानं बाह्यं कोट्टं तथा ह्यसौ । अभ्यंतरं जयपुरं ब्रूतेऽद्याप्यखिलो जनः ||५११||
मन्त्री पञ्चमहाशब्दभाजनं जगतीभुजः । तस्मिञ्जयपुरे कोट्टे जयदत्तो व्यधान्मठम् ||५१२||
राजश्वशुरः प्रमोदस्य जामाता मथुरापतेः । आचाभिधो व्यरचयच्छुचिराचेश्वरं हरम् ||५१३||
पुनः संभृतसामग्र्यो दिग्जयाय विनिर्ययौ । बलैर्जलधिवेलाद्रीन्प्लावयञ्जलधुद्विपैः ||५१४||
संप्रविष्टापि पूर्वाब्धिमविच्छिन्ना हिमाचले । भगीरथस्य गङ्गेव रेजे तस्यानुगा चमूः ||५१५||
सार्धं प्रचण्डैश्चण्डालैरटन्तः कटकाद्बहिः । तस्यासन्यामिका रात्रौ मुम्मुनिप्रमुखा नृपाः ||५१६||
नामान्यस्त्रिनयादित्य इति प्रख्यापयन्नृपः । पूर्वाशां त्रिनयादित्यपुरेणालंकृतां व्यधात् ||५१७||
अत्युत्सेकेन महसां साहसाध्यवसायिनाम् । श्रीदारोहति संदेहं महतामपि भूभृताम् ||५१८||
भीमसेनाभिधानस्य स दुर्गं पूर्वदिक्पतेः । निःशब्दो व्रतिभिः सार्धं व्रतिलिङ्गी विवेश यत् ||५१९||
तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः । भ्राता जज्जस्य सिंहाख्यो गत्वा राज्ञे न्यवेदयत् ||५२०||
भूपतिं भीमसेनोऽथ राजाकस्माद्बबन्ध तम् । नहुषाजगरो भीमामिव भीमपराक्रमम् ||५२१||
तस्मिन्वीरे तथा बद्धे धुर्ये पुरुषकारिणाम् । पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः ||५२२||
जयापीडस्त्वसंमूढो व्यसनेऽप्यतिदारुणे । तांस्तान्संचिन्तयन्नासीदुपायानुदयोन्मुखः ||५२३||
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा । लूतामयकृता व्यापदुदपद्यत मण्डले ||५२४||

---

५०१. [1]) $A_2$ note in margin: आकण्ठस्येत्यादिस्थाने चण्डस्योन्मदबालपङ्कजमुखीपीनस्तनालिङ्गनमित्यपि पाठो रम्यः. ५०३. [1]) The original reading of $A_1$, अकुर्वन्वि°, has been corrected into आंकुर्वन्वि° by a later hand, probably $A_2$; $A_2$ explains the latter reading by the gloss विगुणामपि आज्ञामांकुर्वन् आं अङ्गीकारे. $A_3$ gives the interlinear note अकुर्वन्विगुणामित्यस्मात्पक्षे, and explains this reading in margin: दूतः किं कुर्वन् आज्ञां राजसम्बन्धिनीं विगुणां निष्फलां अकुर्वन् न विरचयन् मानयन्नाज्ञा निरर्थैः.—[2]) Thus corr. by $A_2$ from $A_1$ लङ्केन्द्रात्सप्त. ५०४. [1]) Thus corr. by later hand from $A_1$ °मधकः. ५०७. [1]) चुष्क supplied by $A_3$ in space left by $A_1$; found also in G R; C चुष्°. ५११. [1]) Thus A R G; C द्वारवं.—[2]) A gloss अभ्यन्तरकोट इति भाषया. ५१३. [1]) Thus corr. by $A_2$ from $A_1$ मधुरा°. ५१५. [1]) Thus corr. by $A_3$ from $A_1$ °हि. ५१८. [1]) Thus $A_3$; $A_1$ सहसा.—[2]) Thus corr. by $A_3$ from $A_1$ सहसाध्यवसायिनाम्; $A_3$ gloss साहसेन हिताहितानपेक्षेण कर्मणा अध्यवसायो येषां. ५२१. [1]) Thus $A_3$; $A_1$ °भूपतेः. ५२२. [1]) Thus corr. by $A_3$ from $A_1$ °पतिर्मीन°. ५२४. [1]) $A_2$ gloss उच्छूनो रक्तवर्णः पिटकाकृतिविस्तृतः सञ्चारी च त्वचि रोगविशेषः लूतामयः लोत् इति प्रसिद्धः.

आमयः स्पर्शसंचारी[1] तत्र व्यापादकश्च सः । देशाद्दोषावतो जन्तुर्लूताख्यामो विवर्ज्यते ॥५२५॥
तदाकर्ण्य जयापीडो जातोपायप्रयुक्तधीः । स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवानहः ॥५२६॥
तैः पिष्टोद्देश्यकैर्भुक्तैर्व्यलसिष्टोद्वहज्ज्वरम् । यवबूसपयथार्कं क्षिप्त्वा सपिटकोऽभवत् ॥५२७॥
तं लूताख्यामयमाकर्ण्य विपन्नं रक्षिणां मुखात् । विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात् ॥५२८॥
एवं स्वमतिमाहात्म्यात्संतीर्णो विपदर्णवात् । व्यापद्योमामहीदुर्गे यत्राथ परिपन्थिनः ॥५२९॥
यः सर्वकालमबुधैः परिहस्यमानो मूलाङ्कुराद्यपि न जातु पुरस्करोति ।
व्यापस्त्र शाखविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यलक्ष्मीम् ॥५३०॥
तमैच्छदभिसंधातुं विद्याविक्रमसंयुतः । मायाप्यरमुडिर्नाम राजा नेपालपालकः ॥५३१॥
अकृतप्रणतिस्तस्य प्रविष्टस्य स्वमण्डलम् । अपास्तदूरमध्वानं ससैन्योऽपससार सः ॥५३२॥
जिगीषोस्तस्य तु तथा तत्सत्यार्थितनिर्जयः । पृथक्प्रयत्ननिर्धार्यो नाभूत्तदनुसारिणः ॥५३३॥
मर्म क्वापि कथित्वरं प्रतिरोधी स वैरिणम् । श्येनः कपोतं कक्ष्यान्तरिवाग्निर्ध्यंञ्जगाम सः ॥५३४॥
ततो निःशोषितापाये तस्मिन्कुर्वन्स दिग्जयम् । आसन्नाब्धेस्तटे सिन्धोः[1] समुपावेशयद्बलम् ॥५३५॥
अंतस्थे विपक्षैर्द्विवैरेव पूर्वार्णवोन्मुखः । कर्षन्वेलानिलस्पर्शोत्सृष्टध्वजपटाध्वगः ॥५३६॥
ततस्तस्मिन्सरित्पारे दक्षिणस्मिन्समापतेः । तस्याप्यरमुडिः सैन्यं स्वच्छयाङ्कं प्रकाशयन् ॥५३७॥
भूरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलम् । प्रजज्वाल जयापीडः पीतसर्पिरिवानलः ॥५३८॥
स जानुदघ्नं निर्भिद्य पदवर्त्मे सरिज्जलम् । अपूर्वत्वादभूमिज्ञः क्रुद्धस्तर्तुं[1] व्यगाहत ॥५३९॥
मध्यं प्राप्ते नृपे पूर्णा वेलया वर्धमानया । अकालेभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित् ॥५४०॥
नरनागाश्वबहुलं प्रायं सैन्यं महीपतेः । प्रवृद्धया प्लाव्यमानं क्षणात्संक्षयमाययौ ॥५४१॥
नृपतिर्वीचिसंमर्दभंशितामरणांशुकः । बाहुभ्यां लहरीभिन्नस्खलितैर्दूरमनीयत ॥५४२॥
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्जितैः । सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ॥५४३॥
क्षिप्रकारी सवृत्तिभिः संनद्धैः सरितोऽन्तरात् । स चाकृष्य जयापीडं बबन्ध विहितोत्सवः ॥५४४॥
दैवस्याम्बुमुचश्च नास्ति नियमः कोऽप्यानुकूल्यं प्रति व्यक्तम्यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियम् ।
क्षिप्रं दीर्घनिदाघवासरविपत्संतापनिर्वापणं प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः ॥५४५॥
स कालगण्डिकातीराभ्याशस्थाश्मवेश्मनि । निचिक्षेप जयापीडमामात्यानां[1] रक्षिणां करे ॥५४६॥
तथा काश्मीरिको राजा निमग्नो व्यसने पुनः । स किंकर्तव्यतामूढः शुचा मूढमदह्यत ॥५४७॥
कलावतश्च राहुग्रस्तोऽपि तेजस्विन्यवर्धमापि तम् । न ददर्श यथा धीमान्स ररक्ष तथा नृपः ॥५४८॥
अपश्यन्निर्गतेः किंचिदालोकान्यस्तलोचनः । आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ॥५४९॥

५२५. [1]) Thus corr. by $A_1$ from सर्वसं°. ५३१. [1]) $A_2$ gloss [illegible].—[2]) $A_2$ gloss जयापीडस्य.—[3]) Thus $A_1$; $A_2$ अपा. स्तु°; G R have both readings. ५३३. [1]) $A_2$ gloss जयापीडस्य. ५३४. [1]) $A_2$ gloss श्येन: कपोतं भक्षयतीति प्रसिद्धिः.— [2]) Emended; A G R °ग्न्येन्ध°. ५३५. [1]) $A_2$ gloss सरितः. ५३७. [1]) Thus corr. by $A_3$ from $A_1$ तस्यारुरमुडेः. ५३९. [1]) Thus corr. by $A_2$ from $A_1$ °स्तर्तं. ५४२. [1]) Thus corr. by $A_2$ from $A_1$ °भ्रंशं°. ५४४. [1]) $A_2$ gloss वृत्ति: जलोत्तरणार्थं भाषा इति प्रसिद्धा. ५४६. [1]) Thus corr. by $A_2$ from $A_1$ °पीडं समात्यं. ५४९. [1]) Thus corr. by later hand from $A_1$ निर्गतं.—[2]) $A_2$ gloss आलोक्यतेऽनेनेत्यालोकः वातायनं । तस्मिन् न्यस्ते लोचने येन सः.

अवस्थावेदकास्तत्र प्रथिताः पृथिवीभुजा । आर्द्रान्तःकरणैः श्लोकाः स्मर्यन्तेद्यापि सूरिभिः ॥५५०॥
तथा तस्मिन्स्थिते मानी देवशर्मैव मन्त्रिषु । चिन्तयन्स्वामिसंत्राणमनिशं पर्यतप्यत ॥५५१॥
भर्तुः स्वदेहत्यागेन स हितं कर्तुमुद्यतः । दूतैररमुडेश्चक्रे प्रियवाग्भिः प्रलोभनम् ॥५५२॥
जयापीडश्रिया साकं राज्यं कश्मीरमण्डले । दास्यामि तुभ्यमित्यस्य दूतैः स भावितोभवत ॥५५३॥
प्राप्तेषु प्रतिदूतेषु पूर्णायामथ संविदि । गृहीतकटको मन्त्री नेपालविषयं ययौ ॥५५४॥
स कालगण्डिकासिन्धोरर्वाचि कटकं तटे । स्थापयित्वा परं पारं ययौ मितपरिच्छदः ॥५५५॥
सामन्तैरसमायातैस्तां सभां संप्रवेशितम् । सत्कृत्यारमुडि¹ः प्रह्वं न्यवेशयत विष्टरे ॥५५६॥
अध्वश्रान्त इति क्षिप्रं प्रतिमुक्तः क्षमाभुजा । तद्दिष्टोपचारस्तस्थौ तत्रावसथे दिनम् ॥५५७॥
स चारमुडिभूभुच पीतकोशौ¹ परस्परम् । आसतां निर्जनेन्येद्युः कर्तव्यकृतनिश्चयौ ॥५५८॥
नृपमूचेथ सचिवो जयापीडार्जितं धनम् । अस्ति सैन्ये तवाप्तानां तस्य वा विदितं च तत् ॥५५९॥
दानेन भविता मोक्षस्तवेत्युक्त्वा विमोहयन् । तस्मात्त्वं प्रष्टुमिच्छामि क्व वस्तु न्यस्तमित्यहम् ॥५६०॥
अत एव मया सैन्यं संहृतं न प्रवेशितम् । यदेतन्मध्यगाः शक्या न बन्द्धुं न्यासधारिणः ॥५६१॥
तस्मादेकैकमाहूय तेषु बद्धेषु सैनिकाः । कोपमज्ञातहृदया न यास्यन्ति विपक्षगाः ॥५६२॥
एवं विमोहितात्तस्मात्प्राज्ञोनुज्ञां¹ स लब्धवान् । बद्धस्य प्रययौ पार्श्वं जयापीडमहीभुजः ॥५६३॥
तदालोकनजं शोकं गोपयन्धैर्यसागरः । गृहं तन्निर्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपम् ॥५६४॥
अपि त्वया निजं तेजो भित्तिभूतं न हारितम् । तस्मिन्हि सति सिध्यन्ति साहसालेख्यकल्पनाः ॥५६५॥
स तं बभाषे निःशस्त्रो मन्त्रिन्नेवं व्यवस्थितः । अद्भुतं कर्म किं कुर्यां ध्रियमाणेन तेजसा ॥५६६॥
मन्त्री तमूचे तेजश्चेद्राजन्न निसृतं तव । जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवम् ॥५६७॥
अपि वातायनादस्मात्पतित्वा निम्नगाम्भसि । पारं गन्तुं समर्थोसि सैन्यं यत्र निजं तव ॥५६८॥
राजा जगाद तं नास्मात्पतितश्चोत्थीयतेम्भसः । विना दृतिं दृतिश्चात्र दूरपाताद्विदीर्यते ॥५६९॥
तस्मान्नायमुपायोत्र न च नाम विमानितः । बहु मन्ये तनुत्यागमनिर्मथ्यापकारिणम् ॥५७०॥
ततो¹ निश्चित्य सोमात्यस्तमवादीन्महीपते । बद्धः केनाप्युपायेन बहेस्त्वं नालिकाद्वयम् ॥५७१॥
प्रविश्यैकाकिनैवाथ द्रष्टव्यः संभृतो मया । सरिदुत्तरणोपायः सोनुष्ठेयोप्यशङ्कितम् ॥५७२॥
श्रुत्वेति निर्गतो गत्वा पायुक्षालनवेश्म सः । सविलम्बं बहिर्वेलां तदुक्तामत्यवाहयत् ॥५७३॥
एकाकी संप्रविष्टोथ तं ददर्श च्युतं क्षितौ । विपन्नं गलमुद्बध्य दृढया चेलचीरया ॥५७४॥

---

५५०. ¹) A₂ gloss कल्पनवेश्मनि. ५५१. ¹) Thus corr. by later hand from A₁ °न्स्थितो. ५५२. ¹) च supplied by A₂.—²) Emended; A₁ °दारमुडेर्यक्ते, changed by later hand to °मुडेश्चक्रे.—³) Thus corr. by later hand from A₁ °प्रिय-विलोभनम्. ५५६. ¹) Thus corr. by A₂ from A₁ °डेः. ५५७. ¹) Thus A₁; A₂ प्रतिक्षिप्तः. ५५८. ¹) A₂ gloss पीतकोशौ कृतद्रोहिकाविस्त्यर्थः; to द्रोहिका° A₂ adds the note शपथः. ५६१. ¹) Thus corr. by A₂ from A₁ यदि तन्म°; A₂ gloss एतन्मध्यगाः संहृतसैन्यमध्यगाः इत्यर्थः.—²) Thus corr. by A₂ from A₁ बन्धुं. ५६३. ¹) Thus A₂; A₁ प्राज्ञोन्वाज्ञां; R G follow A₂. ५६४. ¹) Thus corr. by A₂ from A₁ धर्मेण° ५७१. ¹) Thus corr. by A₂ from A₁ इति.—²) Thus corr. by later hand from A₁ वहस्त्वं; A₂ gloss वहेः गमयेरर्थः.—³) A₂ gloss घटिकाद्वयमित्यर्थः. ५७३. ¹) Thus corr. by A₂ from A₁ पाद°.—²) A₂ gloss घटिकाद्वयरूपां.

575 सद्यो व्यापादिततनुः श्वासापूरितविग्रहः । अभेद्योहं तव कृतिर्मामारुह्य तरापगाम् ॥५७५॥
आरोढुं कक्षबन्धाय स्वोर्वोरुष्णीषपट्टिकाम् । बद्धा मया तां प्रविश्य क्षिप्रमेव पताम्भसि ॥५७६॥
नखनिर्भिन्नगात्रासृग्लिखितामिति संविदम् । दृष्ट्वा च्छायान्वयत्कण्ठनिबद्धांशुकपल्लवे ॥५७७॥ तिलकम् ॥
विस्मयक्षोभयोः पश्चात्पूर्वं स सरितस्ततः । प्रवाहे पतितो राजा परं पारं समासदत् ॥५७८॥
प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः । तमशेषं सभूपालं नेपालविषयं क्षयम् ॥५७९॥
580 रक्षिणोपि न यावत्तमजानन्बन्धनाच्च्युतम् । तावदेव कथाशेषं विषयं तं चकार सः ॥५८०॥
नृत्यत्कबन्धः स्वर्गस्त्रीमुक्तजत्तूर्यघोषवान् । भूपतेर्बन्धनान्मोक्षे बभूव समरोत्सवः ॥५८१॥
दावानलोल्बणभुवो गिरयो निदाघे यत्रैव दूरमितरे परिवर्जनीयाः ।
तत्रैव संभवति सान्द्रहिमद्रवार्द्रश्चित्रं तुषारशिखरी नितरां निषेव्यः ॥५८२॥
अज्जादीनां क्षणे यत्र जन्म स्वामिद्रुहामभूत् । तत्रैव मन्त्रिणश्चित्रं कृतिनो देवशर्मणः ॥५८३॥
नाभूद्धि सदृशः सूनुः स पितुर्मित्रशर्मणः । तमोमयो भास्वरस्य भानोरिव शनैश्चरः ॥५८४॥
585 रत्नाकरोपमे तस्मिन्सचिवेस्तमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ॥५८५॥
तस्य दिग्विजयस्यान्ते मानम्लानिर्विनिर्ययौ । मानसात्पृथिवीभर्तुर्नामास्योपक्रिया पुनः ॥५८६॥
चित्रं जितवतस्तस्य स्त्रीराज्ये मण्डलं महत् । इन्द्रियग्रामविजयं बहुमन्यन्त भूभुजः ॥५८७॥
कर्णश्रीपदमाबध्य स्त्रीराज्यान्निर्जिताद्भुतम् । धर्माधिकरणाख्यं च कर्मस्थानं विनिर्ममे ॥५८८॥
द्वितीयं चलगञ्जाख्यं कर्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ॥५८९॥
590 किमन्यत्तद्भुजावासनिवासिन्या जयश्रियः । चत्वारोम्बुधयोभूवन्विलासमणिदर्पणाः ॥५९०॥
पुनः प्रविश्य कश्मीरान्स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्जितां श्रियम् ॥५९१॥
तं कदाचिन्नृपं स्वप्ने सर्वाशाविजयोर्जितम् । पुमान्दिव्याकृतिः कोपि व्याजहार कृताञ्जलिः ॥५९२॥
सुखं त्वद्विषये राजन्वसन्नस्मि सबान्धवः । नागेन्द्रोहं महापद्मनामा त्वां शरणं श्रितः ॥५९३॥
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणि वित्तेन विक्रेतुं मरुमण्डले ॥५९४॥
595 तस्माच्चेत्पासि मां तत्ते स्वर्णधातुस्रवं गिरिम् । स्वदेशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ॥५९५॥
राजा स्वप्ने निशम्येति दिक्षु समेरितैश्चरैः[1] । कुतोपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितम् ॥५९६॥
दत्ताभयः स नागोक्तं यथावत्सर्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोप्यपृच्छ्यत ॥५९७॥
भूरियोजनविस्तीर्णात्सरसोभ्यन्तरात्त्वया । नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथम् ॥५९८॥
स तं व्यजिज्ञपन्नागमचिन्त्या मन्त्रशक्तयः । ताश्चेद्दिदृक्षसे क्षिप्रमेत्याश्चर्यं विलोक्यताम् ॥५९९॥
600 अथानुगम्यमानः स राज्ञा प्राप्तः सरोन्तिकम् । अभिमन्त्र्योज्झितैर्बाणैर्द्राक्सोशोषयज्जलम् ॥६००॥

---

५७५. [1]) $A_2$ gloss सद्यो व्यापादिततनुरित्यादि पताम्भसीत्यन्ता शिक्षा राज्ञः कृते नखनिर्भिन्नस्वशरीररक्तेन लिखिता तेन कृतघ्नेन मंत्रिवरेण स्वकीयकण्ठनिबद्धे वस्त्रखण्डे.—[2]) $A_2$ gloss अत एव कृतिशब्दस्यार्थः.—[3]) $A_1$ originally कृतेर्मा°; to this reading refers the gloss of $A_2$. कृतेः सकाशादप्यभेद्योहमित्यर्थः On altering the reading to कृतिर्मा°, $A_2$ has struck out the first gloss and added a fresh one: अहमभेद्यो कृतिरस्मि.—[4]) $A_2$ gloss मां कृतिरूपं. ५७६. [1]) Thus corr. by later hand from $A_1$ °कुट-बन्धाय.—[2]) $A_2$ gloss उष्णीषपट्टिका वेष्टनाख्यलघुपट्टिकेत्यर्थः. ५८३. [1]) Thus corr. by later hand from $A_1$ क्षणं. ५८४. [1]) Thus A R G; C नाभूद्विसदृश.—[2]) Thus $A_1$; $A_2$ भास्वरस्य. ५९६. [1]) Thus $A_1$; $A_2$ °प्रेषितैश्च°.

राजापथ्यवशात्तः पङ्के लुठन्तं मानुषाननम् । बिलसितेदृश्यमुदरं भूरिहस्तोरगान्वितम् ॥६०१॥
मन्त्रसंकोचितं राजन्मृक्तान्यमुमिति ब्रुवन् । मा वधीरिति भूपेन सोभिधायं न्यषिध्यत ॥६०२॥
तूर्णं राजाज्ञया तेन[1] मन्त्रवीर्येण संहृते । सरोभूप्रागवस्थं तत्पुनर्व्योमदिगन्तरम् ॥६०३॥
द्राविडं द्रविणं दत्त्वा विसृज्याचिन्तयन्नृपः । दर्शयाम्यसौ नागः कथं स्वर्णाकरं गिरिम् ॥६०४॥
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः । केनोपकारेण गिरिः स्वर्णसूस्तव दर्श्यते ॥६०५॥
स्वदेशोयं विदेशोयमिति बुद्धेः प्रवर्तकः । अन्वयव्यतिरेकाभ्यां स्थित्यभ्यासः शरीरिणाम् ॥६०६॥
शरणं त्वामहमगाममवमानभयात्पुनः । शरण्येन सता ननु भवतैव प्रदर्शितम् ॥६०७॥
उदन्वानिव योक्षोभ्यो ज्ञायते संश्रितैः प्रभुः । का ह्रीस्ततोन्या सोन्यैर्यत्तेषामप्यभिभूयते ॥६०८॥
याभिरन्याभिभूताभिरीक्षितस्त्रातुमक्षमः । तासां केनाभिमानेन स्त्रीणां द्रक्ष्याम्यहं मुखम् ॥६०९॥
येकारणंसधर्माणो व्यानूढस्य भवाम ते । विडम्ब्यमानाः क्रीडार्थे ते वयं प्राकृता इव ॥६१०॥
अथ वा श्रीमदान्धानामप्रेक्षापूर्वकारिणाम् । यत्किंचनविधायित्वं पार्थिवानां किमद्भुतम् ॥६११॥
मन्यन्ते क्ष्माभुजः क्रीडामुन्नतानां विमाननाम् । यावज्जीवं तु सन्धातं मरणं तां विदन्ति ते ॥६१२॥
उपेक्ष्यंपक्षे भूपानां मानः स्वार्थस्य सिद्धये । स तु प्राणानुपेक्ष्यापि प्राप्यपक्षे मनस्विनाम् ॥६१३॥
महतो येवमन्यन्ते घटन्ते च विमानितैः । मनःस्वरूपाभिज्ञत्वं तेषां केनानुमीयते ॥६१४॥
भवन्त इव तत्रापि न वयं व्यर्थदर्शनाः । ताम्रधातुरसस्यन्दी दर्श्यते तद्गिरिस्तव ॥६१५॥
इत्युक्त्वा संविदं तस्मै स्वप्न एव स तां ददौ । यया प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिम् ॥६१६॥
स तस्मात्क्रमराज्यस्थात्ताम्रमाकृष्य निर्ममे । शतं दीनारकोटीनामेकोनं स्वाभिधाङ्कितम् ॥६१७॥
पूर्णं कोटिशतं कुर्याद्यः स मां निर्जयेदिति । दर्पभङ्गाय भूपानां समयं स्थापयन्नृपः ॥६१८॥
समस्या इव स क्ष्माभृत्तावच्छेषैर्विवेष्टितैः । विक्षेप तुल्यानिर्माणकुण्ठत्वायेति भूभृताम् ॥६१९॥
अथाकस्मान्महीपालः प्रजाभाग्यविपर्ययैः । त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोध्वना ॥६२०॥
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनम् । इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत् ॥६२१॥
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः[1] । प्रविवर्धितवित्तेच्छः सोभूल्लोभवशंवदः ॥६२२॥
काश्मीरिकाणामुत्पन्नं[1] निजाज्ञाव्यवधायकम् । कायस्थकक्ष्याप्रेक्षित्वं ततः प्रभृति भूभृताम् ॥६२३॥
मन्त्रस्तस्य महीभर्तुर्योभूत्तत्संनृपप्रहे । वास्तव्यबन्धचिन्तायां स एव स्थैर्यमाययौ ॥६२४॥
यस्तत्तां प्रशमाधायि पापस्योपादिदेश तत् । जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डताम् ॥६२५॥
स सौदास इवानेकलोकप्राणापहारकृत् । अस्तुत्यकृत्यसौहित्यं स्वप्नेपि न समाययौ ॥६२६॥
कुर्मः किल्बिषमेतदेव हृदये कृत्वेति कौतूहलात्स्वैरिण्यः क्षितिपाश्च विक्रमलता क्रौर्यं च कुर्युः सकृत् ।
पापाक्रान्तधियो भवन्त्यथ तथा नान्त्यान्स्पृशन्त्योपि ता दूयन्ते न च ते यथा स्वपितरौ घ्नन्तोपि शान्तत्रपाः ॥६२७॥

---

६०२. [1]) Emended; A सोभ्यधाय. ६०३. [1]) Thus corr. by $A_2$ from $A_1$ चाले. ६०८. [1]) Thus corr. by $A_2$ from $A_1$ °भूलते. ६१०. [1]) $A_1$ येऽकारण°. ६१२. [1]) Thus corr. by later hand from $A_1$ विमानिनाम्. ६१३. [1]) $A_2$ gloss स्वात्मन. ६१७. [1]) Thus $A_1$; $A_2$ दीनार°. ६२२. [1]) Thus corr. by $A_2$ from $A_1$ °कारिभिः. ६२३. [1]) Thus corr. by $A_2$ from $A_1$ काश्मीरका°. ६२७. [1]) Thus $A_2$; $A_1$ यथा.

लोभाभ्यासात्तथा क्रौर्यं स ययौ वत्सरत्रयम् । सह कार्षकभागेन यथाहार्षीत्करात्फलम् ॥६२८॥

लुब्धस्य ध्वस्तधीर्भूभृत्स्वल्पवित्ततयप्रदाम् । सर्वस्वहारिणो मेने कायस्थान्हितकारिणः ॥६२९॥

सामुद्रास्तिमयो नृपाश्च सदृशा एके हतावंभसः[1] स्वस्मादेव कणान्धनस्य जहतो जानन्ति ये दातृताम् ।
सर्वस्मात्स्फुटलुण्ठिताहितुरतो लेशान्किलान्येपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायिताम्[2] ॥६३०॥

सर्वकालं ब्राह्मणानामहो धैर्यमकुण्ठितम् । निस्त्रिंशस्य बभूवुर्ये तस्यापि परिपन्थिनः ॥ ६३१ ॥

देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः । विक्रोशन्तो न मरणाद्धरणाच्चापि पार्थिवं ॥६३२॥

विप्राणां शतमेकोनमेकाहेन[1] विपद्यते । निवेद्यमेतदित्यूचे क्रौर्याक्रान्तोथ पार्थिवः ॥६३३॥

विपर्यस्तचरित्रस्य तस्यैवं क्रूरस्य भूपतेः । एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ॥६३४॥

नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥६३५॥

भाष्यव्याख्याक्षणे लोकैर्वै[1]चक्षण्यवहतैः कृतः । सोयं तस्य विपर्यासो[2] बुधैरेवं प्रवर्तितः[3] ॥६३६॥

कृतविप्रोपसर्गस्य भूतनिष्ठा[1]विधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥६३७॥

तुलमूल्यापहर्ता[1] च चन्द्रभागातटे स्थितः । विप्राणां शतमेकोनमशृणोत्तज्जले मृतम् ॥६३८॥

ततोपहारहरणादेव प्रविरतोभवत् । वास्तव्यानां हृतां भूमिं न तु निःशेषतो जहौ ॥६३९॥

अथ विश्रामिसमये तुलमूल्यौ[1]कसो द्विजाः । चुक्रुशुर्जातु तस्याग्रे प्रतीहारकराहताः ॥६४०॥

मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः । अन्वभावि तदग्रेपि ब्राह्मणैर्न विमानना ॥६४१॥

सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलम् । निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ॥६४२॥

तदाकर्ण्यास्त सामन्तन्यस्तपृष्ठः क्षमापतिः । उल्लासितैकभूलेखो दर्पाद्वचनमब्रवीत् ॥६४३॥

भिक्षाकणभुजां कोयं शठानां वो मदज्वरः । येनर्षय इव ब्रूथ प्रभावख्यापकं[1] वचः ॥६४४॥

भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं[1] स्थितेष्वथ । इट्टिला[2]ख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः ॥६४५॥

राजन्युगानुरूप्येण भावाभावानुवर्तिनः[1] । शासितुस्तेनुसारेण न कस्मादृषयो वयम् ॥६४६॥

आह स्म विश्वामित्रो वा वसिष्ठो वा तपोनिधिः । त्वमगस्त्योथ वा किं स्या इति दर्पेण तं नृपः ॥६४७॥

ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्य[1]विग्रहः । स फणीवोत्फणस्ताम्यन्कोपान्नृपतिमब्रवीत् ॥६४८॥

भवान्यत्र[1] हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोपि वा । विश्वामित्रमुखेभ्योहं तत्रैको भवितुं क्षमः ॥६४९॥

विहस्योवाच तं राजा विश्वामित्रादिकोपतः । हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ॥६५०॥

पाणिना ताडयन्पृथ्वीं ततः क्रुद्धोभ्यधाद्द्विजः । मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किम् ॥६५१॥

तच्छ्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत् । पततु ब्रह्मदण्डोसौ किमद्यापि विलम्ब्यते ॥६५२॥

नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते । राज्ञः कनकदण्डोङ्के वितानस्खलितोपतत् ॥६५३॥

---

६३०. [1]) Thus $A_1$; $A_2$ हतान°.—[2]) Thus $A_1$; $A_2$ °ताम्वि°. ६३३. [1]) Thus $A_1$; $A_2$ °काहे चेहि°. ६३६. [1]) Thus $A_1$; $A_2$ लोके वै°.—[2]) Thus corr. by $A_2$ from $A_1$ विपर्यासे.—[3]) Thus corr. by $A_2$ from $A_1$ विवर्तितः. ६३७. [1]) $A_2$ gloss निष्ठावाचक इह नाशवाची. ६३८. [1]) Thus corr. by $A_2$ from $A_1$ तूलमूल्या°. ६४०. [1]) Thus $A_2$; $A_1$ तूलमूलौ°. $A_2$ gloss तूलमूल्याख्यो ग्रामः. ६४४. [1]) Thus corr. by $A_2$ from $A_1$ °ख्यापकं. ६४५. [1]) Thus corr. by $A_2$ from $A_1$ तूर्णीं.—[2]) Thus corr. by $A_2$ from $A_1$ इद्दिला°. ६४६. [1]) $A_2$ विप्रा भूपानुवर्तिनः इत्यन्यपाठः. ६४८. [1]) Thus $A_1$; $A_2$ दुष्प्रेक्ष°. ६४९. [1]) $A_2$ gloss भवान्यत्रेति विश्वामित्रशापाद्धरिश्चन्द्रो भ्रष्टः स्वपदात् वसिष्ठशापात्त्रिशङ्कुर्भ्रष्टः अगस्त्यशापाच्च नहुषो भ्रष्टः इति तद्दृष्टान्तोयं वचः.

कृतव्रणः स तेनाङ्के विमर्दक्लिन्नविग्रहः । कीर्यमाणक्रिमिकुलः क्रकचैर्दारितैरभूत् ॥६५४॥
अनुभाव्य व्यथां भाविनिरयक्लेशवार्णिकाम् । गणरात्रेण तं प्राणाः काङ्क्षितापगमा जहुः ॥६५५॥
ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः । अकाण्डदण्डसष्टाय वशी दण्डधराग्निकम् ॥६५६॥
तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान् । एवं प्रतापिनः सैकान्भूभोगो भूपतेरभूत् ॥६५७॥
तथा भूभृन्मत्स्या द्रविणकलुषाम्भःकृततृषः स्थितिं स्वामुज्झन्तो विदधति कुमार्गानुसरणम् ।
क्रियन्ते कालान्तानुगविकृतकैवर्तनिवहैर्यथा तेऽकस्मात्स्थिरनिरयजालप्रणयिनः ॥६५८॥
कृतपापं तमुद्दिश्य विपन्नममृतप्रभा । मृतोद्धाराय तन्माता व्यधत्तामृतकेशवम् ॥६५९॥
ललितापीडनामाभूत्ततो वसुमतीपतिः । देव्यां दुर्गाभिधायां यो जयापीडादजायत ॥६६०॥
बभूव रागिणो राज्ये राज्यकार्याण्यपश्यतः । यस्य वाराङ्गनाभोज्यं राज्यं दुर्नयदूषितम् ॥६६१॥
दुष्कृतैरार्जितं वित्तं पित्रा निरयभागिना । यं धारणादिषु न्यस्यन्ननुरूपं व्ययं व्यधात् ॥६६२॥
बन्धकीबन्धुभावेन प्राप्तराजगृहाश्रयाः । तं पांथलीयविद्यानामन्तरङ्गं व्यधुर्विटाः ॥६६३॥
केशान्स्त्रीदशनच्छिन्नान्वक्षस्तनखलाञ्छितम् । वपुषो मण्डनं मेने किरीटकटकोज्झितः ॥६६४॥
यो यो वेश्याकथाभिज्ञो यो यो नर्मविचक्षणः । स स तत्प्रियतां लेभे न शूरो न च पण्डितः ॥६६५॥
अतृप्तः स्त्रीभिरल्पाभिरुपरागः स पार्थिवः । जडं मेने जयापीडं स्त्रीराज्यान्निर्गतं जितात् ॥६६६॥
दिग्विजयव्यसनिनः पूर्वभूपाञ्जहास सः । गणिकाभोगसुखितः स्वसामयिकमध्यगः ॥६६७॥
संकोचकारिणो वृद्धाञ्शर्मोत्सवोद्वेज्य वारयन् । तस्माद्विटजनो लेभे संप्रीतात्पारितोषिकम् ॥६६८॥
भट्टचेट इव स्पष्टपरिहासविचक्षणः । सोऽलज्जयन्मन्त्रिवृद्धानास्थाने गणिकासखः ॥६६९॥
बन्धकीपादमुद्राङ्कं चारु प्रावरणादि सः । गौरवार्हान्मुदाचारः सचिवान्पर्यधापयत् ॥६७०॥
मानी मनोरथो मन्त्री परं परिजहार तम् । अशक्नुवन्यमयितुं मध्यपातपराङ्मुखः ॥६७१॥
कुकृत्यं योगराहित्यं वैधुर्यं द्रोहवृत्तिता । ······ दुर्वृत्तस्य प्रभोरन्यत्परिहारान्न भेषजम् ॥६७२॥
सुवर्णपार्श्वं विप्रेभ्यो दधत्फलपुरं तथा । भूभृत्स लोचनोत्सं च द्वादशाब्दानभूद्विभुः ॥६७३॥
कल्याणदेव्यां संजातो जयापीडमहीभुजः । संग्रामापीडनामाथ बभूव भुवनेश्वरः ॥६७४॥
पृथिव्यापीड इत्यन्यन्नाम बिभ्रत्स भूपतिः । समाप्तिं सप्तभिर्वर्षैः साम्राज्यस्य समासदत् ॥६७५॥
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः । ललितापीडजो राजा शिशुर्वेश्यस्ततोऽभवत् ॥६७६॥
रागग्रहगृहीतस्य ललितापीडभूपतेः । वेश्यायां कल्यपाल्यां यो जयादेव्यामजायत ॥६७७॥
उप्पाख्यस्याखुवग्रामकल्यपालस्य तां सुताम् । रूपलुब्धोऽवरुद्धास्वनैषीत्स हि भूपतिः ॥६७८॥
पद्मोत्पलककल्याणमम्मधर्मैः स मातुलैः । बालकैः पाल्यमानोऽभूत्पृथिवीभोगभागिभिः ॥६७९॥

६५४. [1]) Thus corr. by $A_2$ from $A_1$ विसर्प°. ६५८. [1]) Thus corr. by $A_2$ from $A_1$ फिर्लि. ६६२. [1]) $A_1$ seems to have read वधा°; corrected by $A_2$. ६६५. [1]) Thus corr. by $A_2$ from $A_1$ °कथाविज्ञो. ६७१. [1]) Thus corr. by $A_2$ from $A_1$ मम्. ६७२. [1]) Thus corr. by $A_2$ from $A_1$ योगवाहित्यं.—[2]) Here seems to be a *lacuna* in the text. ६७३. [1]) $A_2$ gloss सुनपाद.—[2]) $A_2$ gloss परिहासपुरसमीपे. ६७८. [1]) $A_3$ gloss कल्यं सुरां पालयतीति कल्यपालः कलवाल इति भाषया.—[2]) Thus corr. by $A_2$; two aksharas of $A_1$, corresponding to रुद्धा, are illegible on account of an ink blot. $A_3$ gloss अवरुद्धा उरुद्धा इति भाषया. ६७९. [1]) Thus $A_1$; $A_2$ °धर्मैः.

तस्य पञ्च महाशब्दभाग्भ्रातॄनुत्पलकोऽग्रहीत् । अन्ये जगृहिरेऽन्यानि कर्मस्थानानि[1] मातुलाः ॥६८०॥

आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्वञ्चिताशया । भूभृज्जनन्या विदधे जयादेव्या जयेश्वरः ॥६८१॥

राज्ञां कृपणवित्तैर्यज्जनिर्विर्दूष्यते धनम् । अचिराज्जीयते शान्तिमपूर्वैः कैश्चिदेव तत् ॥६८२॥

जयापीडस्य यत्किंचित्सूनुना हि व्ययीकृतम् । तनुस्यालैरशेषं तैः क्रमेण हृतं वसु ॥६८३॥

भगिनीभगसौभाग्यसंभवैर्विभवैः कृताः । तेऽभङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः ॥६८४॥

निरङ्कुशं चेष्टमानाः शनकैस्त्यक्तधीक्षमात् । ते स्वस्रीयान्नृपाभासानकुलीनाः शशङ्किरे ॥६८५॥

अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः । राज्येच्छया तैः स्वस्रीयः स्वामी च स नृपो हतः ॥६८६॥

भुक्तक्षितौ द्वादशाब्दांस्तस्मिन्व्यापादिते तथा । नैच्छन्नेकस्य ते राज्यं परस्परमहंकृताः ॥६८७॥

तेषामाक्रान्तदेशानां[1] नाममात्रमहीपतीन् । तांस्तान्कर्तुममात्यान्विरोधोऽन्योन्यमुद्ययौ[2] ॥६८८॥

अथ मेघावलीदेव्यां जातो वप्पियभूपतेः । अजोऽप्यबालिकतया योऽभूद्राज्यविवर्जितः ॥६८९॥

सोऽयं त्रिभुवनापीडो जयादेव्यामजीजनत् । राजानमजितापीडं तं बलादुत्पलो व्यधात् ॥६९०॥ युग्मम्[1] ॥

शेडादिगणनास्थाननिष्पन्नोत्थाकृपाय ते । पञ्चगह्वरनास्थानादशनाच्छादने ददुः ॥६९१॥

एकसंभाषणात्खेदं यात्स्वन्येषु दिने दिने । पञ्च तुल्यकुलाश्चैवं दुःस्थो राजा तदाश्रितः ॥६९२॥

ते राजन्यजितापीडे राज्योत्पत्त्यपहारिणः । पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे ॥६९३॥

सापत्न्यास्ते बुभुजिरे राज्यं स्वामिविवर्जितम् । निर्जने महिषं शान्तं मिथः सेर्ष्या वृका इव ॥६९४॥

उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतम् । पद्मस्य पद्मस्वाम्यासीत्कृतिः पद्मपुरं तथा ॥६९५॥

वधूर्व्यधत्त पद्मस्य गुणादेवी गुणोज्ज्वला । मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे ॥६९६॥

धर्मो धर्मोद्यमी हेतुर्धर्मस्वामिविनिर्मितेः । कल्याणवर्मा सत्कर्मा कल्याणस्वामिकेशवे ॥६९७॥

दीनाराणां सहस्राणि पञ्चोपकरणं कृती । एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः ॥६९८॥

पञ्चाशीतिसहस्राणि गवां दत्त्वा प्रकल्पयन् । कुम्भप्रतिष्ठासंभारं यो मम्मस्वामिनं व्यधात् ॥६९९॥

तस्यैकस्यैव सामग्र्यां कः संख्यां कर्तुमर्हति । भ्रातॄणां किं पुनस्तेषां सर्वेषां भूरिसंपदाम् ॥७००॥

द्रोहार्जितास्तु या लक्ष्मीः सुकृतोपार्जिताथ वा । सर्वेषां स्पृहणीयैव तेषां दातृतया तया ॥७०१॥

कृता देवगृहास्तैर्ये तत्पार्श्वेऽन्यसुरास्पदैः । दिङ्नागकुलसमीपस्थकलभौपम्यमाश्रितम् ॥७०२॥

एकोननवते वर्षे स्वकीये शान्तिमागते । निर्विघ्नभोगास्तेऽभूवन्षट्त्रिंशाब्दात्ययावधि ॥७०३॥

अथ मम्मोत्पलकयोरुदभूद्दारुणो रणः । रुद्धप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः ॥७०४॥

कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः[1] । यमुद्दिश्याकरोत्काव्यं भुवनाभ्युदयाभिधम् ॥७०५॥

---

६८०. 1) $A_2$ gloss कर्मस्थानानि कारखान इति प्रसिद्धानि. ६८१. 1) $A_4$ glosses ललितापीडेन and पद्मोत्पलकादिभिः. ६८८. 1) Thus corr. by $A_3$ from $A_1$ °देहानां.—2) $A_1$ wrote °मत्तामात्याति°; $A_2$ altered this to °मत्तमत्ता; $A_3$ has struck out the reading of $A_2$ and has written above °मत्तामात्यान्वि°.—3) Thus corr. by $A_3$ from $A_1$ °मावसौ. ६९०. 1) युग्मम् added by $A_3$. ६९१. 1) Thus corr. by a later hand from $A_1$ शेडा°; R Edd. सेडा°; G शेडा°. Cf. viii. 578 (C.).—2) $A_2$ gives the marginal note राजस्थानं नामेन्द्रागम्भं निधान नवमानादि एषां चतुर्णां सम्बन्धी एकोत्सवित्रमेषः स पञ्चमगणनास्थानमिति लोकाचारः. ६९२. 1) Thus $A_1$; $A_2$ °मुखान्यै° ६९९. 1) To this verse seems to refer the gloss of $A_2$: मनुनाथः. ७०५. 1) $A_2$ gloss श्रीशङ्कुकाभिधः प्रसिद्ध आलङ्कारिकः यस्य मतं रसनिरूपणे काव्यप्रकाशे चतुर्थोल्लासे श्रीमम्मटाचार्येण निरूपितम्.

मम्मवनुर्यशोवर्मा संग्रामाये व्यपाहरत् । स यत्र तेजः भूतानां नक्षत्राणामिवार्यमा ॥७०६॥
अथोत्पाटयाजितापीडं संग्रामापीडसंभवः । अनङ्गापीडनामाभूत्कृतो मम्मादिभिर्नृपः ॥७०७॥
मम्मोत्पलाहासहिष्णुत्वात्संभृतामर्षवैकृतः । तस्य राज्यं हियनासीत्सुखवर्मोत्पलात्मजः ॥७०८॥
वर्षत्रयेणोत्पलके ततः प्रशममागते । सं चकारोत्पलापीडमजितापीडजं नृपम् ॥७०९॥
तेषामाश्वयुजीराजसदृशानां महीभुजाम् । भृत्यापि भृत्याः कृतिनो विभूतिं केऽपि लेभिरे ॥७१०॥ 710
सांधिविग्रहिकस्तस्य रत्नो नाम विभूतिभाक् । तस्मिन्कालेऽपि यश्चक्रे रत्नस्वामिसुरास्पदम् ॥७११॥
भेजुर्दार्वाभिसारादीन्देशानुत्सृज्य भूपताम् । विमलाभा यामभुजो नराद्या व्यवहारिणः ॥७१२॥
राज्ञां कार्कोटवंश्यानां क्षीणप्रायमभूत्कुलम् । वंश्यास्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ ॥७१३॥
सामर्थ्योपनतप्रायपार्थिवत्वो व्यपद्यत । विद्वेषात्सुखवर्मोऽथ शुष्काक्षयेन स्वबन्धुना ॥७१४॥
ततः शूराभिधो मन्त्री सुखवर्मात्मजेऽकरोत् । राज्ययोग्योऽयमित्यास्थां सगुणेऽवन्तिवर्मणि ॥७१५॥ 715
एकत्रिंशे स वर्षेऽथ प्रजाविघ्नप्रशान्तये । विनिवार्योत्पलापीडं तमेव नृपतिं व्यधात् ॥७१६॥
यत्कृते विफलक्लेशा आसन्पितृपितामहाः । पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्मणा ॥७१७॥
कुम्भाः पयोनिधिपयोहरणप्रवृत्ता नित्यं वहन्ति किल ये विफलश्रमत्वम् ।
चित्रं क्षणादिह तदेकसमुद्भवेन संदर्शिता निखिलवारिधिपानलीला ॥७१८॥
अभूत तदनु मूर्धि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे ।
कनकघटमुखोज्झिताभिषेकं झटिति पतन्तमवन्तिवर्मदेवः ॥७१९॥
संग्रामादुपहेतुमिन्दुतपनावुक्तं स्ववंशोद्भवैर्भूपालैर्नवराज्यतन्त्रमिव स श्रोत्रद्वये धारयन् ।
राजा मण्डनकुण्डलद्वयमिषात्स्वच्छातपत्रच्छलाल्लक्ष्मीविष्टरपुण्डरीकघटितच्छायोदयो दिद्युते ॥७२०॥ 720

[1]इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥
समाशतद्वये षष्टियुते मासेषु षट्सु च । निर्दशाहेषु कार्कोटवंशो सप्तदशाभवन् ॥

---

७०९. [1]) $A_4$ gloss सुखवर्मा. ७१०. [1]) Thus corr. by $A_1$ from °युजो मासस?; $A_2$ gloss आश्वयुजे मासि चन्द्रपर्यंते निर्गच्छन्ति ते हेवारका इति प्रसिद्धास्तत्सदृशानां.—[2]) Thus $A_2$; $A_1$ कतिना. ७१६. [1]) $A_4$ gloss अवन्तिवर्माणम्. ७१९. [1]) Thus corr. by $A_3$ from $A_1$ तदुह. ७२०. [1]) Thus $A_1$; $A_2$ °तपनौ कुर्वं. *Colophon.* [1]) $A_2$ inserts before this the following note: रा १० यं ७१६ आवित: राज्ञाम: ७० ये १७८९

## ॥ पञ्चमस्तरङ्गः ॥

कांप्येतेषु[1] रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य दुष्यति पुरो दृक्पद्य चक्षुःश्रुतेः ।
संधानेभिनवे मिथो भगवतोर्जिह्वापृथक्स्पन्दिनी[2] भिन्नार्थां सदृशाक्षरामपि वदन्त्येवं गिरं पातु वः ॥१॥

अत्रन्निवर्मा साम्राज्यं प्राप्य पाटितकण्टकः । चकार चरितैश्चित्रं सतां कण्टकितं वपुः ॥२॥

आसतां क्षितिपामात्यौ तौ द्वावपि परस्परम् । आशादाने[1] परिवृढौ भृत्यावाज्ञापरिग्रहे ॥३॥

कृतज्ञः क्षान्तिमान्क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः । अभङ्गुरोयं संयोगः सुकृतैर्जातु दृश्यते ॥४॥

विवेक्ता प्राप्तराज्यः स क्ष्माभृद्वीक्ष्य नृपश्रियम् । अविलुप्तस्मृतिर्धीमानन्तरेवमचिन्तयत् ॥५॥

गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता । सेयं स्पृहां समुत्पाद्य दूषयत्युन्नतात्मनः ॥६॥

स नास्ति कश्चित्प्रथमं यः प्रदर्श्यानुकूलताम्[1] । संताप्यते न चरमं नीचस्त्रीस्येव नानया ॥७॥

चपलाभिः प्रवृद्धेयं स्त्रवेश्याभिः सहाम्बुधौ । तदेकचारिणीवृत्तमनया शिक्षितं कुतः ॥८॥

निःस्नेहा नान्वगात्कांश्चित्सुचिरं संस्तुताप्यसौ । परलोकाध्वगान्भूपानपाथेयानबान्धवान् ॥९॥

हेमभोजनभाण्डादि भाण्डागारे यदर्जितम् । कस्मादस्य न[1] नाथास्ते लोकान्तरगता नृपाः ॥१०॥

अन्योच्छिष्टेषु पात्रेषु भुञ्जानेषु महीभुजः । कस्मान्न लज्जामवहञ्छौचचिन्तां न वा दधुः ॥११॥

स्थूलेषु राजतस्थालकपालेष्ववलोकितैः । प्रेतभूपालनामाङ्कैः शङ्का कस्य न जायते ॥१२॥

कृष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षताम् । अशस्ता अपवित्राश्च ते हाराः कस्य हारिणः ॥१३॥

संदूष्य बाष्पैर्दुःखोष्णैस्त्यक्तान्पूर्वैर्मुमूर्षुभिः । स्पृशन्नेतानलंकारांश्च कः संकोचमाप्नुयात् ॥१४॥

या वारिराशिसलिलान्तरसंनिधानसंसेवयापि सततं मलिनैव लक्ष्मीः ।
पात्रेषु रोरं[1]शिखिभागिषु सा विमुक्ता नैर्मल्यमेति हरिणीव हुताशशौचा[2] ॥१५॥

---

१. [1]) A₂ gloss: काम्येतेषु इति । एतेषु प्रत्यक्षविषयेषु फणिनां सर्पाणां कचेषु बन्धनेषु ते कापि रुचि: कश्चिदप्यभिलाषोस्ति ।जटाजूटकक्ष्यादिबन्धनार्थमत्यन्तं सर्पानभिलषसीति देवीवचनम् । बन्धनस्थानानां कण्ठप्रकोष्ठकक्ष्यादीनां बहुत्वाद्बन्धनानामपि बहुवचनम् । एतेषु कचेषु केशेषु फणिनां सम्बन्धिनी अर्थान्मोहकारिणी कापि रुचिर्निर्वचनीया कान्तिरस्तथापि तव केशानामनगराणामिव दर्शनमात्रेण मोहो जायते इति महादेववचनम् । पुंस्कोकिलस्येव तव कण्ठतटस्य गोभिर्वचनैः चक्षुःश्रुतेः सर्पस्य दृक् नेत्रं दुष्यति मोदते । कोकिलरुतमिव तव कण्ठध्वनिं श्रुत्वा सर्पस्य दृग्हर्षं सर्पाणां चक्षुरेव श्रवणस्थानीयमित्यतो दृक् दुष्यतीत्युक्तम् । गीतप्रियो हि सर्पः। यदुक्तम् ।विभुर्वेत्ति पशुर्वेत्ति वेत्ति गीतरसं फणी । साहित्यामृतसारस्य शङ्करो वेत्ति वा न वेत्ति ॥ इति महादेववचनम् ॥ देवीवचनं तु । तव कण्ठतटस्य कोकिलस्येव करैः पुरोमे नैवं दुष्यति । गोभि: किरणैः ।कोकिलतुल्यवर्णकण्ठतटनैल्यदर्शनेन सर्पस्य दृग्हर्षः हृष्टिविकासः कोकिलरुतं श्रुत्वा सर्पाणां नेत्रविकासो जायते शीतसमये तु संकोच इति लौकिकाः ॥.—[2]) Thus A₂; A₁° स्पर्धिनी. ३. [1]) Thus corr. by A₁ from A₁ °धाने. ७. [1]) Thus corr. by later hand from A₁ °कूलताम्. १०. [1]) न supplied by A₂. १५. [1]) A₂ gloss रोर: दारिद्र्यं.—[2]) A₁ °शौचे altered by later hand to °शौचा; A₂ glosses: अग्निशौचानां मृगाणां अग्निना लोमशुद्धिः अग्निशौचवस्त्रमयम्, and हुताशेनाग्निना शौचं शुद्धिर्यस्याः सा हुताशशौचा । हरिणी मृगी इव यथा सा अग्नौ प्रक्षिप्तदेहा सती शुद्धलोमा भवति तद्वत्.

इति निर्धार्य नृपतिर्नीत्वा स्वर्णाद्रिं चूर्णताम् । निजैरञ्जलिभिः प्रादाद्विजन्मभ्यः करम्भकम् ॥१६॥
साधु भूपेति वक्तव्ये हर्षाद्गिगौरवं द्विजः । साध्ववन्तीति वदन्नेकः प्रापाञ्जलीन्बहून् ॥१७॥
लक्ष्मीं कृत्वार्थिसात्कृत्वा कृतिनावन्तिवर्मणा । विभूतिर्धामच्छत्रमात्रशेषा व्यधीयत ॥१८॥
अनन्यसंपत्संपन्नभूरिगोत्रप्रसिद्धये । राजश्रीर्दुर्भरा तस्य नवस्थे भूभुजोभवत् ॥१९॥
पिशुनान्समरे भ्रातॄन्भ्रातृव्यांश्च विजित्य सः । चकार भूरिभिर्वारै राज्यं विगतकण्टकम् ॥२०॥
राज्यं निष्पाद्य निर्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियम् ॥२१॥
भ्राता द्वैमातुरस्तेन शूरवर्माभिधः सुधीः । ज्ञातिप्रियेण वितते यौवराज्येभ्यषिच्यत ॥२२॥
गाधूयांहस्तिकर्णाख्याग्रहारौ प्रदाय यः । शूरवर्मस्वामिनं च गोकुलं च विनिर्ममे ॥२३॥
संपूर्णः पूर्णमहिमामर्त्यमाहात्म्यमन्दिरम् । पञ्चहस्तामदश्चक्रे मठं सुकृतकर्मठः ॥२४॥
भ्राताग्रजस्तु नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं तथा ॥२५॥
द्वौ शूरावरजौ धीरविघ्नपाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ द्वावन्यौ गणनापती ॥२६॥
भूत्वा वातूलतांच्छन्नप्रभावानुभवौ भुवि । गतौ सविभ्रमावेव हरावासाम्बरसभ्यताम् ॥२७॥ युग्मम् ॥
राजदौवारिकः श्रीमाञ्शूरस्यासीन्महोदयः । महोदयस्वामिनो यः प्रतिष्ठां समपादयत् ॥२८॥
रामटाख्यमुपाध्यायं ख्यातव्याकरणश्रमम् । व्याख्यातृपदकं चक्रे स तस्मिन्सुरमन्दिरे ॥२९॥
अमात्येन महीभर्तुः श्रीप्रभाकरवर्मणा । कृतं प्रभाकरस्वामिनाम्नो विष्णोर्निकेतनम् ॥३०॥
आयातेन शुकैः सार्धं दत्ता गृहशुकेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुकावलीम् ॥३१॥
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विदुषः सभ्यान्देशेस्मिन्नवतारिता ॥३२॥
युग्यैः क्षितिभुजां योग्यैरुह्यमाना महर्द्धयः । बुधाः प्रवृद्धसत्कारा विविशुर्भूपतेः सभाम् ॥३३॥
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येवन्तिवर्मणः ॥३४॥
आस्थाने कृतमन्दारो वन्दी शूरस्य मन्त्रिणः । संकल्पस्मृतिमाधातुमिमामार्यां सदापठत् ॥३५॥
अयमवसर उपकृतये प्रकृतिचला यावदस्ति संपदियम् । विपदि सदाभ्युदयिन्यां पुनरुपकर्तुं कुतोवसरः ॥३६॥
कृतः सुरेश्वरीक्षेत्रे बहुगेहविधायिना । शिवयोर्मिश्रयोस्तेन प्रासादः सोव्ययस्थितिः ॥३७॥
शूरेश्वरं प्रतिष्ठाप्य स्ववेश्मैव समुन्नतम् । चक्रे शूरमठं धीमान्स भोगाय तपस्विनाम् ॥३८॥
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवर्तप्रदेशस्थो ढक्कोभूद्विनिवेशितः ॥३९॥
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरम् । मठं शूरमठान्तश्च शूरजो रत्नवर्धनः ॥४०॥
काव्यदेव्यभिधा शूरवधूः शुद्धान्वया व्यधात् । सदाशिवं सुरेश्वर्यां काव्यदेवीश्वराभिधम् ॥४१॥

---

१६. ¹) $A_2$ gloss आविवाक्येन मौक्तिकादेः परिग्रहः.—²) $A_2$ glosses हस्ताग्रं and करम्भं क्ष्वामिश्रं शिवसक्तु इति भाषया. २३. ¹) $A_2$ gloss धुधलोहा.—²) $A_2$ gloss व्याघ्राश्रमे वागहामे.—³) $A_2$ विधाय. २४. ¹) Thus $A_1$; $A_2$ संपूर्णपुण्यमहिमा.—²) Thus $A_1$; $A_2$ मन्त्रमा°.—³) $A_2$ gloss पाञ्जुप. २५. ¹) $A_2$ gloss शाम्बालपामे समरभोग. २७. ¹) तू written above the line by $A_2$; corresponding letter of $A_1$ smeared over. $A_2$ gloss द्वौ वातूलायुग्मत्यक्तिति स्वस्य सङ्कारमिव विधाय लोकविषये गोपितनिजप्रभावाविवर्थः.—²) Thus corr. by $A_2$ from $A_1$ सुरौ. २८. ¹) $A_2$ gloss मड्डवाश्रमे. ३१. ¹) सार्धं supplied by $A_2$ in space left by $A_1$.—²) Thus corr. by later hand from $A_1$ ख्यातामशुका°. ३४. ¹) $A_2$ gloss ओमन्दवर्धनः काव्यालङ्कारध्वनिप्रभृत्यकारः.—²) $A_2$ gloss रत्नाकरः हरविजयकारः. ३६. ¹) Thus corr. by $A_2$ from $A_1$ सदाभ्यु°. ३८. ¹) $A_2$ gloss भूरपुरे. ३९ ¹) $A_2$ gloss काकिलमर्कोशस्य.—²) $A_2$ gloss ढक्कः

निर्मत्सरोवन्तिवर्मा सोदरेभ्योनपायिनीम् । शूराय च सपुत्राय नृपतिप्रक्रियां ददौ ॥४२॥
छन्दानुवर्ती भूपालो दैवतस्येव मन्त्रिणः । आ बाल्याद्वैष्णवोप्यासीच्छैवतामुपदर्शयन् ॥४३॥
क्षेत्रे विश्वैकसाराख्ये[1] मृतानामपवर्गदे । भूरिभोगास्पदं राज्ञा[2] तेनावन्तिपुरं कृतम् ॥४४॥
अवन्तिस्वामिनं तत्र प्राग्राज्याधिगमात्कृती । विधाय प्राप्तसाम्राज्यश्चक्रेवन्तीश्वरं तदा ॥४५॥
त्रिपुरेश्वरभूतेशविजयेशेषु भूभृता । स्नानद्रोण्या रूप्यमय्या तेन पीठत्रयं कृतम् ॥४६॥
शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतम् । तत्प्रियार्थमुपेक्ष्योभूद्धर्मः प्राणाः सुतोपि वा ॥४७॥
तथा चार्चयितुं जातु यातो[1] भूतेश्वरं नृपः । विभवानुगुणे स्वस्मिन्पूजोपकरणेर्पिते ॥४८॥
ददर्श पीठे देवस्य पूजकैरुपपादितम् । वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितम् ॥४९॥
तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणम् । व्यजिज्ञपन्क्षितिन्यस्तजानुप्राञ्जलयस्ततः ॥५०॥
डामरो धन्वनामास्ति लहरे[1] विषये बली । शूरस्य मन्त्रिणो देव सेवको यः सुतोपमः ॥५१॥
हृतेषु तेन ग्रामेषु निरवग्रहशक्तिना । नैवेद्यमेतदेवास्मै भूतेशाय निवेद्यते ॥५२॥
अकाण्डशूलजनितां पार्थिवः कथयन्व्यथाम् । श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोथ निर्ययौ ॥५३॥
पूजां संत्यज्य गमनं शूलं चाकस्मिकं प्रभोः । सहेतुकं विदञ्शूरो वृत्तान्तान्वेषकोभवत् ॥५४॥
ज्ञाततत्त्वस्ततस्तूर्णं भूतेशाभ्यर्णवर्तिनः । क्रुद्धः स[1] मातृचक्रस्थं भैरवस्याविशद्गृहम् ॥५५॥
निषिद्धजनबाहुल्याद्भूत्वा[1] विरलपार्श्वगः । प्राहिणोद्धन्वमानेतुं ततो दूतान्पुनः पुनः ॥५६॥
स क्षितिं पत्तिपृतनासंमर्देन प्रकम्पयन् । अप्रकम्पतनुः प्राप क्रूरः शूरान्तिकं शनैः[1] ॥५७॥
तस्य प्रविष्टमात्रस्य शस्त्रिणः शूरचोदिताः । मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवाग्रतः ॥५८॥
आसन्ने सरसि क्षिप्त्वा रुधिरोद्गारि तद्वपुः । क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ ॥५९॥
तस्य श्रुत्वा[1] शिरश्छेदं स्वपुत्रस्येव मन्त्रिणा । क्षीणमन्युः क्षितिपतिः सवैलक्ष्य इवाभवत् ॥६०॥
शूरोथ पृष्टकुशलो निर्व्यथोस्मीति भाषिणम् । उत्थाप्य तत्पार्श्वं देवं पूजाशेषमकारयत् ॥६१॥
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः । अनुक्तैव हितं तत्तत्प्राणांस्त्यक्त्वाप्यसाधयत् ॥६२॥
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ । न दृष्टौ न श्रुतौ वान्यौ तादृशौ राजमन्त्रिणौ ॥६३॥
श्रीमेघवाहनस्येव साम्राज्येवन्तिवर्मणः । अशेषप्राणिनामासीदमारो दश वत्सरान् ॥६४॥
जलं ग्रहद्भिः शिशिरं तटानेत्याकुतोभयैः । तत्कालं सेवितः पृष्ठे पाठीनैः शरदातपः ॥६५॥
अनुग्रहाय लोकानां भट्टश्रीकल्लटादयः । अवन्तिवर्मणः काले सिद्धा भुवमवातरन् ॥६६॥
चरित्रे बहुवक्तव्ये येषामेकस्य पावनः । अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते ॥६७॥
देशः प्रबलतोयौघैर्महापद्मसरोजलैः । कूलिनीभिश्च शबलः स्वल्पोत्पत्तिः सदाभवत् ॥६८॥
ललितादित्यभूभर्तुरुद्योगेन बलीयसा । किंचिदाकृष्टसलिलः प्रापोत्पत्तिं मनाक्ततः ॥६९॥

---

४४. [1]) $A_2$ gloss विश्वैकसाराख्ये भारसो इति ग्रामे.—[2]) Thus corr. by later hand from $A_1$ राजा. ४८. [1]) Thus corr. by later hand from $A_1$ आतो. ५१. [1]) $A_2$ gloss लार् इति प्रसिद्धे राष्ट्रे. ५५. [1]) $A_2$ separates स from the following and gives the gloss शूरः to स. ५६. [1]) Thus $A_1$; $A_2$ °बाहुल्यां भूत्वा. ५७. [1]) Thus $A_2$; $A_1$ शूरः. ६०. [1]) Thus corr. by $A_2$ from $A_1$ श्रुत°.

जयापीडे क्षमापाले स्वल्पवीर्येषु राजसु । सलिलोपप्लवैरासीत्पुनर्देशावृता क्षितिः ॥७०॥
दीनाराणां दशशती पञ्चाशत्यधिकाभवत् । धान्यखारीक्रये हेतुर्देशे दुर्भिक्षविक्षते ॥७१॥
अवन्तिवर्मणः पुण्यैर्जन्तूञ्जीवयितुं ततः । स्वयमन्नपतिः श्रीमान्सुय्यः क्षितिमवातरत् ॥७२॥
यस्याविज्ञातसंभूतेस्तुर्ये कालेपि निश्चितम् । अयोनिजत्वं कृतिनश्चरितैर्भुवनाद्भुतैः ॥७३॥
पुरा रथ्यारजःपुञ्जं संमार्जन्ती पिधानवत् । सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनम् ॥७४॥
तस्मिन्पिधानमुद्धृत्य सापश्यन्मध्यशायिनम् । बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः ॥७५॥
मात्रा कयापि त्यक्तोसौ सुन्दरो मन्दभाग्यया । अयेति चिन्तयन्त्यासीत्सा स्नेहात्प्रस्नुतस्तनी ॥७६॥
अदूषयन्त्यां स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे । तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ॥७७॥
स सुय्यनामा मतिमान्प्रवृद्धः शिक्षिताक्षरः । कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ॥७८॥
व्रतज्ञानादिनियमैस्तं सतां हृदयंगमम् । गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्यवारयन् ॥७९॥
तेषां कथाव्यवस्थासु निन्दतां जलविप्लवम् । धीरस्ति मे निरर्थस्तु किं कुर्यामिति सोब्रवीत् ॥८०॥
उन्मत्तस्येव वदतस्तस्य तच्चिरमाहृतः । निशम्य भूभृच्चारेभ्यश्चिरमासीत्सविस्मयः ॥८१॥
ततस्तमानीय नृपः किं ब्रूष इति पृष्टवान् । धीरस्तीत्यादि राजाग्रेप्यवोचत्सोप्यसंभ्रमः ॥८२॥
वातूलोसाविति निजैरुक्तोप्यथ महीपतिः । धियं दिदृक्षुर्विदधे तस्यायत्तं निजं धनम् ॥८३॥
कोशाद्दीनारभाण्डानि बहून्यादाय हेलया । ययौ मडवराज्यं स नावमारुह्य रंहसा ॥८४॥
ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे । एकं निक्षिप्य दीनारभाण्डं न्यावर्तत द्रुतम् ॥८५॥
सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि । वार्तां निशम्य तां राजा तच्चेष्टान्वेषकोभवत् ॥८६॥
क्रमराज्यं स संप्राप्य देशे यक्षदराभिधे । अञ्जलिभ्यां निचिक्षेप दीनारान्सलिलान्तरे ॥८७॥
यत्र तीरद्वयालम्बिशैलनिर्लुठिताः शिलाः । चक्रुर्वितस्तां निष्पीड्य पयः प्रतिपयोन्मुखम् ॥८८॥
दुर्भिक्षोपहता ग्राम्या दीनारान्वेषिणस्तदा । शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ॥८९॥
एवं दिनानि द्वित्राणि पयो युक्त्या विरुध्य तत् । वितस्तामेकतः स्थानात्कर्मकृद्भिरबन्धयत् ॥९०॥
पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा । सप्ताहमभवद्रुद्धा निखिला नीलजा सरित् ॥९१॥
अधः प्रवाहं संशोध्य लुठद्दृषदमप्रतिक्रियाम् । कृत्वा बद्धैः शिलाबन्धैः सेतुबन्धमपाटयत् ॥९२॥
चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति । ततः प्रावर्तत जवाद्धम्बु सागरगामिनी ॥९३॥
जम्बालाङ्का स्फुरन्मीना भूर्बभौ सलिलोज्झिता । व्यक्तकार्ष्ण्या सनक्षत्रा निर्मेघेव नभःस्थली ॥९४॥
यत्र यत्र विवेदीषद्वेधं सलिलविप्लवे । तत्र तत्र वितस्तायाः प्रवाहाकृतमाव्यधात् ॥९५॥
मूलस्रोतोभ्यनिष्ठ्यूतभूरिस्रोता बभौ सरित् । एकभोगाग्रानेकफणेवासितपन्नगी ॥९६॥
वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु । यान्त्यौ ये समगंसातां प्राग्वैन्यस्वामिनोन्तिके ॥९७॥
वर्ततेद्य महानद्योः कल्पापायेप्यनत्ययः । संगमो नगरोपान्ते स सुय्योपक्रमस्तयोः ॥९८॥

७१. ¹) Thus A₁; A₂ पञ्चाशदधि°.—²) Thus corr. by A₂ from A₁ °खारि:. ७३. ¹) A₂ gloss चतुर्थे युगे. ७४. ¹) Thus A₁; A₂ पुत्राधि°. ७७. ¹) Thus corr. by later hand from A₁ °स्त्रिया. ८९. ¹) Thus corr. by A₂ from A₁ °सम्भव:. ९०. ¹) A₂ gloss यारगलाकवे. ९७. ¹) समगं supplied by A₂ in space left by A₁.

अद्याप्यास्तां फलपुरपरिहासपुरस्थितौ । विष्णुस्वामी संगमस्य वैन्यस्वामी च तीरयोः ॥९९॥
सुन्दरीभवनाभ्यर्णग्रामस्वायतनस्थ तु । योगशायी हृषीकेशः सुय्यस्याभ्यर्चितस्तटे ॥१००॥
दृश्यन्तेऽद्यापि सरितां पूर्वस्रोतस्तटोद्भवाः । निषादाकृष्टनौरज्जुरेखाङ्का जीर्णपादपाः ॥१०१॥
स्फुरत्तरङ्गजिह्वाः स नदीर्मार्गमजिग्रहत् । तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ॥१०२॥
बद्ध्वा शैलमयान्सेतून्वितस्तां सप्तयोजनीम् । महापद्मसरोवारि स चकार नियन्त्रितम् ॥१०३॥
महापद्मसरःकुण्डाद्वितस्ता येन योजिता । जवान्निर्याति कोदण्डयन्त्रादिषुरिवाञ्जसा ॥१०४॥
उद्धृत्य सलिलादुर्वीमेवमादिवराहवत् । अनेकजनसंकीर्णान्ग्रामान्नानाविधान्व्यधात् ॥१०५॥
पालीभिरम्भः संरोध्य यान्कुण्डसदृशान्व्यधात् । कुण्डलानीति सर्वार्थसमृद्धान्ब्रुवते जनाः ॥१०६॥
उत्खातकीलनिवहान्नद्योऽद्यापि शरत्कृशाः । व्यञ्जन्ति जलगन्धेभबन्धनस्तम्भसंनिभान् ॥१०७॥
दीनारभाण्डानीञ्ज्ञीत्स यदगाधजलान्तरे । नन्दके निर्गतजले स्थलात्तान्यदलभ्यत ॥१०८॥
अदेवमातृकान्ग्रामान्परीक्ष्य विविधाः क्षितीः । संविभेजे विभक्तेन नादेयेन स वारिणा ॥१०९॥
असिञ्चच्च जलैर्ग्रामान्ग्रामान्मृदमुपाहृताम् । या यावता क्षणेनागाच्छोषं तां तावता हृदि ॥११०॥
कालेन मत्वा सेकार्हां प्रतिग्रामं जलस्रुतेः । परिमाणं विभागं च परिकल्प्य निरत्ययम् ॥१११॥
चकार चानूलाद्याभिः सिन्धुभिः सर्वतो दिशः । सत्फलोदारकेदारसंपत्संपन्नविभ्रमाः ॥११२॥ तिलकम् ॥
न कश्यपेनोपकृतं न यत्संकर्षणेन वा । हेलया मण्डलेऽमुष्मिंस्तत्सुय्येन स्वकर्मणा ॥११३॥
भूमेर्जलादुद्धरणं द्विजक्षेत्रे तथार्पणम् । सेतुबन्धोऽश्मभिस्तोये यमनं कालियस्य च ॥११४॥
चतुर्षु सिद्धमिति यद्विष्णोः सत्कर्मजन्मसु । सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि ॥११५॥ युग्मम् ॥
यस्मिन्महासुभिक्षेषु दीनाराणां शतद्वयी । धान्यखारेः प्राग्विक्रेतुरा सर्गादभवत्पुरा ॥११६॥
ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले । षट्त्रिंशता धान्यखारेर्दीनारैरुदितः क्रयः ॥११७॥
निर्गतायां महापद्मसलिलात्स्वर्गसंनिभम् । वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनम् ॥११८॥
स्वकृता स्थापिता तेन सरसि व्यामविकटे । आसंसारं स्थितामारं मर्यादा झषपक्षिणाम् ॥११९॥
सुय्याकुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् । सुय्यामुद्दिश्य तन्नाम्ना सुय्यासेतुं स निर्ममे ॥१२०॥
तेनोद्धृताश्च सलिलाद्भूषु ग्रामाः सहस्रशः । अवन्तिवर्मप्रमुखैर्जयस्थलमुखाः कृताः ॥१२१॥
ईदृशैर्धर्म्यवृत्तान्तैः प्रवर्तितकृतोदयः । अवन्तिदेवः पातिस्म मान्धातेव वसुंधराम् ॥१२२॥
प्राणप्रयाणसंयोगरोगग्रस्तस्ततो ययौ । क्षेत्रं स त्रिपुरेशाद्रिनिकटज्येष्ठेश्वराश्रितम् ॥१२३॥
आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपिताम् । प्राणान्ते प्राञ्जलिः शूरो वैष्णवत्वमदर्शयत् ॥१२४॥
तेनान्ते भगवद्गीताः शृण्वता भावितात्मना । ध्यायता वैष्णवं धाम निरमुच्यत जीवितम् ॥१२५॥

---

९९. 1) Emended; $A_1$ अप्यत्वा°, altered by later hand to अद्यप्या°. १०१. 1) Thus G and Edd.; A °द्भव:. १०४. 1) Thus G and Edd.; A °वाञ्जि. १०८. 1) Emended; A °भाण्डाती°. ११२. 1) Supplied by $A_2$. ११५. 1) Thus corr. by $A_2$ from $A_1$ वल्लिरक्षु°.—2) युग्मम् supplied by $A_2$. ११६. 1) Thus corr. by $A_1$ from खारी. ११७. 1) $A_2$ gloss शतद्वयीनाराणां वाहगन्धे इति कश्मीरदेशभाषया परिगण्यते षट्त्रिंशद्दीनाराः खिवाहगन्ध इति ज्ञेयाः. ११८. 1) Thus corr. by $A_2$ from $A_1$ निर्गता वा.—2) $A_2$ gloss सुय्यपुराख्यम्. ११९. 1) Thus corr. by $A_2$ from $A_1$ स्थितासार°. १२०. 1) Thus corr. by later hand from $A_1$ सुय्यकु°.—2) Emended; A सय्या°.—3) Thus corr. by later hand from $A_1$ सय्या°. १२१. 1) $A_2$ gloss क्षितय.

आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापतिः[1] । वर्षे एकोनषष्ठे स स्वर्गावासमुपाययौ ॥१२६॥
तस्मिन्प्रशान्ते प्रत्येकं विभवोत्सिक्तचेतसाम् । तुल्यमुत्पलवंश्यानां राज्येच्छा भूयसामभूत् ॥१२७॥
ततश्चक्रे प्रतीहारः प्रबलाद्रत्नवर्धनः । नृपं शंकरवर्माणमवन्तिनृपतेः सुतम् ॥१२८॥
कर्णपो विप्रपामात्यस्तनूजं शूरवर्मणः[2] । तद्भ्रातुः सुखवर्माख्यं यौवराज्येप्ययोजयत् ॥१२९॥
अतस्तयोरभूद्वैरं क्षितीशयुवराजयोः । यस्मिन्क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् ॥१३०॥
शिवशक्त्यादयो वीराः स्वामिकार्योज्झितासवः । यत्राभूवन्स्वसत्त्वस्य परीक्षाक्षणलाभिनः ॥१३१॥
कुर्वतां स्वामिशत्रूणां दानमानप्रतिश्रवम् । सत्त्वैकाम्याच्च ते यस्मादानुकूल्यमशिश्रयन् ॥१३२॥
पिण्डस्पृहां परित्यज्याहंकृताः शिक्षिताः क्वचित् । तावच्च वीततमसः श्ववृत्तिमनुजीविनः ॥१३३॥
कथंचिदथ निर्जित्य युवराजं[1] महौजसम् । प्राज्यः स्वविजयोंकारश्चक्रे शंकरवर्मणा ॥१३४॥
सत्राद्समरवर्माद्यैर्वितीर्णसमरोत्सवः । कीर्तिं श्रिया प्रणयिनीं लब्धयाधिविवेद सः ॥१३५॥
अथ निर्जित्य दायादांल्लब्ध्वा लक्ष्मीं क्षितीश्वरः । जिष्णुर्दिग्विजयं कर्तुं श्रीमानासीन्महोद्यमः ॥१३६॥
यस्य कालबलाद्देशे प्रक्षीणजनसंपदि । लक्षाणि नव पत्तीनां द्राग्निष्क्रामतोभवन् ॥१३७॥
स्वपुरस्योपकण्ठेपि योभूत्कुण्ठितशासनः । स एव रत्नोत्तंसेषु राज्ञामाज्ञां न्यवेशयत् ॥१३८॥
गच्छन्नाम्नायविच्छेदसंप्रदायः[1] ककुब्जये । स्वप्रज्ञया समुन्नीतो राज्ञा शंकरवर्मणा ॥१३९॥
तत्सेना नरनाथानां पृतनाभिः पदे पदे । कुलापगेव कुल्याभिर्विशन्तीभिरवर्ध्यत ॥१४०॥
दार्वाभिसारराजेन्द्रं[1] त्रस्यतां समुपाश्रिताः । अद्रिद्रोण्यो न वाहिन्यस्तत्सेनानादमादधुः ॥१४१॥
जनोल्बणैर्हरिगणैर्गृह्णन्हरिगणं क्षणात् । अनासादितदुर्गं स चक्रे दुर्गान्तरातिथिम् ॥१४२॥
लक्षाणि नव पत्तीनां वारणानां शतत्रयी । लक्षं च वाजिनामासीद्यस्य सेनापुरःसरम् ॥१४३॥
स गूर्जरंजयव्यग्रः[1] स्वपराभवशङ्किनम् । त्रैगर्तं[2] पृथिवीचन्द्रं निन्ये तमसि हास्यताम् ॥१४४॥
पुत्रं भुवनचन्द्राख्यं नीविं[1] प्रागेव दत्तवान् । स प्रभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः ॥१४५॥
अथ तत्कटकं भ्राम्यद्भूरिमण्डलनायकम् । वीक्ष्य संमुखमायान्तं महार्णवमिवोल्बणम् ॥१४६॥
समागमक्षणे त्रस्ताच्छङ्कमानः स्वबन्धनम् । पलाय्य प्रययौ दूरं निर्वाणौजोविजृम्भितः ॥१४७॥ तिलकम्॥
यमप्रतिमसौन्दर्यमथाप्याहुः पुराविदः । तमेवाद्राक्षुरत्रस्ता नृपाः कालमिवोल्बणम् ॥१४८॥
उत्खातालखानस्य संख्ये गूर्जरभूभुजः । बद्धमूलां क्ष्मालक्ष्मीं भुजे दीर्घामरोपयत् ॥१४९॥
तस्मै दत्त्वा टक्कदेशं विनयादङ्गुलीमिव । स्वशरीरमिवापासीन्मण्डलं गूर्जराधिपः ॥१५०॥
हृतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यीभूते थक्कियकान्वये ॥१५१॥

---

१२६. [1]) Thus corr. by $A_2$ from $A_1$ °पतेः. १२९ [1]) Thus $A_2$; $A_1$ °पापत्य°.—[2]) $A_4$ gloss अवन्तिवर्मभ्रातुः. १३४. [1]) $A_4$ gloss सुखवर्माणम्. १३९. [1]) Thus $A_1$; altered by later hand to °विच्छेदं. १४१. [1]) $A_2$ gloss दर्वाभिसारः चाम गली इति भाषया.—[2]) $A_4$ gloss नरवाहनमाला.—[3]) $A_2$ आम्बता.—[4]) $A_4$ gloss दार्वाभिसारनृपस्य सेनाः. १४४. [1]) $A_2$ gloss गूर्जरेति अथ गूर्जरः लघुगोज्वरात इति प्रसिद्धो देशः.—[2]) $A_2$ gloss त्रिगर्ताः नगरकोटः तदधीशः. १४५. [1]) $A_2$ writes in margin the gloss : नीविः । नेव इति देशभाषया च, which $A_2$ continues with सिद्धः चः स्वप्रतिनिधिः न्यूनबलेन माण्डलिकेनाधिकबलस्य राज्ञः प्रतीक्ष्यं समर्प्यते ॥. १४७ [1]) वि supplied by $A_2$ in space left by $A_1$. १५०. [1]) $A_2$ gloss टक्कदेशः अद्रिमध्यतटे टक्करो नाम गुहदेशाद्दूरं वर्तमानो बोजनविंशतिकेन.

दरत्तुरुष्काधिपयोर्यः केसरिवराहयोः । हिमवद्विन्ध्ययोरासीदार्यावर्त इवान्तरे ॥१५२॥
उदभाण्डपुरे तस्थुर्यदीये निर्भया नृपाः । पक्षच्छेदव्यथात्रस्ता महार्णव इवाद्रयः ॥१५३॥
नक्षत्रेष्विव भूपेषु नमत्सूद्योत्तरापथे । यस्यैव विपुला ख्यातिर्मार्ताण्डस्येव मण्डलम् ॥१५४॥
स श्रीमांल्लल्लियः शाहिरलखानाभयः क्षुधा । निराकरिष्णोः[1] साम्राज्यात्तस्य सेवां न लब्धवान् ॥१५५॥
एवं दिग्विजयं कृत्वा प्राप्तः स्वं निजमण्डलम् । प्रदेशे पञ्चसत्राख्ये स्वनाम्ना[1] विदधे पुरम् ॥१५६॥
तस्य श्रीस्वामिराजस्य तनयोदङ्कपथप्रभोः । पूर्णिमेव क्षपाबन्धोः सुगन्धाख्याभवत्प्रिया ॥१५७॥
तया समं पुरवरे सुरराजोपमो नृपः । तस्मिञ्शंकरगौरीशंसुगन्धेशौ विनिर्ममे ॥१५८॥
द्विजस्तयोर्नायकाख्यो गौरीशशंकरसद्मनोः । चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरम् ॥१५९॥
परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोण्ठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ॥१६०॥
स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः । तारापहारमकरोत्परिहासपुरस्य यत् ॥१६१॥
ख्यातिहेतुः पट्टवानं पशूनां क्रयविक्रयौ । इत्यादि यत्पत्तनेऽस्ति तत्तस्मिन्हि पुरेऽभवत् ॥१६२॥
राज्यप्रदेन नृपते रत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ॥१६३॥
चित्रं नृपद्विपाः पूतमूर्तयः कीर्तिनिर्झरैः । भवन्ति व्यसनासक्तिपांसुस्नानमलीमसाः ॥१६४॥
अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । आधीयमानचित्तोऽभूत्प्रजापीडनपण्डितः ॥१६५॥
आरब्धैर्व्यसनैर्भूभृत्क्षीणकोशः क्षणे क्षणे । देवादीनां स सर्वस्वं जहारायासयुक्तिभिः ॥१६६॥
कर्मस्थाने पुरगृहग्रामादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ॥१६७॥
धूपचन्दनतैलादिविक्रयोत्थं समाददे । द्रविणं देववेश्मभ्यः क्रयमूल्यकलाच्छलात् ॥१६८॥
प्रत्यवेक्षां मुखे दत्त्वा विभक्तैरधिकारिभिः । चतुःषष्टिं सुरगृहान्मुमोषैतरदञ्जसा ॥१६९॥
ग्रामान्देवगृहग्राह्यान्राजा प्रतिकरेण सः । स्वयं स्वीकृत्य चोत्पत्तिं क्ष्मां कार्षक इव व्यधात् ॥१७०॥
तुलां कृत्वा त्रिभागोनां वर्धदेयां स पर्षदे । भुक्तिकम्बलमूल्यादिदम्भादभ्यधिकं ददौ ॥१७१॥
दिगन्तरस्थो ग्रामीणानूढभारानमागतान् । तद्देशार्घैर्भारमूल्यं वर्षमेकमदण्डयत् ॥१७२॥
वर्षेऽपरस्मिन्निखिलान्भारमूल्यं निरागसः । तथैव संख्यया ग्राम्यान्प्रतिग्राममदण्डयत् ॥१७३॥
इत्येषा स्कन्धभारोढिः प्रथमं तेन पातिता । दारिद्र्यदूती ग्रामाणां या त्रयोदशधा स्थिता ॥१७४॥
स्कन्दकग्रामकायस्थग्रासवृत्त्यादिसंग्रहैः । अन्यैश्च विविधायासैर्व्यधाद्ग्रामांस्स निर्धनान् ॥१७५॥
तुलापहारोपनयग्रामदण्डादिसंग्रहैः । इत्येष तेन संवाहो गृहकृत्ये प्रवर्तितः ॥१७६॥
व्यधत्त पञ्च दिविरांस्स तस्मिन्भिन्नकर्मणि । षष्ठं तथा गञ्जवरं शाकचं लवठाभिधम् ॥१७७॥

---

१५३. [1]) This verse is added in margin by A₂; found in G R. १५४. [1]) A₁ विपुलख्याति र्मा°; A₂ has altered this to विपुला ख्यातिर्मा°, but has subsequently restored the reading of A₁. G follows A₁, R reads as A₂. १५५. [1]) Thus corr. by A₂; A₁ °ल्लिय:.—[2]) Thus corr. by A₁ from °रिष्णु:; R G °रिष्णोः. १५६. [1]) A₂ gloss शङ्करवर्मा.—[2]) A₂ gloss शङ्करपुर. १५७. [1]) A₂ gloss शङ्करवर्मण:.—[2]) A₂ gloss कन्या. १५८. [1]) Emended; A गौरीश°. १६६. [1]) Thus corr. by A₂ from A₁ अपेक्षमान°. १६८. [1]) Thus A₁; A₂ °नवेला°.—[2]) Thus corr. by later hand from A₁ °मूल्ये.—[3]) A₂ gloss केसालाभ:. १६९. [1]) Thus A₂; A₁ मुमोषेत°. १७१. [1]) Thus A₁; A₂ भुक्त°.—[2]) दम्भा supplied by A₂ in space left by A₁. १७७. [1]) Thus A₁. Cf. vi. 130; vii. 111, 119; misread दिविराञ्च in R G Edd.

आत्मनो निरयं मूढः सोऽङ्गीकृत्येत्युपक्रियाम् | भाविनामकरोद्राज्ञां पापी वर्त्म नियोगिनाम् ||१७८||
निमित्तं मण्डलेमुष्मिन्सविधानामनादरे | राज्ञां प्रतापहानौ च नान्यः शंकरवर्मणः ||१७९||
मुख्येन गुणिनां राज्ञा धनहान्या यथापहाः | मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्तिताः ||१८०||
तथा कायस्थभोज्या भूर्जाता तत्प्रत्यवेक्षया | यथा संजायतेवर्णं हरणादिव भूभुजाम् ||१८१||
तस्मिन्घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिम् | पुत्रो गोपालवर्माख्यः कदाचिदिदमब्रवीत् ||१८२||
प्रदातुस्तात भवतः पूर्वं न्यासीकृतः स्थितः | वरो यः सत्यसंधस्य सोधुना प्रार्थ्यते मया ||१८३||
कायस्थप्रेरणादेतैर्दैवेनाद्य प्रवर्तितैः | आयासैः श्वासशेषैव प्राणवृत्तिः शरीरिणाम् ||१८४||
न च मात्रास्ति तातस्य काचिल्लोकद्वयोचिता | मनागपि हितप्राप्तिरेतया जनपीडया ||१८५||
अदृष्टविषयां वार्तां गहनां विवृणोति कः | दृष्टेप्यनिष्टादन्यत्र कर्मणानेन दृश्यते ||१८६||
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोखिलाः | प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ||१८७||
भूभुजोभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते | अकालकुसुमस्येव फलसंभावनोज्झिता ||१८८||
दानं च सूनृता सूक्तिर्विश्वसंवननं प्रभोः | लोभः पूर्वं तयोरेव विनाशाय महोद्यमः ||१८९||
प्रतापमायतिं शोभां हेमन्ताहस्य वारिदः | स्मृतिशेषां करोत्येव लोभश्च पृथिवीभुजाम् ||१९०||
दायादा व्ययभीरुतापरिहृतारम्भैर्भवन्त्युद्धता भृत्याः प्रत्युपकारकातरमतेः कुर्युर्न केपि प्रियम् |
राशीभूतधनस्य जीवितहृतौ शश्वत्तेरात्मजा भूभर्तुः क्रियते द्विषेव रभसाल्लोभेन किं नाप्रियम् ||१९१||
राजसंवाहनामायं नत्रायासो जनाद्धरत् | तदेष लोभप्रभवः प्रजानाथ निवार्यताम् ||१९२||
श्रुत्वेति राजपुत्रस्य सौजन्येनोज्ज्वलं वचः | स्मितधौताधरो राजा शनैर्वचनमब्रवीत् ||१९३||
तथाकृत्यविसंवादि वचः सौजन्यपेशलम् | स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीम् ||१९४||
कुमारभावे पूर्वं मे तवेवार्द्रान्तरात्मनः | प्रजावत्सलता वत्स पर्याप्ता पर्यवर्धत ||१९५||
सोहं धर्मे महद्धर्मं शीते दत्त्वाच्छमंशुकम् | पदातिरपपादत्रः पित्रा संचारितोभवम् ||१९६||
मृगव्यादौ हयैः सार्धमटन्तं कण्टकक्षतम् | अन्तर्बाष्पं मां विलोक्य तमश्रुविधुरप्रजाः ||१९७||
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्नवान् | काले काले सेवकानां जाने सेवापरिश्रमम् ||१९८||
ईदृग्दुःखमयं भुक्त्वा शास्यत्यन्यव्यथां ध्रुवम् | प्राप्तैश्वर्यो भवेन्मूको गर्भेश्वरतयान्यथा ||१९९||
उपायैरीदृशैर्योहं कृतः पित्रा सुशिक्षितः | तेनापि प्राप्तराज्येन मयैवं पीडिताः प्रजाः ||२००||
गर्भवासव्यथां जातः शरीरी विस्मरेद्यथा | प्राप्तराज्यस्तथा राजा नियतं पूर्वचिन्तनम् ||२०१||
त्वयैव तस्मादेकोद्य वरो मह्यं प्रदीयताम् | प्राप्तराज्यः प्रजापीडां मा कार्षीस्त्वमतोधिकाम् ||२०२||
सात्त्वमिति तेनोक्तः कृतान्योन्यस्मितैर्भटैः | राजाभिवीक्षितश्चासीत्कुमारो ह्रीनताननः ||२०३||
त्यागभीरुतया तस्मिन्गुणिसङ्गपराङ्मुखे | आसेवन्तावरा वृत्तीः कवयो भल्लटादयः ||२०४||
निर्वेतनाः शुकवयो भारिको लवटस्त्वभूत् | प्रसादात्तस्य दीनारसहस्रद्वयवेतनः ||२०५||

---

१७८. 1) Thus A; *varia lectio* in R G पापीवस्था.—2) Thus corr. by $A_2$ from $A_1$ निवोधि°. १८९. 1) $A_2$ gloss अपयशः. १९६. 1) Thus $A_3$; $A_1$ °दत्त्वोष्णं°. १९७. 1) Thus corr. by $A_3$ from $A_1$ °हय्यः. २००. 1) Thus corr. by $A_3$ from $A_1$ °शिताः. २०१. 1) $A_3$ °चिन्तितम्.

कल्यपालकुले जन्म तस्यैव प्रमाणितम् । स्त्रीवोधितामधेयोक्तैर्देवी वाग्यस्य नाभवत् ॥२०६॥
वेष्टितद्रमभुग्ष्णीषो प्राणस्यामे प्रदेशिनी । ध्यानैकाग्रा दृगित्यासीत्सुखराजस्य मन्त्रिणः ॥२०७॥
योयमार्योचितो वेषो दुर्नयासेविनः प्रभोः । छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनाम् ॥२०८॥ युग्मम्॥
सोनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया । भूरं दार्वाभिसारेशं शर्वर्यां नरवाहनम् ॥२०९॥
प्रजाभिशापे पतिते नृपस्योन्मार्गवर्तिनः । निःशङ्किशाः सुतास्तस्य व्यपद्यन्तामयं विना ॥२१०॥
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजाम् । क्षणादेव क्षयं याति प्रजाविप्रियकारिणाम् ॥२११॥
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत्तु चिन्त्यताम् । प्रनष्टं तस्य नामापि यथा क्रूरेण कर्मणा ॥२१२॥
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरं कृतम् । कस्यान्यस्याभिधाध्वंसि यथा शंकरवर्मणः ॥२१३॥
स्वकीयः सुखराजस्य तेन द्वाराधिपः कृतः । वीरानकाभिधे स्थाने प्रमादादासदद्वधम् ॥२१४॥
तत्कोपात्स स्वयं राजा दत्तयात्रो मदोर्जितः । वीरानकं समुन्मूल्य प्रविवेशोत्तरापथम् ॥२१५॥
सिन्धुकूलाश्रयान्देशाञ्छित्त्वा भूरीन्भयातुरैः । कृतानतिर्महीपालैः प्रत्यावृत्तोभवत्ततः ॥२१६॥
उरशां विशतस्तस्य वास्तव्यैरौरशैः समम् । निकेतहेतोः सैन्यानामकस्मादुदभूत्कलिः ॥२१७॥
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातितः । वेगवाही शरस्तस्य प्रमादादविशद्गलम् ॥२१८॥
मुमूर्षुरामान्कटकं संरक्ष्य नयतेति सः । उक्त्वा कर्णीरथारूढः स्थानात्तस्माद्विनिर्ययौ ॥२१९॥
हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा । क्रन्दन्त्या वपुरालिङ्ग्य स्थितायाः क्षामभाषितः ॥२२०॥
पुत्रं गोपालवर्माख्यं न्यासीकृत्य च रक्षितुम् । शिशुदेहं महादेव्याः सुगन्धाया अबान्धवम् ॥२२१॥
फाल्गुने कृष्णसप्तम्यां वत्सरे सप्तमप्रती । उत्खायमानविशिखो मार्ग एव व्यपद्यत ॥२२२॥ तिलकम्॥
सुखराजादयः सैन्यं रक्षन्तः परभूमिषु । वृत्तान्तैर्गोपयन्तस्तं यान्त एवाभवन्पथि ॥२२३॥
ते यन्त्रसूत्रैस्ते मूर्ध्नो नम्रतोन्नतावहैः । प्रतिप्रणामं ग्रामाणां सामन्तानामकारयन् ॥२२४॥
षड्भिर्दिनैर्निजे स्थाने प्राप्ते वोल्यासकाभिधे । चक्रिरे गतसंबाधास्ततस्तस्यान्त्यसत्क्रियाम् ॥२२५॥
विज्ञः सुरेन्द्रवल्याख्या राज्ञ्यो राजानमन्वयुः । वेलावित्तः कृतज्ञश्च जयसिंहाह्वयः कृती ॥२२६॥
द्वौ लाडो वज्रसारश्च तं भृत्यावनुजग्मतुः । इति षड्भिश्चिताकण्ठैः सहसाक्रियताग्निसात् ॥२२७॥
ततो जुगोप गोपालवर्मा धार्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः सत्यसंधो वसुंधराम् ॥२२८॥
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि । अनतिक्रान्तबाल्योऽपि दुःसंस्कारान्न सोग्रहीत् ॥२२९॥
भूपालजननी भोगैर्वैधव्येऽधिकमुन्मदा । सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणम् ॥२३०॥
तया निर्भरसंभोगप्रीतया स व्यधीयत । सौभाग्यपदभृङ्गारमौलिचक्रत्रयाङ्कितः ॥२३१॥
कोशाध्यक्षेण रागिण्यास्तस्या लुण्ठितसंपदा । उदभाण्डपुरे तेन शाहिराज्यं व्यजीयत ॥२३२॥

२०७. 1) Thus corr. by $A_2$ from $A_1$ °रागस्य. २१०. 1) न supplied by $A_2$.—2) $A_1$ writes below this word ५०. २११. 1) $A_2$ gloss वहन्. २१४. 1) $A_2$ gloss द्वारविषयायां वीरानके.—2) $A_4$ gloss सुखराजस्वकीय·. २१७. 1) $A_2$ gloss उष्ट्रू. २१९ 1) Thus $A_2$; $A_1$ °कद्वान्स्या°. २२०. 1) Thus corr. by later hand from $A_1$ °लिङ्गया. २२३. 1) $A_2$ gloss मन्त्रिणः.—2) Thus $A_1$; $A_2$ वृत्तान्तं गो°. २२५. 1) Thus A R G; $A_2$ gloss वराहमूलसमीपे द्वारवर्त्यां. २२६. 1) Emended: A R वाल्लावित्तः; G वाल्लाविक्तः. Cf. वेलावित्त· vi. 73, 106; 324. २२९. 1) $A_2$ gloss लालितकाः पशवः. २३२. 1) Thus corr. from $A_1$ उद्भाण्ड° by $A_2$ which adds the gloss हैमङ्; R G read as $A_2$. Cf. उदभाण्डपुरे v. 153.—2) Thus $A_1$; $A_2$ व्यधीयत; G R follow $A_2$.

आज्ञातिक्रमिणः शाहेः हृत्वा कमलुकाभिधाम् । तोरमाणाय स प्रादाद्राज्यं लल्लियसूनवे ॥२३३॥
प्रत्यावृत्तोथ नगरं विवेश विजयोर्जितः । शौर्यभृङ्गारवसती साभिमानः स्वविग्रहे ॥२३४॥
स राजजननीजारः साहंकारो जयार्जनात् । मानक्षतिमधिक्षेपैर्वीराणां व्यधितान्वहम् ॥२३५॥
क्षुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे । तेनावृते संप्रवेशो नाभूदन्यस्य कस्यचित् ॥२३६॥
शनैर्विज्ञातवार्तस्य धनमानापहारकृत् । सोभूदक्षिगसोत्यर्थं राज्ञो गोपालवर्मणः ॥२३७॥
विद्यते यत्र गञ्जेस्मिंस्तत्सर्वं शाहिविग्रहे । गतमित्यब्रवीद्भूपं स कोशगणनोद्यतम् ॥२३८॥
अथ गञ्जाधिपो राजभीतः खार्वोदवेदिनम् । रामदेवाह्वयं बन्धुमभिचारमकारयत् ॥२३९॥
तयाभिचारक्रियया भुक्तभूर्वत्सरद्वयम् । गोपालवर्मनृपतिर्जातदाहो व्यपद्यत ॥२४०॥
व्यक्तीभूतकुकर्मा स राजदण्डभयाकुलः । रामदेवोवधीत्पापः स्वयमेव स्वविग्रहम् ॥२४१॥
रथ्यागृहीतो गोपालवर्मभ्राताथ संकटः । बभूव प्राप्तराज्यः स दशभिर्दिवसैर्व्यसुः ॥२४२॥
अथ वंशक्षये वृत्ते राज्ञः शंकरवर्मणः । प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयम् ॥२४३॥
गोपालपुरगोपालमठगोपालकेशवान् । सा पुरं च स्वनामाङ्कं विदधे धर्मवृद्धये ॥२४४॥
गोपालवर्मणो जाया नन्दानिन्द्यान्वयोद्भवा । शिशुरप्यभवन्नन्दामठकेशवधारिणी ॥२४५॥
अन्तर्वत्न्याः क्षणे तस्मिन्पत्न्या गोपालवर्मणः । जयलक्ष्म्यां बबन्धास्थां श्वश्रूः संतानकाङ्क्षिणी ॥२४६॥
तस्यां विपन्नापत्यायां प्रसवान्तेतिदुःखिता । साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ॥२४७॥
तस्मिन्काले महीपालनिग्रहानुग्रहक्षमम् । तत्र तन्त्रिपदातीनां कृतसंहत्यभूत्कुलम् ॥२४८॥
ततः समाश्रितैकाङ्गा स्वयं संवत्सरद्वयम् । सुगन्धा विदधे राज्यं सा मित्रत्वेन तन्त्रिणाम् ॥२४९॥
योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा । मन्त्राय मन्त्रिसामन्तांस्तन्त्र्येकाङ्गानढौकयत् ॥२५०॥
अवन्तिवर्मवंशान्ते नप्तारं शूरवर्मणः । गग्गायाः स्वकुटुम्बिन्याः संजातं सुखवर्मणा ॥२५१॥
अनुव्रतो मे संबन्धिस्नेहादेवं भवेदिति । राज्ये निर्जितवर्माख्यं कर्तुं तस्या मनोभवत् ॥२५२॥ युग्मम् ॥
तथा तदुक्तं विषयव्यसनित्वेन जागरात् । रात्रौ दिवाशयतया योप्यनुत्थानदूषितः ॥२५३॥
नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता । इत्युदीर्याभवन्भ्रान्तो यावत्केचन मन्त्रिणः ॥२५४॥
संहतैर्भेदनिर्यातैस्तावन्निर्जितवर्मजः । दशवर्षः कृतो राजा पार्थस्तन्त्रिपदातिभिः ॥२५५॥ तिलकम् ॥
ते गञ्जाधिपवाक्यानां सुगन्धोत्पाटनात्कृतम् । प्रायश्चित्तममन्यन्त मानक्षतिविधायिनाम् ॥२५६॥
सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । कृताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ॥२५७॥
शरणं प्रत्यभाङ्क्ष्यो यो यस्तस्याः क्रमागतः । तं तमैक्षिष्ट निर्यान्ती विपक्षैः सह संगतम् ॥२५८॥
वर्षे एकाननवते संभूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरस्थिताम् ॥२५९॥

२३३. 1) Thus corr. by later hand from $A_1$ °सम्.—2) Thus $A_1$; $A_2$ तोमराणाय. २३५. 1) Thus $A_2$; $A_1$ °ज्ञननीसङ्गात्साभिमानी.—2) Thus corr. by $A_2$ from $A_1$ मन:°. २३७. 1) Thus corr. by $A_2$ from $A_1$ °मालाप°. २३९. 1) $A_2$ gloss प्रभाकरः. २४३. 1) $A_2$ gloss गोपालवर्मसकुद्बोर्माता सुगन्धा.—2) Thus corr. by $A_2$ from $A_1$ पुरम्. २४४. 1) $A_2$ gloss गुरीपुरम्. २४५. 1) $A_2$ gloss नन्दीमठं. २४८. 1) Thus corr. by $A_2$ from $A_1$ विग्रह°.—2) Thus $A_2$; $A_1$ तत्र. २४९. 1) Thus emended; A G R समित्र°.—2) $A_2$ *v. l.* मन्त्रिणाम्; struck out. २५०. 1) Thus $A_2$; $A_1$ °स्तावत्मखौ°. २५४. 1) $A_2$ gloss निर्जितवर्मा. २५६. 1) $A_2$ gloss कोशरक्षाः. २५७. 1) Thus corr. by later hand from $A_1$ राज्य°.—2) Thus $A_2$; $A_1$ हता°. २५९. 1) Thus $A_1$; $A_2$ एकोन°.—2) $A_2$ gloss वराहमूले.

तामापतन्तीमाकर्ण्य पार्थानुचरका भयात् । चैत्रान्ते तन्त्रिणः सर्वे निर्ययुः समरोन्मुखाः ||२६०||
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान्युद्धसंपातान्बबन्धुस्तां पलायिताम् ||२६१||
निष्पालकविहारान्तस्तैर्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ||२६२||
अस्मिन्धनजनक्षैण्यनिमित्तं मण्डलोत्तमे । सर्वतोदिक्कमुत्तस्थावथानर्थपरंपरा ||२६३||
जनकः पालको भूत्वा पङ्गुबालस्य भूपतेः । सामात्योपीडयल्लोकमुत्कोचग्रहतत्परः ||२६४||
भूभुजो नामकायस्था हत्वान्योन्यविपाटनम् । दत्ताधिकाधिकोत्कोचा विदधुस्तान्त्रिसेवया ||२६५||
बप्राजैः कन्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां हुण्डिकादानाद्भुजां जीविकाभवत् ||२६६||
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ||२६७||
तदात्मजाः क्षणे तस्मिन्गहनद्रोहचक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासैर्धनार्जनम् ||२६८|| युग्मम् ||
सार्धं सुगन्धादित्येन गूढं शंकरवर्धनः । तेषां ज्येष्ठो बद्धसख्यो मुमोष नृपमन्दिरम् ||२६९||
क्षीणप्रजे क्षणे तस्मिन्क्षारपात इव क्षते । उदीर्पः प्लाविताशेषशरच्छालिरजृम्भत ||२७०||
खारी सहस्रक्रेयायां दुर्लभे भोजनेभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ||२७१||
शवैश्चिरमविज्ञाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ||२७२||
विश्वतोस्थिमये जाते नैविड्यात्क्षितिमण्डले । सर्वभूतभयादायि श्मशानैक्यमजायत ||२७३||
महार्घधान्यसंभारविक्रयप्राप्तसंपदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तान्त्रिणश्च धनाढ्यताम् ||२७४||
आधेयः क्ष्माभुजः सोभून्मन्त्री यस्तादृशीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां हुण्डिकाधनम् ||२७५||
अटव्यां वृष्टिसंपाते वातवर्षैरुपद्रुतम् । बहिः सर्वं जनं पश्यन्कश्चित्प्राप्तोष्णमन्दिरः ||२७६||
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषश्चिरम् । राजधानीस्थितः पङ्गुः स्वसुखं बहमन्यत ||२७७||युग्मम्||
तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन्क्षणे नीताः संक्षयं राजराक्षसैः ||२७८||
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासंपातसंभूता बुद्बुदा इव दुर्दिने ||२७९||
पार्थः पितरमुत्पाद्य कदाचित्प्राभवत्स्वयम् । कदाचित्स तमुत्पाद्य तान्त्रिचक्रिकयाप्यभूत् ||२८०||
अक्षीणयत्पङ्गुवधूवर्गामण्डलं बुधा । सुगन्धादित्यंबीजाभो व्यवायविधिसेवया ||२८१||
राज्यां बप्पटदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास कण्डूतिं सापत्न्यार्येवणां घनैः ||२८२||
भगिनीभगसौभाग्यबद्धराज्याः स्वयं ददुः । यां पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ||२८३||
सुगन्धादित्यमौत्सुक्यस्थास्तापि देवी मृगावती । स्वयं संबुभुजेभ्यर्थ्य कान्ता कामितकामिनी ||२८४||
पर्यायेणाभवद्भृत्यः स तयोर्भोगवृद्धये । दरिद्रयोषितोरेकं भुक्तिपात्रमिवान्वहम् ||२८५||

२६४. ¹) A₂ gloss निर्जितवर्मा. २६६. ¹) Thus A₁; altered by later hand to बप्राद्यैः. २६७. ¹) A₂ gloss पांद्रेठन् इति प्रसिद्धे ग्रामे.—²) A₄ gloss पङ्गुश्वशुरेण. २६८. ¹) A₂ gloss निर्जितवर्मजाः तदात्मजाः चक्रवर्मा शूरवर्मा । शम्भुवर्धनः शंकरवर्धनः मेरुवर्धनपुत्राः २६९. ¹) A₂ gloss मन्त्रिणा.—²) A₄ सुगन्धादित्येन सह. २७०. ¹) Thus corr. by later hand from A₁ उदपि; A₄ gloss दयोपी (Kaśmīrī). २७१. ¹) A₄ gives the full date *Saptarshi* ३९९३. २७२. ¹) Thus A₁; altered by later hand to दुर्लक्ष्य°. २७३. ¹) जाते supplied by A₃ in space left by A₁. २७४. ¹) A₃ महार्घ°. २७५. ¹) Thus A₁, A₃ आधेयः. २७६. ¹) Thus corr. by A₃ from A₁ वृष्टि°. २८१. ¹) A₂ gloss मन्त्री.—²) A₂ gloss स्वचारः मैथुनम्. २८२. ¹) A₄ gloss चक्रवर्ममातुः. २८५. ¹) A₄ gloss तयोर्बप्पटदेवीमृगावत्योः पङ्गुपत्न्योः.

पुत्रयो राज्यलाभाय स्पर्धयाभ्यां स्वमन्त्रिणे । दत्ता निधुवनभ्रान्ता धनदानै[1]ः सदक्षिणा ॥२८६॥
अथ पार्थं समुत्पाद्य तत्पिता पङ्गुराश्रितः । तन्त्रिभिः सप्तनवते वर्षे पैतेभिषेचितः ॥२८७॥
माघेष्टानवते वर्षे सोभिषिच्य शिशुं सुतम् । चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत ॥२८८॥
पैतृके वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः । एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः ॥२८९॥
मातुर्बप्पटदेव्याः स कंचित्कालं शिशुर्नृपः । मातामह्याः क्षिल्लिकायाः[1] पाल्यस्त्वासीत्समा दश ॥२९०॥
बाल्यादव्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः । निर्दोषमासीद्दण्डस्थफणिलालनसंनिभम् ॥२९१॥
जातः पङ्गोर्मृगावत्यां[1] नवमेब्देथ तन्त्रिभि[2]ः । चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः ॥२९२॥
निःकोशा मातुलामात्याः प्रययुः स्वार्थतत्पराः । अदत्त्वा तन्त्रिणां देयं तस्योत्पाटनहेतुताम् ॥२९३॥
अदुर्वृत्तोपि स क्ष्माभृद्विना भूरिधनार्पणम् । गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः ॥२९४॥
वर्षे गते समुत्पाट्य दुष्टोत्पत्तितया नृपम् । वत्सरार्धं पुनः पार्थं व्यधुस्तन्त्रिपदातयः ॥२९५॥
अभूत्साम्बवती वेश्या साम्बे[1]श्वरविधायिनी । पार्थप्रिया तन्त्रिचक्रसंपदे ज्ञातचक्रिका ॥२९६॥
कालापेक्षी चक्रवर्मा ततोप्यैच्छदनं बहु । एकादशाब्दस्याषाढे कृतो भूयोपि तन्त्रिभिः ॥२९७॥
पार्थादीन्यै[1]ः समुत्पाद्य भुक्तं चक्रिकया पुरा । तैस्तैः स्थानैश्च ये तेभ्यो जीवनान्युपलेभिरे ॥२९८॥
पिता[1] भ्राता[2] च वैरस्थं राज्यादुत्पाटितोभवत् । संबन्धिभ्योपि यैर्लुब्धैः कन्यां[3] दत्त्वेतरेतरम् ॥२९९॥
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः । मेरुवर्धनपुत्राणामधिकारसमर्पणम् ॥३००॥ तिलकम् ॥
कृतोक्षपटलाधीशस्तेन शंकरवर्धनः । गृहकृत्येप्यसत्कृत्यो दाम्भिकः शंभुवर्धनः ॥३०१॥
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणाम् । अदत्तदुण्डिकादेयः पलायिष्ट भयाकुलः ॥३०२॥
स्थिते मडवराज्यान्तस्तस्मिञ्शंकरवर्धनः । राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छंभुवर्धनम् ॥३०३॥
आवर्जितैः स निखिलैरधिकोत्कोचचर्चया । वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत् ॥३०४॥
तीर्थस्थितः स्वकुलजांस्तिमिरन्ति भुङ्क्ते मौनी बकस्तमिमुपेत्य वनान्तवासी ।
व्याधो निहन्ति तु बकं प्रभवन्ति ते ते पाशाण्युपर्युपरि वञ्चनचञ्चुतायाः[1] ॥३०५॥
भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढक्कवासिनः । एकदा डामराग्र्यस्य संग्रामस्याविशद्गृहम् ॥३०६॥
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः । प्रणम्य ग्राहयामास संभ्रमान्निजमासनम् ॥३०७॥
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहाय्यकार्थिनम् । तं विपत्पेशलं भद्रो विचिन्त्योवाच डामरः ॥३०८॥
तन्त्रिणां वा तृणानां वा राजन्का गणना रणे । त्वत्सेवनार्थे सामर्थ्यं कस्मिंश्च मम कर्मणि ॥३०९॥
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि । विस्मरन्त्युपकारं हि कृतकार्या महीभुजः ॥३१०॥
ऊर्ध्वारोहे च आलम्बहेतुर्भूभृच्छिनत्ति तम् । कुठारिकस्तरुस्कन्धमिवाधोगमनोन्मुखः ॥३११॥
धीधैर्यादिप्रकर्षेण येनोपक्रियते नृपः । प्राप्तोदयः स तेनैव शङ्क्यं वेत्त्युपकारिणम् ॥३१२॥

---

२८६. [1]) $A_2$ reads धनधान्यैः. २९०. [1]) Thus corr. by later hand from $A_1$ क्षि°. २९२. [1]) $A_4$ gloss मेरुवर्धनपुत्र्यां — [2]) Thus $A_2$; $A_1$ तन्त्रिभिः. २९६. [1]) $A_2$ gloss साम्बीरणपार्श्वे. २९८. [1]) $A_4$ gloss अथ सर्वेषु चक्रवर्मणा मेरुवर्धनपुत्रपरामर्शः.— [2]) $A_4$ पार्थादिभ्यः. २९९. [1]) $A_4$ gloss पङ्गुः.—[2]) $A_4$ gloss पार्थः शूरवर्मा वा.—[3]) $A_4$ gloss चक्रवर्मणः.—[4]) $A_4$ gloss मृगावतीं.— [5]) $A_4$ gloss पङ्गुने. ३०५. [1]) Emended; A चुञ्चु°. ३१०. ) Thus corr. by $A_2$ from $A_1$ °स्मानेव.

अस्मिन्स्थिते विपदभूदिति संचिन्त्य वर्ज्यते । मूढैः परिवृढैराप्तसेवको मङ्गलेच्छुभिः ॥३१३॥
संपद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः । मध्ये प्रमादस्खलितमुत्पन्नं हृदि कुर्वते ॥३१४॥
आमर्षातिरिपुग्रासक्षुद्रादीन्दृष्टवैकृतान् । लब्धोदया ह्रीभयेन क्ष्मापा घ्नन्त्यनुयायिनः ॥३१५॥
राज्ञः सतोपि नाश्वासो वस्त्विभस्येव कर्णयोः । अविशुद्धप्रकृतयो ध्वनन्ति मधुपा इव ॥३१६॥
दिवसे संनिधानेन पिशुनप्रेरणा प्रभोः । ईर्ष्यालुना स्वैरिणीव रक्षितुं यदि पार्यते ॥३१७॥
राजवज्जन्मुपाध्यायो देवी यच्छिक्षयेद्रहः । तत्र प्रजागरः कर्तुमसर्वज्ञैर्न शक्यते ॥३१८॥
कथंचिदपि हृदये कुशलैर्विनिवेशिता । शिक्षा गोरखरेणेव राज्ञा विस्मार्यते निशि ॥३१९॥
न के लोभं समुत्पाद्य जिह्वया स्निग्धदीर्घया । पिपीलका इव ग्रस्ताः क्ष्मापालैः शल्यकैरिव ॥३२०॥
जानाति हन्तुं हन्तव्यमासन्नं न तु दूरगम् । एको बकः परं सत्यं द्रोहवृत्तिर्महीपतिः ॥३२१॥
न नाम कण्टकाकीर्णः कौटिल्यं लक्ष्यतां नयेत् । कालापेक्षी क्षितिपतिः शरीरमिव जाहकः ॥३२२॥
नमन्नपि हरिर्हन्त्याश्लिष्यन्नपि पन्नगः । विहसन्नपि वेतालः स्तुवन्नपि महीपतिः ॥३२३॥
अद्रोहवृत्त्या तस्मात्त्वं द्रक्ष्यस्यस्मान्सदा यदि । ससैन्यस्ते तदेषोहं प्रातरेव पुरःसरः ॥३२४॥
तदाकर्ण्याब्रवीद्राजा लज्जास्मितसिताधरः । स्वात्मेव यूयं संरक्ष्या मम पूर्वोपकारिणः॥३२५॥
ततो निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि । कोशं चक्रतुरन्योन्यं सखड्गौ नृपडामरौ ॥३२६॥
अथ संघटितासंख्यचण्डडामरमण्डलः । चक्रवर्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥३२७॥
तस्मिन्क्षणे पुरस्कृत्य योद्धुं शंकरवर्धनम् । विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः ॥३२८॥
कालानुवृत्तिप्रच्छन्नं तेषां संभावनोज्झितम् । स तत्वरे पुरस्कर्तुं चक्रवर्मा स्वविक्रमम् ॥३२९॥
अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः । जघान प्रेरितहयः पूर्वं शंकरवर्धनम् ॥३३०॥
हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी । प्रययौ पवनाघातप्रेरिता नौरिवार्णवे ॥३३१॥
पृष्ठानुसरणोद्युक्तो नृपस्तेषामपाहरत् । गतिं तुरगवेगेन शिरःश्रेणिं तथासिना ॥३३२॥
भ्रमतः समरे बभुर्वीरपञ्चालच्छटाः । चक्रवर्ममृगेन्द्रस्य सटापटलविभ्रमम् ॥३३३॥
किमन्यत्पञ्चषाण्यासन्सहस्राणि रणाङ्गने । पतितानि क्षणादेव हतानां तत्र तन्त्रिणाम् ॥३३४॥
तन्त्रिणो रणसंरम्भपरिश्रान्ताः क्षमातले । गृध्रपक्षकृतच्छाये शायिताश्चक्रवर्मणा ॥३३५॥
विशुद्धवंश्यैर्गुणिभिर्निहतैः संश्रितैः समम् । अभूद्यद्वीरशय्यायां शूरः शंकरवर्धनः ॥३३६॥
उदयं संहता एव संहता एव च क्षयम् । प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन् ॥३३७॥
माननीयानधृष्यांश्च महावंश्यान्महीपतीन् । अहीनिव खिलीकृत्य भिक्षयन्तः क्षणे क्षणे ॥३३८॥

---

३१६. ¹) A₂ note न विशुद्धा प्रकृतिर्येषां ते । अविशुद्धप्रकृतयः सूचकाः यस्य राज्ञः कर्णयोर्विषये ध्वनन्ति । तस्य सतोपि साधोरपि स्वयं नाश्वासः । इभस्येव । यथा हस्तिनः कर्णयोर्मलिनाः मधुपा ध्वनन्ति ॥—²) A₂ gloss कुटिलाः. ३१९. ¹) A₂ गोपख°. ३२०. ¹) A₂ भोगं. ३२१. ¹) Thus corr. by later hand from A₁ परं. ३२२. ¹) Thus A₁ and R, misread in G and Edd. आर्थकः; A₂ gloss आर्थकी सूकमार्जारसदृशः कण्टकाङ्ग इति विश्वः. ३२६. ¹) A₂ gloss दिव्यमित्यर्थः । उभौ मैत्रीसम्बन्धार्थे रक्ताक्ते मेषचर्मणि (gloss अक्तायां) परस्परं पादप्रक्षेपं कुरुत इति शपथसंप्रदायः दिव्ये च कोशः पुष्पादिकुड्मलासिपिधानयोरिति मङ्खः. ३३१. ¹) A₂ विशीर्णा. ३३२. ¹) Thus corr. by later hand from A₁ °सारणो°. ३३३. ¹) A₂ gloss अभ्रारवन्.—²) A₂ gloss शिरस्त्राणबन्धनार्थं दशो बौ वीरपट्टः डोपट इति प्रसिद्धः तस्य अञ्चलच्छटाः फिते इति प्रसिद्धाः. ३३६. ¹) Thus A₁; altered by later hand to °हताः.

अनवस्कीदृशा श्रीर्वा भावन्तो जीविकाकृते । ग्रामादितुण्डिकाः क्रूरा इव ये गर्भवृत्तयः ॥३३९॥
ते तन्त्रिणः क्षणाद्बद्धा गूढवैरविधायिना । विमाननाविविग्नेन चक्रवर्ममहाहिना ॥३४०॥ तिलकम् ॥
अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणाम् । वीरः संघटनां बाढमकरोच्छंभुवर्धनः ॥३४१॥
तावन्मिलितसामन्तसचिवैकाङ्गलालितः । सैन्यैर्नानापथायातैर्नदद्भिर्व्याप्तदिक्पथः ॥३४२॥
बलान्मध्येऽश्ववाराणां नृत्यतेवाश्ववाजिना । वल्गाकृष्टोद्धरंहस्यं शिरस्कं वामपाणिना ॥३४३॥
सव्येतरहस्ताग्रवेष्टनोत्क्रासनस्पृशः । खड्गस्य विम्बितार्कस्य भाभिर्द्योतितकुण्डलः ॥३४४॥
कवचोत्क्षेपसंरम्भकण्ठायासेन ताम्यता । बद्धभ्रुकुटिबन्धेन वदनेन भयावहः ॥३४५॥
तर्जयन्कृतहुंकारांल्लुण्टकांल्लुण्ठितापणान् । शिरोक्षिसंज्ञया भस्तवास्तव्यकृतसान्त्वनः ॥३४६॥
भेरीरवैः श्रुतिं भिन्दन्पौराशीर्घोषरोधिभिः । संग्रामजयशोभाकृच्चक्रवर्माविशत्पुरम् ॥३४७॥ कुलकम् ॥
तस्मिन्सिंहासनं प्राज्यमाक्रामति जयोर्जिते । बद्ध्वा कुतश्चिदानिन्ये भूभटः शंभुवर्धनम् ॥३४८॥
राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेक्षणम् । भक्तिं प्रदर्शयन्पापचण्डाल इव सोऽवधीत् ॥३४९॥
उज्झतां धर्ममर्यादां भृत्यानां जनकोपमान् । हन्तुं नरेन्द्रान्द्रोहेण प्रारंभः शंभुवर्धनः ॥३५०॥
प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् । अजायत धृतोत्सेको नृशंसविषमक्रियः ॥३५१॥
स्वविक्रमकथास्तोत्ररोमन्थप्रियताहतः । सोऽभवद्विटबन्द्यादिचाटुकारविधेयधीः ॥३५२॥
आत्मानं दैवतमिव स्तुतिमोहितचेतसः । जानतः प्राभवं तस्य विवेकविगुणाः क्रियाः ॥३५३॥
तस्मिन्प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः । वैदेशिकोऽभवद्राज्ञा वितीर्णावसरो बहिः ॥३५४॥
प्राप्तान्सचिवसामन्तान्निवेश्य स्वस्वतो यथाक्रमम् । प्रतीहारा नृपस्यापमनयन्त विविक्तताम् ॥३५५॥
विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला । शेषशय्येव मणिभिः कृतालोका फणोद्भवैः ॥३५६॥
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः । प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणम् ॥३५७॥
जातगीतदिदृक्षाणां गवाक्षावलयो बभुः । आसवामोदिभिर्वक्त्रैरवरोधमृगीदृशाम् ॥३५८॥
हारकङ्कणकेयूरपारिहार्यादिशोभिना । स्ववृन्देनानुयातोऽथ प्राविशड्डोम्बगायनः ॥३५९॥
हंसी नागलता चास्य सुते ललितलोचने । चक्रतुः कौतुकोद्ग्रीवां सभां चित्रार्पितामिव ॥३६०॥
तयोर्विलासवलितैर्वलितापाङ्गविभ्रमैः । द्वितीयपुष्पप्रकरो व्यकीर्यत सभान्तरे ॥३६१॥
गायनैर्जय जीवेति कृतकोलाहलैरभूत् । सदः सशब्दं कुर्वद्भिस्तत्तन्नृपगुणग्रहम् ॥३६२॥
भुक्तोत्तरोचितोदात्तपञ्चमस्थानधारिणः । वंशी रागविशेषस्य दत्ते स्थाने ततः शनैः ॥३६३॥
अविक्रियशिरःकम्पभ्रूनेत्रभ्रमशोभितः । अभिन्न इव गायन्त्योर्गीतिध्वनिरजृम्भत ॥३६४॥
अथ ताम्बूलरोमन्थत्यागनिश्चलमूर्तिना । जातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना ॥३६५॥
गायन्त्यौ भावमालम्ब्य तस्य स्निग्धमगायताम् । अधिकोद्दीपिताभिख्यं विलासस्मितविभ्रमैः ॥३६६॥

३४४. 1) Thus $A_1$; $A_2$ स वामेतर°. ३४५. 1) $A_2$ संरब्ध°.—2) $A_2$ बद्धभ्रु°. ३४६. 1) Thus corr. by $A_2$ from $A_1$ °लुण्टकां°. ३४८. 1) Thus $A_2$; $A_1$ °क्राम्यति. ३५०. 1) $A_2$ °वर्धनात्. ३६२. 1) Thus G Edd.; A °स्तस्तनृप°. ३६३. 1) $A_2$ ताने. ३६४. 1) Thus corr. by later hand from $A_1$ गायन्त्यौर्गी°. ३६६. 1) Thus corr. by later hand from $A_1$ गायन्त्यौ.—2) $A_2$ gloss आश्रयं.

राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरम् । दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ॥३६७॥
नृपं हारितचित्तं तं विज्ञायैकः प्रियो विटः । ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ॥३६८॥
देव गीतमिदं वार्तं संप्राप्यैते मनोरमे । कर्पूरपारीपतितं मैरेयमिव हारिताम् ॥३६९॥
370 गायन्त्योर्मार्जितामेतां रागाद्यन्तचतुष्किकाम् । अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ॥३७०॥
करन्यस्तकपोलान्तमुग्रायन्त्याविमे भुवम् । कटाक्षैः कुरुतो व्योम्नि वैमानिकविमोहनम् ॥३७१॥
जानत्या स्वाभर्यां चर्चामनयोरेकयानयोः । असूयास्मितगर्भोऽयं कटाक्षः पश्य पातितः ॥३७२॥
गायन्त्येकानतमुखी कर्णव्यालोलकुण्डला । विपरीतरतोद्रेककृतारम्भेव शोभते ॥३७३॥
सफलं तस्य तारुण्यमीदृश्यो निर्जने स्त्रियः । औत्सुक्याहितरहे यस्य गायन्त्येवंविधैः स्वरैः ॥३७४॥
375 उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः । एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते ॥३७५॥
नेत्रस्य रूपं श्रोत्रस्य ध्वनिं संस्पृशतो न चेत् । तदङ्गस्यान्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः ॥३७६॥
अभिलाषाङ्कुरः सिक्त इव तैर्विटभाषितैः । राज्ञः स्वभावलोलस्य शतशाखत्वमाययौ ॥३७७॥
ये[1] विस्तारितवर्णसंकररुचः संदर्श्य गोत्रान्तकृद्व्रातावस्थितिचापलक्रममलं पार्श्वे ध्वनन्त्युद्धताः ।
नीयन्ते विपथावपातपरतां लब्धोदयैस्तैः क्षणात्सिंहा वारिधरैरमी च रभसाद्भूपालसिंहा विटैः ॥३७८॥
वस्तु क्षणादनुपपन्नमुपपत्तियुक्तं कृत्वा जडान्यदि विमोहयितुं समर्थाः ।
न स्युर्विटा अथ कुतर्कपथस्थिताश्च नित्योद्यतेषु निरयेषु मृगाश्चरेयुः ॥३७९॥
380 संतोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलम् । अमार्गत्यागराधेयः शुद्धान्तमनयन्नृपः ॥३८०॥
क्रान्तोऽस्याः क्षितिवल्लभोऽयमभिधेत्युर्वीपतेरेकतो[2] भूतेसार्वतिमन्दताण्डवयुतं डोम्बः स्वनामान्यतः ।
मध्ये यत्किंमपीति गीतरचना काव्यं यदेतद्विदो[7] लक्ष्मीं[8] क्षपयन्ति ताम्भिषगबुधान्कीर्त्यर्थिनः पार्थिवान् ॥३८१॥
वेश्यानुरागस्य महेन्द्रचापधाम्नो हरिद्रारसरञ्जनस्य । उपाङ्गगीतस्य च हारिणोऽपि सौन्दर्यमस्थैर्यहतप्रकर्षम् ॥३८२॥
दर्शनाभ्याससंवृद्धचक्षूरागः क्षमापतिः । विना श्वपाककन्ये ते न पुनः प्राप निर्वृतिम् ॥३८३॥
गायन्त्यौ शयनोपान्ते धार्मैर्विहितचुम्बनम् । नृपं रतिक्लान्ताभिः तं हठात्ते प्रचक्रतुः ॥३८४॥
385 समागमेन नव्येन ययोर्वैयात्यशोभिना । चक्रे क्षपितसामर्थ्यः स लज्जोद्धमाक्षमः ॥३८५॥
रत्यन्तस्खलभोगैर्निःसृतैः स्वेदबिन्दुभिः । भाग्योष्मसंक्षयजडं वपुस्तस्य व्यधीयत ॥३८६॥
रागान्धेन कृता हंसी महादेवी महीभुजा । भेजे राजवधूमध्ये वालव्यजनवीजनम् ॥३८७॥

३६८. 1) A₁ तत्र  ३६९. 1) A₂ gloss हरति मन इति हारी तस्य भावः तया तां आतमिति सम्बन्धः.  ३७०. 1) Thus corr. by A₂ from A₁ गायन्त्यौ.—2) Thus A₂; A₁ क्रमाद°.—3) A₂ gloss इन्द्रपाङ्क्तिचतुष्टयं.  ३७६. 1) A₂ gloss दुष्कृतं.—2) A₂ gloss एवंविधैरवस्थैः.  ३७८. 1) A₂ gloss वारिधराः सिंहाश्च.—2) A₂ gloss वर्णाः नीलपीताद्याः ब्राह्मणाद्याश्च.—3) A₂ gloss गोत्रान्तकृद्वि इन्द्रे यस्य अवस्थितिर्येन स चासौ चापः धनुः इन्द्रचापः तस्य लक्षणं । गोत्रान्तकृद्भिः कुलक्षयकारिभिः पापिभिः यस्य स्थितिर्यस्य । तत्र चापलं प्रदर्श्य ध्वनन्ति इति च वर्ण विविधं इति चापलविशेषणं.—4) Thus corr. by later hand from नीयन्ते.—5) A₂ कृपया°.—6) A₂ तरसा भू°.  ३७९. 1) A₂ gloss नित्याभ्युदयेषु.  ३८०. 1) A₂ gloss अपायस्यागे कर्णः.  ३८१. 1) A₂ gloss अयं क्षितिवल्लभः राजा अस्याः कस्याश्चित्कान्तः अस्यां विषयं अयं राजा लग्नः इत्यभिधा कथितमेकतः.—2) A₂ gloss डोम्बेनोच्चारिता उर्वीपतेः अभिधा नामधेयं एकतः इत्यस्ति इति कथामिति कान्तोऽस्या इति.—3) A₂ gloss उर्वीपतिः.—4) A₂ डाम्बस्य नाम°.—5) A₂ मध्येऽस्त्विकम°.—6) A₂ gloss यत्किमपीति । यत्किंचिद्विशालकालमात्रं लौकिकं गीतं । तस्य रचना एव काव्यं.—7) A₂ gloss एतत् गीतिरचनाकाव्यं विदन्ति एतद्विदः.—8) A₂ gloss येषां पार्थिवानां लक्ष्मीः यल्लक्ष्मीः तां.—9) A₂ gloss क्षपयन्ति.

तस्या यैर्भुक्तमुच्छिष्टं ते यथा चक्रवर्मणः । नृपान्तराणामन्येषामप्यभूवन्सभासदः ॥३८८॥
मन्त्रिणामक्षपटलं गञ्जमुख्याधिकारदा । प्रवृद्धिहेतुतां प्राप डोम्बसेवनपातिका ॥३८९॥
गौरवोत्सविघतां केचिच्छ्वपाका न व्यधुः स्वयम् । केचित्तत्कुर्वतीतिज्ञा राजकार्याणि मन्त्रिवत् ॥३९०॥
मन्त्रिणस्तस्करा राज्ञी श्वपाकी श्वपचाः प्रियाः । किं न लोकोत्तरमभून्नृपतेश्चक्रवर्मणः ॥३९१॥
ऋतुस्नातार्तवाङ्कानि श्वपाकी स्वांशुकान्यदात् । तदाच्छादनतृष्णेच्छा मन्त्रिणः प्राविशन्सभाम् ॥३९२॥
केचित्क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणम् । यैर्नाशि श्वपचोच्छिष्टं तेऽभूवन्सोमपैः समाः ॥३९३॥
मण्डलेऽस्मिन्प्रमाथोथा न देवा व्यवसन्ध्रुवम् । तद्देश्मानि तदा नो चेच्छ्वपाकी प्राविशत्कथम् ॥३९४॥
तां रणस्वामिनं द्रष्टुं तिलद्वादश्यहे गताम् । सामन्तेभ्यः साभिमाना नान्वयुर्डामराः परम् ॥३९५॥
राजकौटुम्ब्यदृप्तानां डोम्बानां निर्गता मुखात् । राजाभिधाज्ञा दुर्लङ्घ्या न केनाप्युदलङ्घ्यत ॥३९६॥
राज्ञा प्रदत्ते रङ्गाय हेलुंग्राममथादरात् । लिलेख पट्टोपाध्यायो न यदा शासनपट्टकम् ॥३९७॥
तदाक्षपटलं गत्वा रङ्गः कोपात्समब्रवीत् । रङ्गस्य हेलु दिण्णेति दासीसुत न लिख्यते ॥३९८॥
लिलेख सोऽथ संत्रासाद्रङ्गभ्रूभङ्गतर्जितः । को न राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः ॥३९९॥
अन्त्यागमनपापस्य पापः पृच्छन्स निष्कृतिम् । विटैर्हास्यावहान्येव प्रायश्चित्तानि कारितः ॥४००॥
हिमेनैव हिमं शाम्येदुष्णेनैव तु दुष्कृतम् । सोऽनुशिष्टो विटैरेवं दधत्यामरतारताम् ॥४०१॥
पवित्रस्पर्शतोऽस्पृश्यास्पर्शपापं जिहीर्षुणा । तेनाभुज्यत विप्रस्य कोपिन्मासोपवासिनः ॥४०२॥
ततोऽपि पापिनोऽभूवन्केऽपि तस्मिन्क्षणे द्विजाः । तस्मादप्यग्रहारान्ये जगृहुर्गृहभोगिनः ॥४०३॥
चक्रे चक्रमठं सोऽपि पापः पाशुपताश्रयम् । तस्मिन्हतेऽर्धनिष्पन्नं तद्भूर्यमवोऽजयत् ॥४०४॥
पूर्वोपकारान्विस्मृत्य डामराश्च निराशसः । नृपतिः श्वपचाकामी विश्वस्तान्डामरानवधीत् ॥४०५॥
हन्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः । तस्थुस्तस्यान्तिके द्रोहच्छिद्रानेहःप्रतीक्षिणः ॥४०६॥
श्वपाकीशयनावासात्सावस्करमन्दिरे । शौचस्थितं तं निःशस्त्रं ते रात्रौ प्रापुरेकदा ॥४०७॥
अथ तैः प्राससमयैरकस्मात्तस्य सर्वतः । क्षिप्रं न्यपात्यताशेषशातशस्त्रपरंपरा ॥४०८॥
कुम्भस्तटाद्रूद्रे भ्रष्ट इव निद्रालसेक्षणः । प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवारवान् ॥४०९॥
निःशस्त्रः शस्त्रमन्विष्यन्क्षरत्क्षतजनिर्झरः । अनुद्रुतोऽरिभिर्धावञ्छ्वपाक्यावेश्म विवेश तत् ॥४१०॥
अमाम्रहेति क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकम् । तत्कुचोरसङ्गलग्नाङ्गं जघ्नुस्तेऽनुप्रविश्य तम् ॥४११॥
स्वैरेव प्रेरिता दारैस्ते तस्य नृपतेः किल । मुमूर्षोर्जानुनी स्वैरं शिलया समचूर्णयन् ॥४१२॥
षडोदशाब्दे ज्यैष्ठस्य शुक्लाष्टम्यां क्षपाक्षणे । श्वपाकभोग्यः स चैवावस्करे तस्करैर्हतः ॥४१३॥
उन्मत्तावन्तिनामाथ पार्थसूनुर्दुराशयः । अभ्यषिच्यत वैधेयैः सचिवैः शर्वटादिभिः ॥४१४॥
श्वपाकीकामुके पापे निहते निशि तस्करैः । प्रजानां पाप्मना सोऽभूत्पापात्पापतरो नृपः ॥४१५॥

३८९. 1) $A_2$ gloss गणनार्थं गणनाधिपतिस्थानस्य अक्षपटलस्य आहते इति भाषया नाम सिद्धेव इति केचित्. ३९२. 1) $A_2$ gloss रक्ताः. ३९६. 1) $A_2$ gloss केवलं. ३९७. 1) Thus corr. by later hand here and in following verse from $A_1$ हलु°. 2) $A_2$ gloss रङ्गस्य हेलुः दत्ता. ३९९. 1) Thus corr. by $A_2$ from $A_1$ के.—2) Thus corr. by $A_2$ from $A_1$ भवनी°. ४०१. 1) $A_2$ दधत्यामरतारतामित्यन्याहार्यो. ४०४. 1) Thus corr. by $A_2$ from $A_1$ °र्वेदयो°; $A_2$ gloss मठं. ४१२. 1) Thus A; G R Edd. शिलायां. ४१३. 1) Thus G Edd.; A कोद्दस्य.

स्थगिता तत्कथापापस्पर्शभीत्या सरस्वती । कथंचिच्चक्षुरभ्येव सेयं प्रस्ताव्यते मया ॥४१६॥
आसीत्पितृकुलं तस्य मत्स्यं दुर्नृपरक्षसः । और्वाभिधस्य हव्याशविशेषस्येव जीवनम् ॥४१७॥
तस्यासंष्टकराघातसठाकारकरोटिकाः । प्राणस्कन्दादिवाचाटाः सभायां मुख्यमन्त्रिणः ॥४१८॥
तैर्मात्याचारणत्वेन निर्लज्जास्तमरञ्जयन् । कालान्तरेण यैरेव भूमिपालैर्भविष्यते ॥४१९॥
पर्वगुप्तोभवत्तस्य सर्वेभ्योप्यधिकं प्रियः । आस्थाने नर्तनं कुर्वन्नपाकृतकटीपटः ॥४२०॥
आ सन्धिविग्रहाद्दृष्ट्वा क्रीडमायान्महीपतीन् । पर्वगुप्तः सर्वदाभूद्राज्यावाप्तिकृतोद्यमः ॥४२१॥
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः । पीतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः ॥४२२॥
भूभटः शर्वटश्चौजः कुमुदः सोमृताकरः । पर्वगुप्तेन संबन्धं चक्रिरे कोशपायिनः ॥४२३॥
गवाक्षासरसि ग्रामश्रीजलौघागलद्विजः । संग्रामडामरगृहे यो रक्षः ख्यातपौरुषः ॥४२४॥
पदातिमात्रो भूपेन दृष्टशौर्यः स संयुगे । महोदरो महाकायः प्रापितो मुख्यमन्त्रिताम् ॥४२५॥
यादृशी तेन ददृशे देवी श्रीः सरसोन्तरे । तादृक्प्रकंजयादेवीत्यभिधानेन निर्ममे ॥४२६॥
राज्यं निष्कण्टकं कृत्वा धूर्तेनापजिहीर्षुणा । प्रेरितः पर्वगुप्तेन भूभृच्चक्रे कुलक्षयम् ॥४२७॥
तेन लुण्ठितसर्वस्वः पार्थस्तस्थौ कलत्रवान् । श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः ॥४२८॥
धिम्भुश्शंकरवर्मादीन्भ्रातॄन्कारानिरोध्य सः । तत्र स्थिताननशनैस्तत्कालान्तमकारयत् ॥४२९॥
उद्यतः पितरं हन्तुं मन्त्रिणोनुमतप्रदान् । बद्धपट्टान्व्यधाद्बद्धनिगडानितरान्पुनः ॥४३०॥
एकदा मन्त्रिसामन्ततन्त्रिकायस्थसैनिकाः । पार्थं तदाश्रमासाद्य निशायां पर्यवेष्टयन् ॥४३१॥
म्लानक्षीणाम्बरां पत्नीं रुद्धद्वारां निपात्य ते । आलिङ्ग्यमानो क्रन्दद्भिस्तर्णकैरिव दारकैः ॥४३२॥
केशानालम्ब्य कर्षन्तः शर्करोत्पाटिताङ्गकम् । विपन्नं गोकुलाद्धान्तमिव निर्हृत्य तं गृहात् ॥४३३॥
क्षुत्क्षामकक्षं क्रन्दन्तं निजघ्नुर्नग्नविग्रहम् । चण्डाला इव निःशस्त्रं कुमुदाद्या नृपप्रियाः ॥४३४॥
पितरं निहतं श्रुत्वा राजा संजातकौतुकः । प्रातः स्वसचिवैः सार्धं गत्वा तद्देहं दृष्टवान् ॥४३५॥
अथाङ्गेस्य प्रहारोयं मदत्त इति वादिनः । तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमम् ॥४३६॥
न्यक्कृत्य स्त्रीकृतो राज्ञा तदा तद्भञ्जमोचनः । अभूद्युवत्पर्वगुप्तो देवगुप्ताभिधं क्षतम् ॥४३७॥
पार्थस्य निहतस्याङ्गे सोक्षिपत्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोभवच्चिरम् ॥४३८॥
डामरैर्लुण्ठितो देशः प्रणाशो चक्रवर्मणः । उत्थाप्य पापान्कायस्थांस्तेन भूयोपि दण्डितः ॥४३९॥
संप्रेरितः कुसचिवैः शस्त्राभ्यासं चकार सः । पाटयन्क्षुरिकाघातैः कोटवीस्तनकोटरम् ॥४४०॥
गर्भिणीनां च जठरं गर्भान्द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गं कर्मकृतामपि ॥४४१॥
प्रतिमहामहाद्वारायश्चा बभञ्जवाड्विजाः । 'मत्स्यगृहजमहारांस्तस्मादपि नृपाधमात् ॥४४२॥
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । ततोनुबाध्यमानोभूत्पर्यन्तव्यथातुरः ॥४४३॥
अथवा तस्य तादृश्या प्रजा एव न केवलम् । तुतुषुर्निजभृत्यान्तमहिष्योपि चतुर्दश ॥४४४॥

४२६. ¹) Thus corr. by A₂ from A₁ तादृग्रक°. ४३२. ¹) Thus corr. by later hand from A₁ निपत्य. ४४०. ¹) Thus corr. by later hand from A₁ कोटवी°. ४४२. ¹) Thus corr. by later hand from A₁ द्विज·

अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः । क्षितिपालात्मजातोयमिति प्रख्यापितो मृषा ॥४४५॥
तं शिशुं शूरवर्माख्यं विनिवेश्य नृपासने । हस्ते निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणाम् ॥४४६॥
कम्पनाधिपतेर्बद्धद्वेषः कमलवर्धनात् । विध्वस्तमडवराज्यस्थडामरोत्पाटनक्षमात् ॥४४७॥
आसन्नविजयप्राप्तेः[1] पितृहा पार्थिवाधमः । शुचौ पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ॥४४८॥ चक्कलकम् ॥
पितृघातिसुतो राजा जयस्वामिविरोचनम् । आषाढशुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ॥४४९॥
तथा निरैजे राजश्रीर्बालस्य पृथिवीपतेः । कृपाणवेणिललिता छत्रचामरहासिनी ॥४५०॥
अत्रान्तरे जवायातैर्धीरैरावेष्टितभुजः । सामन्तैर्नगरोपान्तं प्राप्तः कमलवर्धनः ॥४५१॥
एकाङ्गतन्त्रिसामन्तस्यालहारकसादिभिः । नगरं प्रविशन्भ्रान्तः समं सैन्यैरबध्यत ॥४५२॥
विरुद्धडामरानीकान्युक्त्वा मार्गेषु निर्गतः । भ्रान्तोप्यसौ वैरिसेनामजयद्विक्रमोर्जितः ॥४५३॥
सहस्रमश्ववाराणां विद्राव्य तुरगैर्मितैः । राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ॥४५४॥
तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः । एकाकिनं काप्यनयज्जननी शिशुभूपतिम् ॥४५५॥
प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः । नाभूत्सिंहासनारूढो मूढः कमलवर्धनः ॥४५६॥
तदानीं स्वगृहान्यातो राज्यकामोन्यवासरे । संघट्टयन्द्विजान्सर्वानचूचुददनीतिवित् ॥४५७॥
नेदं शक्तं च कुरुत क्ष्मापं कंचित्स्वदेशजम् । मामेव कुर्युः सामर्थ्यादिति मूढः स चिन्तयन् ॥४५८॥
एकाकिनीं रहः क्षीबां लब्ध्वा दुर्लभयोषितम् । अप्रौढोनुपभुज्यान्यदिने दूत्यार्थयेत यः ॥४५९॥
विभूतिं रभसायातां यश्च संत्यज्य तत्क्षणम् । वीक्ष्या कामयतेन्येद्युः शोच्यस्ताभ्यां परोस्ति कः ॥४६०॥ युग्मम् ॥
अथोत्पलकुले छिन्ने स्थूलकम्बलवाहिनः । अशृङ्गोक्षनिभा विप्राः समगंसत गोकुले ॥४६१॥
धूमनिर्गन्धकूर्चानां राज्ञस्तांस्तांश्चिकीर्षताम् । राज्यव्यवस्थोपन्यासस्तेषां चिरमवर्धत ॥४६२॥
द्वैमत्येन मिथस्तेषां नान्यः कोप्यभ्यषिच्यत । कूर्चा[1] भाषणनिष्ठ्यूतैः स्वकूर्चष्ठीवनैः परम् ॥४६३॥
राज्यार्हान्वेषिभिर्विप्रैः प्राप्तः[1] स्वस्मृतिक्रमये । अकार्यतैकवाचातैर्मुग्धः कमलवर्धनः ॥४६४॥
पञ्चषाणि दिनान्येव यावत्तस्थुर्द्विजातयः । काहलाकांस्यतालादिवाद्यकोलाहलाकुलम् ॥४६५॥
उत्पताकध्वजच्छत्रशोभि युग्यार्पितासनम्[1] । अशेषं पारिषद्यानां तावत्तत्रामिलद्बलम् ॥४६६॥ युग्मम् ॥
स्वपक्षीं बन्धकीभूतामिवान्यवशवर्तिनीम् । वीक्ष्य राजश्रियं शोचन्नासीत्कमलवर्धनः ॥४६७॥
पितृघातिवधूः क्षत्रपुत्रराज्यार्थिनी ततः । प्राहिणोद्राजपुरुषान्पार्श्वे प्रायोपवेशिनाम् ॥४६८॥
पिशाचकपुरग्रामे वीरदेवाभिधस्य यः । कुटुम्बिनः कामदेवनामा सूनुरजायत ॥४६९॥
स शिक्षिताक्षरो लब्ध्वा मेरुवर्धनमन्दिरे । बालाध्यापकतां ज्ञानशीलादिगुणभूषितः ॥४७०॥
क्रमात्तद्गञ्जाधिकार्यासीदथ तस्यात्मजः शनैः । लेभे गञ्जाधिकारित्वं राज्ञः शंकरवर्मणः ॥४७१॥

---

४४८. [1]) Thus corr. by $A_2$ from $A_1$ °प्राप्ति°. ४४९. [1]) Thus corr. by $A_2$ from $A_1$ आषाढे. ४५१. [1]) धीरै supplied by $A_2$. ४५७. [1]) Thus $A_1$; $A_2$ संघटय्य. ४५९. [1]) G *sec. manu* अप्रौढो भोगमुद्रेऽन्यदिने दूत्यार्थयेत्तु यः. ४६१. [1]) $A_2$ अथो-त्पल°.—[2]) $A_2$ gloss उत्पलो नाम कल्यपालः तेन चिप्पटजयापीडं स्वकीयं भिन्नस्याभिचारक्रियया स्वकीयभ्रातुःपुत्रः अजितापीडः राज्ये स्थापितः । ततः प्रभृति कल्यपालकुलराज्यं । उत्पलतावन्मिपर्यन्तं प्राप्य कल्यपालकुलस्य च्छेदः । अत एवोक्तं । उत्पलकुले च्छिन्ने इति ।. ४६३. [1]) Thus $A_1$; $A_2$ कलमा°. ४६४. [1]) $A_2$ प्राप्तैः. ४६६. [1]) तासनम् supplied by $A_2$ in space left by $A_1$.

यः प्रभाकरदेवोपि सुगन्धास्नेहकामुकः । लक्ष्म्या सरस्वतीदेवादेशाविभ्रवतोथ यां ॥४७२॥

विद्वान्यशस्करो नाम तत्पुत्रोत्यन्तदुर्गतः । सख्या फल्गुणकाख्येन समं देशान्तरं गतः ॥४७३॥

सुस्वप्नदर्शनैः पीठदेव्याशीर्भिश्च हर्षुलः । तस्मिन्प्रसङ्गे सोत्साहः प्रत्यावृत्तो निजां भुवम् ॥४७४॥

475 पितृव्यानिवधूर्तैर्यातैर्बोधयितुं द्विजान् । मध्ये गृहीतो वाग्मित्वात्प्रविवेश तदन्तिकम् ॥४७५॥ कुलकम् ॥

दृष्ट्वैव तं दैवबलादेकमत्यस्पृशो द्विजाः । ध्वनिं राजायमेवास्त्वित्युच्चकैरुदचारयन् ॥४७६॥

अथाभ्यषिच्यत क्षिप्रं विप्रैरेत्य यशस्करः । क्ष्माधृतिप्रौढसामर्थ्यैः सानुमानिव तोयदैः ॥४७७॥

दग्धं वेणुवनं परस्परमहासंघर्षजेनाग्निना तन्मूलोद्धृतिरम्भसा क्षणधृतोद्रेकेण संपादिता ।

वात्यावेगविपाटितं विटपिनं प्राप्तं कुतश्चित्दृढां कर्हि नेतुमहो महाद्रिकुहरे धात्रा न किं तूर्णितम् ॥४७८॥

भृत्यप्रेरणया वंश्यं पार्थजः स्वं न चेद्धरेत् । तत्पुत्रोत्पाटनं कुर्यान्न चेत्कमलवर्धनः ॥४७९॥

480 अनुच्चकुलजातस्य दरिद्रस्याटतः क्षितिम् । तद्यशस्करदेवस्य राज्यप्राप्तिः कथं भवेत् ॥४८०॥

पश्चात् प्रजाभिरनुगो ददृशे जनेन वस्तलक्षणं निखिललोकसमानमूर्तिः ।

साम्राज्यरम्यममुमीक्षितुमास्त नारीदृङ्गीरजस्तबकितो नरनाथमार्गः ॥४८१॥

नृपतिवसति प्रस्थानध्वन्यशस्करभूपतिः पुरमृगदृशामाशीर्मध्ये वचोपि विवक्षितम् ।

स्तिमितवलितापाङ्गं शृण्वन्निमीलदहंकृतिः कृतपरिकरस्तज्ज्ञैर्जज्ञे प्रजापरिपालने ॥४८२॥

प्रतिमितरविदीपोद्भासिभृङ्गातपत्रप्रचयरजतपात्राछन्नितारात्रिकाभीः ।

अथ मुखरितमाशीर्मङ्गलैरङ्गनानामवनिहरिणधामा राजधाम प्रपेदे ॥४८३॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां पञ्चमस्तरङ्गः ।

अधिकायां समावीतौ मासेषु च चतुर्ष्वगात् । कल्यपालाष्टकं रथ्याहतस्त्रीसचिवा अपि ॥

४७३. ¹) Thus $A_2$; $A_1$ °तो गतः. ४७७. ¹) $A_3$ gloss क्ष्माया: भूमेः धृतिः धारणं तस्मिन् प्रौढं सामर्थ्यं यस्य सः. ४७८. ¹) ह supplied by $A_3$.—²) $A_3$ दैवेन किं सूचितमित्यादर्शान्तरे पाठः. ४८०. ¹) $A_3$ gloss नीचकुलोत्पन्नस्य. ४८१. ¹) Thus $A_2$; $A_1$ °कीर्तिः. ४८३. ¹) $A_3$ glosses अवनौ भूमौ हरिणधामा चन्द्रः and राजासनं.

## ॥ षष्ठस्तरङ्गः ॥

नेदं पर्णसमीरणाशनतपोमाहात्म्यमुच्चैरगौ पश्यैतावत एव संप्रति कृती तन्मात्रवृत्तीं[1] वहिः[2] ।
प्रेष्ठैश्चार्धमिदं चराचरगुरोः प्राप्येयमात्मस्तुतीर्देवं देववधूमुखाच्छ्रुतिसुखाः[3] शृण्वन्स्वपर्णाव्रतात् ॥१॥
इच्छन्नलङ्घनीयत्वमथ कक्ष्यां विलङ्घयन् । प्रतीहारान्द्विजा दूरं वार्यन्तामिति सोऽभ्यधात् ॥२॥
वेत्रिविश्रास्यमानांस्तु तान्कृताञ्जलिरब्रवीत् । राज्यप्रदाश्च पूज्याश्च यूयं नो दैवतैः समाः ॥३॥
राज्यदानाभिमानेन वर्तिष्यत मदोद्धताः । यत्कार्यकालादन्यत्र नागन्तव्यं मदन्तिकम् ॥४॥
तदाकर्ण्याखिलो लोकस्तमधृष्यममन्यत । व्यस्मरत्सहसंवाससंभूतमपि लाघवम् ॥५॥
खिलीभूताः पूर्वराजव्यवस्थाः प्रतिभाबलात् । उन्नीतवान्स सुकविः प्राक्विप्रक्रिया इव ॥६॥
अचौराभूत्तथा भूमिर्यथा रात्रौ वणिक्पथाः । अतिष्ठन्विवृतद्वारा मार्गाश्चाविघ्निताध्वगाः ॥७॥
प्रत्यवेक्षापदे तस्मिन्नासीत्सर्वोपहारिणाम् । कुब्जाध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनाम् ॥८॥
ग्राम्याः कृषिपराधीना नापश्यन्राजमन्दिरम् । विप्राः स्वाध्यायसंसक्ता नाकुर्वञ्शस्त्रधारणम् ॥९॥
न विप्रगुरवः साम गायन्तो मदिरां पपुः । न तापसाः पुत्रदारप्रमुखान्यान्यढौकयन् ॥१०॥
न मूर्खगुरवो[1] मत्स्यापूपयागविधायिनः । चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणम् ॥११॥
नादृश्यन्त च गेहिन्यो गुरुदीक्षोत्थदेवताः । कुर्वाणा भर्तृशीलश्रीनिषेधं मूर्धधूननैः ॥१२॥
कार्तान्तिको भिषक्सभ्यो गुरुर्मन्त्री पुरोहितः । दूतः स्थेयो[1] लेखको वा न तदाभूदपण्डितः ॥१३॥
प्रायोपवेशाधिकृतैर्बोधितेन महीभृता । प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत् ॥१४॥
अहमाढ्योऽभवं पूर्वं वास्तव्योऽत्र महीपते । निष्किञ्चनत्वं शनकैरगच्छं दैवयोगतः ॥१५॥
उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे । निश्चयोऽभूदृणं छित्त्वा परिभ्रान्तुं दिगन्तरे ॥१६॥
अथ विक्रीय सर्वस्वमृणं शोधयता मया । महाधनाय वणिजे विक्रीतं निजमन्दिरम् ॥१७॥
भार्यामुद्दिश्य भर्तव्यामेक एव तु वर्जितः । सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः ॥१८॥
निदाघे पुष्पताम्बूलीपर्णाद्यत्रातिशीतले । न्यस्यद्भिर्मालिकै[1]र्दत्तात्सा जीवेद्भाटकादिति[2] ॥१९॥
ततो दिगन्तरान्भ्रान्त्वा विंशत्या वत्सरैरहम् । लब्धाल्पवित्तः संप्राप्तो जन्मभूमिमिमां पुनः ॥२०॥
अन्विष्यता मया साध्वी स्ववधूर्ददृशेऽथ सा । विवर्णदेहा जीवन्ती प्रेष्यात्वेनान्यवेश्मसु ॥२१॥
किं दासजीविकापि त्वमीदृशीं वृत्तिमाश्रिता । मयेति सा सदुःखेन पृष्टा स्वोदन्तमब्रवीत् ॥२२॥

१. ¹) A₂ gloss पर्णवातजीविनी.—²) A₃ gloss एती चराचरगुरुणा वहिः कृती इत्यन्वयः.—³) Thus A₁; A₃ °सुखाच्छृण्व°.
११. ¹) Thus corr. by later hand from A₁ मूर्खा गु°. १३. ¹) A₃ gloss विवादपरिनिर्णेता स्थेयः. १४. ¹) A₃ gloss मृतावमसमे प्रायो बाहुल्ये सदृशे विधु इति कोषः. १९. ¹) A₃ gloss पौष्पिके.—²) A₃ gloss भाटी इति भाषया । प्रत्यहं वेतनं भाटी.

सोपानकूपं संप्राप्ता त्वयि याते दिगन्तरम् । लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ॥२३॥
तदन्या कास्ति मे वृत्तिरित्युक्त्वा विरराम सा । तदाकर्ण्य निमग्नोहमन्तरे शोककोपयोः ॥२४॥
कृतप्रायोपवेशोऽथ स्थेयैस्तैस्तैः पदे पदे । प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ॥२५॥
जडस्त्वाद्येपि न न्यायं न विक्रीतो मया पुनः । सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ॥२६॥
सोऽहं विपद्ये क्षीणार्थो द्वारि शास्तुस्तव ध्रुवम् । वृजिनादस्ति वेद्मीतिर्वस्तु निर्णीयतां स्वयम् ॥२७॥
राजेति तेन विज्ञप्तो दत्त्वा धर्मासनं स्वयम् । संघट्य्याखिलान्स्थेयानासीत्तत्त्वं विचारयन् ॥२८॥
स्थेयास्तमूचुर्बहुशो विचार्यायं पराजितः । ग्राह्यादगणयन्न्यायं दण्डो लिखितदूषकः ॥२९॥
सोपानकूपसहितं विक्रीतं गृहमित्यथ । राजा विक्रयपत्रस्थान्स्वयं वर्णानवाचयत् ॥३०॥
ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि । अन्तरात्मा जगादेव नृपतेरर्थिनो जयम् ॥३१॥
मुहूर्तमिव संचिन्त्य राजान्याभिरभूच्चिरम् । कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलम् ॥३२॥
कथान्तराले सर्वेभ्यो गृह्णन्रत्नानि वीक्षितुम् । हसन्प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकम् ॥३३॥
क्षणादेवाखिलैः स्थेयमित्यमेवेति सस्मितम् । वचो ब्रुवाणः प्रययौ पादक्षालनकैतवात् ॥३४॥
अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकम् । भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकम् ॥३५॥
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः । यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां ततः ॥३६॥
निर्णेया त्वया कृत्यमस्ति भाण्डपतेरिति । श्रुत्वाददाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ॥३७॥
दीनाराणां दशशतीं तस्यां भूभृदवाचयत् । व्ययमध्येऽधिकरणलेखकार्थं समर्पिताम् ॥३८॥
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः । रेफे सकारं वणिजा कारितं निश्चिकाय सः ॥३९॥
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्त्वाभयं च तम् । आनीय लेखकं सभ्यान्संजातप्रत्ययान्व्यधात् ॥४०॥
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्धं वणिग्गृहम् । वितीर्णमर्थिने देशात्प्रत्यर्थी च प्रवासितः ॥४१॥
कृताह्निकं भोक्तुकामं तं दिनान्ते च भूपतिम् । अकालावेदनाद्भिभ्यत्क्षत्ता जातु व्यजिज्ञपत् ॥४२॥
देवः समाप्तकृत्योऽद्य विज्ञप्तौ श्वस्तनः क्षणः । इत्युक्तो दर्शने प्राणत्यागी विप्रो बहिः स्थितः ॥४३॥
दत्तप्रवेशादेशोऽथ त्वरावदेन भूभुजा । द्विजः प्रविष्टः पृष्टश्च तीव्रार्तिरिदमब्रवीत् ॥४४॥
सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेऽर्जितम् । गृहीत्वा श्रुतसीराज्यः स्वदेशमहमागतः ॥४५॥
त्वयि राजनि निश्चौरैरध्वभिर्विशतः सुखम् । शोभवत्सुवर्णोत्से मे दिनान्ते श्राम्यतः स्थितिः ॥४६॥
दीर्घाध्वलङ्घनक्लान्तस्तत्राहमकुतोभयः । मार्गारामतरोर्मूले त्रियामामत्यवाहयम् ॥४७॥
चेतनं ग्रन्थिबद्धं तद्रुत्थायोरपत्स्यमम । अरघट्टे समीपस्थे कक्षयोगादलक्षिते ॥४८॥

२८ [1]) Thus A. G has *sec. manu* the conjectural reading गत्वा. ३४. [1]) Thus A₂, A 'शिवा'. ३६. [1]) A₂ gloss गणनत् वह्नु इति भाषया वही इति मध्यदेशीया. ३८. [1]) A₂ gloss दैनाराः धाड् इति कश्मीरभाषया.—[2]) A₂ gloss यत्सांनिध्यो अर्थिप्रत्यर्थिमातुभौ भूमि क्रयविक्रयं कुरुतः। येन धावत्सरमानं क्रियते सोऽधिकरणलेखक. । भवत्तरपरिमाणलेखपत्रकारी सराफ् इति भाषया. ३९. [1]) A₂ gloss अधिकरणलेखकाय दीनारदशशतीदानात्.—[2]) A₂ gloss गृहविक्रयिणा वणिजा विक्रयपत्रे लिखित। सोपानकूपरहितं विक्रीतं गृहमिति। तदर्थेन लुब्धेन वणिजा प्रत्यर्थिना रेफविषये सकारः कारित अधिकरणलेखकहस्तेन। उत्कोच दीनारदशशत्याकर्य दत्त्वा कूपसहितं गृहं विक्रीतमिति लेखितं। ततोऽनन्तरं राज्ञानुमितं लेखपत्रलिखनार्थं किमर्थं दीनारदशशती। बहुमूल्यत्वादिति। रेफस्य सकार एव कृतोनेन इति ॥. ४१. [1]) A₂ gloss विश्वासिकराय. ४२. [1]) A₂ gloss द्वास्थ. ४४. [1]) Thus corr. by later hand from A₁ पृष्टोय. ४८. [1]) Thus corr. by A₂ from A₁ °मङ्गुवि.

तस्मिन्पुरवरोहेतिनिर्वेदुस्याज्जहद्वपुः । सोहं हारितसर्वस्वः शोच्यमुद्धाधिरं जनैः ॥४९॥
एकोध्यवसितः कोपि साहसे[1] पुरुषोब्रवीत् । मह्यं शापितनिष्कार्धं किं ददासीति मां ततः ॥५०॥
तमस्म्यवोचं विवशस्तस्यार्धस्यास्मि कः प्रभुः । तुभ्यं यद्रोचते मह्यं तत्ततो दीयतां त्वया ॥५१॥
अवरुह्याधिरूढोथ रूपकेभ्यो द्वयं मम । स प्रादात्स्पष्टमेवाष्टानवतिं स्वीचकार तु ॥५२॥
व्यवहारा वचोनिष्ठा एव राज्ञि यशस्करे । निघ्नन्व्यवस्थां तां लोकैर्न्यक्कृतोस्मीति वादिभिः ॥५३॥
उपचारोक्तिसारल्यच्छलहारितचेतनः । सोहं जहाम्यसून्द्वारे दुर्व्यवस्थापकस्य ते ॥५४॥
पुंसस्तस्य स राज्ञाथ पृष्टः प्रकृतिनामनी । वदनप्रत्यभिज्ञैव ममास्तीत्यभ्यभाषत ॥५५॥
प्रातस्तवेप्सितावाप्तिं करिष्यामीति भूभुजा । प्रतिज्ञाय कथंचित्स स्वपार्श्वे कारितोशनम् ॥५६॥
लवणोत्सौकसां कुलाहूतानां स विशां ततः । स्थितमन्तर्द्विजोन्येद्युस्तं राज्ञेदर्शयन्नरम् ॥५७॥
पृष्टः स राज्ञा विप्रेण यथैवोक्तं तथैव तत् । सर्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन् ॥५८॥
सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरम् । अलक्षयन्तः प्रैक्षन्त दोलाकुलधियो धराम् ॥५९॥
धर्मासनस्थो राजाथ रूपकाणामभाषत । समष्टानवतेः पार्श्वे विप्रमन्यं द्वयस्य तु ॥६०॥
अनुयोक्तृव्रजगारापि दुःसंचिन्त्या महात्मनः । धर्मस्याधर्ममुद्भूतं निहन्तुं धावतो गतिः ॥६१॥
सायं हुताशं प्रविशन्नम्मयं[1] चेन्दुमण्डलम् । स्वतेजसा संविभजन्प्रदीपैर्ज्योत्स्नयाप्यसौ ॥६२॥
तदुत्थाय यथा भानुर्निहन्ति ध्वान्तमुद्धतम् । अनन्यकर्मा धर्मोयं तथाधर्मं व्यपोहति ॥६३॥ युग्मम् ॥
दुःसंलक्ष्यस्तु धर्मोसावधर्मं बाधतेञ्जसा । तिष्ठन्नित्यमधिष्ठाय दाह्यं काष्ठमिवानलः ॥६४॥
ददाति यद्भवान्दत्तां तदित्याशुक्तमुज्झतः । तुभ्यं रोचत इत्यादि वचोस्य निसृतं तदा ॥६५॥
रुचितास्य प्रभूताष्टानवतिर्लोभिनोस्य ताम् । नादादस्मायरुचितं रूपकाणां द्वयं ददत् ॥६६॥
इत्यादिसूक्ष्मेक्षिकया धर्माधर्मान्तरं विदन् । प्रत्यवेक्षापरः क्ष्माभृद्व्यधात्कृतयुगोदयम् ॥६७॥
इत्थं जनं स विनयन्हास्योभूद्विजदुर्नयैः । परस्योपदिशन्पथ्यमपथ्याशीव रोगवत् ॥६८॥
श्रोत्रियेणैव तेनापि मृदम्भःशौचशालिना । डोम्बोच्छिष्टभुजो भृत्याः[2] पार्श्वाच्च परिजह्रिरे ॥६९॥
यथोत्तरं संभितार्थैरन्योन्यं पृष्ठपातिभिः । नगराधिकृतैश्चक्रे[1] चतुर्भिः सोर्थसंग्रहम्[2] ॥७०॥
लेभिरे निधनं तस्मात्सत्यंकारात्पदातयः । श्रीरणेश्वरपीडामन्यस्तत्खड्गादपि प्रभोः ॥७१॥
स ज्येष्ठे भ्रातरि मृते तथाभून्मुदितश्चिरम् । तदुपज्ञं यथा प्राशीस्तत्रोत्सैर्षि रसार्पणम् ॥७२॥
नीतस्य मण्डलेशत्वं वेलावित्तस्य भूभुजा । देवीः कामयमानस्य चक्रे गजनिमीलिका ॥७३॥
रागाङ्कुरान्तकान्तानां मूर्धानमधिरोपिता । लज्जा नामाभवत्तस्य वेश्या वैवश्यकारिणी ॥७४॥

---

५०. [1]) Thus $A_1$; $A_2$ °सी.—[2]) $A_2$ शापितनक्षाव. ५३. [1]) $A_2$ gloss वचसि वाक्य एव निष्ठा येषां । न तु न्यायविचारणे इति व्यवस्थां निघ्नन्. ५४. [1]) Thus corr. by later hand from $A_1$ °सारल्येच्छ°. ५५. [1]) $A_4$ gloss वदनमेव केवलं सदीयं चिह्नं मम न तु नामप्रकृती इत्यर्थः. ६२. [1]) $A_2$ gloss आप्यं. ६४. [1]) Thus corr. by $A_2$ from $A_1$ तिष्ठन्नित्य°. ६९. [1]) Thus $A_1$; $A_2$ °णैव.—[2]) Thus corr. by $A_2$ from $A_1$ °भृत्यान्या°. ७०. [1]) $A_2$ gloss पुरस्तिभिः.—[2]) Thus corr. by $A_2$ from $A_1$ सोचसं°. ७२. [1]) Thus $A_2$; $A_1$ °मुदित°.—[2]) Thus corr. by $A_2$ from $A_1$ तदुपज्ञे; Edd. °ज्ञैर्यथा.—[3]) Emended; A R G °त्सौषि.—[4]) $A_2$ gloss मुख:. ७३. [1]) $A_2$ gloss एतन्नामकसाचिवस्य; एतन्नामक struck out again.—[2]) $A_2$ gloss उपेक्षा कृता इत्यर्थः.

अवकाशः सुवृत्तानां हृदयान्तर्न योषिताम् । इतीव विहितौ धात्रा सुवृत्तौ तद्बहिः कुचौ ॥७५॥
उत्तमाधमसंसक्तौ आनन्सरथवृत्तिताम् । नारीणां भुजिबाणानामङ्गनात्वं व्यधाद्विधिः ॥७६॥
सा लालितापि राज्ञा वल्लभा ललितलोचना । चण्डालयामिकेनागाद्यामिनीषु समागमम् ॥७७॥ युग्मम् ॥
सुभगंकरणं किंचिच्चण्डालतरुणेऽभवत् । तं वश्यभावविवशा भेजे राजवधूरपि ॥७८॥
सा वा चण्डालकुलजा स वा कार्मणकर्मवित् । अन्यथा संगमः किं स्यादसंभाव्यस्तथाविधः ॥७९॥
सोऽभूत्केन प्रकारेण तया सह समागतः । इत्येव लेभे वृत्तान्तः प्रतिभेदं न कुत्रचित् ॥८०॥
केवलं प्रत्यभात्तादृक्व्यापिनोः प्रेम तत्तयोः । दृग्व्यापारेक्षणात्क्षिप्रं ह्लादिनाप्तोऽधिकारिणः ॥८१॥
तमर्थमथ तथ्येन वीक्ष्य प्रणिधिभिर्नृपः । प्रायश्चित्तानुचरणक्षामः कृष्णाजिनं दधौ ॥८२॥
कुपितोऽपि स यच्चैनां न्यवधीद्रागमोहितः । तेनैवाणात्पुरोभागिवितर्कातङ्कपात्रताम् ॥८३॥
डोम्बोच्छिष्टाङ्गनासङ्गादशुचित्वं यशस्करे । संक्रान्तं कुष्ठिसंस्पर्शात्कुष्ठं दुःखमिवाभवत् ॥८४॥
सामान्येन सता कैश्चित्सदृशैः शुभकर्मभिः । जन्मान्तरीयैः साम्राज्यं मया प्रापीति चिन्तयन् ॥८५॥
साम्राज्यकामो नृपतिर्भाविन्यपि स जन्मनि । मुक्त्या प्रादान्निरातङ्कां राज्यलक्ष्मीं द्विजन्मने ॥८६॥
भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः । छात्राणामार्यदेश्यानां तेन विद्यार्थिनां मठः ॥८७॥
मठाधिपतये तत्र छत्रचामरहासिनीम् । स नरेन्द्रश्रियं प्रादाक्रान्तःपुरवर्जिताम् ॥८८॥
वितस्तापुलिने राजा नानोपकरणान्वितान् । ब्राह्मणेभ्यः सोपहारान्पञ्चपञ्चाशतं ददौ ॥८९॥
अथ जातोदरव्याधिर्मज्जानो नायमित्यसौ । जानन्संग्रामदेवाख्यं परिवर्ज्य निजात्मजम् ॥९०॥
समर्प्य सचिवैकाङ्गसामन्तानभ्यषेचयत् । रामदेवात्मजं राज्ये वर्णटं प्रपितृव्यजम् ॥९१॥
शक्ये राज्यापहाकर्तुं शिशावनभिषेचिते । निराशाः समपद्यन्त तदा राज्यजिहीर्षवः ॥९२॥
स पर्वगुप्तकौटिल्यमयुक्तो हृदयोन्मुखः । विपाककालस्तत्राह्नि भङ्गोन्मुख इवाभवत् ॥९३॥
राजधानीस्थितस्यापि वर्णटो राज्यदायिनः । आरोग्यवार्तयाप्यासीन्मुमूर्षोरनिरीक्षकः ॥९४॥
ततः सानुशयो राजा सामन्त्र्यैत मन्त्रिभिः । राज्यं संग्रामदेवाय दातुमाश्वासकारिभिः ॥९५॥
राजाज्ञया निशामेकां वक्षोष्टस्तम्भमण्डपात् । बहिर्द्वार्गलात्मानं वर्णटो निरवर्स्यत ॥९६॥
भयाध्वजागराहापि तद्भृत्यानां विवेकिनाम् । आस्थानमण्डपे प्राप पायुक्षालनभूमिताम् ॥९७॥
एकाहराजपुरुषस्तदासि विजयेश्वरे । श्रीवाहेवप्रसादाख्यो राजबीजी समर्पयत् ॥९८॥
अथाभिषिच्य संग्रामदेवं तीव्रीभवद्व्यथः । स राजधान्या निर्गत्य मर्तुं निजमठं ययौ ॥९९॥
धीः केशश्मश्रुवपने शिरःशाटकवर्जनम् । काषायग्रहणोद्वेगः शस्त्रत्यागपटश्च यः ॥१००॥
राजभृत्यैः प्रतिज्ञातः स तस्मिन्निश्चितक्षये । जीवत्येव कृतश्मश्रुव्यञ्जकैः परिवर्जितः ॥१०१॥ युग्मम् ॥

७६. ¹) Thus corr. by A2; reading of A1 illegible; A2 in margin °ङ्गनाख्यां. ७७. ¹) A2 gloss महरजायकेन. ७९. ¹) A2 gloss वशीकरण.—²) Thus corr. by A2 from A1 सम्भवः. ८१. ¹) Thus corr. by A2 from A1 °भार्योद्द°. ८३. ¹) A2 न्यवधीद्र°. ८६. ¹) Thus A2; A1 °कामोपि नृपो भा°. ८७. ¹) Thus A2; A1 स्थित.—²) Thus corr. by A2 from A1 °देशानां. ८८. ¹) Thus A2; A1 नरेन्द्राश्रितां. ८९. ¹) A2 gloss कांडिलतीर्थविषये बलात्कारस्यामहारा अभवन्निस्याहुः लोकाः. ९०. ¹) Thus corr. by A2 from A1 नृपा°. ९३. ¹) Thus corr. by A2 from A1 विपाककालस्त°. ९५. ¹) Thus corr. by A2 from A1 °देवस्य. ९६. ¹) Thus A1; A2 निरवास्यत; perhaps to be emended निरवस्यत. ९८. ¹) A4 gloss एकाहं राजभूतस्य वर्णटस्य पुरुषो भृत्यः.

द्वे सहस्रे सुवर्णस्य सार्धे बद्धां[1] पटाञ्चले । यो निर्जगाम राजासौ मुमूर्षुर्निजमन्दिरात् ॥१०२॥
पञ्चभिः पर्वगुप्ताद्यैर्जीनकं तस्य मन्त्रिभिः । हृतं सजीवितस्यैव विभज्यान्योन्यमग्रतः ॥१०३॥ युग्मम्॥
विचेष्टमानः शय्यायां व्याधिदग्धान्तरो नृपः । तिष्ठन्मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते ॥१०४॥
अजातसंविद्भ्रंशो मे पश्यन्द्रोहपराञ्जनान् । प्राणैर्दशानि ह्रियाणि न यदा निरमुच्यत ॥१०५॥
तदा सुहृद्बन्धुभृत्यवेलावित्तैः कृतत्वरैः । जिहीर्षुभिश्च साम्राज्यं विषं दत्त्वा विपादितः ॥१०६॥
अवरोधवधूमध्यात्सती तं पतिमन्वगात् । एका त्रैलोक्यदेव्येव स्वप्रभेव विरोचनम् ॥१०७॥
वर्णाश्रमप्रत्यवेक्षाबद्धकक्ष्यः क्षितीश्वरः । चक्रभान्वभिधं चक्रमेलके[1] द्विजतापसम् ॥१०८॥
कृतात्याचारमालोक्य[1] राजा धर्मवशंवदः । निजमाह श्वपादेन ललाटतटमङ्कयन् ॥१०९॥
तन्मातुलेन[1] तद्दोषाद्वीरनाथेन योगिना । सांधिविग्रहिकेणाथ[2] स स्वेनैव न्यगृह्यत ॥११०॥
पूर्वाचार्यप्रभावेण स्वमाहात्म्याधिरोपणम् । प्रख्यापयद्भिर्गुरुभिः श्रद्धयेति यदुच्यते ॥१११॥
तत्स्वयापितैव सप्ताहात्स विपन्न इति श्रुतिः । दीर्घव्याधिहते तस्मिन्नुपपत्तिः कथं भवेत् ॥११२॥
अथामयान्तरेणाभूत्सा वार्तेत्युच्यते यदि । वर्णटाद्यभिशापोऽपि तदायात्वत्र हेतुताम् ॥११३॥
भुक्तैश्वर्यो नव[1] समाश्चतुर्विंशे स हायने । मासि भाद्रपदे कृष्णतृतीयस्यां व्यपद्यत ॥११४॥
पितामहीं शिशोर्गोप्त्रीं[1] विनिवेश्य नृपासने । भूभटाद्यैः समं प्राभूत्[2]पर्वगुप्तोऽथ पञ्चभिः ॥११५॥
क्रमात्सम पितामह्या तान्व्यापाद्येतरान्बली । एकः स एवमाक्रान्त[1]ः प्रबभूव नृपास्पदे ॥११६॥
स पार्थिवत्वमन्त्रित्वमिश्रया चेष्टया स्फुरन्[1] । राजा राजानकश्चेति[2] मिश्रामेवं धियं व्यधात् ॥११७॥
सेवमानः स्वयं बालभूपं भोज्यार्पणादिभिः । ऋजूनां प्रत्यभात्पर्वगुप्तो द्रोहबहिष्कृतः ॥११८॥
यान्द्रोहभीरून्संभाव्य संविभेजे यशस्करः । तस्य तत्तनयोच्छेदे त एवासन्प्रयोजकाः ॥११९॥
करभाङ्गरुहापिङ्गे हमभुवि क्षितिपालवत् । स ददौ कुङ्कुमालेपं वर्चैः शाड्वलविस्तृते ॥१२०॥
बिभ्यदेकाङ्गसंघातात्मकटोत्पाटनाक्षमः । प्रमापणाय प्रायुङ्क्त शिशोः कर्माभिचारिकम् ॥१२१॥
न्याय्यं ते सान्वयस्यास्ति राज्यं चैत्रादिवासरे । अन्यथाचरतो नाशः क्षिप्रं वंशायुषोर्भवेत् ॥१२२॥
इतीमामपि यामिन्यां श्रुतवान्भूतभारतीम् । अभिचारस्य बन्ध्यत्वं निर्ध्यायाधिकशङ्कितः ॥१२३॥
एकाङ्गेभ्यो विभिन्नेभ्यो बिभ्यदुद्भ्रान्तसंभ्रमः । उदताम्यत्तथा चिन्तालुप्तसंविद्दिवानिशम् ॥१२४॥
यथा महाहिमापातनिःसंचारजने दिने । अकस्मात्संभृतबलो राजधानीं निरुद्धवान् ॥१२५॥
विरोधकारिणं बुब्बाभिधेन सह सूनुना । निद्रोहमाहवे हत्वा मन्त्रिणं रामवर्धनम् ॥१२६॥

---

१०२. [1]) Thus corr. by later hand from $A_1$ बद्धा. १०८. [1]) $A_3$ gloss, partly effaced: चक्र...जने...करवा ..चक्रमेल ...के... . १०९. [1]) $A_3$ gloss अतिक्रान्ताचारम्. ११०. [1]) $A_4$ gloss चक्रभानुद्विजमातुलेन.—[2]) $A_3$ gloss सान्धिविग्रहिकमुद्राम्तमुद्रक्रम-कार्याधिकारी सान्धिविग्रहिकः करकपालः. ११४. [1]) नव supplied by $A_2$ in space left by $A_1$. ११५. [1]) $A_4$ gloss सङ्ग्रामदेवस्य.—[2]) $A_2$ gloss प्रभुरभूत्. ११६. [1]) Emended with G Edd.; $A_1$ एव साक्रान्तिः which $A_3$ alters to एवमाक्रान्तिः. ११७. [1]) Thus $A_3$; $A_1$ स्फुटन्.—[2]) $A_3$ gloss राजा पार्थिवः राजानकः मन्त्री । राज्ञः अनः प्राणनं । जीवनं परिवारिरक्षणलक्षणं । अस्मात्स्वः राजानः अनस्वप्राणने । राजान एव राजानकः । स्वार्थे कः यद्वा अत्र लिङ्गात् । कः सादृश्ये देवदत्त इव देवदत्तक इतिवत् । यथा प्राणनं विना देहस्थितिर्नास्ति । तथा धीसचिवं मन्त्रिणं विना पार्थिवानां स्वयं कार्याकार्यविवेककौशलातिशयो न सम्भवतीति । राजानेकमपेक्षते राजा ॥ यद्वा राज्ञः अनः प्राण इव राजानकः इत्यर्थः॥.

पिङ्गेण वेलावित्तेन प्राभृतार्थमुपाहृताम् । गले पुष्पस्रजं बद्ध्वा पातितं पार्थिवासनात् ॥१२७॥
स तं वक्राङ्कसंग्रामं हतमन्यत्र मन्दिरे । पातयित्वा वितस्तान्तः कण्ठबद्धशिलं निशि ॥१२८॥
चतुर्विंशस्य वर्षस्य दशम्यां कृष्णफाल्गुने । पापः सखङ्गकवचो न्यविक्षत नृपासने ॥१२९॥ चक्रलकम् ॥
130 पारेविशोकं दिविराज्जातस्याभिनवाभिधात् । सूनुः संग्रामगुप्तस्य स तदा पार्थिवोभवत् ॥१३०॥
कोशेण्स प्रत्यवस्थानं ये पुरा प्रतिजज्ञिरे । ते सर्व एव तद्भीताः प्रातरेव प्रणेमिरे ॥१३१॥
पार्थिवैकाङ्गसामन्तमन्त्रिकायस्थतन्त्रिणाम् । तद्भीत्या द्रोहवृत्तीनां द्रोहाद्वैतमदृश्यत ॥१३२॥
एकाङ्गस्य तदास्थाने सुख्याभिजनजन्मनः । प्रमादान्मदनादित्यनाम्नो हक्का व्यदीर्यत ॥१३३॥
हतांशुकेन भूभर्त्रा कुपितेन खलीकृतः । स निकृत्तकचश्मश्रुस्तपस्वी समपद्यत ॥१३४॥
135 तादृशस्य पुनस्तस्य सखीपुत्रत्वमीयुषः । अद्याप्यभिजने जाता वसन्ति त्रिपुरेश्वरे ॥१३५॥
कुर्वता पर्वगुप्तेन भूभृता द्रविणार्जनम् । प्रापिताः पुनरुत्साहं प्रजारोगा नियोगिनः ॥१३६॥
व्यधत्त स्कन्दभवनविहारवसुधान्तिके । पर्वगुप्तेश्वरं सोपि वृजिनार्जितया श्रिया ॥१३७॥
श्रीयशस्करभूभर्तृशुद्धान्तस्य विशुद्धधीः । कौलीनमलुनादेका गौरीव नृपसुन्दरी ॥१३८॥
सुचिराङ्कुरितप्रीतेः पर्वगुप्तस्य याकरोत् । समागमार्थिनो युक्त्या वञ्चनामुचिता सती ॥१३९॥
140 इदं यशस्करस्वामिसुरवेश्मार्धनिर्मितम् । त्यक्ता पत्युर्विपन्नस्य कृत्वा निर्माणपूरणम् ॥१४०॥
अमोघमस्मिं नियमाद्विधास्यामि त्वदीप्सितम् । स सुपच्छन्दयन्नेवं सुभ्रुवाभिहितस्तया ॥१४१॥
अथ प्रवृद्धगर्वेण तत्स्वल्पैरेव वासरैः । संपूर्णतां सुरगृहं गमितं तेन भूभुजा ॥१४२॥
सा यागज्वलने राजललना पीतसर्पिषि । पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुम् ॥१४३॥
अपर्यस्या निरस्तासोः पुष्टाः कुसुमवृष्टयः । तस्कार्ङ्कणस्तु न्यपतन्नत्रर्णमुखरा गिरः ॥१४४॥
145 सुदीर्घसाहसारम्भचिन्तासंरम्भशोषितः । पर्वगुप्तो बभूवाथ तृष्णामयपथातिथिः ॥१४५॥
व्याध्याधिप्रशमायासैर्ज्ञात्वाप्यस्थायिनीं स्थितिम् । मूढाः प्रकृतिं नोज्झन्ति द्रोहभीलोभमोहिताः ॥१४६॥
आशङ्क्य तादृङ्निष्ठोपि सोकुण्ठैः प्राक्तनैः शुभैः । कैश्चित्सुरेश्वरीक्षेत्रे परासुः समपद्यत ॥१४७॥
षड्विंशवत्सराषाढबहुलेह्नि त्रयोदशे । द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत ॥१४८॥
अतीन्द्रियायां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी ।
दृश्येत नाशो यदि नाम नाशु न कः कुकृत्येन यतेत भूत्यै ॥१४९॥
150 क्षेमगुप्ताभिधानोभूदथ राजा तदात्मजः । आसवासेवनोत्सिक्तोच्छ्रित्ततारुण्यसंज्वरः ॥१५०॥
सोभूत्स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात् । कृष्णक्षपाक्षणो घोरमेघान्ध इव भीतिकृत् ॥१५१॥
स्वतुल्यवेषालंकाराः शतं लालितकां नृपम् । तं फल्गुणप्रभृतयो दुराचाराः सिषेविरे ॥१५२॥
द्यूतासवाङ्गनासेवाव्यसनेपि स पार्थिवः । विटनिर्लुण्ठ्यमानोपि नाभूल्लक्ष्मीबहिष्कृतः ॥१५३॥

---

१२७. [1]) Thus corr. by $A_2$ from $A_1$ °हृतम्. १२९. [1]) चक्रलकम् added by $A_2$. १३०. [1]) Thus corr. by $A_2$ from $A_1$ विशोके.—[2]) Thus $A_2$; $A_1$ तथा. १३१. [1]) Thus $A_1$; $A_2$ केश्चित्प्रत्य°. १३२. [1]) Thus $A_2$; $A_1$ द्रोहाद्वै°. १३८. [1]) $A_2$ gloss कौलीनं लोकनिन्दां.—[2]) Thus corr. by $A_2$ from $A_1$ °भशुद्धान्त°. १४०. [1]) Thus corr. by $A_2$ from $A_1$ निर्वाण°. १४१. [1]) $A_2$ gloss अस्मीति निपातः अहमित्यर्थे. १५२. [1]) Thus $A_1$; $A_2$ °वेषा°.—[2]) $A_2$ gloss पदातयः.

रागी मधुप्रणयवान्विहिताक्षसक्तिर्यः सख्यमेति मधुपैर्हतकोशसारैः ।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र चेस्थितिमिव तत्र कुतूहलाय ॥१५४॥

विटाः प्रविष्टा हृदयं जिष्णुभा वामनादयः । पिशाचस्येव रुचितामशुचिं तस्य चक्रिरे ॥१५५॥
परोपहासकुशलः परनारीरतिप्रियः । परायत्ताशयस्तस्थौ पार्थिवोनर्थतत्परः ॥१५६॥
ष्ठीवनं श्मश्रुमालासु गालयः भोजपालिषु । तेन क्षिप्ताः मनीक्ष्याणां करोटीषु च टक्कराः ॥१५७॥
कटिसंघटनैर्नार्यो मृगव्यश्वा वनाटनैः । विटाश्चाश्लीलरटनैर्वाल्लभ्यं तस्य लेभिरे ॥१५८॥
पुंश्चलीजाल्मवैधेयबालकक्रोशध्वनिर्भरा । समभूदप्रवेशार्हा राजपर्षन्मनस्विनाम् ॥१५९॥
जिष्णुपुत्रैः क्षेमगुप्तक्ष्माभृद्यन्त्रपुत्रकः । चारणस्वगुणाकृष्टः किं न धूर्तैरनर्त्यत ॥१६०॥
तस्य कङ्कणवर्षोसीत्यभिधानं विधाय ते । तोषिताश्चासकृच्चक्रुर्दोष्णोः कङ्कणवर्धिताम् ॥१६१॥
निर्दोषदोषाविष्कारे नववस्तुप्रदर्शने । अधृष्यटक्कराधाने प्रसादः प्रापि तैर्नृपात् ॥१६२॥
संलक्ष्यकुचकक्ष्यान्ताः कृत्वा निजवधूः पुरः । रागी राजा गृहानीतो द्यूते तैर्निर्धनः कृतः ॥१६३॥
संभोगाभ्रमसौभाग्यकृतस्पर्धैः परस्परम् । संभुज्यैता भवान्वक्तु विशेषमिति चोदितः ॥१६४॥
उपभोगं स्वभार्याणां निर्लज्जैस्तैः स कारितः । का हृद्येति च रत्यन्ते पृष्टोभीष्टधनप्रदः ॥१६५॥ युग्मम् ॥
तस्य लालितकेष्वास्तां मुद्री संभोगढौकने । मात्रोधारिभ्रक्षित्वाङ्क्षिकाकौ हरिधूर्जटी ॥१६६॥
नीत्वा नर्मकथाङ्गतां निजवपुर्भुञ्जन्ति मानोन्नतिं संदूष्य स्वयमङ्गनाः शुचितया त्यक्तं कुलं कुर्वते ।
सौख्यं घ्नन्ति सुदीर्घसेवनसमासक्त्या यदर्थे भ्रमः प्रत्याख्याय तदेव वेद्मि न विटैः किं प्रार्थ्यते सेवया ॥१६७॥
यशस्करस्य भूत्वापि सचिवो भट्टफल्गुणः । तस्याभूदनुजीव्यन्ते धिग्भोगाभ्यासवासनाम् ॥१६८॥
फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः । तस्योपदेशो भूभर्त्रा पर्यहास्यसकृद्द्रहः ॥१६९॥
गृहान्विद्वेषितां हन्तुं टक्करादि बलात्ततः । वृद्धो रक्कः कम्पनेशो दुर्गोष्ठीमध्यगोभवत् ॥१७०॥
तीक्ष्णाक्षेपे संप्रविष्टं हन्तुं संग्रामडामरम् । श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ॥१७१॥
सुगतप्रतिमारीतिं हत्वा दग्धात्ततोखिलात् । जरद्देवगृहेभ्यश्च संगृह्य पात्रसंचयम् ॥१७२॥
सुरप्रतिष्ठया वार्धि मूढः स्वयशसो विदन् । नगरापणवीथ्यन्तः क्षेमगौरीश्वरं व्यधात् ॥१७३॥

एकः प्रयात्युपरमं द्रविणं तदीयं हत्वापरः प्रसभमुद्वहति प्रमोदम् ।
नो वेत्ति तत्स्वनिधने परकोशगामि धिग्वासनामसममोहकृतान्धकाराम् ॥१७४॥

त्यागिना क्षेमगुप्तेन भुक्त्यर्थं खशभूभुजे । हत्वा विहारान्निर्दग्धान्ग्रामाः षट्त्रिंशदर्पिताः ॥१७५॥
दुर्गाणां लोहरादीनां शास्ता शतमखोपमः । नृपतिः सिंहराजाख्यस्तस्मै स्वां तनयां ददौ ॥१७६॥
स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः । दिद्दाक्षेम इति ख्यातिं ययौ लज्जावहां नृपः ॥१७७॥
मातामहेन भूभर्तुर्भव्यास्तस्या व्यधीयत । श्रीभीमशाहिनोदात्तप्रासादो भीमकेशवः ॥१७८॥

---

१५७. [1]) Corr. by $A_2$ from $A_1$ °पालयः. १५८. [1]) Corr. by $A_2$ from $A_1$ °घटनात्र°.—[2]) मृगव्यश्वा supplied by $A_2$ in space left by $A_1$. १६०. [1]) Corr. by $A_2$ from $A_1$ °नन्त्यत. १६५. [1]) युग्मम् supplied by $A_2$. १६६. [1]) Thus corr. by $A_2$; $A_1$ °रक्षित्वा त्रिका°. १७०. [1]) Thus $A_2$; $A_1$ °न्विद्वेषितां. १७२. [1]) Thus $A_2$; $A_1$ दग्ध्वा ततो.—[2]) Thus $A_2$; $A_1$ संहृत्य. १७४. [1]) Thus corr. by $A_2$ from $A_1$ कृत्वा. १७५. [1]) $A_2$ gloss सिंहराजाय. १७६. [1]) Thus corr. by $A_2$ from $A_1$ शतमुखो° १७८. [1]) Thus $A_2$; $A_1$ श्रीभूमिस्वामिनो°. Cf. *Albêrûnî's Indica* ( trans. by Sachau ), ii. 13.

चन्द्रलेखाभिधां कन्यां राज्ञे[1] दत्तवताभवत् । फल्गुणद्वारपतिना समं दिद्दा समत्सरा ॥१७९॥
गुरुप्रदेशः क्रमशान्कुन्तविद्याभ्रमस्तथा । तस्य निर्वहणाद्गर्वाद्भूभुजो हास्यतां ययौ ॥१८०॥
अमोघपातमाम्नासीन्योग्यास्त्वपामकर्मसु । शृगालमृगयासक्त्या स हि श्लाघ्यानमन्यत ॥१८१॥
तं भूतं वागुरावाहिडोम्बाटविकपेटकैः । पर्यटन्तं श्वभिः सार्धमपश्यन्सततं जनाः ॥१८२॥
तस्य क्रमोदरारण्यलल्यानशिमिकादिषु । स्थानेषु क्रोष्टुमृगयारसिकस्य वयोगमत् ॥१८३॥
अथ कृष्णचतुर्दश्यां स कुर्वन्मृगयां नृपः । ज्वालामपश्यत्क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ॥१८४॥
तदालोकनसंजातसंत्रासाकम्पितस्तत[1]ः । लूतामयज्वरेणाभूत्परीतो मृत्युहेतुना ॥१८५॥
मर्तुं ययौ च वाराहक्षेत्रं यत्र विधायकः । श्रीकण्ठक्षेममठयोरासीद्धुष्कपुरान्तिके ॥१८६॥
मसूरविदलाकारलूताङ्कितकलेवरः । पौषे चाब्दे चतुस्त्रिंशे नवमेह्नि[1] सिते मृतः ॥१८७॥
क्षेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत्ततः । शिशुर्निस्त्रिंशधर्मिण्या दिद्दादेव्यानुपालितः ॥१८८॥
संधिविग्रहमुद्राद्यमुख्यकर्माधिकारिणः । निःसाध्वसं राजवधूमवन्ध्यशयनां व्यधुः ॥१८९॥
अभिमन्यौ क्षितिं रक्षत्यकस्मादेव दारुणः । तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः ॥१९०॥
वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः । वेतालसूत्रपातस्थान्स ददाह महागृहान् ॥१९१॥
डोम्बचण्डालसंसृष्टभूपसंपर्कदूषिताम् । दग्ध्वा महागृहान्वह्निर्भुवः शुद्धिमिवाकरोत् ॥१९२॥
रक्षिणी क्ष्मापतेर्माता स्त्रीस्वभावाद्विमूढधीः । सारासारविचारेण लोलकर्णी न पस्पृशे ॥१९३॥
राज्ञः प्रतापेणाद्बद्धवैरा तस्थौ पुरा यतः । पतिवत्न्येव[1] सा सार्धं फल्गुणेनाभ्यमन्त्रिणा ॥१९४॥
पत्न्यां[1] मृते सपत्नीनां दृष्ट्वानुमरणं[2] ततः । दम्भेनानुमुमूर्षन्तीमनुमेने स तां द्रुतम् ॥१९५॥
निषिषेधानुबन्धात्तु सानुतापां चितान्तिके । कृपालुर्मरणादेताममात्यो नरवाहनः ॥१९६॥
अतो निसर्गपिशुनो रक्तस्तां मन्युदूषिताम् । फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत् ॥१९७॥
चिराणशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयाम् । समन्युं साखिलामात्यां फल्गुणोप्यास्त शङ्कितः ॥१९८॥
स हि सर्वाधिकारस्थः सर्वस्याक्षिगतोभवत् । दीप्यमानोधिकं मन्त्रशौर्योत्साहादिभिर्गुणैः ॥१९९॥
अस्थीनि क्षेमगुप्तस्य गृहीत्वा जाह्नवीं गते । पुत्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः ॥२००॥
तत्समागमपर्यन्तं पर्णोत्से स्थातुमुद्यतः । अविश्वसन्नृपगृहे फल्गुणो वैरिशङ्कितः ॥२०१॥
निर्गत्य नगराद्यावत्सभाण्डागारिसैनिकः । काष्ठवाटान्तिकं प्राप[1] तावद्रक्कादिचोदिता ॥२०२॥
आकलय्य द्रुतं दिद्दा संत्यज्य प्रार्थनादिकम् । पृष्ठे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत् ॥२०३॥
तथापमानखिन्नः स मिलितानन्तसैनिकः । प्रत्यावृत्त्य ततो मानी वाराहं क्षेत्रमाययौ ॥२०४॥
श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनम् । आस्कन्दशङ्किनी दिद्दा सामात्या समकम्पत ॥२०५॥

१७९. [1]) Thus corr. by later hand from $A_1$ राज्ञी. १८०. [1]) Thus corr. by $A_3$ from $A_1$ °ग्नर्वाद्भू°. १८१. [1]) Thus corr. by $A_3$ from $A_1$ °प्रतिमाग्न्या°.—[2]) $A_3$ कुन्ताम्.—[3]) Thus corr. by $A_3$ from $A_1$ श्लाघ्याम°. १८३. [1]) Thus corr. by $A_3$ from $A_1$ °रविहदे°. १८५. [1]) Thus corr. by $A_3$ from $A_1$ °तास्थिति:. १८७. [1]) Thus corr. by $A_3$ from $A_1$ नवमेऽवे. १८९. [1]) Thus corr. by $A_3$ from $A_1$ °ग्निर्वाचि°. १९४. [1]) $A_4$ gloss समर्हैव सती. १९५. [1]) Thus corr. by $A_3$ from $A_1$ पत्न्यौ.—[2]) $A_1$ °मुसरणं. १९९. [1]) Thus $A_3$; $A_1$ सम्य°. २०२. [1]) Thus corr. by later hand from $A_1$ प्राप्य; $A_3$ gloss प्राप इत्यर्थः.

तस्मिन्क्षेत्रे गतं श्रान्तं विलम्ब्य स्वामिनं चिरम्[1] । वराहपादसंनिधे तेन शस्त्रं समर्पितम् ॥२०६॥
द्रोहसंभावनापापं शस्त्रत्यागेन मन्त्रिणा । स्वस्य संमार्जितं तेन राजमानुष साध्वसम् ॥२०७॥
युक्तायुक्तविचारवाममनसः सेवा महद्दैशसं कुद्धेस्मिन्प्रतिकारकर्म महतद्रोहापवादावहम् ।
येन न्यूनगुणेत्रशोपकरणीभावोपि तस्मै परं कोपः कोपि विवेकिनः समुचितः शस्त्राय शस्त्राय वा ॥२०८॥
पर्णोत्सस्थेव शनकैः ससैन्ये फल्गुणे गते । विनताध्यापका बाला इवामोदन्त मन्त्रिणः ॥२०९॥
योगक्षेमौ चिन्तयन्ती क्षेमगुप्तवधूरपि । अनिशं प्रजजागार स्वयं कण्टकपाटने ॥२१०॥
राज्यप्रार्थी पर्वगुप्तो मन्त्रिणी कोशपीथिनौ । आजिमहत्करी पूर्वं पुम्योर्यौ[1] क्रोजभूभटौ ॥२११॥
तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ । अवर्धिषातां यौ राजमन्दिरे राजपुत्रवत् ॥२१२॥
तौ तथावस्थितावेव तत्कालं राज्यलालसौ । संमन्त्र्य समगंसातामुग्रमैर्हिम्मकादिभिः[1] ॥२१३॥
बलिनौ तावबलया,राज्यापास्तौ नृपास्पदात् । समन्यू स्वगृहादास्तां यावत्कृतगतागतौ ॥२१४॥
एकतः पृष्ठतः प्रादान्महिम्नो निर्गतस्य सा । निर्वासनाय याष्टीकांस्तावत्प्रकटवैकृता ॥२१५॥
शक्तिसेनाभिधानस्य[1] श्वशुरस्य निवेशनम् । प्रविवेश स तज्ज्ञात्वा तं ते तथापि रुरुधुः ॥२१६॥
शक्तिसेनेन याष्टीकाः सान्त्विता नावलम्ब्यहा । तदा भीतस्य जामातुर्व्यर्थकं प्रादात्स संभवम् ॥२१७॥
तं[1] लब्धसंभवं प्राप हिम्मको मुकुलस्तथा । एरमन्तकनामा च परिहासपुराश्रयः ॥२१८॥
श्रीमानुदयगुप्ताख्योप्यमृताकरनन्दनः । ललितादित्यपुरजा यशोधरमुखा अपि ॥२१९॥
एकैके ते[1] मिथः सैन्यैर्भुवनक्षोभकारिणः । संभूय चक्रुर्हैराज्यं महिम्नः पक्षमाश्रिताः ॥२२०॥
तस्मिन्महाभये दिद्दापक्षं मन्त्री सदाश्रयः । एक एव तु तत्याज नाद्रोहो नरवाहनः ॥२२१॥
प्रवर्धमानपृतना योद्धुं बद्धोद्यमास्ततः । पद्मस्वाम्यन्तिकं प्रापुर्दीप्यमानायुधा द्विषः ॥२२२॥
अथ भूरमठे दिद्दा विसृज्यात्मजमाकुला । आपत्कान्तिक्षमांस्तांस्तानुपायान्समचिन्तयत् ॥२२३॥
ललितादित्यपुरजान्द्विजान्स्वर्णेन भूरिणा । तूर्णं स्वीकृत्य विदधे रिपूणां संघभेदनम् ॥२२४॥
एकात्सेपेखिलैः कोपो विधेय इति वादिभिः । महिम्नः पीतकोशैस्तैः संधिर्देव्या समं कृतः ॥२२५॥
गोष्पदोल्लङ्घने यस्याः शक्तिर्नाज्ञायि केनचित् । वायुपुत्रायितं पङ्क्त्या तया संघाब्धिलङ्घने ॥२२६॥
यत्संगमो रत्नमहौषधीनां करोति सर्वव्यसनावसानम् ।
त्यागेन तद्यस्य भवेन्नमोस्तु चित्रप्रभावाय धनाय तस्मै ॥२२७॥
उत्कोचकाञ्चनादानेप्सुर्धां ध्यायन्त्युपक्रियाम् । दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत्[1] ॥२२८॥
अभिचारं महिम्नश्च कृतवत्या मितैर्दिनैः । मण्डलेशण्डिताङ्गत्वं रुग्बाधा[1]ः समजृम्भत ॥२२९॥
कदाचित्थक्कनाख्यस्य शाहीशस्योपरि क्रुधा । सदा स्वयंत्राजैर्यां कम्पनाधिपतिर्ददौ ॥२३०॥
तदेव्यां निम्नगाशैलदुर्गे प्रविशता जवात् । अखण्डशक्तिना तेन बलादग्राहि थक्कनः ॥२३१॥

२०६. [1]) Corr. by later hand from A₁ सच. २११. [1]) Thus corr. by later hand from A₁ यौ. २१३. [1]) Emended; A R G °हिंमका°. २१६. [1]) Thus corr. by A₂ from A₁ शक्तिसेनाभि°. २१८. [1]) Thus corr. by A₂ from A₁ तैर्लब्ध°; A₂ gloss तं महिमानं. २२०. [1]) Thus A₂; A₁ एकैकं तं. २२०. [1]) Thus corr. by A₂ from A₁ नमोस्तु. २२८. [1]) Emended; A R G समर्पयत. २२९. [1]) Thus A₂; A₁ विराधाः. Cf. vi. 260. २३०. [1]) Thus corr. by A₁ from °चित्रकना°.

स कृतप्रणतेस्तस्य करमादाय भूपतेः । अभिषेकाम्बुभिश्चक्रे श्रीलताप्यायनं पुनः ॥२३२॥
लब्धप्रवेशै¹ः समये तस्मिन्नङ्गादिभिः खलैः । कम्पनाधिपती राज्ञ्या विद्वेषोग्राहि मूढया ॥२३३॥
सर्वोपतेश्च स्फटिकाश्मनश्च शीलोज्झितस्वीहृदयस्य चान्तः ।
असंनिधानात्सततस्थितीनामन्योपरागः कुरुते प्रवेशम् ॥२३४॥
स्वचित्तसंवादि वचो वदन्तो धूर्ता वितन्वन्ति मनःप्रवेशम् ।
पृथग्जनानां गणिकावधूनां विटाः प्रभूणामपि गर्भचेटाः ॥२३५॥
द्रोग्धायं चक्रिणं रक्षन्धमादायीति पैशुनम् । तथ्यमेव तदीयं सा स्वयंवादादमन्यत ॥२३६॥
अथ स्ववसतिं प्राप्ते कम्पनेशे जयोर्जिते । याष्टीकान्व्यसृजद्विद्वा स्फुटं निर्वासनोद्यता ॥२३७॥
तदाक्षेपं समाकर्ण्य स्मरन्तः कोशसंविदम् । ते हिम्मकैरमन्ताद्याः पूर्ववद्विक्रियां ययुः ॥२३८॥
नरवाहनमुख्यास्तु राज्ञीपक्षं न तत्यजुः । विभेद पूर्ववत्सापदेवं निजबलं पुनः ॥२३९॥
प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु । भट्टारकामठे दिद्दा भूयः पुत्रं व्यसर्जयत् ॥२४०॥
दत्तार्गले नृपगृहे स्थितां तां दैवमोहिताः । ते तदैव विना पुत्रं विमूढा नोदपाटयन् ॥२४१॥
राज्ञ्याः संजघटे लोकः परस्मिन्नेव वासरे । यद्बलेन तदा स्थैर्यं सा किंचित्समदर्शयत् ॥२४२॥
अथाभट्टारिकापार्श्वावस्थूरमठान्तिकम् । व्याप्य स्थितैर्द्विषत्सैन्यैरथ प्रववृते रणः ॥२४३॥
राजधानीं राजसैन्ये प्रविष्टे त्रासविद्रुते । सिंहद्वारे घटाबन्धमेकाङ्गाः समदर्शयन् ॥२४४॥
शरीरनिरपेक्षास्ते मीनं संस्तभ्य तद्बल । अधावन्विद्विषां सैन्यं चेलुः केचिच्च शत्रवः ॥२४५॥
तस्मिन्नवसरे राजकुलभट्टः समाययौ । तूर्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजम् ॥२४६॥
तस्मिन्प्राप्ते द्विषां सैन्यं विननाश विनश्वरम् । न द्रोहाविनयं जातु सहन्ते शस्त्रदेवताः ॥२४७॥
त्रोटयन्नायसान्बन्धान्स्फोटयन्नुपलानिति । यः ख्यातिमवहत्संध्यां हिम्मको भीमविक्रमः ॥२४८॥
तस्यासिना राजकुलभट्टदेहार्धपातिना । चर्ममात्रं न तुत्रोट कङ्कटस्यातिसंकटे ॥२४९॥
विलोक्य तदसंभाव्यं सैन्ये दैन्यं समाश्रिते । अघानि हिम्मको योधैरवाष्टम्भिं यशोधरः ॥२५०॥
तथाप्यासीत्स्फुरन्संख्ये य एरमन्तकः क्षणम् । स भग्नासिश्च्युतो वाहाज्जीवग्राहमगृह्यत ॥२५१॥
नाजौ तैरेष्यताधातुं यः श्रीमान्राजबान्धवः । जगामोदयगुप्तः स क्वापि त्यक्त्वा महाहवम् ॥२५२॥
इत्थं लब्धजया राज्ञी तत्क्षणाक्ष्यमहीभुजा । यशोधरं शुभधरं मुकुलं च सबान्धवम् ॥२५३॥
काश्मीरिकाणां यः श्राद्धशुल्कोच्छेत्ता गयान्तरे । सोप्येरमन्तकः शूरः परिहासपुराश्रयः ॥२५४॥
बद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः । स्वदुर्नयफलं देव्याः प्रकोपेनानुभावितः ॥२५५॥

२३२.¹) $A_2$ gloss श्रीः एव लता. २३३. ¹) Thus corr. by later hand from $A_1$ °वेश:; R G as above. २३४. ¹) Thus corr. by $A_2$ from $A_1$ °न्योन्यराग:. २३६. ¹) Thus $A_1$; $A_2$ स्वसंवादा°. २३८ ¹) $A_2$ gloss एकाक्षेपेलिखितैः कोपी विधेय इत्येवंरूपां. २३९. ¹) मुक्ता supplied by $A_2$ in space left by $A_1$. २४१. ¹) Thus corr. by $A_2$ from $A_1$ नोपपात°. २४५. ¹) Thus corr. by $A_2$ from $A_1$ अधावद्वि°.—²) The words from चेलुः to सैन्यं in the following verse are omitted by $A_1$ and supplied in margin by $A_2$. २४६. ¹) $A_2$ °न्निजान्. २४७. ¹) Thus $A_1$; $A_2$ G R विनेश्वरम्. २४८. ¹) Thus corr. by later hand from $A_1$ तोट°.—²) तिमवहत् supplied by $A_2$ in space left by $A_1$. २५०. ¹) Emended with C; A R G °रवष्टम्भि. २५१. ¹) Thus A; R G ऐर°. २५४. ¹) Thus corr. by $A_2$ from $A_1$ काश्मीरिका°.—²) Thus corr. by $A_2$ from $A_1$ °शुल्कोच्छेत्ता.—³) Thus corr. by $A_2$ from $A_1$ गमान्तरे.—⁴) Thus corr. by $A_2$ from $A_1$ °हार°.

ये समसमताह्वर्षीया गोपालनृपात्पुरा । अभिमन्युं यावदासन्नोजखानां महीभुजाम् ॥२५६॥
वर्षवर्द्धि ममापायुःभीरुरा प्रोरवृत्तयः । ते क्षिप्रं मन्त्रिणः सर्वे साम्यवाचाः महागुणाः ॥२५७॥
भीमभूभङ्गमात्रेण दिद्दादेव्या सकोपया । आसन्निःशेषतां नीता दुर्गयेव महासुराः ॥२५८॥ तिलकम् ॥
अथ धन्विहिता राज्ञ्या तानुत्पाद्य महोद्धतान् । रक्कादयः कम्पनादिकर्मस्थानाधिकारिणः ॥२५९॥
इत्थं मन्त्रिमकाण्डः स रण्डामाखण्डलोपमाम् । अखण्डमण्डलां चक्रे निर्द्रोहो नरवाहनः ॥२६०॥
राज्ञी कृतज्ञभावेन सापि मन्त्रिसभान्तरे । तमाजुहाव निर्द्रोहं स्वयं राजानकाख्यया ॥२६१॥
सुप्ते शुश्राव निष्पन्नभोजनेरिमभुक् सा । दृष्टे अहर्षं निर्विण्णे निर्विवेदानुकूल्यतः ॥२६२॥
आरोग्यान्वेषणे शिक्षाप्रार्थनां गृहवर्तिनः । साम्यवस्तुविसर्गे च नाकृत्वा तस्य पिपिवे ॥२६३॥
अभूतां मुग्धवाहस्य कुट्यनाम्नः सुतौ पुरा । यौ सिन्धुभुय्यौ तज्ज्यायान्सिन्धुर्लोलितकः किल ॥२६४॥
पर्वगुप्तगृहे भूत्वा गञ्जाध्यक्षे स्थिते[1] क्रमात् । लब्ध्वा गञ्जाधिकारित्वं तस्या राज्ञ्याः धर्मैरभूत् ॥२६५॥
स्था तथैव गञ्जेशो नवायासविधायकः[1] । कर्मस्थानस्य निर्माता सिन्धुगञ्जाभिधस्य यः ॥२६६॥
प्रायशो हृतराज्यस्ते वर्तते नरवाहनः । इति नेयधियं राज्ञीं सोऽभ्यधत्त दुराशयः ॥२६७॥
सा तथेत्यब्रवीद्यावत्तावत्प्रेम्णा स जातुचित् । मन्त्री तां प्रार्थयामास भोक्तुं निजगृहागमम् ॥२६८॥
सा सानुगां तत्र यातां ध्रुवं स्वामेव भन्त्स्यति[1] । इत्युक्ता सिन्धुनापृच्छत्तत्कर्तव्यं भयाकुला ॥२६९॥
अनुक्त्वैव प्रचलिता राजधानीमलक्षिता । स्त्रीधर्मिण्यस्मि जातेति पश्चाद्वार्तां व्यसर्जयत् ॥२७०॥
संप्रवृत्तोपचारायां गतायां तत्पथास्तथा । राज्ञ्यां नाशममात्यस्य प्रीतिः संविश सा ययौ ॥२७१॥
तयोस्ततः प्रभृत्येव निष्कृष्टस्नेहयोः कृतम् । चाक्रिकैरतिरूक्षत्वं तिलपिण्याकयोरिव ॥२७२॥
कुलिशं सर्वलोहानामश्मनां शैलसेतवः । अभेद्याः प्रतिभान्त्येते न किंचिदसतां पुनः ॥२७३॥
ये बालादपि संभूताः प्राज्ञाः सुरगुरोरपि । तेषां न विद्यः के[1] तावन्निर्माणपरमाणवः ॥२७४॥
विश्वासोज्झितधीः शिशून्कलयते काकोऽन्यदीयान्निजान्हंसः क्षीरपयोविभागकुशलस्त्वस्त्यस्वाराद्गुणात् ।
लोकावेक्षणतीक्ष्णधीः खलगिरं जानाति सत्यां नृपो धिग्वैदग्ध्यविमुग्धताव्यतिकरस्पृष्टं विधानं विधेः ॥२७५॥
मूढा चरणहीना सा श्रुतिबाह्यतया तया । वैधेयविप्रप्रकृतिरिव प्रायाद्विगर्ह्यताम् ॥२७६॥
उद्वेजितस्तया शश्वत्तथा स नरवाहनः । यथा विमाननोत्पन्नः स्वयं तत्याज जीवितम् ॥२७७॥
प्रकुप्यत्यप्रतीकार्ये स्वतेजस्तप्तचेतसाम् । शरणं मरणं त्यक्त्वा किमिवान्यद्यशोर्थिनाम् ॥२७८॥
शशिहीनेव रजनी सत्यत्यक्तेव भारती । विरराज न राजश्रीर्नरवाहनवर्जिता ॥२७९॥
सा शौर्याभ्यासविषमा हन्तुं विततविक्रमान् । संग्रामडामरमुखान्समीपस्थानचिन्तयत् ॥२८०॥
निजमुत्तरघोषं ते तद्भयेन विनिर्गताः । कच्यकह्लारपल्यादीन्कृतारब्धीन्व्यपादयन् ॥२८१॥
क्षपितज्ञभीतया राज्ञ्या त्यक्त्वा परिभवत्रपाम् । ते चक्रास्संमयन्त मानः स्वार्थार्थिनां कुतः ॥२८२॥

२६५. 1) $A_2$ gloss गञ्जो सुराकृहे राज्ञा भण्डागारे धुनाथवैति कोशः.—2) Thus A R G; perhaps, to be emended with G *sec. manu* गञ्जाध्यक्षस्तत क्रमात्. २६६. 1) Thus emended according to conjectural reading (*sec. manu*) in G; A R G (*prima manu*) नवायासवि°. २६९. 1) Emended; $A_1$ बंस्स्यति; G P बस्स्यति; R भस्स्यंति; C बस्स्यति. २७०. 1) $A_2$ °नुक्त्वैव°.—2) $A_2$ तत्पथास्तथा. २७४. 1) Thus $A_2$; $A_1$ किन्ताव°.

स्थानेश्वरादिभिर्मुख्यैर्डामरैरितरैः समम् । ते भीताः पुरतस्तस्याः पुनरेत्य जजृम्भिरे ॥२८३॥
अथ तद्भीतया राज्ञ्या रङ्गे प्रमयमागते । आनीतः फल्गुणो भूयो वीरार्थिन्या निजान्तिकम् ॥२८४॥
राजकार्याणि कुर्वाणः स भूयः शस्त्रमग्रहीत् । न्यस्तशस्त्रोपि यस्तस्यं दुस्त्यजा भोगवासना ॥२८५॥
महिमा राजपुर्यादिजयिनस्तस्य पश्चिमः । अद्भुतो वृद्धबन्धक्या अवदद्ध इवाभवत् ॥२८६॥
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः । यः सहायोक्षपटले जयगुप्ताभिधः कुधीः ॥२८७॥
अन्येधिकारिणस्तेन सहिताः क्रूरवृत्तयः । कश्मीरेषु व्यधुर्लुण्ठिं दुष्कृतैस्तदुपार्जितैः ॥२८८॥
दौःशील्यभाजो मातुश्च पाप्मभिर्विधुरीकृतः । अभिमन्युः क्षणे तस्मिन्क्षयरोगेण पस्पृशे ॥२८९॥
पण्डितः पुण्डरीकाक्षो विद्वत्पुत्रैरुपस्कृतः । कृतश्रुतः स वैदुष्यतारुण्याभ्यां विदिद्युते ॥२९०॥
तथा विशुद्धप्रकृतेस्तस्य दुष्कृतसंगमः । शोषाधायी शिरीषस्य रविताप इवाभवत् ॥२९१॥
अर्धमानः[1] प्रजाचन्द्रस्तृतीयस्यां स कार्तिके । शुक्लेष्टचत्वारिंशाब्दे ग्रस्तो नियतिराहुणा ॥२९२॥
तत्पुत्रो नन्दिगुप्तस्तु बालश्चक्रे निजासने । वृद्धस्तनयशोकस्तु दिद्दाया हृदये पदम् ॥२९३॥
सा शोकपिहितक्रौर्या तस्थौ प्रशमशीतला । रविरश्मिशलाकेव ध्वान्तच्छन्नोष्मवैकृता ॥२९४॥
ततः प्रभृत्यनुगताभिस्तस्या धर्मप्रवृत्तिभिः । कुकर्मभिरुपोढापि लक्ष्मीः प्राप्ता पवित्रताम् ॥२९५॥
नगराधिपतिर्भुय्यः सिन्धुभ्राता शुभाशयः । तदीयधर्मचर्यायां बभूव परिपोषकः ॥२९६॥
सा तेनोत्पादितानल्पजनरागा गतैनसा । ततः प्रभृत्यभूद्देवी सर्वलोकस्य संमता ॥२९७॥
राज्ञः स सचिवः सत्यं दुष्प्रापो लुप्तचण्डिमा । कुर्याद्यः सुखसेव्यत्वं हेमन्त इव भास्वतः ॥२९८॥
सा निर्मात्री विपन्नस्य सूनोः सुकृतवृद्धये । अभिमन्युस्वामिनोभूदभिमन्युपुरस्य च ॥२९९॥
अथ दिद्दापुरोपेतो दिद्दास्वामी तया कृतः । मठश्च मध्यदेशीयलाटशौडोत्र[1]संभवः ॥३००॥
भर्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये । चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी ॥३०१॥
श्वेतशैलमयं चान्यं सा दिद्दास्वामिनं व्यधात् । धवलं धरणीभूतगङ्गाम्भःप्लवनैरिव ॥३०२॥
चक्रे काश्मीरिकाणां च दैशिकानां समाश्रयः[1] । तयात्युच्चचतुःशालो विहारश्चारुसंपदा ॥३०३॥
श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः । मठं च विदधे स्थित्यै[1] दैशिकानां द्विजन्मनाम् ॥३०४॥
मठप्रतिष्ठावैकुण्ठनिर्माणाद्यैः स्वकर्मभिः । तयातिपावनश्चक्रे वितस्तासिन्धुसंगमः ॥३०५॥
तेषु तेषु प्रदेशेषु किमुच्चैर्भूरिभिः शुभैः[1] । सा प्रतिष्ठा व्यरचयच्चतुःषष्टिमिति श्रुतिः ॥ ३०६॥
जीर्णोद्धारकृता देव्या प्लुष्टप्राकारमण्डलाः । प्रायः सुरगृहाः सर्वे शिलावप्रावृताः कृताः ॥३०७॥
क्रीडाचङ्क्रमणे राज्ञ्याः पङ्गुं विमद्यवाहिनी । वल्गाभिधा वैवधिकी वल्गामठमकारयत् ॥३०८॥
तीर्थासेवनमौनभागपि तिमिः सक्तः स्वकुल्याशने बालाशान्ग्रसते शिखी घनपयोमात्राशनोप्यन्वहम् ।
विश्वस्ताञ्जलचारिणः प्रकटितध्यानोपि भुङ्क्ते बकः सत्कर्माचरणेपि दोषविकृतौ[1] न प्रत्ययः पापिनाम् ॥३०९॥
चर्पणी[1] वर्षमात्रेण शान्तशोका बभूव सा । भोगोत्सुकार्भके तस्मिन्नमारि व्यभिचारकृत् ॥३१०॥

२९२. [1]) Thus A R G; Edd. वर्धमानः, found also *sec. manu* in R G. A₂ gloss अर्धपक्षाः [illegible]. ३००. [1]) Thus A R G. ३०३. [1]) Thus corr. by A₂ from A₁ जनाश्र°. ३०४. [1]) स्थित्यै omitted by A₁ and supplied in margin by A₂. ३०६. [1]) Thus A₂; A₁ श्रुताः. ३०९. [1]) Thus A₁; A₂ °विरतौ. ३१०. [1]) A₂ gloss चर्पणी असती इत्यर्थः.

वर्षे एकान्नपञ्चाशे[1] नीतः पक्षे सिते क्षयम् । स मार्गशीर्षद्वादश्याममार्गेणमया तथा ॥३११॥
पौत्रस्त्रिभुवनो नाम मार्गशीर्षे[1] सितेऽहनि । पञ्चमेप्येकपञ्चाशे वर्षे तद्वत्तया हतः ॥३१२॥
अथ मृत्युपथे राज्यनाम्नि स्वैरं निवेशितः । क्रूरया परमः पौत्रो भीमगुप्ताभिधस्तया ॥३१३॥
तस्मिन्नवसरे वृद्धः फल्गुणोपि व्यपद्यत । निगूढक्रौर्यदौःशील्या दिद्दा यत्तीरवादभूत् ॥३१४॥
बभूव सार्धं[1] श्लथपटदुष्टचेष्टाशतोत्कटा । अहवक्रपटा मत्तदन्तिमूर्तिरिवोत्कटा ॥३१५॥
महाभिजनजातानामपि हा धिङ्निसर्गतः । सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी ॥३१६॥
स्रोतोधिराज्यमधिगम्य विराजमानात्सिन्धोः प्रसूय कमलाल्पपयोनिकेते ।
जाते सरस्यविरतं जलजे प्रसक्ता नार्यो महाभिजनजा अपि नीचभोग्याः ॥३१७॥
खशस्य बहिवासाख्यपर्णोत्सग्रामजन्मनः । बाणस्य तनुस्तुङ्गाख्यो[1] विशम्भमहिषपालकः ॥३१८॥
प्रविष्टो जातु कश्मीरां[1]ल्लेखहारककर्मणा । सुगन्धिसीहमकटनागाह्वयिक्रषण्मुखैः ॥३१९॥
पञ्चभिर्भ्रातृभिः सार्धं सान्धि[1]विग्रहिकान्तिके[2] । देव्या दृग्गोचरं यातो हृदयावर्जकोभवत् ॥३२०॥ तिलकम् ॥
रहःप्रवेशितो दूत्या स भाव्यर्थबलायुषा । संभुक्तभूरिजाराया अपि तस्याः प्रियोभवत् ॥३२१॥
तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः । रसदानेन वैमुख्यभाजं भुट्यमघातयत् ॥३२२॥
धिग्निर्विचारान्कुपतीन्येषां विषमचेतसाम् । फलभून्या स्तुतिस्तोषे दोषे प्राणधनक्षयः ॥३२३॥
रङ्गजो देवकलशो वेलावित्तः कृतस्तया । भुट्याधिकारे कौटुम्ब्यमाचरन्निजपो विटः ॥३२४॥
येपि कर्दमराजाद्या वीरा द्वारादिनायकाः । तेपि कौटुम्ब्य[1]मभजन्नन्येषां गणनैव का ॥३२५॥
चतुष्पञ्चानि वर्षाणि तिष्ठन्नृपगृहे शिशुः । भीमगुप्तोभवद्यावत्किंचित्प्रौढीभवन्मतिः ॥३२६॥
राज्यव्यवस्था यावच्च पितामह्याश्च वृत्तयः । दुःस्थिताः प्रत्यभासन्त संस्थाप्यास्तस्य चेतसि ॥३२७॥
अङ्गशीलविहीनाया निर्घृणाया निसर्गतः । तावत्तेषधियस्तस्याः स चिन्त्यः समपद्यत ॥३२८॥
अभिमन्युवधूस्तं[1] हि चक्रे गूढप्रवेशितम् । महाभिजनजं पुत्रं तस्मात्सोभूत्तथाविधः ॥३२९॥
सा देवकलशेनाथ दत्तमन्त्रा विशङ्किता । त्रपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत् ॥३३०॥
निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योभवत् । संदेहः स तदा तेन व्यक्तकृत्येन वारितः ॥३३१॥
ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा । षट्पञ्चाशेभवद्वर्षे स्वयं क्रान्तनृपासना ॥३३२॥
प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने । सर्वाधिकारी तुङ्गोथ बभूवाधरि[1]ताखिलः ॥३३३॥
सभ्रातृकेन तुङ्गेन मीलिताः पूर्वमन्त्रिणः । राज्यविप्लवमाधातुमयतन्त विरागिणः ॥३३४॥
तेथ संमन्त्र्य कश्मीरानानिन्युः क्रूरपौरुषम् । उग्रं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपम् ॥३३५॥
मुख्यामहारान्स प्राप्तो विधातुं राज्यविप्लवम् । धीमान्प्रायोपवेशाय[1] द्रुतं प्रावेशयद्द्विजान्[2] ॥३३६॥
विहितैक्येषु विप्रेषु लोकः सर्वोपि विप्लुतः । अन्वियेषान्वहं तुङ्गं तत्र तत्र जिघांसया ॥३३७॥

३११. [1]) Thus $A_1$; $A_2$ एकोनप°. ३१२. [1]) Thus corr. by later hand from $A_1$ मार्गशीर्षे. ३१५. [1]) बभूव सार्ध supplied by $A_2$ in space left by $A_1$. ३१८. [1]) $A_4$ gloss बोहोल् नाम:. ३१९. [1]) ल्ल supplied by $A_3$ in space left by $A_1$. ३२०. [1]) Corr. by $A_3$ from $A_1$ सन्धि°.—[2]) Thus $A_1$; $A_2$ °कान्तरे. ३२५. [1]) Thus corr. by $A_3$ from $A_1$ कौटिल्य°. ३२९. [1]) Thus corr. by $A_3$ from $A_1$ अभिमन्यव°. ३३३. [1]) धरि supplied by $A_3$ in space left by $A_1$. ३३६. [1]) $A_3$ gloss प्राय· भोजनत्यागः.—[2]) Thus $A_1$; $A_2$ प्रावीजयद्वि°.

कस्मिंश्चित्पिहितद्वारे तुङ्गं प्रच्छाद्य वेश्मनि । दिनानि कतिचिद्दिद्दा तस्थावास्कन्दशङ्किनी ॥३३८॥
तया स्वर्णप्रदानेन सुमनोमन्तकादयः । ब्राह्मणाः समगृह्यन्त ततः प्रायो न्यवर्तत ॥३३९॥
एवं तस्मिन्महाक्षेपे तया दानेन वारिते । ययौ विग्रहराजः स भग्नशक्तिर्यथागतम् ॥३४०॥
अथ दार्ढ्यं समासाद्य तुङ्गाद्याः प्रभविष्णवः । शनैः कर्दमराजादीञ्जघ्नुर्विहितविप्लवान् ॥३४१॥
सुलक्कणो रक्कसूनुस्तथान्ये भुक्तमन्त्रिणः । दुष्टैर्निर्वासिता देशात्तुष्टैस्तैः संप्रवेशिताः ॥३४२॥
प्रवर्धमानवैरेण गूढदूतैर्विसर्जितैः । प्रायं विग्रहराजेन ब्राह्मणाः कारिताः पुनः ॥३४३॥
उत्कोचादित्सया विप्रा भूयः प्रायविधायिनः । लब्धस्थैर्येण तुङ्गेन संनिपत्यापहस्तिताः ॥३४४॥
तेषां मध्ये वसन्गूढमादित्याख्यः पलायितः । हतो विग्रहराजस्य प्रियः कटकवारिकः ॥३४५॥
शस्त्रक्षतः प्रतीहारो वत्सराजाभिधः पुनः । न्यक्कोलकादिभिर्धावञ्जीवग्राहमगृह्यत ॥३४६॥
ते स्वर्णग्राहिणो विप्राः सुमनोमन्तकादयः । सर्वेऽपि बद्धास्तुङ्गेन कारागारं प्रवेशिताः ॥३४७॥
अथ फल्गुणनाशेन दृप्ते राजपुरीपतौ । तां प्रत्यारब्धिरभवत्कुप्यतां सर्वमन्त्रिणाम् ॥३४८॥
निपत्य संकटे वीरः पृथ्वीपालाभिधस्ततः । चक्रे राजपुरीराजः काश्मीरिकाबलक्षयम् ॥३४९॥
शिपाटको हंसराजो विपन्नौ तत्र मन्त्रिणौ । चन्द्राद्यैर्दुर्गतिर्दृष्टा[1] मरणं यत्र भेषजम्[2] ॥३५०॥
अथान्येन पथाकस्मात्तुङ्गः सार्धं सहोदरैः । कृत्वा राजपुरीं वीरः प्रविश्य सहसादहत् ॥३५१॥
प्रमाद्य तेनोपायेन पृथ्वीपालः स पार्थिवः । शेषाणां मन्त्रिणां सैन्यं प्राप मुक्तिं च संकटात् ॥३५२॥
अबलः सन्स भूपालस्तुङ्गाय प्रददौ करम् । एवं कृतं तदा तेन नष्टस्यार्थस्य[1] योजनम् ॥३५३॥
प्रविश्य नगरं तुङ्गस्ततः स्वीकृतकम्पनः । चकार डामरग्रामसंहारं सिंहविक्रमः ॥३५४॥
दिद्दाप्युदयराजस्य भ्रातुः पुत्रं परीक्षितम् । चक्रे संग्रामराजाख्यं युवराजमशङ्किता ॥३५५॥
सा हि सर्वाञ्शिशुप्रायान्पुरो भ्रातृसुतान्स्थितान् । परीक्षितुं मुमोचाग्रे पालेवतफलावलिम् ॥३५६॥
प्राप्यः कियन्ति कः प्राप्तुं फलान्यत्रेतिवादिनी । साभवद्राजपुत्राणां तेषां कलहकारणम् ॥३५७॥
गृहीताल्पफलांस्तत्र प्रहारांस्तान्ददर्श च । संग्रामराजं[1] त्वस्वल्पफलभाजमविक्षतम् ॥३५८॥
अनन्तफलसंप्राप्तावक्षतत्वे च कारणम् । सविस्मयं तया पृष्टः स तामेवं तदाब्रवीत् ॥३५९॥
अन्योन्यकलहव्यग्रानेतान्कृत्वा पृथगवसम् । समवापं फलान्यस्मिन्न चाभूवं परिक्षतः ॥३६०॥
व्यसनं संप्रवेश्यान्यान्स्थितानामप्रमादिनाम्[1] । न काः क्लेशविहीनानां[2] घटन्ते स्वार्थसिद्धयः ॥३६१॥
श्रुत्वेति तस्य सा वाक्यमप्रमत्तत्ववृत्तिकाम् । भीरुर्नारीस्वभावेन राज्येऽमन्यत योग्यताम् ॥३६२॥
शूरस्य लभ्यं शौर्येण भीरोर्भीरुतया यथा । कार्यं हि प्रतिभात्यन्तर्न भवेच्च तदन्यथा ॥३६३॥
काष्ठं वह्न्युज्झितमपि भवेच्छीतशान्त्यै कपीनां लोध्रं भुङ्क्ते सलिलमनलश्चाभि[1]शौचैणकानाम् ।
जन्तोर्भावा विदधति यथा भाविनः[2] कार्यसिद्धिं तत्त्वं तेषां क्वचन सहजं वस्तुनो नास्ति किंचित् ॥३६४॥

३५०. [1]) Thus $A_2$; $A_1$ °दुर्गतिं दृष्टा.—[2]) Thus corr. by later hand from $A_1$ मैष°. ३५३. [1]) नष्टस्या supplied by $A_2$ in space left by $A_1$. ३५८. [1]) राजं omitted by $A_1$ and supplied by $A_2$. ३६१. [1]) Thus corr. by $A_2$; $A_1$ व्यसने संप्रविश्या°.—[2]) Thus corr. by $A_2$ from $A_1$ °विहीनां. ३६४. [1]) $A_2$ gloss अभिशौचा मृगा अभिमभन्ति विषमुपक्राः विषं च न विपद्यन्ते जीविता - - - - -. [2]) $A_2$ यथाभावन.

तस्यामेकाद्यशीत्यब्दभुक्भाद्राष्टमीदिने । देव्यां दिवं प्रयातायां युवराजोऽभवन्नृपः ॥३६५॥ 365
स्त्रीसंबन्धेन भूपालवश्यानां भुवनाद्भुतः । तृतीयः परिवर्तोऽयं वर्ततेऽमुत्र मण्डले ॥३६६॥
निर्नष्टकण्टककुले बद्धसंपदाढ्ये श्रीसातवाहकुलमाप महीतलेऽस्मिन् ।
दावाग्निदग्धकुतरौ जलदाम्बुसिक्ते चूतप्ररोह इव केलिवने प्रवृद्धिम् ॥३६७॥
अथ स मृदुनयान्तर्गूढधैर्यानुभावः सुखमवनिमशेषां दोष्णि संग्रामराजः ।
बिसकुलनिभशोभानिह्नुतप्राणसारः फणकुलं उरगाणामीशितेव न्यधत्त ॥३६८॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां षष्ठस्तरङ्गः[2] ॥
अत्र वर्षचतुःषष्टौ मासेष्वर्धे दिनेषु च । अष्टस्वभूवन्भूपाला दश भूभोगभोगिनः[3] ॥

---

३६६. [1]) Thus corr. by later hand from $A_1$ °वंश्या°. ३६७. [1]) Thus corr. by $A_2$ from $A_1$ निष्पवाक°.—[2]) Thus corr. by $A_2$ from $A_1$ सालवा°; R G as above.—[3]) $A_2$ प्रवृद्धिम्. ३६८. [1]) Thus corr. by $A_2$ from $A_1$ फलकुल. *Colophon.* [1]) $A_2$ inserts here the note: रा० १० पं ३६९ ॥ व्यासिद्ध: रा० ११ प्रथ्य: २६६६ ॥. —[2]) $A_1$ adds here: लिखितमेव राजानकरत्नकण्ठेन.—[3]) $A_2$ भाविनः.

## ॥ सप्तमस्तरङ्गः ॥

मातुस्ते जनि निर्मले[1] पितृकुले श्लाघ्या तनुर्वेधसा त्वं संध्याहितसंनिधिर्मम जपारक्तेऽधरे खेलसि । संध्यावन्दनसाभ्यसूयगिरिजास्तुत्येव शीर्वाकलैर्यः संध्यामपि वन्दते स्म स जगत्प्रीणातु गौरीश्वरः ॥ १॥
क्ष्मां[1] क्ष्मापतिर्बिभ्रन्मनसा च भुजेन च । गाम्भीर्येण च शक्त्या च सोऽजयद्वाहिनीपतीन्[2] ॥२॥
जज्ञे राज्ञीक्षये भङ्गो यैस्तुङ्गस्य तदाखिलैः । दिनश्रीविगमे संध्याप्रसङ्गस्येव रागिणः ॥३॥
तत्प्रतिभटाटोपस्फोटनात्प्रत्युतास्य तैः । उदयो ददृशे शश्वद्गतिं को वेत्ति वेधसः ॥४॥ युग्मम् ॥
नृपेण जातशालेयः शूरः शक्तिसमन्वितः । सर्वाधिकारयोग्यो[1]गास्तदा चन्द्राकरः क्षयम् ॥५॥
अन्ये भीमतिकाग्रामदिविरस्योरुसंपदः । पुण्याकरस्य तनयाः शूराः शान्तिं प्रपेदिरे ॥६॥
समर्थमन्त्रिविरहादनिच्छन्नपि वेधसा । निन्ये गत्यन्तरत्यक्तस्तुङ्गपक्षं क्ष्मापतिः ॥७॥
संग्रामराजतुङ्गादीन्देवी कोशमपाययत्[1] । मुमूर्षन्ती पुरा स्थातुमग्रेऽहंगेनरेतरम् ॥८॥
क्लेशासहो महीपालस्ततः कार्यवशादपि । तुङ्गन्यस्तप्रजाकार्यो भोगाभ्यसालसोऽभवत् ॥९॥
पर्याप्तं तस्य भीरुत्वं कियदन्यत्प्रकाश्यताम् । असमैर्यौनसंबन्धैश्चक्षमे यशसः क्षतिम् ॥१०॥
साहायकार्थी यस्मादाच्छीशीर्योदिमते सुताम् । दिद्दामठाधिपतये प्रेमनाम्ने स लोठिकाम् ॥११॥
क्व लोकोद्वहनोऽसद्भूभृद्योग्या नृपात्मजा । प्रतिग्रहजलक्लिन्नपाणिः क्वाल्पमना द्विजः ॥१२॥
अथ तुङ्गादिभङ्गाय प्रायं ब्राह्मणमन्त्रिणः । परिहासपुरे विप्रपारिषद्यानकारयन् ॥१३॥
विप्रमन्त्रिमतैक्येन कृतो राज्ञः स विप्लवः । दुःसहः पवमानाग्निसमागमसमोऽभवत् ॥१४॥
राज्ञोऽप्युत्पाटने सज्जैः कथंचित्प्रार्थितो[1] द्विजैः । मतिः क्षान्तिचरुप्रायै[2] तुङ्गनिःसारणे कृता ॥१५॥
राज्ञा[1] तुङ्गादिभिश्चैतद्यावत्तेभ्यः प्रतिश्रुतम् । अन्यत्प्रार्थयितुं लग्नास्तावत्ते शठबुद्धयः ॥१६॥
तुङ्गास्कन्देन विप्रोऽयं[1] यो मृतस्तद्गृहे[2] वयम् । तं निर्दहाम इत्युक्त्वा शवः कोऽप्यरघट्टतः ॥१७॥
तैरुद्धृत्य यदानीतः शठैस्तुङ्गगृहान्प्रति । केशहोमाद्य विहिताद्या कृत्योन्थापिताभवत् ॥१८॥
तया प्रतीपपातिन्या निःशौचानां द्विजन्मनाम् । अकस्माच्चिरगाच्छस्त्रं विनाशायोत्थिते कलौ ॥१९॥ तिलकम् ॥
ततः पलायिता विप्रा यस्तेषां मन्त्रदोऽभवत् । निगूढं राजकलत्रास्तद्वेश्म प्राविशन्भयात् ॥२०॥
स व्यक्तीभूतकौटिल्यः संग्रामं सुचिरं व्यधात् । अपद्वारैस्तु ते विप्राः पलाय्य स्वगृहान्ययुः ॥२१॥

---

१. [1]) $A_3$ निर्मिते. २. [1]) $A_3$ gloss भुवं क्षान्ति च.—[2]) $A_3$ gloss सेनापतीन् समुद्रांश्च. ५. [1]) गा supplied by $A_2$. ८. [1]) $A_3$ gloss कोशं । दिव्यं । अपाययत् अकारयत् । पीतकोशान् कृतवती इत्यर्थः. १५. [1]) Thus corr. by $A_3$ from $A_1$ प्रार्थितो.—[2]) $A_3$ °प्रायैस्तु°. १६. [1]) Thus corr. by $A_3$ from $A_1$ राज्ञस्तु°.—[2]) $A_3$ gloss निःसारणं. १७. [1]) यं supplied by $A_2$.—[2]) $A_4$ gloss तुङ्गगृहे.

विजिते राजकलशे समकार्या द्विजातयः । मन्त्रिणः श्रीधरसुताः समागत्य व्यधुर्मृधम् ॥२२॥
ते कृत्वा सुमहत्कर्म समाप्तिं समरे गताः । निर्भिद्य मण्डलं सप्त सप्तसप्तेर्द्रुतं ययुः ॥२३॥
जितः सुगन्धिसीहेन तेषु शान्तेषु संयुगे । बद्ध्वाथ राजकलशस्तुङ्गेनानायितो गृहम् ॥२४॥
नीयमानोधिरोप्याशु स्कन्धं मार्गेषु विक्षतः । तुङ्गस्य युग्यवाहैः स नर्तितोपहतायुधः ॥२५॥
अन्योपि भूतिकलशो नाम मन्त्री विनिर्जितः । सुतेन राजकाख्येन सह भूरमठं ययौ ॥२६॥
क्रमात्सुगन्धिसीहाद्यैर्मुक्तः करुणया ततः । सपुत्रः सोवमानाभितप्तो देशान्तरं ययौ ॥२७॥
परिहासपुरादेवं जातो यो देशविप्लवः । स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत् ॥२८॥
ततः प्रसादिते राज्ञि गुणदेवेन मन्त्रिणा । आययौ भूतिकलशः कृतगङ्गानिमज्जनः ॥२९॥
पुनर्नृपगृहे तस्मिन्किंचिल्लब्धपदे शनैः । तुङ्गं निहन्तुं राज्ञैनं गूढं दूताः प्रयोजिताः ॥३०॥
ज्ञातवार्तेन तुङ्गेन तस्मिन्नर्थे प्रकाशिते । सपुत्रो भूतिकलशो राज्ञा निर्वासितः पुनः ॥३१॥
अवष्टम्भं मनाग्लेभे चन्द्राकरसुतः शनैः । यो मध्यामन्तकः सोपि तस्मिन्काले व्यपद्यत ॥३२॥
भूत्वा किंचित्क्षणं भूभृत्कन्यासंभोगभाजनम् । राजोपकारकृच्छ्रीमान्प्रेमापि प्रमयं ययौ ॥३३॥
त्रिचैर्दिनैरन्ये गङ्गायाः सर्वेपि नृपतिप्रियाः । अवाशिष्यत भोगाय तुङ्गः सभ्रातृकः परम् ॥३४॥
इति यो यो हि वृत्तान्तस्तस्य नाशाय शङ्कितः । स स दैवानुकूल्येन प्रत्युतोद्रेचकोभवत् ॥३५॥
कालक्रमत्रुटितसंभ्रमभुः स्वमूलमात्राश्रयी तटतरुः सरितोम्बुपूरैः ।
यैः शङ्क्यते निपततीति विशीर्णमृद्भिस्तैरेव तस्य हि भवेत्स्थितिभूमिदार्ढ्यम् ॥३६॥
नीत्युज्ज्वलं व्यवहरन्प्रजाराधनतत्परः । प्राक्पुण्यसंक्षयात्तुङ्गः शनैस्त्वासीत्स्खलन्मतिः ॥३७॥
यत्स्वभाग्यापहाराय हीनजन्मानमाददे । साहायकाय कायस्थं क्षुद्रं भद्रेश्वराभिधम् ॥३८॥
विड्वाणिज्यं सौनिकत्वं काष्ठविक्रयितादि च । आरामिकस्य यस्यासीत्कृत्यं वंशक्रमोचितम् ॥३९॥
कम्बलोद्घृष्टपृष्ठोथ भोजनार्थमवालगत् । भस्त्रामषीभाण्डवाही यश्च पश्चान्नियोगिनाम् ॥४०॥
अनन्तराजकार्यादिचिन्ताश्रान्तो विधाय तम् । तुङ्गः सहायं नाबुद्ध संसर्गाद्भाग्यसंक्षयम् ॥४१॥
धार्मिकं तेन धर्मार्कं विनिवार्यार्यचेतसम् । गृहकृत्याधिकारे[1] स दुष्कृती विनिवेशितः ॥४२॥
देवगोब्राह्मणानाथातिथिराजोपजीविनाम् । अकालमृत्युर्विदधे वृत्तिच्छेदं स दुर्मतिः ॥४३॥
शस्त्राजीवोपि पुष्णाति क्रूरः कापालिको निजान् । भद्रेश्वरस्तु पापोभूद्द्विजानामपि जीवहृत् ॥४४॥
तुङ्गेन चैत्रे सर्वत्र कृते भद्रेश्वरे प्रभौ । सुगन्धिसीहः प्रययावाषाढे मासि संक्षयम् ॥४५॥
परलोकं गते तस्मिन्सर्वभारसहेनुजे । तुङ्गश्छिद्रोत्समाकृत्स्नं सदैन्योमन्यतात्मनः ॥४६॥
श्रीत्रिलोचनपालस्य शाहेः साहायकार्थिनः[1] । देशं ततो मार्गशीर्षे मासि तं[2] व्यसृजन्नृपः ॥४७॥
राजपुत्रमहामात्यसामन्तादिनिरन्तरम् । सैन्यं तमन्वगाद्भूरि भुवनक्षोभनक्षमम् ॥४८॥

---

२५. [1]) $A_4$ gloss तुङ्गानुगैः. ३५. [1]) $A_3$ gloss वृद्धिकरः. ३७. [1]) Thus emended with C; A R G °सीदृस्खल°. ३९. [1]) $A_2$ gloss सौमयाविक्रयित्वं.—[2]) Thus corr. by $A_3$ from $A_1$ °क्रयिकादि. ४०. [1]) The first half of this verse has been omitted by $A_1$ and supplied by $A_3$ in margin. ४२. [1]) Thus corr. by $A_3$ from $A_1$ °कारी. ४७. [1]) $A_4$ gloss तुरुष्कसमरे.—[2]) $A_4$ gloss तुङ्गं.

अथागतेन संगत¹ः शाहिना कृतसत्क्रियः । पञ्चषाणि दिनान्यासीत्तद्देशे स मदोन्मदः ॥४९॥
रणागरचरम्याणशस्त्राभ्यासविलासिनः । अभियोगोचिताः शाहिर¹पश्यंस्तं² तदाब्रवीत् ॥५०॥ युग्मम् ॥
तुरुष्कसमरे यावन्न यूयं कृतबुद्धयः । आलस्यविजयात्तावत्तिष्ठतास्मिन्गिरेस्तटे ॥५१॥
एवं त्रिलोचनेनोक्तं¹ सोमहीश हितं वचः । तस्थौ परं समं सैन्यैस्तस्यैकादाहवोत्सुकः ॥५२॥
हम्मीरेणं तदा सैन्यं जिज्ञासार्थं विसर्जितम् । तौषीपारे² मितप्रायैस्ततस्तीर्त्वावधीद्बलैः ॥५३॥
ततस्तं¹ माहितोऽस्तैकमपि शाहिः पुनः पुनः । जगादाहवतत्त्वज्ञः पूर्वोक्तामेव संविदम् ॥५४॥
स तस्य नाग्रहीद्वाक्यं रणौत्सुक्यवशंवदः । प्रत्यासन्नविनाशानामुपदेशो निरर्थकः ॥५५॥
भ्रातस्ततः स्वयं कोपात्तुरुष्कानीकनायकः । सर्वाभिसारेणागच्छ¹च्छलाहवविशारदः ॥५६॥
अथ तुङ्गस्य कटकः सहसा भङ्गमाययौ । शाहिसैन्यं परं संख्ये ददृशे विवरक्षणम् ॥५७॥
शाहिसैन्ये गतेप्यासीज्जयसिंहः स्फुरन्रणे । श्रीवर्धनश्च सांग्रामि¹र्विभ्रमार्कश्च डामरः ॥५८॥
घोरे तुरंगतुमुले प्रहरद्भिस्त्रिभिर्भटैः । वीरक्षेत्रे निजे देशे रक्षितस्तैर्यशःक्षयः ॥५९॥
कस्त्रिलोचनपालस्य माहात्म्यं वक्तुमीश्वरः । निःसंख्या अपि यं संख्ये न जेतुमशकन्द्विषः ॥६०॥
शुशुभे¹ रुधिरासारवर्षी युद्धे त्रिलोचनः । कल्पान्तदहनज्योतिर्विसारीव त्रिलोचनः ॥६१॥
स योधयित्वा संग्रामे कोटीः कङ्कटवाहिनाम् । एकाकी कार्यमर्मज्ञो निर्ययौ रिपुसंकटात् ॥६२॥
गते त्रिलोचने दूरमशेषं क्षितिमण्डलम् । प्रचण्डचण्डालचमूशलभच्छायमानशे ॥६३॥
संप्राप्तविजयोप्यासीन्न हम्मीरः समुच्छ्वसन् । श्रीत्रिलोचनपालस्य स्मरञ्शौर्यममानुषम् ॥६४॥
त्रिलोचनोपि संभित्य हास्तिकं स्वपदाच्युतः । सयत्नोभून्महोत्साहः प्रत्याहर्तुं जयश्रियम् ॥६५॥
यथा नामापि निर्नष्टं शीघ्रं शाहिश्रियस्तथा । इह प्रासङ्गिकत्वेन वर्णितं न सविस्तरम् ॥६६॥
स्वप्नेपि यदसंभाव्यं यत्र भग्ना मनोरथाः । हेलया तद्विदधतो नासाध्यं विद्यते विधेः ॥६७॥
ईषद्भूमिवैपुल्यं¹ राज्ञः शंकरवर्मणः । वृत्तान्तवर्णने पूर्वममुत्र प्रकटीकृतम् ॥६८॥
स शाहिदेशः सामात्यः सभूभृत्सपरिच्छदः । किमभूत्किमु वा नाभूदिति संचिन्त्यतेधुना ॥६९॥
अवतारं तुरुष्काणां दत्त्वाशेषे महीतले । प्राप्तभङ्गस्ततस्तुङ्गः स्वदेशं प्राविशच्छनैः ॥७०॥
शृगालायेव तुङ्गाय लब्धभङ्गाय भूपतिः । न तत्रागसि चुकोप स धैर्यसदृशाशयः ॥७१॥
किं तु खेदाय समभूत्तुङ्गायत्तत्वमीशितुः । परायत्ततया चित्तं यशोर¹प्युपतप्यते ॥७२॥
तुङ्गात्मजोपि कन्दर्पसिंहः श्रीशौर्यगर्वितः । राजो¹चितं व्यवहरंस्तस्योद्वेगप्रदोभवत् ॥७३॥
गूढलेखैः क्षणे तस्मिंश्छिद्रान्वेषी स भूभुजम्¹ । भ्राता विग्रहराजोपि प्रैरयत्तुङ्गमारणे ॥७४॥
कोशाविस्मरणा¹द्राजा चिरं दोलायमानधीः । अभीक्ष्णप्रेरणोद्विग्नः प्रेरकानब्रवीत्ततः ॥७५॥

---

४९. ¹) Thus A₂; A₁ स तथा. ५०. ¹) र supplied by A₂ in space left by A₁.—²) Thus corr. by A₂ from A₁ °पश्यत्. ५२. ¹) Thus corr. by A₂ from A₁ °नोक्ताः. ५३. ¹) Thus A₁; altered by later hand to हम्मी°; G as above.—²) Thus corr. by A₂ from A₁ °पाय; A₂ gloss तौषी नाम नदी. ५४. ¹) स्तं supplied by A₂. ५६. ¹) Thus A₂; A₁ °रेणोद्गच्छ°. ५८. ¹) Thus A₂, with gloss सङ्ग्रामस्यापत्यं साङ्ग्रामिः; A₁ सङ्ग्रामे. ६१. ¹) Thus A₂; A₁ त्रिशुभ°. ६८. ¹) A₂ gloss यस्य देशस्य भूमेः वैपुल्यं. ७२. ¹) यशोर supplied by A₂ in space left by A₁. ७३. ¹) Emended; A राज्ञो°. ७४. ¹) Thus A₁; altered by later hand to भूभुजाम् which is found also in G R. ७५. ¹) A₂ gloss यथं देव्या श्रीलकीर्त्या: कृता इति स्मरणात्.

एकाक्येव सपुत्रः स गोचरो नः कदाचन । पतेद्यदि क्षणे तस्मिन्प्रहरामः किं विदध्महे ॥७६॥
अन्यथा ध्रुवमाक्षिप्तो हन्यादस्मानसौ बलात् । इति कालापहारार्थमुक्त्वाभूद्विरतो नृपः ॥७७॥
तावन्मात्रं वचो बीजभूतं हृदि निधाय ते । विधातुं तदवस्थत्वं तुङ्गस्यासन्कृतोद्यमाः ॥७८॥
षण्मासाभ्यन्तरे तुङ्गो भूपेनाकारितो गृहात् । सद्यतो निर्ययौ दृष्टदुःस्वप्नोपि विधेर्वशात् ॥७९॥
स प्रविश्य नृपास्थानं स्थित्वा राज्ञोग्रतः क्षणम् । पञ्चषैः सहितो भृत्यैः प्राविशन्मन्त्रमण्डपम् ॥८०॥
पश्चात्प्रविष्टास्तत्रैनं पर्वशार्करकादयः । अनुज्ञाप्य महीपालं तुङ्गं शस्त्रैरपातयन् ॥८१॥
मन्त्री महारथो नाम योभूत्क्षेमंकरवर्मणः । तद्वंश्यस्तुङ्गभृत्येषु श्लाघ्यः सिंहरथः परम् ॥८२॥
निःशस्त्रो यः क्षणे तस्मिन्परित्राणविधित्सया । हन्यमानस्य तुङ्गस्य पृष्ठे स्वं वपुरक्षिपत् ॥८३॥
तुङ्गस्य प्रथमाघाते हृद्धः[1] श्वासोभवद्भयात् । राजा तस्मिंश्चिरुच्छ्वासे सोच्छ्वासः समपद्यत ॥८४॥
आस्थानब्राह्मणस्यासीद्धर्मनाम्नः सुतोन्तिके । यः पापकारी तुङ्गस्य पार्थः कङ्कश्च दुर्मतिः ॥८५॥
ताभ्यामाशुविवेकिभ्यां त्राणार्थं स्वाङ्गुलीर्मुखे । क्षिपद्भ्यां पशुवत्तत्र शस्त्रं त्रासवशाज्जहे ॥८६॥
अन्तरङ्गाश्च वङ्गाद्या येभूवंस्तुङ्गमन्त्रिणः । तैः स्त्रीवदासितं तूष्णीं त्रस्तैः शस्त्रान्वितैरपि ॥८७॥
अज्ञाततुङ्गमृत्युभ्यस्तुमुले तत्र भूपतिः । तद्भृत्येभ्यः शङ्कमानो वह्निदाहाद्यादिकम् ॥८८॥
आश्वासाय स्वभृत्यानां छित्त्वा खड्गेन सत्वरम् । पातयामास तुङ्गस्य सद्धृतस्य शिरो बहिः ॥८९॥
दृष्ट्वा स्वामिशिरश्छिन्नं सैन्ये दैन्यात्पलायिते । भृत्यतामुज्ज्वलीचक्रुः कतिचित्तुङ्गसेवकाः ॥९०॥
भुजंगनामा सामन्तद्विजापत्यो गृहागतः । संग्रामराजं विदधे गेहाग्रे पलायितम् ॥९१॥
द्वारं कनकदण्डेन भङ्क्त्वार्गलितं ततः[1] । विंशतिं हतवान्योधान्स राजास्थानमण्डपे ॥९२॥
कोशाधिकारी त्रैलोक्यराजनामा हतो रणे । कय्यामन्तकधात्रेयो वीरोप्यभिनवाभिधः ॥९३॥
अङ्गणे त्रिंशदेकाङ्गा वीरास्तुङ्गोपजीविनः । श्रेणीं बबन्धुर्निहता निःश्रेणीं स्वर्गपद्धतेः ॥९४॥
संग्रामं पद्मराजाख्यः कृत्वापि[1] निःसृतोक्षतः[2] । स्वामिप्रमयदुःखाभितापं तीर्थाभयाज्जहौ ॥९५॥
अन्ये लोकद्वयत्राणमित्रं शस्त्रं रणाङ्गने । संत्यजन्तो व्ययुज्यन्त यशसा जीवितेन च ॥९६॥
चन्द्राख्यः सुभटमन्यो दैशिकश्चार्जुनाभिधः । हेलाचक्रो डामरश्च त्यक्तशस्त्राः परैर्हताः ॥९७॥
लोठिताश्वसयस्तुङ्गो लुण्ठितश्रीर्महीभुजा । श्वपाकभुक्तद्वादश्यां कथाशेषो व्यधीयत ॥९८॥
निर्द्रोहवृत्तौ भूभर्त्रा तुङ्गे सतनये हते । लब्धोदया व्यजृम्भन्त खलप्राया नृपास्पदे ॥९९॥
राज्ञो मनः कलुषयन्गूढपैशुनकर्मणा । यो भ्रातृभ्रातृसुतयोर्विपत्तौ[1] हेतुतां गतः ॥१००॥
स दुष्प्रवादनिर्दग्धो नागो निजकुलान्तकः । तुङ्गभ्राता ततो राज्ञा कम्पनाधिपतिः कृतः ॥१०१॥ युग्मकम्॥
भार्या कन्दर्पसिंहस्य क्षेमा परमवर्षिणी[1] । नागेन संगमं चक्रे रक्षसेवामितत्रपा[2] ॥१०२॥
प्रशान्ते तुमुले बिम्बा चतुर्भिर्दिवसैः सती । तुङ्गस्नुषा सुता शाहेः प्रविवेश हुताशनम् ॥१०३॥

---

७७. [1]) Thus corr. by $A_3$ from $A_1$ हायना°. ७९. [1]) Thus corr. by $A_3$ from $A_1$ गृहात्. ८४. [1]) Emended; A R G हृद्धश्वासो°. ८७. [1]) च supplied by $A_2$ in space left by $A_1$. ९२. [1]) Thus corr. by $A_3$ from $A_1$ द्वारमर्गलितं ततः. ९५. [1]) Thus corr. by $A_2$ from $A_1$ °श्च कृत्वा.—[2]) $A_1$ निःसृतो; $A_3$ निःसृतो. १००. [1]) Thus corr. by $A_3$ from $A_1$ भ्रातृपुत्रसुत°. १०२. [1]) Emended; A °वर्षिणी.—[2]) $A_3$ gloss रक्षो हि रात्रौ चरति.

अम्मायामवरुद्धायां कन्दर्पौ¹ चाप्यजीजनत् । पुत्रं विचित्रसिंहं च मातृसिंहं च विश्रुतौ ॥१०४॥
गृहीत्वा तौ स्नुषां तां च मड्डना तुङ्गवल्लभा । देशाद्विनिर्गता दीना राजपुर्यां स्थितिं व्यधात् ॥१०५॥ युग्मम्¹॥
तुङ्गस्थाने ततो राज्ञा पापो भद्रेश्वरः कृतः । भूतेश्वरादिदेवानां चक्रे कोशादिलुण्ठनम् ॥१०६॥
कियद्विवेकवैकल्यमस्य राज्ञः प्रकाश्यताम् । तादृशानपि यश्चक्रे पार्थादीनधिकारिणः ॥१०७॥
पार्थः परमदुर्मेधाः कथातो भ्रातृकलत्रगः । निर्विचारेण यस्तेन नगराधिकृतः कृतः ॥१०८॥
वधादिपापं पार्थेन सुकृतत्यक्तचेतसा । पवित्रे प्रवरेशस्य रङ्गपीठे प्रवर्तितम् ॥१०९॥
चक्रे लुब्धस्य भूभर्तुर्मतङ्गः¹ कृपणाग्रणीः । सिंधोः सुतः कोशवृद्धिं प्रजापीडनपण्डितः ॥११०॥
पुरा देवमुखाख्यस्य डिविरस्य किलाजनि । आपूपिकायां वेश्यायां पुत्रश्चन्द्रमुखाभिधः ॥१११॥
यस्तुङ्गोपाश्रयाल्लब्ध्वा लालितत्वं महीपतेः । वराटकात्प्रभृत्यासीत्कोटीनां कृतसंचयः ॥११२॥
विभूतिमध्ये लुब्धस्य प्राभृतायान्यदीक्षितैः । अपूर्वैर्निजभृत्येषु विक्रयोभूत्कुलोचितः ॥११३॥
प्रभूताचिररोगश्च भूत्वा लब्धोदयः पुनः । यो मन्दाग्निः सरोगश्च निःस्वं लोकैर्व्यहस्यत ॥११४॥
एकमेवाभवद्यस्य सुकृतं मरणक्षणे । कोटेस्त्रिभागं यद्दाच्छूरणेश्वरयोजने ॥११५॥
तदात्मजाः कृता नागभागनन्दिमुखास्त्रयः । अधीशाः पृतनाङ्गस्य राज्ञा तुङ्गोपजीविनः ॥११६॥
हास्यं बभूव भूभर्तुस्तेषां तुङ्गपदार्पणम्¹ । बन्धनं यवकाण्डीनां हेमस्थाने शिशोरिव ॥११७॥
ते तुरुष्काहवे राज्ञा तुङ्गसहिताः पुनः । प्रत्यावृत्य ययुर्देशं निजमेव पलायिताः ॥११८॥
इत्थं मन्त्रिष्वयोग्येषु क्षान्तिशीले च भूपतौ । केचिदुद्रेकमभजन्दर्शाद्विवरडामराः ॥११९॥
सा लोठिकामठं कृत्वा लोठिका नृपतेः सुता । तिलोत्तमाया विदधे मातुर्नाम्नापरं मठम् ॥१२०॥
पापिनामपि हन्तेयं कापि सत्कर्मवासना । भद्रेश्वरोपि यच्चक्रे विहारं सुकृतोज्ज्वलम् ॥१२१॥
सत्यं विवेक्ता संग्रामराजो योन्याय्यतोर्जितम् । निजं ब्रुवाणो द्रविणं प्रपामपि न निर्ममे ॥१२२॥
श्रीलेखा पार्थिववधूः श्रीयशोमङ्गलात्मजा । पत्यौ शिथिलसामर्थ्ये स्वैरिणीत्वमसेवत ॥१२३॥
सुतः सुगन्धिसीहस्य जयलक्ष्म्यां¹ बभूव यः । वल्लभो निर्भरं देव्याः सोस्यास्त्रिभुवनोऽभवत् ॥१२४॥
स जयाकरगंजादिगञ्जखटातितीक्ष्णधीः¹ । कोशोपकारकृत्तस्या जारोप्यासीज्जयाकरः ॥१२५॥
मयग्रामीणगञ्जादिकर्त्री संचयतत्परा । साभूद्भर्तुः प्रसादेन सुभगा भूरिवैभवा ॥१२६॥
स चतुर्थसमाषाढप्रारम्भाहे महीपतिः । हरिराजाभिधं पुत्रमभिषिच्यास्तमाययौ ॥१२७॥
सुमनःसेवितः कुर्वन्नशेषाशाप्रकाशनम् । दूरावकः स सर्वस्य नेत्रोत्सव इवाभवत् ॥१२८॥
अमोघाज्ञेन तेनेमां निश्चोरां कुर्वता महीम् । पण्यवीथ्यां¹ निशीथिन्यां² निषिद्धा द्वारसंवृतिः ॥१२९॥
अचिरस्थायिनी राज्ञस्तस्याशाचिन्तितोन्नतिः¹ । सन्ध्या नवेन्दुलेखेव पार्थिवानामजायत ॥१३०॥

१०४. ¹) $A_2$ gloss कन्दर्पसिंहः. १०५. ¹) युग्मम्. added by $A_2$. ११०. ¹) Emended with G C; A R कुमतं मतङ्गः. १११. ¹) $A_2$ gloss कोशालिकार्थे. ११७. ¹) Thus $A_1$; $A_2$ °पदेर्पणम्. १२४. ¹) Thus corr. by $A_2$ from $A_1$ °लक्ष्मी. १२५-१२६. ¹) The words from गञ्जादिगञ्जखटा° to मयग्रामीण in the following verse have been omitted by $A_1$ and supplied in margin by $A_2$; they are found in G R. १२८. ¹) $A_2$ gloss पण्डितैः पुष्पैश्च.—²) $A_2$ gloss आकाशा विचार.—³) $A_2$ gloss चैत्यं तोयञ्च. १२९. ¹) ²) Thus corr. by $A_2$ from $A_1$ पुण्यवेध्यां and निशीथिन्यां. १३०. ¹) Thus $A_2$; $A_1$ °शाचिन्तनोन्नतिः.

हार्दिहानिमहाम्बुधौ स रक्षित्वा क्षमापतिः । क्षयं ययौ शुचियशाः शुचिशुक्लाष्टमीदिने ॥१३१॥
प्राणिनां शोचमानानां नक्षत्राणामिव क्षणात् । लक्ष्मीर्धर्मक्षयेणेव संगता भङ्गदायिनी ॥१३२॥
समन्योः स्वैरिणीवृत्तिः सुतस्य जननी निजा । अभिचारं चकारास्येत्यविगाना जनश्रुतिः ॥१३३॥
राज्योपकरणे सज्जीकृते राज्यार्थिनी स्वयम् । सा राजमाता श्रीलेखा यावत्कालेन समागता ॥१३४॥
मिलितैस्तावदेकाङ्गैर्भ्रात्रा धात्रेयकेण च । सागराख्येन तत्पुत्रो बालोनन्तो नृपः कृतः ॥१३५॥ युग्मम् ॥
निधिं जिघृक्षोरन्येन हृते तत्र प्रमापणम् । तद्रक्षिणोहेर्लुब्धस्य पापायैव यथा किल ॥१३६॥
राजमातुस्तथा राज्यलुब्धायाः पुत्रनाशनम् । अभूदन्यहृते राज्ये वृजिनायैव केवलम् ॥१३७॥ युग्मम् ॥
सा राज्यविप्रलम्भेन तादृशा व्यथिताशया । व्यस्मरत्तनयस्नेहं धिग्भोगाभ्यासवासनाम् ॥१३८॥
अथाजगाम स्थविरः पितृव्यो बालभूपतेः । राज्यं विग्रहराजाख्यो हर्तुं विततविक्रमः ॥१३९॥
स लोहरात्प्रचलितो दग्ध्वा द्वारमनर्गलः । दिनद्वयेन सार्धेन नगरं सत्वरोविशत् ॥१४०॥
श्रीलेखाप्रेरिताः सेनाः प्रविष्टं लोठिकामठम् । उद्दीपिताग्नयस्तत्र निजघ्नुस्तं सहानुगम् ॥१४१॥
मत्रद्वयं ततः कृत्वा स्वस्य भर्तुः सुतस्य च । तस्थौ व्ययवती राज्ञी राज्यद्रोहोद्यतानिशम् ॥१४२॥
ततो नरपतिः किंचिच्छनैः शिथिलशैशवः । अतिव्ययादिव्यसनी यमेश्वरतयाभवत् ॥१४३॥
तस्यासन्रुद्रपालाद्याः शाहिपुत्राः परं प्रियाः । अनल्पवेतनादाने राज्योत्पत्त्यपहारिणः ॥१४४॥
कृतप्रत्यहनिर्वाहः सार्धलक्षेण भूभुजा । रुद्रपालो दरिद्रत्वं कदाचिदपि नात्यजत् ॥१४५॥
दिद्दापालः क्षमापाललब्धया प्रतिवासरम् । सहस्राणामशीत्यापि शेते स्म न सुखं निशि ॥१४६॥
अनङ्गपालवेतालश्चक्रे क्ष्मापाललालितः । शश्वत्सुवर्णगीर्वाणप्रतिमापाटने मनः ॥१४७॥
रुद्रपालः परित्राता धनप्राणादिहारिणाम् । बभूव चौरचण्डालप्रायाणां वज्रपञ्जरः ॥१४८॥
कायस्था रुद्रपालाप्ताः प्रजानां पीडनं व्यधुः । चकारान्धमठं श्रीमानुत्पलाख्यो वदपणीः ॥१४९॥
क्रियद्रुपालवाक्प्राप्तमन्यस्तस्याभिधीयताम् । जालन्धराधिपस्येन्दुचन्द्रस्येन्दुमुखीं सुताम् ॥१५०॥
उपयेमे मनोज्ञत्वाज्ज्येष्ठामासमतिं स्वयम् । यया मठः स्वाभिधया विदधे त्रिपुरेश्वरे ॥१५१॥
तस्याः किंचिद्वयोन्यूनां स्वसारं यो यवीयसीम् । अथ सूर्यमतीं देवीं भूभुजे परिणीतवान् ॥१५२॥
रुद्रेण भूपतिः सख्या स कर्णसुखदायिना । पात्रीकृतो दुर्नयानां कर्णेनेव सुयोधनः ॥१५३॥
कम्पनाधिपतिस्तत्र क्षणे त्रिभुवनो बली । आययौ भूपतेर्हर्तुं राज्यं संभृतडामरः ॥१५४॥
आकृष्टाशेषकटके तस्मिन्योद्धुमुपागते । एकाङ्गाः सहयारोहा राजपक्षं न तत्यजुः ॥१५५॥
असिना लङ्घयन्प्रासानमोघाश्लाघ्यविक्रमः । प्रजहारानन्तदेवः स्वयं त्रिभुवनं रणे ॥१५६॥
संनाहरक्षिताङ्गः स दृढप्रहृतिपीडितः । विरक्तो वदनेनासृक्स्वप्रतापमिवोद्वमन् ॥१५७॥
विनयच्छन्नशौटीर्यः शिशुप्रायः स भूपतिः । दृष्टा बलमसंभाव्यं तस्मिंस्तत्यजका रणं गते ॥१५८॥

---

१३३. ¹) स्वविगाना supplied by $A_3$ in space left by $A_1$. १३५. ¹) $A_4$ gloss तस्या अपरः पुत्रः. १३६. ¹) Thus $A_3$; $A_1$ रत्नं १३९. ¹) Thus A R; G C हन्तुं. १४१. ¹) Thus corr. by $A_3$ from $A_1$ प्रविष्टो. १४७. ¹) Thus corr. by $A_3$ from $A_1$ °मापटले. १५०. ¹) प supplied by $A_2$. १५१. ¹) मास supplied by $A_3$ in space left by $A_1$. १५२. ¹) Thus $A_1$; $A_3$ किंचिदिव. १५७. ¹) $A_3$ gloss चचाल. १५८. ¹) $A_3$ gloss शौटीर्य अभिमान प्रागल्भ्यं वा.—²) $A_3$ gloss शिशुसदृशः.

शमालाडामरं भर्त्सं प्रावैरभिनवाभिधम् । शालास्थले व्यधात्क्ष्माप्यविक्रमो मोघविक्रमम्[1] ॥१५९॥
मांसासृग्वेष्टमायष्टीभूतखड्गो भ्रमन्रणे । भुवनक्षोभकृद्भृङ्गैर्योनन्तभूपतिः ॥१६०॥
पश्यन्प्रहारलूनाङ्गानेकाङ्गान्स्त्र पदे पदे । निवेद्यमानानग्रस्थैर्नामग्रहणपूर्वकम् ॥१६१॥
क्षितिभृज्जातदाक्षिण्यो बिलम्बिस्थावरे ततः । चाम्बल्यमक्षपटलादेकाङ्गानां न्यवारयत् ॥१६२॥ युग्मम् ॥
एवं तत्र कृतशेन भृत्येभ्यः प्रतिपादिता । बिलम्बिस्तेन दीनारकोटिषण्णवतेः क्रमात् ॥१६३॥
राज्ञो रणाभिवृत्तस्य दुग्धसेकैः करास्सरुः । स्थिरमहरूढः कृष्टश्चिरेणेति जनश्रुतिः ॥१६४॥
अहो महत्त्वं भूभर्तुर्दीनो देशान्तरागतः । तावच्छिभुवनो येन संविभेजे विमन्युना ॥१६५॥
ब्रह्मराजाभिधस्तेन बन्धुर्गञ्जाधिपः कृतः[1] । रुद्रपालकृतद्वेषो विरक्तश्चलितो ययौ ॥१६६॥
सप्तभिर्म्लेच्छभूपालैः समं मिलितडामरः । तेनानीतो[1] दरद्राजो यत्नाच्चलमङ्गलः[2] ॥१६७॥
क्षीरपृष्ठाभिधं ग्रामं प्राप्तस्य समरोत्सुकः । तस्यायं त्रिक्रमोदयो रुद्रपालो विनिर्ययौ ॥१६८॥
श्वो व्यवस्थापिते युद्धे सैन्याभ्यां दरदीश्वरः । क्रीडन्पिण्डारकाख्यस्य नागस्य भवनं ययौ ॥१६९॥
दुर्नयाचरणात्तत्र पार्श्वस्थैर्वारितोपि सः । प्लवमानस्य मत्स्यस्य गात्रे कुन्तमपातयत् ॥१७०॥
अथोज्जगाम गोमायुवपुः कुण्डाद्भुजंगमः । स च तं मृगयौत्सुक्यादधावद्दरदीश्वरः ॥१७१॥
तमापतन्तमालोक्य व्यवस्थोन्मूलनं विदत्[1] । आस्कन्दाशङ्कि भूभर्तुः सैन्यं युद्धाय निर्ययौ ॥१७२॥
अभूत्ततोस्त्रसंघर्षसंजातानलसंहतिः । कृतस्वर्गाङ्गनोद्वाहो वीराणां समरोत्सवः ॥१७३॥
तस्मिन्महाभटाटोपे शिरश्छिन्नं दरत्पतेः । रुद्रस्य रौद्रमहसः संप्ररूढं यशः पुनः ॥१७४॥
समरे वधबन्धादि म्लेच्छराजाः प्रपेदिरे । संप्राप हेमरत्नादि पुनः कश्मीरभूपतिः ॥१७५॥
उत्तंस[1]मुक्ताद्योताम्भःक्षालितास्रझलज्झलम्[2] । रुद्रपालो दरद्राजशिरो भर्तुरुपानयत्[3] ॥१७६॥
श्रान्तोदयनवत्सेन कृतप्रायैस्तथा द्विजैः । बह्व्यैवंविधास्तस्य बभूवुरवदातिकाः ॥१७७॥
रुद्रपाले ततो लूतामयेन प्रमयं गते । अन्येपि शाहितनयाः क्षिप्रमेव क्षयं ययुः ॥१७८॥
पालवंशान्ध्यविगमे शुद्धाशयजुषोभवत् । देवी सूर्यमती भर्तुर्दर्पणस्येव बिम्बिता ॥१७९॥
सुभटापरनामा सा गौरीश्वरविधायिनी । पुण्यं वितस्तापुलिने निर्ममे सुभटामठम् ॥१८०॥
गोहेमहयरत्नादिप्रदानैः सुबहून्द्विजान् । सदाशिवप्रतिष्ठायामदरिद्रांश्चकार सा ॥१८१॥
आशाचन्द्रापराख्यस्य कल्लनस्यानुजन्मनः । नाम्ना व्यधापि वात्सल्यात्साग्रहारो मठस्तया ॥१८२॥
सिल्लनाख्यस्य च भ्रातुर्भर्तुश्चाभिधया सती । मठौ चाकारयत्पार्श्वे त्रिजयेशामरेशयोः ॥१८३॥
अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे । ब्राह्मणेभ्यो महापुण्यं विद्वद्भ्यः प्रत्यपादयत् ॥१८४॥
पत्युर्नाम्नाप्यग्रहारान्प्रददावमरेश्वरे । त्रिशूलबाणलिङ्गादिप्रतिष्ठाश्च विनिर्ममे ॥१८५॥

१५९. [1]) Thus corr. by $A_2$ from $A_1$ मोघविक्रमम्. १६२. [1]) Supplied by $A_2$. १६६. [1]) Emended with G C, A कृपः. १६७. [1]) $A_2$ gloss ब्रह्मराजेन.—[2]) यत्नाच्चलमङ्गलः supplied by $A_2$ in space left by $A_1$; $A_2$ gloss नाम. १६८. [1]) Thus $A_1$, $A_2$ खरपृष्ठा°, with gloss खरोट् इति नाम क्रमराज्ये. १७२. [1]) Emended; A विदन. १७६. [1]) $A_2$ gloss उत्तंसभूताः या मुक्ता मुक्तामणयः तासां यो द्योतः दीप्तिः स एवाम्भः तेन क्षालिता असृजः रुधिरस्य झलज्झलाकाचकच्यं प्रकाशः स्फार इति यावत् यस्य तत् इति शिरोविशेषणं। झलज्झला तु शोभायामिति कोशः मुक्ताफलदीप्तिरतिशुक्लस्वाम्भस्त्वेन रूपणम्। असृजस्य हि शुक्लं रूपमिति वैशेषिकाः ॥.—[2]) Thus corr. by $A_2$ from $A_1$ झलज्झलम्.—[3]) Thus corr. by $A_2$ from $A_1$ °रुपायनम्. १७७. [1]) Thus $A_2$; $A_1$ यथा श्रोत्रं°

दंपती राजराजाख्ये मृते पुत्रे प्रचक्रतुः । सदाशिवान्तिके राजवेश्म संत्यज्य तौ स्थितिम् ॥१८६॥
ततः प्रभृति संत्यज्य पूर्वराजकुलस्थितिम् । तत्रैव रुच्यां भूपालास्तत्रैव वसतीर्व्यधुः ॥१८७॥
पार्थिवस्याश्वशालीयाः प्रियत्वाजितया प्रियाः । प्रसादैर्देशलुण्ठ्यां च सर्वतः समतां ययुः ॥१८८॥
पर्मेश्वरतया भर्तुर्वल्लभो नर्मकोविदः । अलुण्ठयत्प्रजा नित्यं डल्लको नाम दैशिकः ॥१८९॥
मालवाधिपतिर्भोजः प्रहितैः स्वर्णसंचयैः । अकारयद्येन कुण्डयोजनं कपटेश्वरे ॥१९०॥
प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः । सततं वदनस्नाने या तोयैर्विहिताभवत् ॥१९१॥
अपूरयत्तस्य यस्तां दुस्तरां नियमादितः । प्रहितैः काचकलशीकुलैस्तद्वारिपूरितैः ॥१९२॥
स तस्य पद्मराजाख्यः पर्णप्राप्तिकदैशिकः । प्रियताम्बूलशीलस्य त्यागिनो वल्लभोऽभवत् ॥१९३॥ चक्कलकम् ॥
तेन नागरखण्डादिपर्णविक्रयिणा नृपः । देशोत्पत्तिधनं प्रायो निःशेषं दापितस्तदा ॥१९४॥
पञ्चचन्द्रकशोभाङ्कमौलिसिंहासनं नृपात् । बन्धायादत्त लब्धव्ये धने स धनिकोऽधिके ॥१९५॥
तद्राजचिह्नमास्थानोपयुक्तं तस्य मन्दिरात् । आनीयमानं मासार्धवासरे मासि मास्यभूत् ॥१९६॥
स्वकोशसंचयं दत्त्वा देवी सूर्यमती ततः । पद्मराजोद्धृतां देशस्याव्यवस्थां न्यवारयत् ॥१९७॥
शमिते चाश्वशालीयडल्लकादिभये तदा । प्रावर्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ॥१९८॥
ततः प्रभृति राज्ञ्येव राजकार्योद्यताभवत् । तस्थौ शौर्यकथां त्यक्त्वा राजा कार्यंकरः पुनः ॥१९९॥
भर्तुर्नारीविधेयत्वं तस्या भर्तृजयस्तथा । निष्कलङ्केन शीलेन नान्योन्यं गर्ह्यतामगात् ॥२००॥
भवभक्तिव्रतस्नानत्यागशीलादिभिर्गुणैः । कृतिनानन्तदेवेन मुनयोऽपि विनिर्जिताः ॥२०१॥
राज्ये तस्य महीभर्तुर्दर्पितांस्तानलङ्घयन् । पतिंवरेव राजश्रीर्भृत्यान्नवनवोन्मुखी ॥२०२॥
क्षेमाभिधो राजगञ्जपूरणं बालभञ्जकः । व्यधाद्दशभागादिप्रकारैर्द्वैकियन्धनम ॥२०३॥
मन्त्री ततोऽभवत्साधुस्त्रैगर्तः केशवो द्विजः । सौधचन्द्रातपेनेव भूपालो येन भूषितः ॥२०४॥
भ्राम्यन्गतश्रीरेकाकी स एव ददृशे जनैः । भाग्याम्बुवाहतडितो निविडाः कस्य संपदः ॥२०५॥ युग्मम् ॥
भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ । कुलविक्रमयोर्दर्पो मिथ्यैव पृथुतां प्रति ॥२०६॥
प्रासादपालवैश्यस्य गौरीशत्रिदशालये । भूतेर्हल्लधरो वज्रो वराहश्चाभवन्सुताः ॥२०७॥
तेभ्यो हल्लधरः सूर्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंल्लेभे सर्वाधिकारिताम् ॥२०८॥
विधेयान्बुद्धियुक्तेन कुर्वतः क्षित्यनन्तरान् । सपत्नीकोऽभवत्तस्य मुखप्रेक्षी क्षमापतिः ॥२०९॥
क्रमेण सञ्चितं पूर्वं सपादाममुदग्रधीः । कर्मस्थानं स्फुटीचक्रे सर्वस्थानधुरंधरम् ॥२१०॥
अभूद्वर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसंचयानां प्रकाशकम् ॥२११॥
स तन्निवारयामास भाविनां भूभुजां विदन् । ज्ञानी संचितवित्तस्य दण्डाद्यायासकारिताम् ॥२१२॥

---

१८७. [1]) Thus corr. by $A_2$ from $A_1$ रुचा. १८८. [1]) Thus corr. by $A_2$ from $A_1$ °लुण्ठा. १९०. [1]) Thus corr. by later hand from $A_1$ °भौजैः. १९२. [1]) $A_2$ gloss प्रतिज्ञां.—[2]) Thus corr. by later hand from $A_1$ प्रहिते काचक°.—[3]) $A_2$ gloss शेष इति भाषया. १९३. [1]) $A_2$ gloss भागविशेषः. १९५. [1]) Thus corr. by later hand from $A_1$ °सने. १९६. [1]) र्ध supplied by $A_2$ in space left by $A_1$. २००. [1]) Thus corr. by later hand from $A_1$ शीलेना.—[2]) Thus corr. by $A_2$ from $A_1$ गृह्यता°. २०१. [1]) Thus corr. by $A_2$ from $A_1$ °स्थान°. २०३. [1]) $A_2$ gloss नापितः. २०४. [1]) Thus corr. by later hand from $A_1$ केशवो. २०७. [1]) Thus $A_1$; $A_2$ भूतिर्ह°. २०९. [1]) Thus $A_1$; $A_2$ °बुद्धेन.—[2]) Thus corr. by $A_2$ from $A_1$ °न्तरम. २१०. [1]) Thus $A_1$; $A_2$ सर्वकार्यधु°. २१२. [1]) Thus $A_2$; $A_1$ ज्ञाने.

भर्तृस्थानप्रशालीयाभ्यन्तरदारापहारिणः । कांश्चिद्व्यापाद्य स शमं निन्ये लोकस्य विप्लवम् ॥२१३॥
तन्नायासहता भीतः कम्बस्वर्णैः सुरास्पदैः । शोभां मठाग्रहारैश्च वितस्तासिन्धुसंगमः ॥२१४॥
भ्रातरश्च सुताश्चास्य लक्ष्मीपरिचयोन्मदाः । द्विरदा इव न क्वापि दानप्रणयितां जहुः ॥२१५॥
तद्भ्रातृपुत्रो बिम्बाख्यः श्रीमान्वीतो वराहजः । द्वाराधिकारकार्यासीद्दानप्रलयवारिदः ॥२१६॥
स डामरकुलाकालमृत्युः स्वल्पानुगोभवन् । खशालये जहौ प्राणान्पलायनपराङ्मुखः ॥२१७॥
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः । तत्सूनुं जयी नव्यं धराधवमरोपयत् ॥२१८॥
मन्त्रशून्येन शौर्येण परदेशेषु भूपतिः । हठप्रवेशान्विदधत्सोभूत्कृच्छ्रगतोसकृत् ॥२१९॥
तुक्कात्मजस्य कलशस्यारब्धी छिन्नसैनिकम् । प्रमोचयद्धलधरो युक्त्या वल्लापुरादमुम् ॥२२०॥
उरशां च प्रविष्टस्य वैरिरुद्धाध्वनो व्यधात् । कम्पनाधिपतिस्तस्य मार्गान्संशोध्य निर्गमम् ॥२२१॥
कालेनन्तमहीभर्तुर्वैरिविग्रहसंकटे । साहसान्युदजृम्भन्त तानि तानि क्षणे क्षणे ॥२२२॥
राजेश्वरो द्वारपतिः श्रीमान्भद्रेश्वरात्मजः । डामरैः क्रमराज्यस्थैरन्येपि बहवो हताः ॥२२३॥
वीक्ष्य नीतिदृशा कार्यं भीत्या व्यवहरन्नपि । भृत्यतां निष्परिभवां को भुङ्क्ते नृपमन्दिरे ॥२२४॥
दुष्प्रवादास्पदीभूतो देव्या निविडसेवनात् । आशाचन्द्रादिभिः क्रुद्धैर्बद्धो हलधरोप्यभूत् ॥२२५॥
स राज्ञा हृतसर्वस्वो बन्धनक्लेशमन्वभूत् । भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ॥२२६॥
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः । आलिलिङ्ग सितच्छत्रलज्जास्मितसितानना ॥२२७॥
स राज्ञ्याः प्रावृष इव प्रणयेन क्षणे क्षणे । कोपप्रसादमेघार्कपर्यायापातमन्वभूत् ॥२२८॥
ततः सरलचित्तस्य क्रमेण समपद्यत । भार्याजितत्वं भूभर्तुर्दुर्विपाकार्पणोन्मुखम् ॥२२९॥
अधिकारपरित्यागाद्दोषाननुशयावहान् । वदद्भिर्वार्यमाणोपि प्राज्ञैर्हलधरादिभिः ॥२३०॥
पत्न्या संप्रेरितः श्वश्रूतनयस्नेहमुग्धया । पुत्राय कलशायाभूद्राज्यं दातुं समुद्यतः ॥२३१॥
यास्यस्यनुशयं राजन्नेवंवाद्यपि कारितः । सज्जं तेन रणादित्यनाम्ना छत्राभिषेचनम् ॥२३२॥
एकाधचत्वारिंशस्य वर्षस्य तनयः सिते । षष्ठेह्नि बाहुलस्याभूदभिषिक्तो महीभुजा ॥२३३॥
अथास्थाने रणादित्यो राजपुत्रान्निवेशयन् । चिन्तयन्राज्यमाहात्म्यं प्रतिपक्षिषु निष्ठुरः ॥२३४॥
अनन्तो राजपुत्रोयं देवेति कथयन्वचः । कृकाटिकान्यस्तहस्तः क्षितिपालं न्यवेदयत् ॥२३५॥
कुपितेन स भूभर्त्रा परिवृत्यावलोकितः । एवं कृतस्मितो व्यक्तं तमूचे नीतिनिष्ठुरः ॥२३६॥
इत्थं यत्र निवेद्यन्ते कान्यकुब्जादिभूभुजः । तत्रैव त्यक्तराज्यस्य कान्यास्तु प्रक्रिया तव ॥२३७॥
दिने दिने सानुशयो नियतं भविता भवान् । नाभिमानपरित्यागः कर्तुं शक्यो मुनेरपि ॥२३८॥
सुदूरदर्शिनां तत्र मन्त्रिणां हृदयंगमम् । राजा तस्य वचः श्रुत्वा प्रतिवाक्याक्षमोभवत् ॥२३९॥
दृष्ट्वान्येद्युर्नवं भूपं राजचक्रेण सेवितम् । नवेतरं च सहितं परिमेयैः परिच्छदैः ॥२४०॥

२१४ ¹) Thus corr. by A₂ from A₁ कम्बिरस्व°; A₂ gloss कम्बल् इषीच्चमानं स्वर्णं येषां तैः. २१७. ¹) Thus corr. by A₂ from A₁ °भवन्.—²) Thus A₂; A₁ जहत्. २२०. ¹) तुक्का supplied by A₂ in space left by A₁. २२१. ¹) Thus corr. by A₂ from A₁ मार्गास्सं°. २३२. ¹) सज्जं supplied by A₂ in space left by A₁.—²) A₂ gloss ततानन्तदेवेन रणादित्यनाम्ना छत्रा प्रतीहारः अभिषेचनं सज्जं कारित इत्यन्वयः कथं भूत एवंवाद्यपि. २३३. ¹) A₂ gloss कलशः.—²) Thus corr. by later hand from A₁ बहु°; A₂ gloss कार्तिकस्य. २३४. ¹) च supplied by A₂.

धीमान्हलधरो वृत्त्या कृतकालव्ययया नृपम् । एवं निर्भर्त्स्य संजातलक्ष्मीं तं प्रत्याजीहरत्सुतः ॥२४१॥
विधाय निःसुखं सूनुं राज्यभारार्पणाद्विभुम् । कस्मात्त्वं सुखसापेक्षो न जिहेष्यत्र वार्धके ॥२४२॥
तत्स्वयं राजकार्याणां कार्यमुद्वहनं त्वया । अभून्यो यौवनाभोगैरथमस्तु सुतस्तव ॥२४३॥
इत्युक्त्वा स पुनर्भूपमधिकारमजिग्रहत् । चक्रे कलशदेवं च कलया भुक्तिवञ्चितम् ॥२४४॥
पित्रोरेवान्तिके कुर्वन्नाहारादापि संततम् । ततो बभूव कलशो नाममात्रमहीपतिः ॥२४५॥
सर्वास्थानास्त्रपूजादिविधाने पार्थिवोज्झिते । पितुः सहायकल्पः स पौरोहित्यमिवाकरोत् ॥२४६॥
अनिमित्तप्रहृष्टानामनिमित्तानुतापिनाम् । न क्वापि चलचित्तानां तिरश्चामिव निश्चयः ॥२४७॥
दापयित्वा पतिं राज्यं निर्बन्धेनापि तावता । सूनौ बभूव यद्राज्ञी विप्रेमेर्ष्यानुतापिनी ॥२४८॥
सेर्ष्या स्नुषाणामुत्कर्षं पार्थिवप्रमदोचितम् । वेषालंकरणादौ सा रूक्षचित्ता न चक्षमे ॥२४९॥
दासीकृत्यं तया पुत्रमहिष्यः कारिताः सदा । गृहोपलेपने याश्च वैमुख्यमदर्शयन् ॥२५०॥
पुत्रो विग्रहराजस्य क्षितिराजाभिधस्ततः । राज्ञः पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ ॥२५१॥
तस्मै न्यवेदयत्खेदं स चित्तस्योपतापकम् । पुत्रे भुवनराजाख्ये राज्यलुब्धेतिविप्लुते ॥२५२॥
स हि तस्यात्मजो नीलपुरराज्यं समाश्रितः । तद्बलैः पितुरारब्धं विधातुं सोद्यमोऽभवत् ॥२५३॥
नाम भागवतानां च पूज्यानां स्वपितुर्व्यधात् । वसंयज्ञोपवीतानां शुनामशुचिमानसः ॥२५४॥
क्षितिराजः स्वबन्धौ च विरुद्धायां विशुद्धधीः । मनस्तापापहे चक्रे सर्वत्यागामृते स्पृहाम् ॥२५५॥
राज्यं कलशपुत्राय ज्येष्ठानन्तरजन्मने । रामलेखाभिधानायां राज्ञ्यां जाताय सत्वरम् ॥२५६॥
दत्त्वा स्तनंधयायापि तदोत्कर्षाभिधाय सः । राजर्षिर्विबुधैः सार्धं विदधे तीर्थसेवनम् ॥२५७॥
भुक्त्वा शमसुखं भूरीन्वर्षान्परमवैष्णवः । स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः ॥२५८॥
सं च भोजनरेन्द्रश्च[2] दानोत्कर्षेण विश्रुतौ । सूरी तस्मिन्क्षणे तुल्यं द्वावास्तां कविबान्धवौ ॥२५९॥
पितुः पितृव्यजाद्भ्रातुर्जातस्यानन्तभूभुजा । तन्वङ्गराजस्योत्सङ्गे नप्ता न्यासीकृतः शिशुः ॥२६०॥
तन्वङ्गोऽपि विवृद्धिं तन्नीत्वा राष्ट्रं शिशुं च तम् । पुनः प्रविष्टः कश्मीरानस्तं चक्रधरं ययौ ॥२६१॥
सर्वसाधारणीभूतभोगानां राजबीजिनाम् । तावज्ज्ञातेयमभवत्स्नेह द्रोहकलङ्कितम् ॥२६२॥
इन्दुराजात्मजात्सिंहराजो यो बुद्धराजतः । जातो मदनराजाख्यं वीरं पुत्रमजीजनत् ॥२६३॥
अत्युत्सिक्तः सुतस्तस्य दर्[2]भूपतिमण्डलात् । विधुरे राज्ञि निर्यातः शौर्योद्रेकादखण्डितः ॥२६४॥
तदानीं जिन्दुराजाख्यो डामरोद्रेकखिन्नया । राज्ञ्या स्वयं गृहं नीत्वा[1] साचिव्यं प्राहितोऽभवत् ॥२६५॥
काणः शोभाभिधस्तेन गाढोद्वेगावहः प्रभोः । देवग्रामस्थो डामरोऽप दस्त्वास्कन्दं निपातितः ॥२६६॥

२४८. [1]) $A_2$ gloss विप्रेमा निःस्नेहा ; $A_3$ विप्रमेर्ष्यानुतापिनी इत्यन्यादर्शे. २४९. [1]) क्ष: supplied by $A_3$ in space left by $A_1$. २५३. [1]) Thus $A_1$ ; $A_3$ नीलपुरराज्यं.—[2]) Thus corr. by $A_3$ from $A_1$ °रालब्धं ; $A_3$ gloss आस्कन्दं. २५४. [1]) वस supplied by $A_3$ in space left by $A_1$. २५६. [1]) $A_4$ gloss कलशदेवस्य द्वौ पुत्रौ ज्येष्ठो हर्षदेव एकः कनिष्ठ उत्कर्षो द्वितीयः. २५९. [1]) $A_4$ gloss अनन्तदेव.—[2]) $A_4$ gloss भोजराजश्च. २६०. [1]) $A_4$ gives in margin a genealogical list showing the descendants of the brothers उदयराज and कान्तिराज: उदयराज, संग्रामदेव, अनन्तदेव, कलश, and कान्तिराज, अम्सराज, तन्वङ्ग.—$A_4$ gloss (to पितुः) संग्रामदेवस्य.—[2]) $A_4$ gloss कान्तिराजपुत्रअम्सराजात.—[3]) $A_4$ gloss तन्वङ्गस्य.—[4]) Thus corr. by $A_3$ from $A_1$ तन्वगाज°.—[5]) $A_4$ gloss पौत्र उत्कर्षः. २६४. [1]) Thus corr. by $A_3$ from $A_1$ इन्दु°.—[2]) $A_3$ दूरं नृपती इत्यन्यादर्शे. २६५. [1]) Thus $A_1$ ; $A_3$ गत्वा. २६६. [1]) $A_3$ gloss देवग्रामी इति भाषया.

कम्पनाधिपतां दत्त्वा ततस्तस्य प्रतापिनः । पार्थिवो[1] राजपुर्यादीन्देशांश्चक्रे करप्रदान् ॥२६७॥

अनन्तभूभुजो राज्ये तत्तत्स्खलितसंकटे । आलम्बयष्टिप्रतिमो ययौ हलधरः क्षयम् ॥२६८॥

मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः । सजानिरुपदेशार्थी स तदेत्थमकथ्यत ॥२६९॥

मा कार्ष्ट परराष्ट्रेषु रभसारब्धसाहसम् । युक्त्या वल्लापुरादौ यो ऽप्यपोढं व्यसनं मया ॥२७०॥

विशङ्क्यो जिन्दुराजोयं पराध्यां वृद्धिमागतः । भेदं वः सह पुत्रेण[1] जयानन्दो[2] विधास्यति ॥२७१॥

कथितं तेन तत्स्मृत्वा जिन्दुराजं महौजसम् । विज्जेनाबन्धयद्राजा युक्तिमास्त्याजितायुधम् ॥२७२॥

अथ कालेन कलशक्ष्माभृत्कलुषिताशयः । भृत्यैरसाधुसंसेव्ये प्रसक्तिं प्राहितोध्वनि ॥२७३॥

तस्याभवन्बिज्जपित्थराजपाजादयः प्रियाः । तस्यैकदा राजपुत्राश्चत्वारः शाहिवंशजाः ॥२७४॥

पुत्रो गङ्गपतेर्नागनाम्नो[1] निकटसेवकः । सोपि तस्य जयानन्दः कौटिल्याध्यापकोभवत् ॥२७५॥

द्विजेन्द्रेमरकण्ठे तु याते शिवसमानताम् । राजा प्रमदकण्ठस्य ययौ तज्जस्य[1] शिष्यताम् ॥२७६॥

दुःशीलस्य प्रकृत्यैव तस्याकृत्योपदेशकृत् । गम्यागम्यविचारस्य परिहर्ताभवद्गुरुः ॥२७७॥

गुरोर्गतविकल्पत्वं तस्यान्यत्किमिवोच्यताम् । त्यक्तशङ्कः प्रववृते स्वसुतास्वरते[1]पि यः ॥२७८॥

महासमयसंचारचतुरैर्वैरभीतितः । गण्यते स्वप्रभावोभैर्भैरवोपि न निर्भयैः[1] ॥२७९॥

ते भट्टपादास्त्रासेन पतिता भ्रमजानवः । बिडालवणिजा[1] स्वस्याः शिरोहस्तार्पणैः कृताः ॥२८०॥

पुरा कृष्णबिडालाङ्को वणिक्कश्चिदिहाभिधाम् । बिडालवणिगित्यात्मनामविस्मारिकां[1] दधे ॥२८१॥

यो[1] व्याजमूर्खो वैद्यत्वगुरुत्वार्हकृतः क्रमात् । पदकृद्रजकादीनां शिल्पिनां गुरुतामगात् ॥२८२॥

स भट्टपादानुल्लाघांश्चक्रे मूर्ध्न्यधिरोपयन् । श्रेष्ठी बिडालविष्ठौघहिङ्गुगन्धोत्कटं करम् ॥२८३॥

एवं प्रकृतिनिःसारैरपि गर्जद्भिरन्वहम् । आन्ध्यं स गुरुभिर्निन्ये विश्वसोम्बुधरैरिव ॥२८४॥

ये दीर्घजागरा रात्रौ भुग्निभोजनसेविनः । अजीर्णपिशितोद्गारनिन्द्यदुर्गन्धकन्धराः[1] ॥२८५॥

अवस्करप्रणालाभाः पृष्ठे क्षिप्रमधःपथैः । शौचपात्र इव क्षिप्रमुज्झन्ति[1] मधुनिर्झरम् ॥२८६॥

नक्तमातोद्यवाद्यज्ञैस्तैः सार्धं कृतसेवनः । चारणो वेणुवाद्यज्ञो योषितां धर्षयन्हठात् ॥२८७॥

कनकाख्ये मठेऽहामे क्रुद्धे हलधरात्मजे । स्तम्भे निबद्ध्य तद्भृत्यैश्छिन्ननासो व्यधीयत ॥२८८॥

यो विटश्वमको नाम लूनाङ्गोमङ्गलात्तहः । शनैर्लेभे स वाल्लभ्यं कौहन्या[1]भ्रवभूपतेः ॥२८९॥

प्रसादवित्तो भूभर्तुरन्तरे मन्त्रिणामपि । लब्धप्रतिष्ठः स प्राप ठक्कुराख्यां नृकुक्कुरः ॥२९०॥

प्रथां प्राप्तस्त्रपाहेतुं[1] स भञ्जन्वंशमञ्जसा । प्रागेव नासावंशस्य भञ्जनं बहमन्यत ॥२९१॥

तेनोद्दीपितदौःशील्यः स यच्चक्रे[1] त्रपोज्झितः । अवाच्यमपि वृत्तान्त मध्यपातात्तदुच्यते ॥२९२॥

काञ्चनाख्या स्वसा राज्ञो नागाख्या च तदात्मजा । परदारप्रसक्तेन संभोक्तुं नात्रशोषिता ॥२९३॥

---

२६७. [1]) Thus corr. by A₃ from A₁ सपर्यो and °देशांश्चके —[2]) A₃ gloss राजाविर. २७१. [1]) A₄ gloss कलशेन.—[2]) A₄ gloss अनन्तरेवगङ्गपतेर्नागनाम्नो भृत्यस्य पुत्रः. २७२. [1]) A₄ gloss हलधरेण. २७४. [1]) Emended; A R G °भवाह्निज्ज. २७५. [1]) A₄ gloss गुङ्ग भ्रातु. २७६. [1]) Thus corr. by A₃ from A₁ तज्जमारि°. २७८. [1]) र supplied by A₃; A₄ gloss स्वा आत्मीया प्यासौ पुत्री तस्याः सुरते सम्भोगे. २७९. [1]) Thus A₁; A₃ निर्भयः. २८०. [1]) Thus corr. by A₃ from A₁ बिडाज°. २८१. [1]) Thus corr. by A₃ from A₁ बिडालनाम इत्या°. २८२. [1]) This verse has been omitted by A₁ and added in margin by A₃; found in R G. २८५. [1]) Thus A₃, A₁ °आगराद्राम्नो. २८६. [1]) Thus corr. by A₃ from A₁ क्षिप्रम°. २८९. [1]) Thus corr. by A₃ from A₁ कौह°. २९१. [1]) Thus A₃; A₁ कथामासो पाहेतु. २९२. [1]) Thus R G; A कथाके.

गजुकस्य सपत्नीको गुरुवान्गुकभूपतिः । स यस्मैस्त्रीजनया तस्थौ तु निभृतव्ययः ॥२९४॥
भिक्षकों धान्यमुष्टीनामोचयन्नामतो द्विजः । योऽभवद्रामदेवाख्यो वैधेयो लोष्टकाभिधः ॥२९५॥
स ग्रामसेनपालस्य प्रसादात्पर्वटश्रियि । मस्तूनां मुष्टिमदानां विज्ञानान्मुष्टिलोष्टकः ॥२९६॥
परां प्रसिद्धिं संप्राप्तो नवस्थापस्य राशिनः । आसीद्गुरुस्यकोऽन्यदेवाख्यो रतिभित्रः ॥२९७॥ तिलकम् ॥
भट्टारकमठाधीशः साधुर्व्योमशिवो जटी । सुर्खुटाख्याधिकरणे गृहीतनियतव्ययः ॥२९८॥
अन्धयान्धार्थिकान्मन्मनाख्यः स्वार्थनसेवकात् । अवन्तिपुरजं हस्तपावकश्रिंजचेलकम् ॥२९९॥
परिभवमुपादत्त लालितस्तेन यं पुरा । स तेन वारिताधस्तभङ्गाद्धमवाम्बरः ॥३००॥
विसृज्यमानः पुष्पाणि माहयित्वा नृपान्तिकम् ।[1] ................... ॥३०१॥
मदनो नाम वाचालः प्रपेदेऽभ्यन्तरङ्गताम् । शनैः कौकुम्बगोष्ठीमध्यपातं समाभजन् ॥३०२॥ चक्रलकम् ॥
तैस्तैर्म्लेच्छविटैश्चाटुकारैः क्षिप्रविमोहितः । दोषानपि गुणान्मेने कलत्राः कलुषीकृतः ॥३०३॥
नर्म त्रपणकारि वाक्यमुचितं कृत्यं प्रजापीडनं तेजस्वित्वमलज्जता सरसतागम्याङ्गनासंगमः ।
सारल्यं खलगालिदानसहनं येषां न तत्संनिधौ किंचित्कर्म कुकर्म दोष इति वह्निश्राय संत्यज्यते ॥३०४॥
राजा चौर्यरतौत्सुक्यात्प्रतिवेश्मं परिभ्रमन् । स्वदारालिङ्गनैः प्रीतिं क्षणदासु न लब्धवान् ॥३०५॥
पारतन्त्र्यकृतापारप्रीतिः परवधूरतिः । अभिलाषमलोऽस्त्येके रागभाजां घृताहुतिः ॥३०६॥
तान्कुट्टनान्पुरस्कृत्य पत्न्यपानेकदा नृपः । जिन्दुराजगृहं प्रायात्स रात्रौ चौर्यकामुकः ॥३०७॥
तत्रासीज्जिन्दुराजस्य स्नुषा परमपुंश्चली । स्वगृहे दत्तसंकेता नक्तं कलत्रामुभुजः ॥३०८॥
प्रविशन्तमधावंस्तं भयार्द्रिः शब्दितं श्वभिः । धृतास्त्रयो गृहद्वारं चण्डालाश्चौरशङ्किताः ॥३०९॥
तान्हन्तुमुद्यतान्दृष्ट्वा तं क्षितौ पतितं भयात् । घ्नन्त्यस्तस्य वपुषो ररक्षुरनुयायिनः ॥३१०॥
तेभ्यः स मुष्टिघातादि ददस्त्रः कथमप्यभूत् । मैवं कलत्रादेवोचमित्युक्त्वा त्याजितो निजैः ॥३११॥
प्राणहीनं[1] पुरस्कृत्य नारीमभिससार यत् । तदेव कामिनस्तस्य नूनमासीदमङ्गलम् ॥३१२॥
स निर्यातो गृहात्कान्ताकटाक्षविवशीकृतः । पथि कालीकटाक्षार्थं दैवात्त प्रलयं ययौ ॥३१३॥
निजचित्तापराधेन कुर्वन्नीतिव्यतिक्रमम् । अस्पृश्येभ्यः परिभवं भूपालोऽप्युपलब्धवान् ॥३१४॥
इन्द्रियैरिन्द्रचन्द्राद्या द्रेपिता यैः सुरा अपि । अपरिम्लानमानस्त्वं तैर्मर्त्यस्याथ वा कथम् ॥३१५॥
प्रागुन्मीलति दुर्यशः सुविषमं गर्वोभिलाषस्ततो धर्मः पूर्वमुपैति संक्षयमथो श्लाघ्योऽभिमानक्रमः ।
संदेहं प्रथमं प्रयात्यभिजनं पश्चात्पुनर्जीवितं किं नाभ्येति विपर्ययं विगलिते शीलस्य चिन्तामणेः ॥३१६॥
राजधानीमथाप्तस्य दुःशीलस्य महीपतेः । क्षपायामेव तां वार्तां पितरावधिजग्मतुः ॥३१७॥
तौ हसित्वा सुतस्नेहलज्जाशोकान्वितौ चिरम् । निश्चयं बन्धने तस्य सदोषस्य प्रचक्रतुः ॥३१८॥
सर्वविद्यानिधिं ज्येष्ठं नप्तृणां कल्पिकात्मजम् । हर्षं राज्ये चिकीर्षू च निन्यतुस्तां निशीथिनीम् ॥३१९॥

२९५. [1]) Thus A B G; C भिक्षुक्.—[2]) A₂ gloss ब्राह्मण नाम मानः. २९८. [1]) A₂ gloss मठीमठ्. २९९. [1]) The second half of this verse has been omitted by A₁ and supplied by A₂ in margin. ३००. [1]) A₂ gloss मदनं वक्ष्यमाणं.—[2]) A gloss व्योमशिवेन. ३०१. [1]) A₁ indicates here a *lacune* of two *pâdas*. ३०७. [1]) Thus corr. by A₂ from A₁ कुट्टनाद्यु°. ३११. [1]) Thus A₁ originally; भूत् has been subsequently erased by A₁ and replaced by two dots. ३१२. [1]) A₂ gloss चक्रवर्तिनं. ३१४. [1]) Thus emended with C and G *sec. manu*; A °ज्ञयाख्या°. ३१५. [1]) यं supplied by A₂.

आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः । ऊचे बिज्जजयानन्दौ[1] साशङ्को जनकाद्भयम् ॥३२०॥
तन्मतेन जयानन्ददत्तहस्तः कथंचन । अन्वीयमानो बिज्जेन स पित्रोः प्राविशद्गृहम् ॥३२१॥
पिता प्रविष्टमात्रं तं वक्ति दत्तकपाटकः । अभाग्यभागिञ्छिरिहि क्षुरिकामित्यथाब्रवीत् ॥३२२॥
एवं वादमिद्वाक्संधिमालम्ब्य पाणिना । सावष्टम्भं स्पृशञ्छस्त्रं बिज्जो राजानमब्रवीत् ॥३२३॥
राजन्मानवतां धुर्यो भवन्नपि भवान्कथम् । नात्याज्यं[1] मानिनां वेत्ति मानग्रहमहाव्रतम् ॥३२४॥
गृहीतवेतनेनायं राजपुत्रेण शस्त्रिणा । संकटेस्मिन्मया स्वामी जीवता त्यज्यते कथम् ॥३२५॥
पिता भवानयं पुत्रः क्षणेन्यस्मिन्महीपते । मय्यसंनिहितेमुष्य यथोग्यं तद्विधीयताम् ॥३२६॥
मुग्धं विमोह्य नृपतिं वचोभिः स्निग्धकर्कशैः । बिज्जः स्वामिनमादाय निराक्रामत्तदन्तिकात् ॥३२७॥
बिज्जस्यापूजयन्धीरास्तद्धैर्यमतिमानुषम् । अनन्तदेवस्याप्यग्रे यदेवं स व्यजृम्भत ॥३२८॥
चण्डी नरपतेः[1] पत्नी भाव्यर्थबलवत्तया । अत्याज्यजपमौनस्या तस्मिन्नवसरेभवत् ॥३२९॥
सा चेदासिष्यतोयुक्ता[1] नाभविष्यत्तदेतरत् । नियमात्सर्वनाशाद्वा[2] बन्धनात्कलशस्य वा ॥३३०॥
ततो बिज्जेन कलशः सत्वरेण प्रवेशितः । अस्यन्दिल्हाभिधानाया वल्लभाया निवेशनम् ॥३३१॥
शिरोर्तिरस्य संजातेत्युक्त्वा भीतं पतिं व्यधात् । सा प्राज्ञा शान्तवृत्तान्ता तैलेनाभ्यक्तमस्तकम् ॥३३२॥
व्याजेन तेन सर्वस्य संप्रवेशं निषिध्य सा । पतिं जुगोप विन्यस्य बिज्जं द्वारस्य रक्षणे ॥३३३॥
ततः समाधेर्विरता राज्ञी निर्भर्त्स्य भूपतिम् । कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ ॥३३४॥
वक्तुं[1] बद्धोद्यमो राजा तथैव प्रययौ यदा । दत्तप्रवेशो बिज्जेन तदैकाक्येव सोभवत् ॥३३५॥
निषेधादनुगन्तृणां ततः क्रुद्धो धराधवः । रुषित्वा विजयक्षेत्रं गन्तुं प्रावर्ततोद्धतः ॥३३६॥
तं प्रयान्तं सपत्नीकं प्राप्तं पद्मपुरान्तिकम् । अथोपेत्य तत्रस्था विश्वावर्तादयो[1] द्विजाः ॥३३७॥
अधिकारं स्वयं त्यक्त्वा राजन्किमनुतप्यसे । कृतस्यानुशयो[1] युक्तो न सतो नासतोपि वा ॥३३८॥
न च ते दुर्मती त्यक्ताः[1] प्रजा एता मयेत्यपि । ध्यात्वा सूनोः समुचिता कर्तुं दुष्टस्य वाच्यता[2] ॥३३९॥
न यन्त्रपुत्रकस्येव शक्तिः कापि हि भूभुजः । भवेत्साधुरसाधुर्वा स प्रजानां शुभाशुभैः ॥३४०॥
उज्झन्ति यत्पयोवाहा जलानि तडितोथ वा । वनस्पतीनां सदसत्कर्मपाकस्य तत्फलम् ॥३४१॥
यथापथस्थितं पुत्रं त्यक्त्वैकस्यासितुं सुखम् । कोशं[1] त्यक्त्वा प्रस्थितस्य घटते तत्कथं तव ॥३४२॥
धाराधिरूढसामर्थ्यः सद्वंशः शुचिमानपि । संस्पृश्यते क्षीणकोशः कृपाण इव कैः पुमान् ॥३४३॥
भुक्त्वैस्तैश्च नृपो यावत्प्रत्यावृत्तिं विचारवान् । तावत्स पुत्रेणाभ्येत्य सभार्येण प्रसादितः[1] ॥३४४॥
अथ प्रविश्य नगरं स प्रासादापवर्जिताम् । अशान्तमन्युरादाय लक्ष्मीं भूयो विनिर्ययौ ॥३४५॥

---

३२०. [1]) $A_3$ gloss जयानन्दः नागपुत्रः युकुरुआलपुत्रः. ३२४. [1]) Thus corr. by $A_2$ from $A_1$ न त्याज्यं. ३२९. [1]) ण्डी नरपतेः and नवसरेभवत् supplied by $A_2$ in space left by $A_1$. ३३०. [1]) सिष्यतो supplied by $A_2$ in space left by $A_1$.— [2]) र्वनाशाद्वा बन्ध supplied by $A_2$ in space left by $A_1$. ३३५. [1]) Emended : $A_1$ वन्धुं, $A_2$ वन्धुं. ३३६. [1]) क्रुद्धः supplied by $A_2$ in space left by $A_1$. ३३७. [1]) Emended; A विश्वाव°. ३३८. [1]) कृतस्या supplied by $A_2$. ३३९. [1]) Thus corr. by $A_2$ from $A_1$ त्यक्त्वा.—[2]) $A_2$ gloss, partly effaced, दुर्मती दुष्टबुद्धिविशिष्टे पुत्रे मया एताः प्रजाः त्यक्त[ा:]पुत्र एव राज्य[स्या]धना-हित्यपि [ध्या]त्वा दुष्टस्य पुत्रस्य वाच्यता निन्दा कर्तुं न समुचिता ते˙˙˙स्वन्वयः. ३४२. [1]) $A_2$ gloss भाण्डागारं. ३४५. [1]) Emended : A प्रसाद°; C प्रसादा°.

हयायुधतनुत्राणि स्वयं स्वीकृत्य निर्गतः । देवीं प्रतीक्षमाणोस्थात्संसरिस्वारे ततः क्षणम् ॥३४६॥
नानाप्रकारानारोप्य कोशाश्वेषु नृपाङ्गनाः । नावःशकुनमपि गृहे निर्वाण्याः पर्यशोषयन् ॥३४७॥
अज्ञातवार्तः प्राक्तूष्णीं तस्मस्थानेभवज्जनः । ज्ञातवार्तस्तदा स्वासीदाक्रन्दमुखराननः ॥३४८॥
प्रतिमोक्तुं पुरे ताभ्यां दत्तपुष्पाञ्जली जनः । बाष्पबिन्दुमिवाद्रीक्षीदीर्घानर्घकणानिव ॥३४९॥
हा मातर्हा पितः क्वेत्थं गच्छतः परिदेवितात् । इत्यस्मादपरः शब्दो मार्गेषु न तदा श्रुतः ॥३५०॥
मार्गेन्तरान्तराक्रन्दविरतौ निक्षरध्वनिः । शैलानां शोकनिःश्वासफूत्कार इव शुश्रुवे ॥३५१॥
तयोराक्रन्दितैः शश्वत्यपि संजातसंस्तवौ । कर्णौ भूर्येष्यशृणुतामाक्रन्दितमिवासकृत् ॥३५२॥
पुत्रागता तादृशौ तौ दृष्ट्वा मार्गे शुभीकसाम् । खगानां शावभरणमपि लोको व्यगर्हत ॥३५३॥
तयोः पुत्रानयोस्तप्रचेतसोर्विजयेश्वरः । मनःप्रसादं संदृष्टः स्निग्धबन्धुरिवाकरोत् ॥३५४॥
तत्तत्र भाण्डागाराश्वभृत्याद्यावसथार्पणैः । संविधानक्रियाभिश्च व्यपनोदनमन्वहम् ॥३५५॥
देशे कोशोपकरणपूर्णगोणीगणावृते । आसन्निन्धनगण्डालीच्छन्नरथ्या इवापणाः ॥३५६॥
तन्वङ्गराजतुक्कादिशातिपुत्रा नृपात्मजाः । तं सूर्यवर्मचन्द्राद्या डामराश्चानुवव्रजुः ॥३५७॥
डामरान्क्षीरभूपादीन्राजा नौनगरादिषु । स्थानेषु स्वेषु निक्षिप्य रक्षित्वे गुप्तिमानभूत् ॥३५८॥
विश्रान्तसर्वचित्तस्य श्रीमतोनन्तभूपतेः । प्रावर्तन्तोत्सवैर्गन्तुं दिनानि विजयेश्वरे ॥३५९॥
राजपुत्राश्वारोहशास्त्रिडामरमण्डलैः । कृत्स्नैरेव स्थितिर्बद्धा सविधे वृद्धभूभुजः ॥३६०॥
वत्सरे पञ्चपञ्चाशे ज्यैष्ठे मासि विनिर्गतः । आसाद्य विजयक्षेत्रं स स्वर्गसुखमन्वभूत् ॥३६१॥
कलशस्तु गते राज्ञि प्राप वीतप्रतिद्वं महीम् । रक्षाही चलिते यातरक्षां निधिमहीमिव ॥३६२॥
स्वराज्यमुज्ज्वलीकर्तुं रिक्तोपि विहितोद्यमः । चक्रे संमन्त्र्य विज्जाद्यैः संमतानधिकारिणः ॥३६३॥
तेन सर्वाधिकारेषु जयानन्दो नियोजितः । द्वारे वराहदेवश्च वितस्तात्रपुरोद्भवः ॥३६४॥
यो डम्बराधिकार्यासीज्जिन्दुराजस्य कम्पने । राज्ञा विजयमित्रः स कम्पनाधिपतिः कृतः ॥३६५॥
यथाधिकारमन्यांश्च विनिधायाधिकारिणः । राजार्थचिन्तामारेभे संरब्धः पितृविग्रहे ॥३६६॥
जयानन्दः पदातीनां चिकीर्षुरथ संग्रहम् । यत्नादनुचितेभ्योपि धनिकेभ्योग्रहीदृणम् ॥३६७॥
स्वीकृत्य पत्तीन्विज्जादिराजपुत्रगणान्वितः । अथावन्तिपुरं प्राप योद्धुं वृद्धनराधिपम् ॥३६८॥
अभ्यर्थ्य कारितो वेलां राज्ञा काराविनिर्गतः । शिमिकावर्त्मना योद्धुं जिन्दुराजो विनिर्ययौ ॥३६९॥
तेषामुद्योगमाकर्ण्य क्रुद्धा वृद्धमहीभुजम् । स्वे डामराश्चवाराद्याः संरम्भादुपतस्थिरे ॥३७०॥
अजायत ध्वस्तगुडकाकीर्णतुरगमण्डला । शस्त्रैः सत्राटवी कृत्वा संकटा विजयेश्वरे ॥३७१॥
ततः सूर्यमती प्राप्तापि परमकोपनम् । ययाचे पुत्रवात्सल्यादमुं दिवसद्वयम् ॥३७२॥

३४६. [1]) Thus corr. by A₂ from A₁ °स्था सरि°. ३४८. [1]) Thus corr. by A₂ from A₁ °त्तदाप्वासी°. ३५०. [1]) Thus corr. by A₂ from A₁ क्व. ३५३. [1]) A₂ gloss शावा: पोताः तेषां भरणं पोषणं. ३५६. [1]) A₂ भाण्डागाराः गञ्ज इति भाषया. ३५७. [1]) Thus corr. by A₂ from A₁ °तुङ्गा°. ३६१ [1]) A₂ gloss अमन्त्रयेषः.—[2]) A₂ gloss स्वर्गसुखं परमानन्दं न तु मृ [तिम्]. ३६२. [1]) A₂ gloss अनरहितम्. ३६४. [1]) च supplied by A₂ in space left by A₁.—[2]) A₂ gloss वितस्तात्रं नाम वस्तुरं । तस्मादुद्भवो यस्य स वितस्तात्रपुरोद्भव. ३६५. [1]) Thus corr. by A₂ from A₁ यो डाम्बाधि°.—[2]) A₂ gloss कलशेन. ३६९. [1]) वे supplied by A₂ in space left by A₁. ३७०. [1]) संरम्भा supplied by A₂ in space left by A₁.

अस्याग्रतश्च भव्यार्थीन्द्विजाञ्छिशिरे विसृज्य सा । तन्मुखेनातिवात्सल्यादिदमूचे रहः सुतम् ॥३७३॥
विनाशशंसिस्त्वं पुत्र कस्ते मतिविपर्ययः । तीव्रशौर्येण पित्रा यद्देव योद्धुमिच्छसि ॥३७४॥
यस्य भ्रूभङ्गमात्रेण दरदाजादयो हताः । तत्कोपानले कस्मादीहसे शलभायितुम् ॥३७५॥
अस्मिंस्तु नीतिनिर्मुक्ते नीतिशोभसमे नृपे । कस्त्राता स्यात्त्वदीयानां तृणानामिव शस्त्रिणाम् ॥३७६॥
सेनाङ्गैः कतमैः केन शौर्येण कतमैर्धनैः । भवाञ्छक्तिमतां धुर्यं योद्धुमेनं प्रधावति ॥३७७॥
दैवात्संत्यक्तमेतेन भुङ्क्ते राज्यमखण्डितम् । पित्रा तीर्थोपविष्टेन किमिवापकृतं तव ॥३७८॥
द्वेष्टृभिः पात्यमानो व्यसनेऽस्मिन्सुदारुणे । प्रयास्यसि दिनैरेव रिक्तोऽप्यत्यन्तरिक्तताम् ॥३७९॥
नय सेनाः पितुर्भीतिर्जीवन्त्यां मयि नास्ति ते । ऋजुमेनं नयस्वार्द्रं प्रत्युतानुनयोक्तिभिः ॥३८०॥
इति वृत्तमुखैर्गूढं पुत्रो मात्रा कृतार्थनः । सर्वाशाभ्योऽनयत्सैन्यं राजावेव निजान्तिकम् ॥३८१॥
श्रुतापसारं सैन्यानां दूतैरेत्य प्रसादितम् । उपालेभे पतिं प्रातर्धृष्टा प्रत्युत वल्लभा ॥३८२॥
राज्ञ्या मिथस्तयोरेवं शमितारोपयोरपि । पिशुनप्रेरणात्प्राप कालुष्यं धीः क्षणे क्षणे ॥३८३॥
वैरस्य कर्पमेताद्धि भेदं याति मुहुर्मुहुः । संधीयमानमपि यच्छिन्नाम्बरमिवाशयम् ॥३८४॥
बाह्याल्यादौ व्रतोद्यन्तं श्रुत्वा नताशयो नृपः । गृहं प्रविष्टो भृष्टजीभाषितैर्जडतां ययौ ॥३८५॥
एवं प्रतिदिनं तप्तस्त्वक्तलापः प्रतिक्षपम् । स्वच्छाशयः शरत्पुष्पतडागौपम्यमाययौ ॥३८६॥
चकार पितृपक्ष्याणां पुत्रो वेश्मादिनाशनम् । पिता तु पुत्रपक्ष्याणां न किंचित्स्त्रीवशीकृतः ॥३८७॥
पुत्रस्नेहान्धया पत्न्या बाधितैश्चानुयायिभिः । रूक्षोक्तिभिस्ताप्यमानस्तस्थौ दुःस्थः सदा नृपः ॥३८८॥
राज्यं जिहीर्षुः पुत्रस्य निःसारं तद्बलं विदन् । ईषत्स जिन्दुराजस्य गणनां पौरवेकरोत् ॥३८९॥
पुत्राज्जिहीर्षुणा राज्यं तेन तन्वङ्गनन्दनाः । प्रार्थ्यन्ते स्म तदा राज्यकृतये तत्पराङ्मुखाः ॥३९०॥
संभेद्य तं तदा राज्ञी स्वाम्यंयाशर्मशङ्किनी । हर्षं देवी नृपं कर्तुं दूतैराहूतवत्यभूत् ॥३९१॥
स पितामहयोर्दूतैराहूतः साहसोन्मुखः । बाह्याल्यां निर्गतः सज्जै रक्ष्यमाणोऽपि रक्षिभिः ॥३९२॥
दत्तपार्ष्णिकशाघातः क्षणार्धेनोदलङ्घयत् । मनोजवेनाममौजा वाजिना पञ्चयोजनीम् ॥३९३॥
वाजिनं विजिताभ्यासमनुगन्तुं समुद्यताः । अगच्छन्बहवो मार्गे दीनाः सेनाहयाः श्रमम् ॥३९४॥
प्राप्तस्य पादयोस्तस्य पतितस्य पितामही । आनन्दाश्रुजलस्यन्दैरभिषेकं प्रचक्रतुः ॥३९५॥
पुत्रे तन्निकटं प्राप्ते कलशः कम्पिताशयः । अप्रियाचरणात्पित्रोः संधित्सुः स न्यवर्तत ॥३९६॥
स तस्य नगरात्पत्नीः पार्श्वं प्राप्तो व्यसर्जयत् । अकरोद्विद्रुते राष्ट्रे स्वभेदस्याप्रकाशनम् ॥३९७॥
एवं प्रवर्धमानेऽपि वैरे कलशभूपतिः । कंचित्कालं मते मातुरवर्तिष्ट मनागिव ॥३९८॥
खशालाः कलशाद्वेशाद्विषयाद्वः कम्पनापतेः । तदा प्रावर्तितनतेर्मार्गे संत्याजितः पतिः ॥३९९॥
अथान्तरे शमयितुं वैरं देशोपघातकृत् । तावुद्दिश्य पितापुत्रौ द्विजाः प्रायं प्रचक्रिरे ॥४००॥

३७३. 1) Thus corr. by $A_2$ from $A_1$ °शीशिरे. ३७६. 1) $A_2$ gloss अर्थं. ३७८. 1) Thus corr. by $A_2$ from $A_1$ भुक्त°. ३८१. 1) $A_2$ gloss अनन्यबलपरायोः. ३८२. 1) रूप supplied by $A_2$ in space left by $A_1$. ३८५ 1) Thus corr. by $A_2$ from $A_1$ बाह्याल्या°. ३८६. 1) °पुष्प supplied by $A_2$ in space left by $A_1$. ३८८. 1) Thus $A_2$; $A_1$ वधा. ३९१. 1) Thus corr. by $A_2$ from $A_1$ स्वम्य°. ३९२. 1) $A_2$ gloss पितामहयोः पितामहपितामह्योः.

संधिबन्धे समुत्पन्ने तनयस्यानुरोधतः । दंपती संप्रविष्टौ तौ सार्धं नावद्यं पुरम् ॥४०१॥
अथानन्दादिदुष्प्रायाथ दुष्टा बन्धोद्यतं सुतम् । भूयोपि ययतुः खेदान्निर्गत्य विजयेश्वरम् ॥४०२॥
तस्याथ ग्रामकूटानि पुत्रो राजावदाहयत् । व्यापादयत्पदातींश्च विपक्षस्वामिभुक्तिभिः ॥४०३॥
तथा प्रवर्धमानेपि विरोधे तस्यरोधयत् । वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितम् ॥४०४॥
लुड्डाभिधाभूत्कैवर्तबन्धकी तद्विधेयधीः । थक्कडामरनामा च नज्जारः खलतिस्तदा ॥४०५॥
स तत्राविश्य दुष्टात्मा कथ्यमानौ समीपगैः । शुश्राव पितरौ नित्यं लीलास्मितसितानन: ॥४०६॥ युग्मम् ॥
तौ दंपती पुनर्हेमतुलापुरुषयुग्मदौ । चिन्ताभिर्धर्मचर्याभिर्मनस्तापममुञ्चताम् ॥४०७॥
यदा पुनस्तयोर्दार्ढ्यमाद्यत्वाच्च व्यहीयत । तदा सेर्ष्यः स दुष्पुत्रो रात्रौ वह्निमदापयत् ॥४०८॥
तेनाभिनोर्बरीशस्य सर्वोपकरणैः समम् । भस्मावशेषमभवद्विजयेश्वरपत्तनम् ॥४०९॥
सर्वनाशशुचा दीना राज्ञी मर्तुं समुद्यता । तन्वङ्गपुत्रैश्चकृषे कथंचिज्ज्वलतो गृहात् ॥४१०॥
त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितम् । निःशेषं राजसैन्यं तदजायत दिगम्बरम् ॥४११॥
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषादनृत्यज्ज्वालौघैर्गगनालिङ्गिभिः समम् ॥४१२॥
अतरद्भ्रष्टसर्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ॥४१३॥
संप्राप्य मातरमुष्टं रत्नलिङ्गं नृपाङ्गना । व्यक्रीणाल्लक्षसमत्या टाकानां पार्श्वमीयुषाम् ॥४१४॥
क्रीत्वा च मददौ पूर्वं भृत्यानां भोजनांशुके । धनेन तेन निर्दग्धान्यपि धामान्यशोधयत् ॥४१५॥
भस्मकूलतलाच्चावलब्धं स्वर्णादि भूभुजा । कथापि याचतो हन्त प्रथयत्यद्य कौतुकम् ॥४१६॥
राजा भून्यादवीभूते पत्तने तत्र सानुगः । नड्वलग्रथितच्छत्रपटलाच्छादितेवसत् ॥४१७॥
तावत्यप्यर्थसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राजोचितामाज्ञां न सिद्धं वृद्धभूपतेः ॥४१८॥
भ्रष्टाभिभवो मातुरानुकूल्याज्जवो नृपः । परितापं पितुस्तैस्तैर्दुःसंदेशैः सदाकरोत् ॥४१९॥
निर्बन्धादथ पुत्रेण पर्णोत्सगमनं पिता । निर्वासनोत्सुकेनोक्तः शश्वद्दूतमुखैर्यदा ॥४२०॥
प्रभवन्त्या यदा नासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्यमाणः साधिक्षेपं क्षणे क्षणे ॥४२१॥
तदा जातु रहः कुर्वंस्तन्वङ्गे थक्कने स्थिते । उवाचानुक्तपूर्वं तामेवं स परुषं वचः ॥४२२॥ तिलकम् ॥
अभिमानो यशः शौर्यं राज्यमोजो मतिर्धनम् । मया जायाविधेयेन हन्त किं किं न हारितम् ॥४२३॥
मिथ्योपकरणं नारीर्गणयन्ति नृणां जनाः । परिणामे तु नारीणां क्रीडोपकरणं नराः ॥ ४२४ ॥
द्वेषोन्मेषाल्पसक्ताभिर्विरक्ताभिरसूयया । के नाम नात्र कान्ताभिः कृतान्तस्यातिथीकृताः ॥४२५॥
रूपं काश्चिद्बलं काश्चित्प्रज्ञां काश्चिच्च कार्मणैः । पुंस्त्वं काश्चिदसून्काश्चिन्नृणां जहुरङ्गनाः ॥४२६॥
हरन्ति पादभिरिव क्ष्मां पुत्रैरन्यगोत्रजैः । मत्ताः पयोधरोत्थत्वात्तरङ्गिण्य इवाङ्गनाः ॥४२७॥
पर्यन्ते चेतनमिमे किं जीर्णैरीदृशैरिति । पोषयन्ति सुतान्भर्तॄञ्शोषयन्ति तु योषितः ॥४२८॥
सर्वकालं विदित्वापि दोषान्योषित्कृतानमून् । प्रतिपत्त्यनुरोधेन मयेयं नावधीरिता ॥४२९॥

४०६. 1) $A_2$ gloss पितराविति पितरौ राजा राज्ञी च राजा थक्कडामरनाम्ना समीपगैः कथ्यमानः राज्ञी च लुड्डाभिधा कैवर्ती नाम्ना कथ्यमाना स्वसारार्थमित्यर्थः. ४१४. 1) Thus corr. by $A_2$ from $A_1$ नृपात्मजा.—2) Thus corr. by $A_2$ from $A_1$ विक्री°. 3) Thus $A_2$; $A_1$ पूर्वमीशु°. ४१५. 1) Thus $A_1$; $A_2$ तस्य°. ४१७. 1) नडस्तृणं । चित्र इति भाषया. ४२६. 1) रूपमुन्माथि supplied by $A_2$ in space left by $A_1$.

प्रभविष्णुर्मिहत्येयमैहिकीः सुखसंपदः । परलोकसुखस्याशामपि हन्तुं समोद्यता ॥४३०॥
वलीपलितयुक्तस्य नेदीयोमरणाध्वनः । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितम् ॥४३१॥
क्षपाकरकलामौलेः किल्बिषक्षपणक्षमा । द्वारोपकण्ठसंसेवोत्कण्ठा कुण्ठीभवेत्कथम् ॥४३२॥
पुत्रो लोकद्वयत्राता कस्यान्यस्येदृशो भवेत् । तीर्थात्स्थापयन्मां यत्कुपथे मृतमिच्छति ॥४३३॥
प्रतिभात्यवगीतोयं प्रवादो मेद्य चेतसि । अनयान्यकुलोद्भूतो यदयं संप्रवेशितः ॥४३४॥
विसंवादिनमाकाराचारैर्बन्धुविरोधिनम् । पुत्रं पितुरसंदिग्धं जानीयादन्यरेतसम् ॥४३५॥
सुचिराविष्कृताकूतां त्यक्त्वा प्राणाय यन्त्रणाम् । एवं वदन्पतिस्तस्याश्चक्रे मर्मसु ताडनम् ॥४३६॥
गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते । आमृष्टविप्रियालापा साभूदधिकलज्जिता ॥४३७॥
मदनमस्य पुत्रो हि प्रशास्ताख्यस्य सोभवत् । विपन्नापत्ययोपात्तस्तयेत्यासीज्जनश्रुतिः ॥४३८॥
उत्सिक्तभाषितं भर्तुर्योषितो जितभर्तृकाः । जानन्त्यन्त्याङ्घ्रिसंमृष्टशिरस्ताडनसंनिभम् ॥४३९॥
अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः । प्राकृतप्रमदेवोच्चैरित्युवाच रुषा पतिम् ॥४४०॥
गतभीस्तापसो मन्दो जातभाग्यविपर्ययः । वृथा वृद्धः क्व किं वाच्यमिति मूढो न वेत्त्ययम् ॥४४१॥
बाल्योत्थितस्य यस्यास्य नाभूत्प्रावरणं पुरा । लोको जानात्ययं किं न तेन मां प्राप्य हारितम् ॥४४२॥
स्वकुलस्त्रीसमुचितं यत्किंचिन्मामभाषथाः । क्रियते किं न कालेयं यत्प्रायश्चित्तसेवने ॥४४३॥
अकर्मण्यो गतश्रया देशात्पुत्रेण वारितः । पत्यापि त्यक्त इत्यस्मात्परिवादाद्धि मे भयम् ॥४४४॥
कुलदोषादिवृत्तान्तगर्भोपालम्भनिर्भरैः । वचोभिर्व्यथितस्तस्यास्तस्थौ तूष्णीं यदा नृपः ॥४४५॥
तदा तस्यासनप्रान्तनिःसृतः प्रसरन्बहिः । निर्विकाराकृतेर्व्यक्तं ददृशे रक्तनिर्झरः ॥४४६॥
संभ्रान्तायां ततो राज्ञ्यामपश्यत्स्थक्कनो रुदन् । असिधेनुं गुदे तेन क्रुधा राज्ञा प्रवेशिताम् ॥४४७॥
ततोतिधीरो राजैव स लज्जाचकितोन्वशात् । राज्ञो रक्तातिसरणं जातमित्युच्यतां बहिः ॥४४८॥
विधेया नारीणां तनयनिहिताशेषविभवाः कृतम्लानी भृत्ये पुनरुदितविस्रम्भरभसाः ।
नयन्तो गण्यत्वं प्रसभमभियोगैर्लघुमतिं नयन्त्यक्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात् ॥४४९॥
नृपतिर्वाहितहयः शरदातपखेदितः । तृष्यन्निपीय धान्याम्बु च्युतासृग्जात इत्यभूत् ॥ ४५०॥
गम्भीरै राजपुरुषैस्तथा वार्ता प्रवर्तिता । यथा नाबुद्ध वृत्तान्तमेतं कोपि बहिर्जनः ॥४५१॥ युग्मम् ॥
वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्त्तिके । विजयेशाग्रतो राजा जीवितेन व्ययुज्यत ॥४५२॥
पत्न्याः पुत्रस्य द्रोहैस्त्यक्तो राजा सुखोचितः । प्रसार्य पादौ निद्रातुं प्राप सोवसरं चिरात् ॥४५३॥
चुकोपासौ न कस्मैचिच्चुकोपास्मै न कश्चन । चक्रे सुखी विमन्युश्च मरणेन महामनाः ॥४५४॥
संग्रामराजदायादो न कस्यचिदिव प्रियः । अंशुकाच्छादितो भूमावनाथ इव सोस्वपत् ॥४५५॥
न प्रियाक्रन्दितैः खिन्नः कुप्यन्नप्रियोक्तिभिः । सर्वत्यागी ययौ राजा दीर्घनिद्रारसज्ञताम् ॥४५६॥
दाक्षिण्योल्लङ्घनप्रायश्चित्तायेव स्वजञ्जवन् । कृतज्ञया पतिः पत्न्या ततो निन्ये सनाथताम् ॥४५७॥

४४९. [1]) Thus A₂; A₁ °र्वोर्त लघु°. ४५०. [1]) A₂ gloss धान्याम्बु धनिका धान्यवत् इति भाषया । तदम्बु. ४५२. [1]) Thus corr. by A₂ from A₁ कपासिके. ४५५. [1]) Thus corr. by A₂ from A₁ सोमवत्.

आराजपुत्रचण्डालं देयं प्रत्यहवेतनम् । ददौ स्वस्येव भृत्येभ्यः सा कर्तुमनृणं पतिम् ॥४५८॥
गृहीतवेतना भृत्याः कोशं सर्वं तया स्वयम् । पुरस्ताद्विजयेशस्य मनुः क्षेमाय पायिताः ॥४५९॥
पादन्यस्तशिराः पौत्रो हर्षार्पितकोशया । मूर्धन्याघ्राय कथितो मा पितुर्विश्वसीरिति ॥४६०॥
उत्थितैव ततो भूत्वा स्वयमासन्नतां सती । प्रातिहार्यं व्यधाद्भर्तुः कारयन्त्यन्तमण्डनाम् ॥४६१॥
सादिनां शतमादिश्य तनुस्तस्यैव रक्षणे । सा पुनः शिबिकारूढमथ प्रास्थापयत्पतिम् ॥४६२॥
क्षपामेकां दिनार्धं च स्थित्वैवं पतिदेवता । प्रणम्य विजयेशानं युग्यारूढा विनिर्ययौ ॥४६३॥
निर्यान्तौ वीक्ष्य तौ प्रेततूर्यकल्लोलमिश्रितैः । लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोऽभवन् ॥४६४॥
विमानस्योत्पताकस्य परिष्कारेषु बिम्बिताः । प्रजा राज्ञोऽन्तिके रेजुरनुगन्तुमिवोद्यताः ॥४६५॥
राज्ञां विशीर्णस्कन्धानां मरुल्लोलाः शिरोरुहाः । विमानस्थस्य नृपतेरवहंश्चामरश्रियम् ॥४६६॥
पश्यन्ती पश्चिमां सेवां सैन्यानां नृपतिप्रिया । अस्ताभिलाषिणि दिने प्रपेदे पितृकाननम् ॥४६७॥
दुस्त्यजात्सुतवात्सल्याद्यद्वा केनापि हेतुना । सा बभूव क्षणे तस्मिन्तनयालोकनोत्सुका ॥४६८॥
जानन्ती पवनोद्धूतं रजः सेनासमुत्थितम् । चकितोत्कण्ठिता साभूत्कलशागमनाशया ॥४६९॥
तस्मिन्क्षणे जनाः केचिदायाता नगराध्वना । अङ्ग किं कलशः प्राप्त इति पृष्टास्तया स्वयम् ॥४७०॥
स तु पुत्रः क्षणे तस्मिन्धियाद्धर्मातुरन्तिकम् । दत्त्वा विभीषिकास्तास्ता निरुद्धो द्वैधकारिभिः ॥४७१॥
ततो गृहीतनैराश्या राज्ञी पुत्रावलोकने । सा प्रार्थयित्वा वैतस्तं वारि श्लोकमथापठत् ॥४७२॥
वैतस्तेन तु तोयेन जठरस्थेन ये मृताः । मोक्षं गच्छन्त्यसंदेहं ते यथा ब्रह्मवादिनः ॥४७३॥
उपनीतं वितस्ताम्बु पीत्वोपस्पृश्य चाथ सा । एवं शशाप पिशुनान्स्नेहसंक्षयकारिणः ॥४७४॥
जनितं प्राणहद्वैरं यैः पुत्रेण सहावयोः । सान्वयानां क्षयस्तेषां भूयात्परिमितैर्दिनैः ॥४७५॥
तस्यास्तेनोपतप्तायाः शापेनाव्यभिचारिणा । क्षिप्रमेव जयानन्दजिन्दुराजादयो मृताः ॥४७६॥
चक्रे हलधरामात्यजातकौलीनशान्तये । परलोकं पणीकृत्य युक्त्या च शपथं सती ॥४७७॥
एवं विशुद्धशीलत्वं संप्रकाश्य शुचिस्मिता । कर्णाद्याददाज्झम्पां ज्वलिते जातवेदसि ॥४७८॥
अजायत नभो वह्निज्वालावलयमालितम् । तदागमोत्सवे दत्तसिन्दूरमिव निर्जरैः ॥४७९॥
साक्रन्दैर्न चटत्कारी दुःखोत्पन्नैर्न चोन्मनः । परमालेख्यलिखित इव जज्ञे शिखी जनैः ॥४८०॥
गङ्गाधरष्टक्किवुद्दो युग्यवाहश्च दण्डकः । नावुद्दा नोनिका वल्गा चेति दास्यस्तदान्वयुः ॥४८१॥
बप्पटोद्धटयोः कुल्यौ सेनटक्षेमटावुभौ । भूपालवल्लभावास्तां वैराग्याद्विजयेश्वरे ॥४८२॥
भावा यत्तनिसर्गभङ्गुरतरास्तिष्ठन्ति नैते चिरं चेतःकाचघटस्य तस्य घटते दीर्घोऽयमेको गुणः ।
यत्तस्मिन्निहितप्रकर्षि न गलत्यायाति न म्लानतां धत्ते नापचयं चमत्कृतिवचो गीर्वाणगङ्गापयः ॥४८३॥
एकषष्टिमतिक्रम्य वर्षान्भूपतिरायुषः । सपत्नीकः पुरारातिगौरीसायुज्यमासदत् ॥४८४॥

---

४५९. ¹) A₂ gloss विषं. ४६१. ¹) उत्थि supplied by A₂ in space left by A₁.—²) A₂ gloss आत्ता गृहीता सता यया.—³) A₂ gloss द्वास्थत्वं. ४६६. ¹) A₂ gloss विशीर्णाः हता स्कन्धाः शिविकावाहनार्थं ये तेषां. ४६७. ¹) Thus corr. by A₂ from A₁ पश्यन्त्यपश्चि°. ४६९. ¹) Thus corr. by A₂ from A₁ °गमाशया. ४८३. ¹) A₂ gloss चेतोरूपे काचघटे क्षीणा इति प्रसिद्धे.

अथास्थीनि समादाय चतुर्थे दिवसे तयोः । पुत्रास्तन्वङ्गराजस्य सर्वे गङ्गां प्रतस्थिरे ॥४८५॥
पैतामहेन कोशेन परिवारेण चान्वितः । पित्रा विरोधं जग्राह हर्षस्तु विजयेश्वरे ॥४८६॥
आस्ते पिता पुरवरे[1] पिता श्रीविजयेश्वरे । तस्मिन्पुत्रस्तु तत्रासीत्स्थिता तु नगरान्तिके ॥४८७॥
ततोतिव्यथितं पुत्रं हरिज्ञो नीतिमान्पिता । अभ्यर्थ्योनर्थभीतश्च संधिं दूतैरयाचत ॥४८८॥
स तैरसकृदायातैरुत्सिक्तो युक्तवादिभिः । राजपुत्रः समं पित्रा संधिं निन्ये कथंचन ॥४८९॥
दत्वा पैतामहे कोशे शरीरे चात्मजन्मने । प्रतिभूभाव जनकः कृतप्रत्ययचेतनः ॥४९०॥
नृपतिः पुत्रमानेतुं विशतो विजयेश्वरम् । दृष्टिः क्रुष्टैर्गृहैर्दग्धा श्रुतिश्च जनगर्हया ॥४९१॥
स पीतकोशः संगृह्य तनयं प्राविशत्पुरम् । कोशं चास्थापयन्मुद्रां दत्त्वा तदभिधाङ्किताम् ॥४९२॥
अत्रान्तरे तस्य राज्ञो धार्मिकी धीरजायत । दारिद्र्यच्छेदिनी धर्म्या धनवृद्धिश्च सर्वतः ॥४९३॥
तनयो नयनाख्यस्य कल्यः सेल्यपुरौकसः । कुटुम्बिनो जय्यकाख्यः क्रमाद्भूमरतामगात् ॥४९४॥
स्वल्पोत्पत्तिः स दिग्देशाविक्रीताख्यो वणिज्यया । संभृतार्थः शनैर्लुब्धो धनेशस्पर्धितां दधे[1] ॥४९५॥
सार्धं कोशं खनित्वा स नित्यं दीनारराशिभिः । पूरितायाः क्षितेः पृष्ठे बहून्व्रीहीनवापयत् ॥४९६॥
दीनारन्यसनं भृत्यैः कारयित्वा प्रतिक्षपम् । बहवो भेदभीतेन तेन गूढं निपातिताः ॥४९७॥
स भाक्तिले लब्धुमिच्छन्बलेकस्मात्पलायिते । द्राक्षालतानिरुद्धाध्वो हतः केनापि पत्तिना ॥४९८॥
तदीयेनोपलब्धेन धनेन वसुधातलात् । पर्याप्तेनात्यजद्राजा यावदायुर्दरिद्रताम् ॥४९९॥
समुत्स्य क्षाल्यमानेषु नदीनीरेष्वहर्निशम् । कलुषाम्भा बहून्मासानिवतस्ता समपद्यत ॥५००॥
दानोपभोगरहिताः काले क्लेशेन भूयसा । अन्यार्थमर्थान्रक्षन्ति चित्रं लुब्धा महाशयाः ॥५०१॥
प्राणान्धारयते निपीय मरुतः शेते तमोन्धे बिले संभोगे परदत्तमिच्छति पटं नग्नस्त्रपाशान्तये ।
वित्तार्थेति कदर्यतामहिरयत्यन्यस्य हेतोर्निधीनान्यः कोपि परं परोपकृतिषु प्रौढोस्ति लुब्धं विना ॥५०२॥
अन्यैश्च बहुभिर्मार्गैर्नद्यः सिन्धुमिवाविशन् । नानार्थसंपदस्तास्तां भाग्यभाजं महीभुजम् ॥५०३॥
अर्था भाग्योदये जन्तुं विशन्ति शतशः स्वयम् । दिग्भ्योभ्युपेत्य सर्वाभ्यः सायं तरुमिवाण्डजाः ॥५०४॥
स्रोतांसि प्रबलत्वमेत्य वसुधां मूलेषु पुष्णन्त्यधो व्योम्नोम्भः पतति त्यजन्ति हरितो वारि प्रणालीमुखैः ।
इत्थं शुष्कसरः पयोदसमये संपूर्यते सर्वतो भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः संपदः ॥५०५॥
जनरक्षणदाक्षिण्ये ततः पितुरिवान्वहम् । कुशला कल्शस्यासीत्प्रजापुण्योदयैर्मतिः ॥५०६॥
स्वयं वणिग्विचार्याणां गणनाकुशलोपि सः । विवेक्ता सत्पथत्यागे मुक्तहस्तः सदाभवत् ॥५०७॥
उपस्थितौ भाविनी च पश्यञ्चायव्ययौ स्वयम् । अन्तिकान्नात्यजद्भूर्जखटिकादि नियोगिवत् ॥५०८॥
तस्य स्वल्पमूल्येन रत्नादि क्रीणतः स्वयम् । नाशकन्वञ्चनां कर्तुं केपि विक्रयकारिणः ॥५०९॥
त्रिवर्गं सेवमानः स विभज्य समयं सुखी । मध्याह्नादूर्ध्वमभवद्दृश्यः सर्वकार्थिनाम् ॥५१०॥
तस्य स्वेषां परेषां च कृत्यमन्विष्यतश्चरैः । अज्ञातः स्वल्पवृत्तान्तः प्रजानामभवन्नहि ॥५११॥

४८७. [1]) Thus emended with G; A पुत्रवरे. ४९५. [1]) शस्य supplied by $A_2$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ धेतामधात्. ५००. [1]) Emended; A नदीना°. ५०३. [1]) Thus corr. by $A_2$ from $A_1$ °स्तासा. ५०६. [1]) ततः supplied by $A_2$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ °वान्विकम्.

स्ववेश्मेव गृहस्थस्य व्यायतश्चास्य मण्डलम् । जनो जनपदे जातु न कश्चिन्म्यमस्पृहात् ॥५१२॥
कौलीनचकितो राजा कुर्वन्कण्टकशोधनम् । प्रकटं नास्यजद्दण्डं चौरेभ्योपि स जातु चित् ॥५१३॥
न तस्यार्थः कोपि नष्टो मन्त्रिणो यमयोजयन् । मन्त्रिणां स पुनश्चक्रे नष्टस्यार्थस्य योजनम् ॥५१४॥
विवाहयज्ञयात्रादिमहोत्सवशताकुलः । नित्यप्रहृष्टो निर्दैन्यस्तद्राज्ये ददृशे जनः[1] ॥५१५॥
तेन नीतिविदाक्रान्ताः क्ष्माभुजः क्षित्यनन्तराः । आहाराचरणेष्वासंस्तद्ध्यक्षान्विनाक्षमाः ॥५१६॥
तन्त्रङ्गस्थस्थक्कनादींस्त्रीनायातान्दिगन्तरात् । व्ययितैकानुजान्मल्लमुखान्गुङ्गजानपि ॥५१७॥
अप्रीणयद्बन्धुभृत्यान्स भव्याभिर्विभूतिभिः । कलाभिरमृतार्द्राभिः सोमः[1] सुरपितॄनिव ॥५१८॥ युग्मम् ॥
अप्राप्तपरिपाकोपि दौःशील्येन न भूपतिः । कुदैशिकोपदिष्टेन कुष्ठाचारेण चोज्झितः ॥५१९॥
टक्केन बुल्लियाख्येन[1] कन्यकाः समुपाहृताः । क्रीतास्तस्य तुरुष्केभ्यो नानादिग्देशसंभवाः ॥५२०॥
स ताभिः परदारैश्च रूपलोभादुपाहृतैः । अवरोधपुरंध्रीणां ह्रासप्रतिमढौकयत् ॥५२१॥
बह्वीः कामयमानस्य योषितः प्रतिवासरम् । मत्स्ययूषादिभिर्वृष्यैर्[1] नास्य पुष्टिरहीयत ॥५२२॥
महासमयपूजासु व्यग्रः स गुरुभिः समम् । महाचरुणामाहारं नीतिमुत्सृज्य चाकरोत् ॥५२३॥
एवं शश्वत्कृत्येन पुरं तेन नवीकृतम् । निर्दग्धे विजयक्षेत्रे शिलावेश्म न[1] भूलिनः ॥५२४॥
विजयेशशिलावेश्ममौलावातपवारणम् । नृपोम्बरशिरश्चुम्बि जाम्बूनदमयं व्यधात् ॥५२५॥
व्ययस्थितिं चानपायां व्यधत्त त्रिपुरेश्वरे । पिनाकिनश्च प्रासादं स स्वर्णामलसारकम् ॥५२६॥
ततः सत्कर्मकुशलश्चकार कलशेश्वरम् । निःसंख्यशाटकघटीपटलभङ्गिशिलागृहम् ॥५२७॥
कलशेशोपरि छत्रं चिकीर्षोः काञ्चनाञ्चितम् । तुरुष्कदेशजः शिल्पी राज्ञोभ्यर्णमुपाययौ ॥५२८॥
सहस्रैर्भूरिभिर्हेमभृत्यसिद्धिं वदन्कलाम् । स छादयन्निजां ताम्रे काञ्चनारोपणं विदन् ॥५२९॥
कानिचिद्दिवसान्यासीत्प्राप्नुवन्नृपसत्क्रियाम् । ततोतितीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा ॥५३०॥
अभ्यूह्य शिक्षितकलो विलक्षोगाद्यथागतम् । तच्च छत्रं ययौ सिद्धिमत्यल्पैरेव काञ्चनैः ॥५३१॥
अनन्तेशाभिधं बाणलिङ्गमन्याथ भूपतिः । प्रतिष्ठां विविधाश्चक्रे स शक्राधिकवैभवः ॥५३२॥
नृपे सहजपालाख्ये शान्तिं यातेभ्यषिच्यत । ततः संग्रामपालाख्यो राजपुर्यां[1] तदात्मजः ॥५३३॥
राज्यं जिहीर्षुर्बालस्य पितृव्यस्तस्य भूपतेः । भेजे मदनपालाख्यो बलीयानुद्यमं महान् ॥५३४॥
तद्भयाच्छरणं प्रायान्नृपं साहाय्यकार्थिनी । स्वसा संग्रामपालस्य[1] जस्सराजश्च ठक्कुरः ॥५३५॥
कृतप्रसादो नृपतिः साहायककृते ददौ । तयोः पश्चाज्जयानन्दं भूरैर्बिज्जादिभिः समम् ॥५३६॥
तत्र विद्रावितामित्रः स स्फूर्जन्क्रान्तमण्डलः । संग्रामपालामात्यानां कार्यान्ते शङ्कतां* ययौ ॥५३७॥
काकुत्स्थो गमनं तस्य दत्त्वा तास्ता विभीषिकाः । ते प्राप्तमैच्छन्नाधातुं स धीरो न त्वकम्पत ॥५३८॥
मतिं राजपुरीयाणामसावेतामदादिति । शङ्कमानेन तेनाथ विज्ञे मन्युरुपाहृतः ॥५३९॥

५१५. 1) Thus corr. by $A_1$ from जनैः. ५१७. 1) Doubtful; thus A. ५१८. 1) सः supplied by $A_2$ in space left by $A_1$. ५२०. 1) Thus $A_2$; $A_1$ तुरुष्केण. ५२२. 1) $A_2$ gloss वृष्यैः वाजीकरणैः. $A_2$ quotes: वृष्यकल्पमतौ पारिभद्ररसेनैव हिङ्गुलं वामनाचकम् । मर्दयित्वा पारदवत्पातयेत्पूर्वयुक्तितः । योजयेत्सर्वयोगेषु सततकञ्चुकवर्जितम् ॥. ५२४. 1) न supplied by $A_2$ in space left by $A_1$. ५३३. 1) $A_2$ gloss राजविद् इति भाषया. ५३५. 1) Thus corr. by $A_2$ from $A_1$ संग्रामराजस्य. ५३७. 1) $A_2$ gloss अयानन्दः.—* Thus emended with G *sec. manu*; A शङ्कतां.

तैस्तत्र दत्तद्रविणैः प्रार्थितोथ महामतिः । रक्षापदेशात्स्वं सैन्यं स्थापयित्वा न्यवर्तत ॥५४०॥
एवं राजपुरीं तस्मिन्स्वीकृत्याभ्यन्तिकमागते । तुतोष कार्यमर्मज्ञः प्राज्ञः कलशभूपतिः ॥५४१॥
क्रमाद्राजायमानेषु बिज्जादिष्वथ पश्यति । आमयेन जयानन्दो दैवात्समयहेतुना ॥५४२॥
स्वास्थ्यवार्तोपलम्भाय भूपतिं गृहमागतम् । वाच्यमस्ति रहः किंचिदित्यूचे स कथान्तरे ॥५४३॥
निर्यातेष्वथ सर्वेषु किंचिन्नैवाब्रवीद्यदा । तदा ताम्बूलतिस्यक्षाव्याजाद्बिज्जो विनिर्ययौ ॥५४४॥
आप्तेनोक्तोपि निर्गच्छन्किं प्रयासीति भूभुजा । मन्त्रिणा प्रेष्य स प्राज्ञो बहिरेव व्यलम्ब्यत ॥५४५॥
जयानन्दोऽथधाङ्गुपमुक्त्वा राजपुरीकथाम् । व्यक्तं नास्त्येव ते राज्यं बिज्जे वृद्धिमुपागते ॥५४६॥[1]
आदीयमानाद्बिज्जेन कार्येभ्यो वेतनादपि । दर्शयामास गणनां बहुमूल्यां महीभुजे ॥५४७॥
प्राप्तः कलुषतां राजा प्रयातः स्वगृहांस्ततः । याचितो गमनानुज्ञां बिज्जेनेङ्गितवेदिना ॥५४८॥
निषेधन्निव दाक्षिण्यलेशानिर्बन्धकारिणः । तस्यानुज्ञां ददौ गन्तुं सान्तस्तोषो महीपतिः ॥५४९॥
लब्धादेशो गृहान्गत्वा सर्वोपकरणैः समम् । प्रस्थाप्य सोपतो भ्रातृनाप्रष्टुं नृपतिं ययौ ॥५५०॥
राजधर्मगभीरत्वक्रूरयोः स्वामिभृत्ययोः । काश्चिदेव क्षणे तस्मिन्नेष्टाभूदङ्गुनावहा ॥५५१॥
न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्तयत् । उपालेभे समन्युश्च न यद्भृत्यः प्रिय प्रभुम् ॥५५२॥
सहोत्थितेन कतिचित्पदानि सह भूभुजा । चिरं कृत्वा कथां नीचैर्हसन्बिज्जो विनिर्ययौ ॥५५३॥
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन्यथा । तथा बिज्जं जयानन्दः स व्यवारोपयत्पदात् ॥५५४॥
तल्लक्ष्मीमात्रशेषां क्ष्मां कृत्वा गच्छन्निषिध्यताम् । कृतार्थो बिज्ज इत्युक्तिं नामहीन्मन्त्रिणां नृपः ॥५५५॥
निवर्तयिष्यति क्ष्माभृत्प्रियतं गमनादमुम् । इत्याशयान्वगाद्बिज्जं राजवर्जं जनोखिलः ॥५५६॥
आस्कन्दं शङ्कमानोस्याद्बिज्जाद्राजा बलोर्जितात् । नृगरन्ध्रेपि चकितो निर्निद्रः पञ्च यामिनीः ॥५५७॥
तस्मिञ्शूरपुरायाते निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणाम् ॥५५८॥
ते तदाकर्ण्य यं मन्त्रं बिज्जार्थहरणेब्रुवन् । तस्याविधाने भूभर्तुरमन्यन्त नयज्ञताम् ॥५५९॥
बिज्जादयस्तु निर्द्रोहा यं यं देशमशिश्रयन् । तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे ॥५६०॥
बिज्जोधिकं प्रभुद्रोपि दैवतस्येव भक्तिमान् । पश्चात्कलशदेवस्य सत्यंकारः सदाभवत् ॥५६१॥
एवं निर्वास्य बिज्जादीनचिरावाप्तवैभवः । क्षिप्रं सूर्यमतीशापाज्जयानन्दः क्षयं ययौ ॥५६२॥
राज्ञो विरोधकृद्वक्तुं शापस्याव्यभिचारिताम् । प्रमयं जिन्दुराजोपि तस्मिन्नेव क्षणे ययौ ॥५६३॥
तेपि बिज्जादयः क्षिप्रमचिरावाप्तसंपदः । प्रापुः शापोचितं सर्वे प्रमयं गौडमण्डले ॥५६४॥
आकस्मिकेथ प्रमये[1] बिज्जः प्रमयमाययौ । सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि ॥५६५॥
पलायितेषु कारायास्तेषु व्याजेण पाजकः[1] । हतस्तदनुजाः शेषा भुक्तक्लेशाः क्षयं ययुः ॥५६६॥
द्विग्रास्त[1]धिकाराणां नानशयन्मदनादयः । अदीर्घेणैव कालेन दुरन्तैर्वैभ्[2]विध्यते ॥५६७॥
जयानन्दसहायोथ तत्पुत्रान्परिपालयन् । सर्वाधिकारी भूपेन वामनाख्यो न्यधीयत ॥५६८॥

५५१. [1]) Thus corr. by later hand from A₁ राजव°. ५५८. [1]) A₂ gloss शूरपुर. ५६५. [1]) A₂ gloss आकस्मिके प्रमये नारीचौष इत्यर्थः. ५६६. [1]) Thus A₁; A₂ R G पाजकाः.—[2]) Thus A₁; A₂ ततस्त°. ५६७. [1]) Thus A₁; A₂ द्विप्रास्तु दैर्घ°.—[2]) Thus corr. by A₂ from A₁ —र्वैस्तैर्भवि°.

यस्य तास्ता व्यवहृतीर्नीतिज्ञस्याद्भुतावहाः । वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि धीमताम् ॥५६९॥

भामानक्षिल्लस्वाम्यादिभोग्यानादाय लुब्धधीः । राजा कलशगञ्जाख्यं कर्मस्थानं विनिर्ममे ॥५७०॥

मन्त्रिणे नोनकायासौ धनोत्पादविदे न्यधात् । क्रौर्यभक्तो न पादाग्रं जनरक्षणदक्षिणः ॥५७१॥

मन्त्रिणो राजकलशापत्यान्यस्यान्तरङ्गताम् । लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः ॥५७२॥

सुताः स्वाच्छन्द्यविवशा धीराः संध्यादिसंभवाः । युक्त्या निदधिरे राज्ञा विविधस्वाधिकारिणः ॥५७३॥

पुनर्मदनपालेन क्रान्ते राजपुरीपतौ । साहायकाय व्यसृजत्सेनान्यं बप्पटं नृपः ॥५७४॥

प्रतापैर्भूपतेस्तेन भृत्यांशेनापि[1] निर्जितः । बद्ध्वा मदनपालोपि कश्मीरान्संप्रवेशितः ॥५७५॥

भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा । कृतो द्वाराधिपो वीरो विदधे डामरक्षयम् ॥५७६॥

बभूव जिन्दुराजास्य शिक्षितो नयविक्रमी । भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः ॥५७७॥

स राजपुर्यादिजयी द्वारं परमकोपनः । क्षणे क्षणेन्यजग्राह्या प्रसाद्य माहितः स्वयम् ॥५७८॥

मदनः[1] क्षितिपालेन प्रापितः कम्पनेशताम् । लब्धप्रकर्षान्क्षोपादीन्डामरान्बहुशोवधीत् ॥५७९॥

सेवावशीकृतः श्येनपालं स[1] नगराधिपम् । चक्रे विजयसिंहाख्यं हताशेषमलिम्लुचम् ॥५८०॥

कन्दर्पोदयसिंहाद्यैः प्रहिते लोहरे सकृत् । राजा भुवनराजस्य दूरं निःसारणं व्यधात् ॥५८१॥

कीर्तिराजस्य तनयां स च नीलपुरप्रभोः । लब्ध्वा भुवनमल्लाख्यां रिपोर्भिक्षामयोभवत् ॥५८२॥

कार्यप्रतिभटे कर्तुं प्रवृत्तिं माहितोभवत् । हत्वा विजयसिंहाख्यो नृपेण नगरेशताम् ॥५८३॥

गुङ्गात्मजः स मल्लोथ तेन द्वारपतिः कृतः । राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत् ॥५८४॥ युग्मम् ॥

शौर्यं निष्परिवारस्य पार्थस्योत्तरगोग्रहे । उरशासंप्रवेशे वा श्रुतं मल्लस्य मानिनः ॥५८५॥

पञ्चाशैस्तुरगैर्येन कृष्णां तीर्त्वा व्यपाहरत् । राज्यं वाजिगजैः सार्धमभयाख्यस्य भूभुजः ॥५८६॥

एवं वशीकृतभुवो भूपतेर्नयवेदिनः । सममेवाष्टभूपालास्त्रिषष्टेब्दे त्रिशम्पुरम् ॥५८७॥

कीर्तिर्न्यज्वपुराधीशश्चाम्पेयो भूभृदासटः । तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः ॥५८८॥

राजा संग्रामपालाख्यः स च राजपुरीपतिः । उत्कर्षो लोहरोर्वीभृद्दार्वेशो मुङ्गजो नृपः ॥५८९॥

गाम्भीरसीहः कान्देशः काष्टवाटधराधिपः । श्रीमानुत्तमराजोपि राजानमुपतस्थिरे ॥५९०॥ तिलकम् ॥

राजलोकः प्रवृद्धोपि घने जनपदेभ्रमन् । दुर्लक्ष्यो वार्षिकसरित्पूरो वारिनिधाविव ॥५९१॥

तस्मिन्क्षणे शिलीभूतवितस्तासलिले नृपैः । क्षीणक्षणेप्यसंक्षीणं सुखं तैरन्वभूयत ॥५९२॥

मनसापि हि भूपाला यत्ते किंचिदचिन्तयन् । प्रागेव पुरेपश्यन्वामनेन तदाहृतम् ॥५९३॥

कौशलं मन्त्रिणस्तस्य रराजेतरदुर्लभम् । निमित्तं तदसंभ्रान्तो नित्यव्ययोत्यवाहयत् ॥५९४॥

पार्थिवेष्वथ यातेषु मल्ले कार्यपराङ्मुखे[1] । क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः ॥५९५॥

अभिमानधनो मन्त्री कृतारम्भैर्निजैर्धनैः[2] । दुर्गं स स्वापिकं नाम युक्त्या[3] दुर्ग्रहमग्रहीत् ॥५९६॥

स प्रविष्टोपि नगरं खिन्नः केनापि हेतुना । पार्थिवाभ्यर्थ्यमानोपि कार्ये नैवाग्रहीत्तदा ॥५९७॥

५६९. [1]) पि supplied by $A_2$. ५७५. [1]) Thus corr. by $A_2$ from $A_1$ °शेनानि. ५७९. [1]) $A_2$ gloss मदनपालः. ५८०. [1]) स supplied by $A_2$. ५८१. [1]) Thus corr. by $A_2$ from $A_1$ कन्दर्पोत्र°. ५८२. [1]) Thus corr. by $A_2$ from $A_1$ °रिक्षाभ्रयो°. ५९५. [1]) $A_2$ gloss अर्जुनस्य.—[2]) $A_2$ gloss दत्तो विराटपुत्रः.—[3]) Thus $A_1$. $A_2$ युक्तं.

तदा प्रशस्तकलशो[1] नित्यं वृत्त्यं समाचरन् । तदुक्तिक्तोक्तिसंतप्तः संस्पृशाश्वभिमानिताम् ॥५९८॥

निजश्रियातिभूयस्या भूरीन्संगृह्य क्षत्रिणः । तत्पदे रत्नकलशं स्वभ्रातरमकारयत् ॥५९९॥

600 सोर्थैः क्रीतंमथोप्यासीन्न कन्दर्पसमः क्वचित् । किं चित्रोल्लिखितः सिंहः सत्यसिंहक्रियां स्पृशेत् ॥६००॥

ततः क्रमेण भूभर्त्रा भृत्यरत्नं कथंचन । राजस्थानाधिकारं स नगरे ग्राहितः पुनः ॥६०१॥

अतिताडनतश्चौरे विपन्नेऽथ कृपाकुलः । त्यक्त्वा तमप्यधीकारं विषण्णो जाह्नवीमगात् ॥६०२॥

पटान्तकृतसंरोधस्ताडयित्वा करं प्रभोः । कोपावेशान्तरं यातस्तं प्रत्यास्ते[1] स्म मन्युमान् ॥६०३॥

अत्यन्तखेदितोप्यासीदानीतस्यान्तिकं पुनः । दर्पं हर्तुं नृपस्तस्य संनद्धो न तु जीवितम् ॥६०४॥

605 इत्थं पुरुषसिंहानां प्रौढशौर्यो विसोढवान् । आरोहमवरोहं च सोन्तरज्ञः क्षमापतिः ॥६०५॥

उपाङ्गगीतव्यसनं नर्तकीसंग्रहादरः । देशान्तरोचितं राज्ञा तेनैवेह प्रवर्तितम् ॥६०६॥

ततो जयवनोपान्ते निरन्तरमहागृहम् । स्वनामाङ्कं पुरं कर्तुं प्रावर्तत विशांपतिः ॥६०७॥

महापहारप्रासादमहागृहपरंपराः । सत्तोयोपवनास्तत्र ययुः सिद्धिं सहस्रधा ॥६०८॥

अत्रान्तरे राजसूनुर्हर्षः सोत्कर्षपौरुषः । गुणैर्लेभे प्रकाशत्वमन्यभूपालदुर्लभैः ॥६०९॥

610 सोशेषदेशभाषाज्ञः सर्वभाषासु सत्कविः । कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि ॥६१०॥

लुब्धेन पित्रा संत्यक्ता जना नानादिगागताः । गुणशौर्योज्ज्वलास्तेन गृहीताः कृतवेतनाः ॥६११॥

अपर्याप्ते पितृकृते वेतने व्ययशालिनः । एकाहान्तरितं तस्य भोजनं त्यागिनोभवत् ॥६१२॥

पितरं गायन इव व्यक्तं गीतैः स रञ्जयन् । भर्तव्यभरणं चक्रे तद्दत्तैः पारितोषिकैः[1] ॥६१३॥

उद्गायति पुरस्तस्मिन्कदाचिदथ पार्थिवः । सभ्येषु प्रीयमाणेषु शीघ्रायोत्थाय निर्ययौ ॥६१४॥

615 तेन प्रसङ्गभङ्गेन जाततेजोवधः सुधीः । क्षुभ्यन्वैलक्ष्यकोपाभ्यां[1] कुमारः[2] क्षितिमैक्षत ॥६१५॥

प्रभुर्लीनक्षान्तिः सुहृदतिशठः स्त्री परुषवाक्सुतो गर्वोत्सिक्तः परिजन उदासप्रतिवचाः ।
इयान्सोढुं शक्यो ननु हृदयदाही परिकरो न तु श्रोतावज्ञालुलितनयनान्तं परिभवन् ॥६१६॥

पितुरेव तदा भृत्यो विश्वावट्टाभिधो विटः । शाधि राज्यं निहत्येमं नर्मणेत्युवाच तम् ॥६१७॥

अधिक्षिपन्स तं रोषाज्ज्ञानेनोक्तमसांप्रतम् । इत्यासन्नेन हसता धर्म्मटेनाप्यकथ्यत[1] ॥६१८॥

अन्ये भोगेच्छवश्छन्नाः कुमारानुगाम्पितुः । कोहं प्रदर्श्य स्वीकुर्युर्वेश्या कामिसंस्त्रीरिव[1] ॥६१९॥

620 पुनः सभां संप्रविष्टस्तं पिता पर्यतोषयत् । प्रीतिदायैस्ततस्तैस्तैः साधुवादैश्च मानिनाम् ॥६२०॥

अन्येद्युस्तु पितुः पार्श्वात्स भुक्त्वा स्वगृहान्गतः । अभ्येत्य विश्वावट्टेन तदेव जगदे रहः ॥६२१॥

उपपन्नं तदनुक्त्वा तेनाभीक्ष्णं निषेधता । निर्बन्धमपि हस्तेन सोथ कोपादताड्यत ॥६२२॥

लग्नाभिघातं रुधिरं वमन्तं घ्राणवर्त्मना । तं वीक्ष्य सोभिजातोभूत्सदाक्षिण्यो नृपात्मजः ॥६२३॥

भृत्यैः प्रक्षालयन्वक्त्रं तस्येदृक्पाप्मनो भवेत् । उक्तेनापीति कथयन्स्मित्वा वासांस्यदापयत् ॥६२४॥

---

५९८. [1]) Emended; A R G °कलशं. ६००. [1]) Thus A₁; A₂ मीत[?].—[2]) Thus corr. by later hand from A₁ कन्दर्पः समः. ६०२. [1]) जाह्न supplied by A₂ in space left by A₁. ६०३. [1]) Thus corr. by A₂ from A₁ प्रत्यास्ते. ६०४. [1]) Thus A₁; A₂ °खेदितस्त्वासीदा°. ६१३. [1]) Emended; A °तोषकैः. ६१५. [1]) Thus A₁; A₂ क्षुभ्यद्वै°.—[2]) Thus corr. by A₂ from A₁ कुमारः. ६१८. [1]) Emended; A धर्मटेना°. ६१९. [1]) Thus A₁; A₂ क्रामी स°.

अनिच्छोरपि तस्येच्छा दानायैनामन्वमीयत । दुःशीलेनान्यकामिन्याः स्मितमात्रादिव स्पृहा ॥६२५॥
असकृत्कृतयत्नः स ततः कालेन भूयसा । तं प्रैरयत्तत्र कृत्ये मध्ये स्वीकृत्य धम्मटम् ॥६२६॥
स रोहद्रोहसंकल्पजन्मना पाप्मना श्रितः । संमन्त्र्य पितरं हन्तुं तीक्ष्णान्प्रायुङ्क्त सर्वतः ॥६२७॥
शश्वत्स गोचरीभूतस्तेषां स्नेहलवस्पृशाम् । न घातितः सूनुना च वर्जिता न च तत्कथा ॥६२८॥
आप्तत्वं तीक्ष्णवर्गेथ प्रतिभेदभयाद्गते । तां त्रिदशावह एवाशु वार्तां राज्ञे न्यवेदयत् ॥६२९॥
बुद्ध्वा राजपुत्रस्तत्तस्मिन्नहनि जातभीः । भोक्तुं नागात्पितुः पार्श्वमपि दूतैः कृतार्थनः ॥६३०॥
सोपि तस्मिन्ननायाते तत्रार्थे शान्तसंशयः । दिने तत्र मनस्तापान्नाभुङ्क्त सपरिच्छदः ॥६३१॥
सभ्रातृकस्य प्राप्तस्य प्रातर्दुःखं न्यवेदयत् । सुचिरं चक्कनस्याङ्के शिरो विन्यस्य सोरुदत् ॥६३२॥
उक्त्वा च धम्मटोदन्तं वक्तुं तस्य समर्पणम् । विधेहीत्यभ्यधाच्चापि तं भङ्गीभणितिक्रमैः ॥६३३॥
न कृताधिगमाचारां कृत्यस्यास्येत्युदीर्य तम् । अभाषेतां भ्रातुरर्थे पुनस्तन्वङ्गनन्दनौ ॥६३४॥
त्वत्प्रसादबलाद्राजन्नापन्नत्राणदीक्षितौ । यावावां तत्प्रवेशार्थं व्यक्तद्वारं निशास्वपि ॥६३५॥
कथं नु पृथिवीपाल प्राप्ते प्राणात्ययक्षणे । निर्दोषो वा सदोषो वा ताभ्यां संत्यज्यतेनुजः ॥६३६॥ युगलकम् ॥
स्वामिद्रोहापवादश्च भवेत्तद्रक्षणाद्ध्रुवम् । देशत्यागं तदुत्सृज्य शरणं नान्यदावयोः ॥६३७॥
इत्यादि संभाष्य तयोः पादन्यस्तोत्तमाङ्गयोः । रुदित्वा गमनानुज्ञां कथंचित्पार्थिवो ददौ ॥६३८॥
पथि कश्चिदमुं हन्यान्मध्यीकृत्येति धम्मटम् । तौ विनिर्जग्मतुर्देशात्ततः सबलवाहनौ ॥६३९॥
तन्वङ्गजेषु यातेषु विविक्तीकृतमन्दिरः । सुतमानीय नृपतिः सान्त्वयन्निदमब्रवीत् ॥६४०॥
आसंसारं जगत्यस्मिन्सर्वतः ख्यातकीर्तिना । अनकेनैव जन्यत्वं प्रमितं प्राप्यते जनैः ॥६४१॥
पुत्र शीतांशुनेवाब्धिर्दिग्द्वीपख्यातकीर्तिना । भवता तु सुपुत्रेण मां जानात्यखिलो जनः ॥६४२॥
स त्वं गुणवतामग्र्यो निरर्गलयशा भवन् । असाधुसेव्यमध्वानं वद कस्मान्निषेवसे ॥६४३॥
पैतामहं निजं चार्थं यत्र तुभ्यं समार्पयम् । तत्र हेतुमनाकर्ण्य नासूयां कर्तुमर्हसि ॥६४४॥
रिक्तः स्वेभ्यः परेभ्यश्च प्राप्नोत्यभिभवं नृपः । इति निध्याय हि मया क्रियते कोशरक्षणम् ॥६४५॥
पुरप्रतिष्ठां निष्पाद्य क्षिप्त्वा राज्यधुरं त्वयि । वाराणस्यां गमिष्यामि नन्दिक्षेत्रेथ वा पुनः ॥६४६॥
तद्राज्यकोशयोः स्वामी बुभुक्षुर्न चिराद्भवान् । अतितात्पर्यतः कस्मादनार्योचितमीहसे ॥६४७॥
संभाव्यते त्वयि न तद्यन्ममावेदितं खलैः । यथार्थकथनात्तस्मात्कौलीनं विनिवार्यताम् ॥६४८॥
विशुद्धये करोत्वेष स्वकृतस्याप्रतिश्रवम् । कोहादितीच्छंस्तद्राजा साभिप्रायं वचोभ्यधात् ॥६४९॥
अपलापवचोमात्रं निनीषुस्तस्य हेतुताम् । जनप्रत्यायने सोभूत्तस्मात्क्षान्तिसमुत्सुकः ॥६५०॥
हर्षस्तु साधुवादैस्तत्पितुः संपूज्य भाषितम् । वक्ष्याम्यागमुखे तत्त्वमित्युक्त्वा निर्ययौ बहिः ॥६५१॥
सामान्यप्रेरणादेवा चिकीर्षाभूदिति ब्रुवन् । स पितृप्रहितं दूतं हीतः स्वावसथं ययौ ॥६५२॥

६२५. [1]) Thus corr. by $A_1$ from $A_1$ दुःशीलान्य°. ६२७. [1]) ह supplied by $A_2$. ६३०. [1]) Thus corr. by $A_2$ from $A_1$ °पुत्रस्तस्त°. ६३१. [1]) $A_1$ तत्रार्थेऽशान्त°. ६३३. [1]) Emended; A धम्मटो°.—[2]) Emended; A वक्तुं. ६३४. [1]) $A_4$ gloss धम्मटस्य. ६३५. [1]) यावावां तत्प्रवेशार्थं supplied by $A_2$ in space left by $A_1$. ६३९. [1]) Emended; धम्मटम् supplied by $A_2$ in space left by $A_1$. ६४१. [1]) $A_4$ gloss पुत्रस्य. ६४४. [1]) $A_4$ gloss अनन्यदेयसम्बन्धि.—[2]) Emended with C; A समर्पयम्. ६४६. [1]) Thus R G C; A पुनः. ६५२. [1]) Emended; A सावसथं.

सुतं म्लानाननं वीक्ष्य पाणिभ्यां ताडयञ्शिरः । हा पुत्रेति वदन्राजा तस्यास्क्रन्दमदापयत् ॥६५३॥
हतेस्मिन्स्वशिरश्छिन्द्यामिति प्रोक्तवतः प्रभोः । निदेशाद्वेष्टयित्वैव तस्थुस्तद्वेश्म शस्त्रिणः ॥६५४॥
तीक्ष्णास्तु पिहितद्वाराः परिवार्य नृपात्मजम् । ऊचुः सुपरुषां वाचमेवं निश्चितमृत्यवः ॥६५५॥
अस्मान्घृणी प्रमादी च विरुद्धं वृथा कारयन् । घातयित्वा दुराचार क्व जीवन्स्थातुमिच्छसि ॥६५६॥
रक्षिष्यति सुतं स त्वां स पिता रक्षितस्त्वया । ज्ञातेयं युवयोरस्ति वयमेव हताः पुनः ॥६५७॥
युध्यस्व मध्यगोस्माकं त्वां निहन्मोन्यथा वयम् । एवं सर्वप्रकारं ते व्यक्तं नास्त्येव जीवितम् ॥६५८॥
तां वार्तां भूपतेः श्रुत्वा व्याकुलस्याग्रतः स्थितः । द्वार्यान्तिके दण्डकाख्यः प्रायान्निजमहत्तरः ॥६५९॥
तीक्ष्णैर्निजतया दत्तप्रवेशः स नृपात्मजम् । प्रहृत्योवाच मतिमानेवं सर्वान्विमोहयन् ॥६६०॥
क्षत्रियापुत्र जीवित्वा कल्पानल्पेतरानपि । कारणैरपि गन्तव्यं नियमान्म्रियतेर्वशम् ॥६६१॥
तदेतस्मिन्समासन्ने मरणेव्यभिचारिणि । यदर्थं गृह्यते शस्त्रं स मानः पाल्यतां त्वया ॥६६२॥
कृतभुजः ख्यातयशा युवा सुक्षत्रियो भवान् । तदाहवविलम्बेन कार्यं किमिव पश्यसि ॥६६३॥
एतेषु सुसहायेषु मयि चाग्रेसरेधुना । विपत्तिर्विजयो वापि प्रतापिस्तव शोभते ॥६६४॥
तत्तिष्ठ नखकेशादियोजनं कारय द्रुतम् । वीरपट्टं बधानापि स्वःस्त्रीपरिणयक्षमम् ॥६६५॥
इत्युक्त्वा क्षुरकर्मार्थं राजपुत्रं सनापितम् । प्रावेशयत्पूज्यमानस्तीक्ष्णैराभ्यन्तरं गृहम् ॥६६६॥
न्यस्तासिधेनुर्हर्षेण दत्तझम्पः क्षणात्स्वयम् । पश्चात्प्रविश्य तद्वेश्म चक्रे सुनिहितार्गलम् ॥६६७॥
ततः स राजस्थानीयं तमारादब्रवीद्वचः । रक्षितो राजपुत्रोयं क्रियतां स्वोचितं त्वया ॥६६८॥
भूतग्रहादिभवमौषधिभिर्विरोधिजातं बलैः प्रहरणप्रभवं तनुत्रैः ।
निर्वाप्यते प्रतिभयं पृथिवीपतीनां सार्वत्रिकं तु रभसाद्भुवि बुद्धिवृद्धैः ॥६६९॥
नदन्तस्तुमुलं योधास्ततो राजकुलास्पदे । आरोढुमाययुर्वेश्महर्म्यादि प्रतिवेश्मवः ॥६७०॥
तीक्ष्णा दृढद्वारगृहस्थितं त्यक्त्वा नृपात्मजम् । यावन्निर्गन्तुमिच्छन्ति हन्यमाना युयुत्सवः ॥६७१॥
द्विजाः प्रसङ्गसांनिध्यान्मध्यपातं समाश्रिताः । तावद्विनिर्ययुर्वीरा निर्द्रोहा अभिमानिनः ॥६७२॥
ते निर्याताः सूर्यमतीगौरीशाश्रयिणो गृहात् । सदाशिवान्तिकं प्रापुर्घ्नन्तो युधि विरोधिनः ॥६७३॥
रक्ष्यमाणोपि भूभर्तुर्गिरा ज्ञातेयशालिनः । राजज्ञातिर्हतस्तेषु प्रथमं सहजाभिधः ॥६७४॥
द्विजस्तिलकाभिधो वीरः पण्डितः शौर्यमण्डितः । रामदेवश्च केशी[1] च कर्णाटारिभटैर्हतः ॥६७५॥
केचित्त्यजन्तः शस्त्राणि स्वं घ्नन्तः केपि च स्वयम् । लेभिरे वधबन्धादि पापाः कापुरुषोचितम् ॥६७६॥
सितषष्ठ्यां सहस्यस्य चतुःषष्ठे स वत्सरे । वैरं नीत्वा पितापुत्रौ विप्लवः कारितो विटैः ॥६७७॥
हत्यागासक्तिः प्रियुवतिसंप्रेरणवचः खलासङ्गः पूर्वप्रणयपरिहारो जनयितुः ।
अमात्येन भ्रात्रा सममपरमात्राय कलहः कुमाराणां बुद्धिं पितरि विपरीतां प्रतनुते ॥६७८॥
एवं स खलसंगत्या कुमारो लब्धलाघवः । बन्धं कारागृहे प्रापदसुखानि सुखोचितः ॥६७९॥

---

६५५. [1]) $A_4$ gloss स्वकीया एव पूर्वं राजवधं प्रति प्रोत्साहिताः. ६६१. [1]) $A_2$ gloss कारणानि ब्रह्मादीनि पञ्च. ६६७. [1]) Fol. 166 of A ends with पश्चात्प्र; fol. 167 which ended with verse 688, is now lost. ६७५. [1]) Thus R; G केशव.

राज्ञी भुवनमत्यस्मिन्बद्धे माध्यस्थ्यसंविदि । स्थापिता मानिनी कण्ठच्छेदं कृत्वा जहावसून् ॥६८०॥

रक्षिणो मन्त्रिणामाप्तांस्तस्य विन्यस्य भूपतिः । प्राहिणोद्विविधान्भोगान्वत्सलस्नेहाद्दिने दिने ॥६८१॥

चक्रिकायामशक्तोऽयमिति संचिन्त्य भूभुजा । भृत्यः प्रयागनामास्य निजः पार्श्वे च वारितः ॥६८२॥

नोनको हर्षमुद्दिश्य स्वजनान्यैश्च महीभुजम् । जीवितं लोचने वास्य कृष्येतामित्यभाषत ॥६८३॥

नृपः स शीलवैकल्ये पशुतुल्ये ह्रियं त्यजन् । रिपोरिव तनूजस्य चक्रमे कतिचित्क्रियाः ॥६८४॥

तासु श्वशुरवात्सल्यमवाप्य सुगलाभिधा । बभूव तुक्कभूर्भर्तृनप्त्री भर्तृवधार्थिनी ॥६८५॥

संमन्त्र्य नोनकः सा च द्वौ सूदावशनान्तरे । रसं प्रदातुं हर्षस्य पापं प्रैरयतां ततः ॥६८६॥

अन्यसूदमुखाज्ज्ञातौ प्रयागस्तावबाधवान् । प्रभुं तदाप्यमानान्नपरिहारमकारयत् ॥६८७॥

तेनान्नेन परीक्षार्थं दापितेनापजीवितौ । हर्षः श्वानौ निशम्याभूद्विरागो निजजीविते ॥६८८॥

प्रयुक्तिं गूढदण्डस्य पितुरेव स तां विदन् । ततः सर्वाणि भोज्यानि स्पृष्ट्वैवोज्झीद्दिने दिने ॥६८९॥

प्रयागोपहृतेनासीत्परं खाद्येन सर्वदा । भोज्येन येन केनापि कुर्वञ्जीवितधारणम् ॥६९०॥

अजस्राभोजनं भुक्त्वा राजा चरैर्निवेदितम् । ततः प्रयागमानीय तत्र पप्रच्छ कारणम् ॥६९१॥

प्रयोजकौ च सूदौ च सोपलम्भं न्यवेदयत् । रसार्पणकथां कृत्स्नां तज्ज्ञानं च स्वयं प्रभोः ॥६९२॥

अथान्येष्वपि सूदेषु पित्रा दत्तेषु शङ्कितः । राजसूनुर्न बुभुजे प्रयागोपहृतं विना ॥६९३॥

स सर्वेषु विरुद्धेषु यथातथात्यवाहयत् । मेने तत्तद्दिनं लब्धं शेषेष्वास्थापराङ्मुखः ॥६९४॥

अत्रान्तरे समुदभूदकस्मान्नाशसूचकः । अदृष्टपूर्वो भूभर्तुः सदाचारविपर्ययः ॥६९५॥

उत्पाद्य ताम्रस्वाम्याख्यं पूर्वं ताम्रमयं रविम् । स रीतिप्रतिमाः स्वैरं विहारेभ्योऽप्यपाहरत् ॥६९६॥

धनानि निरपत्यानामाहर्तुं व्यवसायिना । न्यवार्यतार्यमर्यादा क्रौर्याक्रान्तेन भूभुजा ॥६९७॥

ततोऽतिशापसंतापव्यञ्जकेनाञ्जसाभवत् । अतिसंभोगजातेन धातुक्षैण्येन सोऽर्दितः ॥६९८॥

कुम्भप्रतिष्ठासंभारं चिकीर्षोर्हरमन्दिरे । तस्यापतन्महाकालकुम्भे नासापुटादसृक् ॥६९९॥

आकस्मिकं दुर्निमित्तं तत्प्रतीकारसंविदा । न मनागप्यगाच्छान्तिं प्रवृद्धिं प्रत्युताययौ ॥७००॥

असृक्स्रुत्यनुबन्धेन तेन ग्लपितसौष्ठवः । शनैः शय्याप्रणयितामन्नः स प्रत्यपद्यत ॥७०१॥

बलमांसकृतक्षैण्यमभिमान्द्याद्युपद्रवैः । कलांशशेषेण शशिना तद्वपुः साम्यमाययौ ॥७०२॥

राज्यं स दित्सुर्हर्षाय दृष्ट्वामात्यान्पराङ्मुखान् । ततोऽभिषेक्तुमुत्कर्षमानिन्ये लोहराद्बलात् ॥७०३॥

उच्चावचास्तेन सर्वे संविभक्ता मुमूर्षुणा । परमीर्ष्याविधेयेन न भुक्तास्तत्रभूजनः ॥७०४॥

कृत्वा धनार्पणं कुर्यां देशादस्य प्रवासनम् । इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थ्यन्त मन्त्रिणः ॥७०५॥

ते तु गोभूंक्षिश्रार्यांश्चाष्टकुराल्लोहराभितान् । विन्यस्य रक्षिभावे तमुत्कर्षाय न्यवेदयन् ॥७०६॥

स नाट्यमण्डपान्तेन निष्कृष्टः क्षामविग्रहः । निवेशितश्चतुःस्तम्भे बद्ध्वा बान्धववर्जितः ॥७०७॥

अथोज्जिगमिषुप्राणान्निःसामर्थ्यो विरूपः । मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः ॥७०८॥

---

६८०. ¹) Thus R G *sec. manu*; C G *prima manu* माध्यस्थ्य°. ६८५. ¹) Emended; G R °भूर्भर्तृनप्तृभर्तृवधार्थिनी; C °भूर्भर्तृनप्तृभर्तृवधा°. ६८६. ¹) Thus G C; R रसे. ६८८. ¹) Thus emended with C; A R G तेनान्नेन. ७०१. ¹) Emended; A असृ. ७०६. ¹) Emended with C; A गोभृङ्गि°. ७०८. ¹) Emended with C; A अथोज्जग°.

स आनन्दैवतक्रोधं ताम्रस्वामिविपाटनात् । इयेष शरणं कर्तुं मार्तण्डं प्राणलब्धये ॥७०९॥
संत्यज्य विजयक्षेत्रमत एवापवर्गदम् । महीश्वरोपि प्रययौ तत्र श्वासवशंवदः ॥७१०॥
अधीकारप्राप्त्या तृणमिव विदम्बिभमखिलं नियोगी जातार्तिर्नमति गृहदासीरपि रुदन् ।
नदन्मूर्खो ज्ञानी बहुगुरुपदेशाधिगमतः करोति प्राणान्ते शिशुरिव च किं किं न त्रिगुणम् ॥७११॥
तादृश्या कृपणप्रायसेव्यया क्लैव्यसंविदा । गुरूपदेशाहंकारस्तस्य हास्यत्वमाययौ ॥७१२॥
शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे । तलादेवाभितो युग्यं भूभृन्मतुं विनिर्ययौ ॥७१३॥
स भेरीतूर्यनिर्घोषैर्जनाक्रन्दं तिरोदधत् । सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना ॥७१४॥
यामशेषे दिनेन्यस्मिन्प्राप्तस्य चरणान्तिके । मार्तण्डस्य स्वजीवाप्त्यै सौवर्णीं प्रतिमां व्यधात् ॥७१५॥
भृत्यैरगणिताज्ञस्य दिदृक्षोर्ज्येष्ठमात्मजम् । औत्सुक्येनारतिस्तस्य व्यथितस्याधिकाभवत् ॥७१६॥
बहिर्हर्षकृतं गीतं गायनानां स गायताम् । विवृतद्वारविवरः शृणोति स्म विनिःश्वसन् ॥७१७॥
प्राणावसानसमये परिसंकुचन्ती स्वप्नप्रसङ्ग इव धावनशक्तिराशा ।
प्रायुर्यदा खलु रुजो मरणोद्भवाया मर्मव्यथां प्रथयते पृथिवीपतीनाम् ॥७१८॥
प्रजाज्येष्ठं तनुजं च संविभक्तुं कृतार्थनः । उत्कर्षं ग्राहयञ्शिक्षां बद्धजिह्वोभवत्ततः ॥७१९॥
अव्यक्तं वदतो हर्ष इति वाक्यं पुनः पुनः । निह्नोतुं नोनको भावं तस्यादर्शमढौकयत् ॥७२०॥
स तन्निवार्य विहसन्दष्टौष्ठः कम्पयञ्शिरः । जपन्किमपि सार्धे द्वे बद्धवागभवद्दिने ॥७२१॥
आसन्नप्राणनिर्याणः संज्ञयाहूय मन्त्रिणः । ततः स्वं तैरसंमूढैर्मार्तण्डाग्रमनाययत् ॥७२२॥
वर्षानिकायपञ्चाशद्युक्तवान्स सितेहनि । मार्गस्य पञ्चषष्टेब्दे षष्ठ्यां निशामथासदत् ॥७२३॥
सप्त मम्मनिकामुख्या देव्यः परिणयाहृताः । अवरुद्धापि जयमत्यभिधाना तमन्वगुः ॥७२४॥
प्रसादवित्तया तस्य पुनः कय्याभिधानया । अवरुद्धिकया कृत्वा स्त्रीजातिरपवित्रिता ॥७२५॥
सर्वावरोधप्राधान्यप्रदानं नास्मरद्यदि । मा स्मार्षीन्नाम भर्तुस्तदनुब्राभिजनोद्भवा ॥७२६॥
संश्रित्य विजयक्षेत्रं क्रमाद्ग्रामनियोगिनः । भेजे यस्त्ववरुद्धात्वमतो दुःखाकरोति नः ॥७२७॥
भूपालभोग्यं स्ववपुः सा भोगाभ्यासभासुरम् । निनाय ग्राम्यभोग्यत्वं धिक्कारीर्नीचचेतसः ॥७२८॥
उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु । अन्त्येष्टिमकरोद्राज्ञः कृतज्ञो वामनः परम् ॥७२९॥
घोषोभिषेकतूर्याणामेकतो गीतमङ्गलः । साक्रन्दः प्रेततूर्याणां नादोन्यत्र समुद्ययौ ॥७३०॥
जातः पद्मश्रियो देव्याः पुत्रः कलशभूभुजा । ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे ॥७३१॥
बददाद्धर्षदेवस्य पिता प्रत्यहवेतनम् । प्रतिशुश्राव तस्मै स तदेवोत्कर्षभूपतिः ॥७३२॥
आश्वासाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः । कय्यात्मजस्य चक्रे न जयराजस्य वेतनम् ॥७३३॥
अन्विष्यन्ति रुदत्य एव तरला गत्यन्तरं योषितो योगक्षेमकथां चितान्तिकगता एवात्मजाः कुर्वते ।
अन्येषां शतशोवसानसमये चर्चां विचार्यैदृशीं स्त्रीपुत्रादिकृते कुकर्मभिरहो संचिन्वतेर्थं जडाः ॥७३४॥

७११. [1]) Emended with C; A °देवोधि°. ७२०. [1]) A, gloss हर्ष आनीयतामिति राज्ञो भावमभिप्रायं निह्नोतुं आदर्शो नोनकेनानीत इत्यर्थः हर्षः आदर्श इति पाश्चात्यसाम्यादित्यर्थः. ७२५. [1]) A, gloss उरच्छा इति देशभाषया. ७२९. [1]) Emended with C; A अन्त्येष्टि°. ७३१. [1]) अ supplied by A₂. ७३२. [1]) Emended; A तदेवो°.

प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः । न तु हर्षोदयाकाङ्क्षि हृदयं नगरौकसाम् ॥७३५॥
तद्राज्यलाभदिवसो जनस्याभोगदूषितः । सन्नपि प्रत्यभान्नैव स रोगार्तैरिवोत्सवः ॥७३६॥
हर्षदेवस्तु पितरि प्रयाते मर्तुमातुरे । तत्रबद्धश्चतुःस्तम्भे न तस्मिन्नह्नि[1] भुक्तवान् ॥७३७॥
सार्धभ्रष्टमियाध्वन्यमन्यस्मिन्नह्नि ठक्कुराः । ते शोकमूकं संप्रार्थ्य कथंचित्तमभोजयन् ॥७३८॥
राज्यं दातुं निजे देशे चक्रुश्चास्य प्रतिश्रवम् । राज्यद्वयं नायमर्हत्येक एवेति वादिनः ॥७३९॥
एवं मिलितचित्तस्तैर्विपत्तिं श्रुतवान्पितुः । कृतोपवासः सोन्येद्युः शुश्रावोत्कर्षमागतम् ॥७४०॥
बाष्पैः पित्रे प्रयच्छन्तं निर्वापसलिलाञ्जलीन् । तं दूतैरनुजो राजा स्नातुं प्रार्थयताथ सः ॥७४१॥
तस्य स्नानक्षणे राज्ञि सज्जे राज्याभिषेचने । घोषोभिषेकतूर्याणामुदभूत्सजयध्वनिः ॥७४२॥
स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित् । विद्युद्योतेन जीमूतगर्जामिव नृपश्रियम् ॥७४३॥
ततः प्रभृत्युन्मुखता सुनिमित्तैरगृह्यत । तस्यात्यासन्नराज्यस्य भृत्यैरिव दिने दिने ॥७४४॥
स भोजनं कारयितुं दूतान्भ्रात्रा विसर्जितान् । देशान्निर्वासयतु मां राजा संत्यज्य बन्धनात्[1] ॥७४५॥
स्थातुमन्यत्र[1] स्थिरतां विदध्यां कोशसंविदम् । म्रियेन्यथा निरशनैः संदिश्येति व्यसर्जयत् ॥७४६॥
स तन्मिथ्या प्रतिश्रुत्य तं दूतैः प्रहितैस्ततः । कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत् ॥७४७॥
नित्यं च श्वो विधास्ये तदर्थ्यमान[1] इति ब्रुवन् । कालापहारं कुर्वाणः शङ्कां तस्योदपादयत् ॥७४८॥
विश्वासाय स्वताडङ्क[1]पाणिं कृत्वा प्रयागकम् । पार्श्वं विजयमल्लस्य सोथ गूढं व्यसर्जयत् ॥७४९॥
तदेवोक्त्वा तमूचे स त्वां ऋते दुःस्थितोग्रजः । कुमारे त्वयि राज्येस्मिन्नभ्युच्चामी बन्धने वयम् ॥७५०॥
संक्रान्तदुःखः संचिन्त्य चिरेणापि तमब्रवीत् । कार्यं कुर्यात्कथमिदं मद्गिरा नीतिमान्नृपः ॥७५१॥
तथाप्यस्मिन्यथाशक्ति यतिष्ये त्वद्विमोक्षणे । त्वया तु सावधानेन रक्षणीयं स्वजीवितम् ॥७५२॥
तं पार्श्वं हर्षदेवस्य संदिश्येति व्यसर्जयत् । उपायांश्चिन्तयन्नासीत्तस्य कार्यस्य सिद्धये ॥७५३॥
उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः । नादधे किंचिदारम्भं व्यवस्थाप्रथनक्षमम् ॥७५४॥
समर्पिताधिकारोपि कन्दर्पादीन्स मन्त्रिणः । राज्यकृत्यं न पप्रच्छ विदधे स च न स्वयम् ॥७५५॥
परिमातुं परीमाणं कोशसंचयवीक्षणे । परं क्ष्मापतेस्तस्य दिनकृत्यमजायत ॥७५६॥
कर्मणा निर्व्ययेनास्य चिन्त्यमानस्य येन वा[1] । सुदीर्घदर्शी लोकोभूत्तेन लुब्धत्वनिश्चयी ॥७५७॥
सा तस्य लुब्धताख्यातिः समुद्राभ्रप्रदायिनः । भूभर्तुः पितृपत्नीभिः स्वैरिणीभिः प्रवर्धिता ॥७५८॥
स श्रोत्रिय इवोत्कम्पी[1] व्यवहारमिताशयः । महाहृदयभोग्यानां प्रजानां नाभवत्प्रियः ॥७५९॥
ततो नियमितां वृत्तिं तस्माल्लुब्धादनाप्नुवन् । कुप्यन्विजयमल्लोभूद्देशान्गन्तुं कृतोद्यमः ॥७६०॥
स्वं रक्षितुं स मध्यस्थाननुव्रज्याकृते[1]खिलान् । प्रार्थयामास तेनापि सज्जास्तमनुवव्रजुः ॥७६१॥
लवणोत्से निशामेकां पुरान्निर्गत्य तस्थुषः । मध्यस्थ[1]सैन्यास्तस्यैव[2] योधाः पक्षमशिश्रयन् ॥७६२॥

७३७. [1]) Thus corr. by $A_3$ from $A_1$ °ऽस्मिन. ७४५. [1]) Thus corr. by $A_3$ from $A_1$ राज्यात्सन्त्य°. ७४६. [1]) स्था supplied by $A_3$ in space left by $A_1$. ७४८. [1]) Emended; A °र्थ्यमान. ७४९. [1]) ताड supplied by $A_3$ in space left by $A_1$. ७५७. [1]) येन वा supplied by $A_3$ in space left by $A_1$. ७५९. [1]) $A_3$ gloss उत्कम्पी सामसमये सकम्प इत्यर्थः. ७६१. [1]) $A_4$ gloss हेतुना. ७६२. [1]) मध्यस्थ supplied by $A_3$ in space left by $A_1$. —[2]) Thus corr. by $A_3$ from $A_1$ °स्तस्या°.

हर्षे बद्धे त्वयि गते कृतकृत्यो भवेन्नृपः । तन्न निष्कृष्य काराया गमनं तव सांप्रतम् ॥७६३॥
इति तैः प्रेर्यमाणः स राजसूनुरुदायुधैः । विनिवृत्याकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥७६४॥
श्रुत्वा चिकीर्षितं तस्य व्यावृत्तस्य तथाविधम् । सहायाः समपद्यन्त कतिचिड्डामरा अपि ॥७६५॥
अकरोन्मधुरावट्टो हयसेनापतिः सुतम् । राजसूनुर्ययाद्यं मध्यस्थानानुयात्रिकम् ॥७६६॥
नागाह्वयो द्रोहदीनो राजपक्षमसंत्यजन् । कैश्चित्सह हयारोहैः स पद्मपुरवर्त्मना ॥७६७॥
आगच्छन्नन्तिकं राज्ञो दुर्निमित्तहतत्वरः । न यावन्नगरं प्राप क्षिप्रकारी नृपात्मजः ॥७६८॥
शकुनैराहितोत्साहः शालामोहीपितामिभिः । सैन्यैर्गृहान्दहंस्तावद्राजधानीमवेष्टयत् ॥७६९॥ चक्कलकम् ॥
समयाय विनिर्यातं त्यक्त्वोत्कर्षं महीभुजम् । तत्पक्षे जयराजोपि राजसूनुमशिश्रयत् ॥७७०॥
हस्तस्थितौ राजपुत्रौ तस्याचिन्तयतां गतिम् । नवौ कवी व्यवहर्तिं सिद्धवाचः कवेरिव ॥७७१॥
हर्षदेवे परित्यक्ते यास्याम इति वादिनः । स हस्तिमहिषादीनां शालाः सैन्यैरदाहयत् ॥७७२॥
त्यागमलयजीमूतो हर्षदेवोभिषिच्यताम् । लुब्धः खशो वणिक्प्रायो राज्यादेष निवार्यताम् ॥७७३॥
एवं वदन्तः सन्तोपि हर्षमेत्य पुरौकसः । पुष्पैः प्राच्छादयन्बद्धं तमोरिविवरार्पितैः ॥७७४॥
उत्पिञ्जे तत्र संजाते भग्नसैन्यस्य भूपतेः । संप्रेष्य ठक्कुरान्हर्षस्तटस्थं तद्धलं व्यधात् ॥७७५॥
इत्थं बद्धोपि तत्कृत्वा वैरिकार्याविरोधिनः । संदेहवेपमानाङ्गस्ततस्तानेवमब्रवीत् ॥७७६॥
वर्तेथ संकटे दुष्टे तन्मां मुञ्चत बन्धनात् । न चेदाशु महीपालादनिष्टं नियमाद्भवेत् ॥ ७७७॥
इत्युच्यमानास्ते यावद्विमृशन्ति स्म तन्मुहुः । पादप्रहारा न्यपतंस्तावद्द्वारगृहाद्बहिः ॥७७८॥
उच्चचार स किं द्रोहः प्रक्रान्तोयं दुराशयैः । रे ठक्कुरा विवृणुत द्वारमित्युच्चकैर्वचः ॥७७९॥
ठक्कुरेष्वथ भीतेषु धैर्यादगणयन्भयम् । अकारयद्धर्षदेव एव द्वारमपावृतम् ॥७८०॥
नेत्रमात्रस्थितप्राणो ददर्श विशतस्ततः । लौहरान्शस्त्रिणो हन्तुं प्राप्तान्षोडश वारिकान् ॥७८१॥
ते हि छित्त्वोज्झिते हर्षशीर्षे सर्वमिदं क्षणात् । शाम्येदिह भयं मन्त्रं नोनकस्येति जल्पतः ॥७८२॥
उत्कर्षेणासकृच्छ्रुत्वा तं निहन्तुं विसर्जिताः । विमृश्य चोक्का गच्छन्तः कार्यशेषं विमुञ्चता ॥७८३॥
कदाचित्तेन कृत्यं स्यादहतेनेति तत्क्षणम् । निवार्य ठक्कुरान्रक्ष्यो हन्तव्यश्च यदोर्मिकाम् ॥७८४॥
इमां दद्यामभिज्ञानं यदा चेयं विसृज्यते । तदा तु बन्धनात्त्याज्य इत्युदीर्याङ्गुलीयकम् ॥७८५॥
पाणौ दर्शयता चोक्का विलम्बालम्बनं यतः । निवार्य ठक्कुरांस्तस्मिन्क्षिप्रं न प्राहरंस्ततः ॥७८६॥ कुलकम् ॥
स तु प्रत्येकमाहूय नामग्रहणपूर्वकम् । अजिग्रहत्तांस्ताम्बूलमप्युपावेशयत्पुरः ॥७८७॥
जहुस्ते कृतसत्कारास्ताम्बूलग्रहणक्षणे । ह्रीताः करामाच्छस्त्राणि प्रजिहीर्षां च मानसात् ॥७८८॥
धत्ते श्रियं सृजति कीर्तिमघं लुनीते मित्रत्वमानयति हन्त विरोधिनोपि ।
यात्यध्वभिः प्रतिपदं सुमनोनुकूलैर्गीः कामधुक्कमिव नापहरत्यनर्थम् ॥७८९॥
राजपुत्रः स तानूचे किं ह्रीता इव तिष्ठथ । निर्दोषाः सर्वथा प्रेष्याः स्वाम्यादेशानुपालने ॥७९०॥

---

७७०. [1]) Thus corr. by A₂ from A₁ त्यक्त्वोत्क°. ७७६. [1]) Emended; A वैरि--वि°; C वैरिकानावि°. ७८१. [1]) Thus A; R °वार्विकान्.

विलम्बयतां तथाप्यत्र द्रष्टव्यं महदद्भुतम् । ययोर्देव्यस्त्वंवस्थानामन्यथात्वं क्षणे क्षणे ॥७९१॥

द्विपद्वीपिक्रव्यादुरगतुरगादिभ्रमकृतो यथास्यां भिद्यन्ते दिवि किल न पयाम्बुदलवाः ।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां क्षणानां नानात्वान्ननु हृदि विकारोर्मय इमाः ॥७९२॥

क्षणानुवृत्तिं कुर्वाणास्तथ्याथात्र स्थिता वयम् । तथा सन्तु भवन्तोपि कार्यान्तरदिदृक्षवः ॥७९३॥

अपि चैवंविधा एव वितन्वन्तो रसान्तरम् । आसन्नराज्यप्राप्तीनां राज्ञां स्युः प्राणसंशयाः ॥७९४॥

ग्रीष्मस्योष्मा व्रजति घनतां नूनमासन्नवृष्टेर्नैशं गाढीभवति तिमिरं संनिकृष्टप्रभातम् ।
जन्तोरेवं प्रसभविभवस्फारसंपल्लघाराक्लिष्टक्रामन्ती विपदुपचितोपद्रवोद्रेकमेति ॥७९५॥

प्राणचारेण शकुनं निश्चित्येति वदन्स ताम् । आचचक्षे शुभोदर्काः स्वोदन्तसदृशीः कथाः ॥७९६॥

कालं क्षेप्तुमुपन्यस्तभुङ्क्ष्व्यक्तीभवद्रसाम् । तेभ्यश्च कथयामास हरिश्चन्द्राश्रयां कथाम् ॥७९७॥

तद्भञ्जने स्वरक्षायां बाह्यवार्तागवेषणे । व्यापृतत्वं गभीरस्य न तस्य समलक्ष्यत ॥७९८॥

अत्रान्तरे तमुद्दिश्य मते जाते नवे नवे । राजभियश्च काल्यांशं शतशोभूद्गतागतम् ॥७९९॥

उत्कर्षो भूमिपस्तस्य परित्यागं समन्यत । आदिदेशानुगांस्तांस्तान्भूरिशश्च प्रमापणे ॥८००॥

अभिज्ञानोर्मिकादानं वधादेशे तु नास्मरत् । ते नोर्मिकं तस्य दूतानामन्वतिष्ठन्त रक्षिणः ॥८०१॥

स तान्वन्ध्यश्रमान्वीक्ष्य स्मृत्वाभिज्ञानसंविदम् । स्वात्मजं राजपुत्रं भूशाल्यं व्यसृजत्ततः ॥८०२॥

अभिज्ञानं वितरतस्तत्करे तस्य मुद्रितः । दैवयोगात्क्षणे तस्मिन्नूर्मिकाव्यत्ययोभवत् ॥८०३॥

यः पानार्थमुपार्जितोन्यशिरसस्तेनैव सिन्धुप्रभुर्वृद्धक्षेत्रधराधवः स्वशिरसः पातं वरेणान्वभूत् ।
दिष्ट्या सैव गदा श्रुतायुधनृपं हन्तात्रधीदाहवे यत्त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत् ॥८०४॥

तथा चैकस्य विस्मृत्या व्यत्ययेनापरस्य च । अभिज्ञानस्य स नृपो नाशं प्रत्युत लब्धवान् ॥८०५॥

आभिजन्येन हर्षस्य ते क्षणादेव रक्षिणः । प्रपेदिरे हितैषित्वमुत्कर्षाज्ञाविरोधिनः ॥८०६॥

द्वारमाक्रान्तमुत्कोपो वधायायमुपागतः । इति निर्ध्याय ते भूरं हन्तुमैच्छन्नुदायुधाः ॥८०७॥

उद्घाटितारस्पुटा दृष्ट्वा तस्योर्मिकां करे । तेनैव साकं नृत्यन्तो हर्षं समुपतस्थिरे ॥८०८॥

पादन्यस्तोत्तमाङ्गैस्तैर्निर्गच्छेत्यर्थितस्ततः । अविश्वसन्नाजसूनुः क्षणमासीत्स चिन्तयन् ॥८०९॥

तस्मिन्क्षणे हर्षदेवं हतं ज्ञात्वा रणे स्थितः । क्रुध्यन्विजयमल्लोभूदधिकोद्रिक्तपौरुषः ॥८१०॥

तं दग्धुमुद्यतं राजधानीं जीवति तेग्रजः । अभिधावेति रुरुधुः कथंचित्पार्थिवानुगाः ॥८११॥

प्रत्ययार्थं ततस्तस्य राज्ञा हर्षवधूर्द्रुतम् । गृहीतभर्तृताडङ्का सुगला प्रैष्यतान्तिकम् ॥८१२॥

तां विलोक्यैव विरते वह्निदाहान्नृपात्मजे । राजा भयप्रतीकारं हर्षत्यागादमन्यत ॥८१३॥

गत्वामात्याः स्वयं नोनप्रशास्तकलशादयः । हर्षं निर्निगडं कृत्वा कारागारात्ततोत्यजन् ॥८१४॥

---

७९१. 1) Thus corr. by later hand from $A_1$ °द्भुताम्.— 2) देव्यस्त्व supplied by $A_3$ in space left by $A_1$. ७९५. 1) Thus corr. by $A_1$ from °प्रतापम्; $A_3$ °प्रभाति. ७९६. 1) Thus corr. by $A_3$ from $A_1$ भुभोद°. ७९९. 1) $A_3$ gloss काली यमस्त्री. ८०२. 1) Doubtful; thus A R G. ८०४. 1) $A_3$ gloss यः पानार्थमिति एतद्वृत्तद्रयोपाख्यानं महाभारते द्रोणपर्वणि ज्ञेयम्. ८०६. 1) $A_3$ gloss आभीजन् इति देशभाषया. ८०८. 1) कं नृत्यन्तो supplied by $A_3$ in space left by $A_1$. ८११. 1) Emended; A R G तेनुजः.

815 मन्त्रः स तेषां शोकेन वक्त्रात्कृतगतागतः । अन्त्यक्षणे श्वास इव प्रससार बहिश्चरन् ॥८१५॥
हर्षः प्रच्छाद्यमानस्तु पौराणां पुष्पवृष्टिभिः । हयमारुह्य सामात्यो रणस्थं नृपमासदत् ॥८१६॥
अभिनन्द्यानुजौ राजा तमूचे भ्रातरं रणात् । निवार्यागम्यतां कुर्मः प्राप्तकालं ततो वयम् ॥८१७॥
तथेति प्रस्थिते तस्मिंस्त्यक्त्वा तस्य रणाजिरम् । प्राविशन्मन्त्रिभिः सार्धं कोशं हेमादिसंभयम् ॥८१८॥
उत्तीर्णं महतः कृच्छ्राद्धर्षदेवमुपस्थितम् । दृष्ट्वा विजयमल्लोभूत्प्रहर्षान्निष्क्रियः क्षणम् ॥८१९॥
820 ततो ववन्दे तत्पादौ स चोस्काभ्यां[1]लिलिङ्ग तम् । तास्ताः कथास्तयोरासन्नुपकर्त्रुपकार्ययोः[2] ॥८२०॥
व्यापादयैनमेवाद्य हर्षोत्कर्षं ततो नृपः । निष्कण्टकोसि भवितेत्याप्तस्योपांशु जल्पतः ॥८२१॥
ततो विजयमल्लेन नाद्रोहेणादृतं वचः । ज्ञात्वेङ्गितज्ञो हर्षस्तत्ततस्तु चकितः क्षणम् ॥८२२॥ युग्मम् ॥
स्वदेहमामिषीभूतं स भ्रात्रोः श्येनयोरिव । निष्पत्त्रपक्षप्रतिमो ररक्षार्वगतश्चरन् ॥८२३॥
आसन्नाभ्रजलस्य दावविगमे विद्युद्भयं शाखिनो नक्रास्याद्गलतश्च मज्जनमयी शङ्का भवेद्वारिधौ[1] ।
मोक्तव्यस्य विधिः शुभस्य रभसात्स्वादुत्त्वनिष्पत्तये जन्तोः संतनुते निराकृतभियो भीत्यन्तरोत्पादनम् ॥८२४॥
825 तं हयभ्रमणव्याजाद्रक्षितुं निजजीवितम् । ज्ञातवार्ता निजाः केचित्पत्तयः पर्यवारयन् ॥८२५॥
साकं विजयमल्लेन ततः संमन्त्र्य स क्षणात् । चचाल विप्लवापायमाख्यातुं तं महीभुजे ॥८२६॥
अथ तद्वेश्मनः प्राप्तं विनिर्यान्तं नृपात्मजात् । ततो विजयसिंहस्तं संप्रवेशाद्व्यवारयत् ॥८२७॥
ऊचे च मरणात्तीर्णो मर्तुं विशसि किं पुनः । निष्पत्य गत्वोपविश त्यक्तशङ्कं नृपासने ॥८२८॥
एवमुक्तवतस्तस्य भृत्यैः कोशादुपाहृते । सिंहासने हर्षदेवस्ततस्तूर्णमुपाविशत् ॥८२९॥
830 दैवात्स्वच्छादितानन्तप्रातिकूल्या तदन्तिके । उपाविशच्च सुगला महादेवीत्वसिद्धये ॥८३०॥
तस्याभिषेकशब्देन समधावन्त सर्वतः । रसितेनाम्बुवाहस्य चातका इव मन्त्रिणः ॥८३१॥
तद्वार्ताश्रवणेनार्तमुत्कर्षं मन्दिरात्ततः । धूर्तो विजयसिंहोपि कृष्ट्वान्यमनयद्गृहम् ॥८३२॥
आस्थानस्थस्य भूभर्तुरग्रेण स मितानुगः । नष्टश्रीर्ददृशे गच्छन्स्थिराः कस्य विभूतयः ॥८३३॥
तस्य वेश्मप्रविष्टस्य बहिर्विन्यस्य रक्षिणः । राज्ञो विजयसिंहस्तत्कृतं कार्यं न्यवेदयत् ॥८३४॥
835 कारायां संस्तुतान्राजपार्श्वमानीय ठक्कुरान्   तत्सैन्येप्रस्थितेत्याक्षीत्त्रयं विजयमल्लतः ॥८३५॥
सोप्यग्रजं प्राप्तराज्यं श्रुत्वा तत्सविधं व्रजन् । निन्ये संमान्य तद्भृत्यैः स्वामेव वसतिं क्षणात् ॥८३६॥
तत्सैन्यं स्वान्तिकं प्राप्तमथ वीक्ष्य क्षमापतिः । आनिनाय तमभ्यर्णं क्षणमात्रेण नीतिवित् ॥८३७॥
मह्यं प्राणाश्च राज्यं च त्वया दत्तमिति ब्रुवन् । स प्राञ्जलिस्तमकरोत्क्लेशसाफल्यदायिनम् ॥८३८॥
तस्य दैवानुकूल्येन नीत्येव क्षमयुक्तया । तत्कालमेव तद्राज्यशय्यायां समुपाविशत् ॥८३९॥
840 कारागृहान्तःसंवीतान्येव वासांसि धारयन् । सिंहासनेन शुशुभे श्रीसांनिध्यान्नवो नृपः ॥८४०॥
तादृक्साहससंरम्भपरिश्रान्तो दिनात्यये । कृतारोहोथ शय्यायां त्यक्तभार इवापतत् ॥८४१॥

---

८२०. [1]) स्काभ्या supplied by $A_2$ in space left by $A_1$.—[2]) Emended with C; A °नुपकर्त्रुप°. ८२३. Thus A; perhaps °पक्षि°? ८२४. [1]) The same hand which has supplemented the marginal note of $A_2$ in i. 110, writes here: नक्रास्याद्गलतश्च मज्जनमयी शङ्का प्लवस्याम्बुधौ इत्यन्यादर्शे, with the gloss नक्रः जलप्राणिविशेषः यो जलहस्तिनोपीयर्यति तन्मुखात्स्रकाशादेवसा- चलितस्यापि मज्जनमयी शङ्का उडुपस्य स्यादित्यर्थः.

पश्यन्विवशतामेव सर्वतो विधुरात्मनाम् । न स निद्रासुखं तत्र भीतिभाक्क्वापि लब्धवान् ॥८४२॥
उत्कर्षो भुवि यद्वस्तु मन्त्रं पृच्छन्स मन्त्रिणः । आक्षिप्तान्यहृदो वक्तुं नैवकेनैवकथ्यत ॥८४३॥
प्रातः प्रोक्तोपि यन्मन्त्रं तज्ञाकार्षीर्महीपते । पतितामनयादस्माद्द्वाविर्वां शृणु संविदम् ॥८४४॥
प्रत्याशिषो बन्धमस्थं त्वं तमुच्छिन्नभोगिनाम् । श्वः प्रमांसार्पिता हस्ते स तु स्वानर्पयिष्यति ॥८४५॥
शरणं मरणादन्यदस्मादस्मिन्क्षणेस्ति किम् । त्यक्ताहवानामस्माकं तदप्यप्राप्यतां गतम् ॥८४६॥
अवसादफलास्त्वावकालेत्यन्तमसंगतम्[1] । गहोपालम्भपाण्डित्यं न विपक्षेषु शोभते ॥८४७॥
त्वयापायमनालोच्य न उपायः प्रवर्तितः । सर्वमेकपदे तेन मुहूर्तेनैव हारितम् ॥८४८॥
संस्थाप्यमानो दुर्नीत्या सूच्येव जरटः पटः । प्रत्युतोपद्रवोल्पोपि जातद्वारः प्रजायते ॥८४९॥
एवं श्रुत्वा स तन्मध्यान्निर्गत्याभ्यन्तरं गृहम् । अवरुद्धिकया सार्धं विवेश सहजाख्यया ॥८५०॥
तत्र संध्यासमाधिस्थस्तिष्ठामीत्यभिधाय ताम् । क्षणं तिरस्करिण्यन्तरेकाक्येवाकरोत्स्थितिम् ॥८५१॥
निःशस्त्रेण गले क्षिप्त्वा पटच्छेदनकर्तरीम् । नाड्यः प्राणहरास्तेन छिन्नाः खिन्नात्मना ततः ॥८५२॥
कणत्कारेण कर्तर्याश्च्युताया भुवि शङ्किता । अपश्यत्सहजा रक्तं श्च्योतज्जवनिकान्तरात् ॥८५३॥
सोथ लम्बशिरोनिर्यत्सान्द्रासृग्ददृशे तया । यथावमभृङ्गान्तश्च्योतद्धातुरिवाचलः ॥८५४॥
तस्यास्तदामीमोन्नित्यं निर्व्यूढं येन योषिताम् । भर्तृप्रसादपात्राणामप्याप्युर्येतरां शिरः ॥८५५॥
व्रजति रजनी त्यक्त्वा क्वापि क्षये क्षणदाकरे पदमुपगतस्यास्तं संध्या रवेरनुगच्छति ।
इति परिणतौ प्रेमण्युच्चावचे परिचिन्तिते कथम नियमाज्जिन्या बन्धा न वा सुधियां स्त्रियः ॥८५६॥
कुलाचारपतिप्रेमसादृश्येप्यभवत्तदा । कष्ट्यासहजयोर्भेदस्माज्जिन्या बन्धा च पद्धतिः ॥८५७॥ युग्मम् ॥
सापि हि धुसदो वेश्मनर्तकी नाट्यमण्डपे । दृष्ट्वा तेनाथ कन्यात्वं निन्ये राजवधूः पुरा ॥८५८॥
कान्ताजगैरिकास्यन्दकृतसान्द्राङ्गरागया । प्रेम्णो देव हर्षोज्ज्वल्यं भविष्यामि तयार्पितम् ॥८५९॥
हर्षदेवस्यापि पूर्वं वेदयात्वे साभवत्प्रिया । अतस्तेनार्थ्यमानापि मरणान्न न्यवर्तत ॥८६०॥
चतुर्विंशाब्ददेशीयो दिनद्वाविंशती नृपः । मृतस्तिथस्त्रिशामेकां प्रातः सोक्रियताग्निसात् ॥८६१॥
तस्यावरोधलोलाक्ष्यो लोहराद्रिस्थिता अपि । कृशानुवर्त्मना काचित्पदवीं द्रुतमन्वयुः ॥८६२॥
शस्त्रे संत्याज्यमानेषु तन्मन्त्रिषु नृपानुगैः । मुमूर्षुर्नोनकः शस्त्रं न तत्याज क्षणं यदा ॥८६३॥
विनास्मान्मन्त्रदो राज्ञः कोन्यः स्यादिति वैरसी । मोक्ष्यत्यस्मांस्ततः प्राणाश्चोपेक्षिता विचारयन् ॥८६४॥
स्वयूथ्य एवेति वधः प्रशस्तकलशो वदन् । तदा संत्याजयामास स्वयं तच्च समर्पितम् ॥८६५॥ तिलकम् ॥
नोनसिल्लारभट्टारप्रशस्तकलशादयः । बद्धाथ हर्षदेवेन कारागारे प्रवेशिताः ॥८६६॥
इत्येवमेकेनैवाह्ना तादृगासीद्विपर्ययः । कृतश्च हर्षदेवेन दैवेनेव महाद्भुतः ॥८६७॥
यथाकथंचिदुत्क्रान्ता बहवः पृथिवीभुजः । प्रतीतिविषमो मार्गः कष्टमापतितोधुना ॥८६८॥
सर्वोत्साहोदकक्षेत्रं सर्वानुल्लासदूतिका । सर्वव्यवस्थाजननी सर्वनीतिव्यपोहकृत् ॥८६९॥
उद्रिक्तशासनस्फूर्तिरुद्रिक्ताज्ञाक्षयक्षितिः । उद्रिक्तत्यागसंपत्तिरुद्रिक्तहरणग्रहा ॥८७०॥

८४७. [1]) अवसाद supplied by $A_2$ in space left by $A_1$.

कारुण्योत्सेकसुभगा हिंसोत्सेकभयंकरी । सत्कर्मोत्सेकललिता पापोत्सेककलङ्किता ॥८७१॥
स्पृहणीया च वर्ज्या च वन्द्या निन्द्या च सर्वतः । निध्येया चोपहास्या च काम्या शोच्या च धीमताम् ॥८७२॥
आद्यास्या चापकीर्त्या च स्मर्या त्याज्या च मानसात् । हर्षराजप्रभा चर्चाकथा व्यावर्णयिष्यते ॥८७३॥ कुलकम् ॥
नूनं स तैजसैरेव ससृजे परमाणुभिः । कुतोऽन्यथाभूत्सत्त्वे दुर्धर्षो महतामपि ॥८७४॥
न मर्त्येषु न देवेषु तद्वपो दृश्यते क्वचित् । दानवेन्द्रेषु स प्रांशुः परमुत्प्रेक्ष्यते यदि ॥८७५॥
प्रतिमार्कपरीमाणज्वलत्कुण्डलमण्डितः । उत्तुङ्गमुकुटानद्धविकटोष्णीषमण्डलः ॥८७६॥
प्रसक्तसिंहविप्रेक्षी पीवरसमभुजकटाङ्कितः । वृषस्कन्धो महाबाहुः श्यामलोहितविग्रहः ॥८७७॥
व्यूढवक्षाः क्षाममध्यो मेघघोषगभीरवाक् । सोमानुषाणामपि यत्प्रतिमाभङ्गकार्यभूत् ॥८७८॥ तिलकम् ॥
सिंहद्वारे महाघण्टाश्चतुर्दिक्कमबन्धयत् । ज्ञातुं विज्ञप्तिकामान्स प्राप्तांस्तद्ध्वानसंज्ञया ॥८७९॥
आर्तां च वाचमाकर्ण्य तेषां तृष्णानिवारणम् । प्रावृषेण्यः पयोवाहश्चातकानामिवाकरोत् ॥८८०॥
आच नवको निर्हेमभूषणोल्पपरिच्छदः । ददृशे विगतो--¹ न कश्चिद्राजमन्दिरे ॥८८१॥
सिंहद्वारे नरपतेर्ग्रामाजनसमागते । सर्वदेशाभियोगान्तमासंन्नाशीकृता इव ॥८८२॥
अपेतसंख्याः सौवर्णशृङ्खलाकटकाञ्चिताः । भ्रेमुर्मन्त्रिप्रतीहारमुख्याः क्ष्मापतिमन्दिरे ॥८८३॥
एवं स्फूर्जन्स नृपतिर्नवसाम्राज्यडम्बरः । अभूद्विजयमल्लस्य गुरोरिव मते स्थितः ॥८८४॥
आदीयमानवचसः कृतज्ञेन महीभुजा । तस्याभूत्पार्थिवस्येव सेवकैः संकटा सभा ॥८८५॥
स्वसेवकानवादृत्य रक्षन्संस्थाव्यतिक्रमम् । पित्र्येभ्य एव मन्त्रिभ्यः सोधिकारान्समर्पयत् ॥८८६॥
द्वारे चकार कन्दर्पं मदनं चापि कम्पने । अन्यान्विजयसिंहादीन्कर्तव्ये च निजे निजे ॥८८७॥
तेन प्रशस्तकलशप्रमुखाः शाम्भमन्त्रिणः । बन्धाः संत्यज्य कार्येषु निजेष्वेव नियोजिताः ॥८८८॥
स्पृह्यापकारान्प्रबहुनमास्यो नोनकः परम् । चार्वेयेण समं भ्रात्रा कोपाद्धुल्ले विपादितः ॥८८९॥
काले काले तु कार्येषु संकटेषु महामतिम् । संस्मरन्स्वामिभक्तं तं पश्चात्तापेन पस्पृशे ॥८९०॥
योग्यः कृतापकारोपि कदाचिदुपयुज्यते । विहितागारदाहोग्निः शरणं भोज्यसिद्धये ॥८९१॥
संदर्श्यावे स्वभार्यायाः कर्णनासावकर्तनम् । विश्वाभट्टो राजभृत्यैः शूलेनैव विपादितः ॥८९२॥
उदये संविभेजे स भृत्यान्कारानिनिर्गतान् । मधौ प्रफुल्लः शाखीव भृङ्गान्भूविवरोत्थितान् ॥८९३॥
राज्ञः क्षेमस्य यः पौत्रो वज्राजः स महीभुजा । सर्वामात्यप्रधानत्वं निन्ये सुज्ञः सहानुजः ॥८९४॥
राज्ञो यात्रादिसमये प्रेक्षकाणां पदे पदे । एक एकोऽभवन्मन्त्री महीपालभ्रमप्रदः ॥८९५॥
सर्वप्रतीहारपदामूर्धानमधिरोपितः । जयराजोनुजस्तस्य जीविताद्धिकोऽभवत् ॥८९६॥
आज्ञवीयाग्रजा भ्रात्रोरानृशंस्या ----¹ । धम्मटः सोपि तान्वक्त्रैर्भ्रातृपुत्रैः सहाययौ ॥८९७॥

८७९. ¹) Thus corr. by $A_2$ from $A_1$ मथा°. ८८०. ¹) आर्तां and तृष्णा supplied by $A_2$ in space left by $A_1$. ८८१. ¹) $A_1$ indicates here a *lacuna* of two *aksharas*; C विगतोत्पाये; perhaps, विगतोद्वेगो (?). ८८२. ¹) Emended; A °नाशीनाशी°. ८८८. ¹) Thus corr. by $A_2$; $A_1$ ---- संत्यज्य कार्येषु नियोजिताः. ८८९. ¹) Thus corr. by later hand from $A_1$ स्पृह्वोप°. ८९२. ¹) Thus A; perhaps, to be read विश्वावर्तो; cf. vii. 617, 621, 630. ८९३. ¹) $A_2$ gloss मधौ वसन्ते भूविवरोत्थिता भृङ्गाः नीलवर्णाः इति भावः प्रसिद्धाः ये अस्तावस्थिता वृक्षे सूक्ष्मेभ्यः भूविवरेभ्यः वसन्तसमये उत्तिष्ठन्ति शाखानामुपरि सञ्चरन्ति ॥. ८९७. ¹) Here $A_1$ indicates a *lacuna*; C °नृशंस्यादिवचनः.

संमान्य तं नरपतिः स्वकुले हारितापदम् । सभ्रातृपुत्रमद्राक्षीत्स्वाविशेषेण सर्वदा ॥८९८॥
विभज्य भुञ्जतो राज्यं तस्यैव प्रेरितः खलैः । क्रमाद्विजयमल्लोऽथ दुर्बुद्धिर्विकृतिं दधे ॥८९९॥
राज्यं प्राप्ताः किमन्यस्मै जित्वेत्युक्तः स दुर्जनैः । तल्लिप्सुर्मन्त्रयामास वधं प्रथमजन्मनः ॥९००॥
विजने मन्दिरे हन्यामिति संमन्त्र्य भूपतिः । यागं विधाय व्याजेन तेनागन्तुं निमन्त्रितः ॥९०१॥
मन्त्रे श्रुतिं गते राज्ञः सोऽथात्स्कन्दविशङ्कितः । आदिदेश स्वसैन्यानां द्रुतं संनहनोद्यमम् ॥९०२॥
संनद्धे राजसैन्येऽथ द्रुतं निर्गत्य भूपतेः । हता विजयमल्लेन मन्दुराभ्यस्तुरंगमाः ॥९०३॥
संहरंस्तुरगान्वीक्ष्य प्रहरन्नृपतेर्बलम् । कुर्वन्महाहवं वीरो निर्गन्तुं त्वरते पुरात् ॥९०४॥
आक्षिप्य पृष्ठे तिष्ठन्त्या जायया सहितो व्रजन् । स चकार तुरंगस्थः संग्राममतिमानुषम् ॥९०५॥
धारासारैः क्षणे तस्मिन्नकालजलदोज्झितैः । विपर्यस्तेव पृथिवी सर्वतः समलक्ष्यत ॥९०६॥
झंकारमारुतारब्धभूरिभेरीरवे रणे । आसारेण धुरैवासीच्छाद्यमानो नृपात्मजः ॥९०७॥
तं क्षीयमाणपृतनं यान्तं हन्तुं समुद्यताः । कर्माणि प्राकृतानीव न चण्डकृतता जहुः ॥९०८॥
भग्नसेतुं पयोवेगैर्वितस्तासिन्धुसंगमम् । सजामिरंतरदोर्भिर्ग्रामवतीर्य स वाजिनः ॥९०९॥
सत्त्ववानकरोत्पत्न्या मज्जनं रिपुसंकटे । सिन्धुं प्रवृद्धामुत्तीर्य तुरंगोऽपि तमन्वगात् ॥९१०॥
द्विषां दृग्गोचरात्यातः स तमारुह्य वाजिनम् । दरदेशोन्मुखो वीरः प्रायात्सहरवर्त्मना ॥९११॥
कन्दर्पहारपतिना सर्वतो रुद्धपद्धतिः । गिरीनुल्लङ्घ्य चाविक्षद्गिरिगुप्तां दरत्पुरीम् ॥९१२॥
दरदाभ्यर्चितं तत्र श्रीविद्याधरशाहिना । केचिन्निजाः परिजनाः शनकैस्तं प्रपेदिरे ॥९१३॥
श्रुत्वा स्वीकार्यमाणं च संरम्भं डामरादिभिः । प्रायुङ्क्त हर्षपृथ्वीभृदुपायांश्चकितोऽन्वहम् ॥९१४॥
तेषु यत्नेषु शीतर्तुं सोऽतिवाह्य दरत्पुरे । डामरैः प्रहितालापश्चैवं यात्रामदान्मदात् ॥९१५॥
उत्तीर्य संकटांस्तिग्मान्मार्गान्तः पटमण्डपे । अकस्मादभवन्मानी हिमानीहतजीवितः ॥९१६॥
यदुल्लासाय संरम्भो धीरैर्विस्तार्यते महान् । कृत्यं हिनस्ति तद्विघ्नमल्पेनैव वस्तुना ॥९१७॥
उन्मीलनं तिग्मरुचिः प्रयत्नाद्येषां सहस्रेण करैः करोति ।
उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन ॥९१८॥
दैराज्यशङ्कया कंचित्कालं संकुचितं ततः । भूयः प्रथयतो लग्नं राज्यं हर्षमहीभुजः ॥९१९॥
राजशब्दस्तदा सेहे न कुत्राप्यधिरोपणम् । अत्युद्गततया तस्मिन्नलमुख्येनान्यराजक ॥९२०॥
सुशोभादायिनीर्भङ्गीः प्रावर्तयत मण्डले । निर्मत्सरो नरपतिः पुष्पर्तुरिव कानने ॥९२१॥
मुक्तकेशा निरुष्णीषा निष्कलाभरणाः पुरा । संत्यज्यैकं महीपालमभवन्निह देहिनः ॥९२२॥
धम्मिल्लपत्त्रमाणाय मदनः कम्पनापतिः । जयानन्दोऽप्यमात्याग्र्यश्चित्रोरुकधारणात् ॥९२३॥

---

९०२. ¹) यात्स्कन्द supplied by A₂ in space left by A₁.—²) Emended; A °मोद्यमम्. ९०४. ¹) संहर supplied by A₂ in space left by A₁. ९०८. ¹) Thus A; perhaps, to be read प्राकृतानीव. ९०९. ¹) सजामिर supplied by A₂ in space left by A₁.—²) Thus corr. by A₂ from A₁ °तरच्छी°.—³) Thus corr. by A₂ from A₁ °तार्य. ९१०. ¹) Thus corr. by A₂ from A₁ °वानक°.—²) त्वरन्त्या and नं supplied by A₂ in space left by A₁. ९११. ¹) Thus corr. by A₂ from A₁ दरदा°.—²) A₁ indicates a *lacuna*; C °चरवेहिना. ९१५. ¹) आयात् supplied by A₂ in space left by A₁. ९१६. ¹) Thus corr. by A₂ from A₁ मुख°. ९१९. ¹) प्रथयतो लग्नं राज्यं supplied by A₂ in space left by A₁.

अन्यभूपार्थिवक्रोधमविशेषेण मण्डले । तेन राज्योचितो वेषस्तत्र राज्ञा प्रवर्तितः ॥९२४॥युग्मम्॥
स केषांचिदमात्यानामाकल्पोल्लासशोभिनाम् । निर्मत्सरः स्वदासीभिरारात्रिकमकारयत् ॥९२५॥
दाक्षिणात्याभवद्भङ्गिः प्रिया तस्य विलासिनः । कर्णाटानुगुणष्टङ्कस्तत्तेन प्रवर्तितः ॥९२६॥
लम्बतालीदलाः स्थूलचन्दनस्थाससुन्दराः । रेजुर्जनास्तदास्थाने प्राप्तदीर्घासिधेनवः ॥९२७॥
स्वर्णकेतकपत्राङ्कजूटलम्बोर्जितस्रजः । चटुलातिलकाश्लिष्टविलोलतिलकाङ्कुराः ॥९२८॥
अपाङ्गभोगयोर्बद्धसंधयोञ्जनरेखया । निर्मीरङ्गिककेशान्तबद्धहेमोपवीतकाः ॥९२९॥
अधराम्बरपुच्छान्तैर्लम्बैश्चुम्बितभूतलाः । प्रच्छादितार्धदोर्लेखकञ्चुकाङ्कपयोधराः ॥९३०॥
कर्पूरोद्धूलनस्मेरा भ्रमन्त्यसरलभ्रुवः । बभुराश्रितपुंवेषा ह्रियाकृष्टकलत्रताम् ॥९३१॥ चक्कलकम् ॥
अन्योपजीव्यतां प्रापुस्तस्यार्थित्वेन मार्गणाः । विश्वाप्यायकतां मेघाः प्रणयेनेव वारिधेः ॥९३२॥
प्रसादैस्त्यागिनस्तस्य राज्ञः कनकवर्षिणः । समस्ता गायकगणाः पार्थिवस्पर्धितां ययुः ॥९३३॥
विद्वच्चूडामणिर्भूभृत्पण्डितानलमण्डितान् । चकार युग्यतुरगच्छत्रादिप्रक्रियाभृतः ॥९३४॥
कश्मीरेभ्यो विनिर्यान्तं राज्ये कलशभूपतेः । विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः ॥९३५॥
प्रसर्पतः करटिभिः कर्णाटकटकान्तरे । राज्ञोऽग्रे ददृशे तुङ्गं यस्यैवातपवारणम् ॥९३६॥
त्यागिनं हर्षदेवं स श्रुत्वा सुकविबान्धवम् । बिल्हणो वञ्चनां मेने विभूतिं तावतीमपि ॥९३७॥
सौवर्णामलसाराढ्या राजधान्यो धरापतेः । बह्व्योभ्रलिहगृहा भेजिरे भुवनाद्भुताः ॥९३८॥
तदीये नन्दनवने द्रुमेभ्यो नो व्यधुः स्थितिम् । त्यागिना निर्जितास्तेन केवलं कल्पपादपाः ॥९३९॥
विविधाभिरमुष्यासु विहंगमृगजातिभिः । तेन व्योमदिगाभोगं चक्रे पम्पाभिधं सरः ॥९४०॥
सोऽभासीद्यावतीर्विद्यास्तासां नामापि निश्चितम् । वक्तुं नास्त्येव सामर्थ्यं व्यक्तं वाचस्पतेरपि ॥९४१॥
गीतमाकर्ण्यतेद्यापि तस्य वाग्गेयकारिणः । विपक्षैरपि पक्ष्माग्रलुठद्बाष्पोदबिन्दुभिः ॥९४२॥
स्वपतो दिनयामौ द्वौ सर्वकालं विलासिनः । दत्तास्थानस्य तस्यासीद्यामिनीषु प्रजागरः ॥९४३॥
तस्य दीपसहस्राङ्के स्थितस्यास्थानमण्डपे । विद्वद्गोष्ठीगीतनृत्तप्रस्तावेन क्षपा ययुः ॥९४४॥
कथान्ते शुश्रुवे तत्र पर्णचर्वणजः परम् । कान्ताधम्मिल्लशेफालीत्रुटिजन्मा च मर्मरः ॥९४५॥
वितानैः सपयोदेव साग्निवप्रेव दीपकैः । रुक्मदण्डैः सशम्पेव सधूमेवासिमण्डलैः ॥९४६॥
साप्सरा इव कान्ताभिः सनक्षत्रेव मन्त्रिभिः । सर्षिसंघेव विबुधैः सगन्धर्वेव गायनैः ॥९४७॥
नित्यसंकेतवसतिर्धनदस्य यमस्य च । एकं विहरणारण्यं दानस्य च भयस्य च ॥९४८॥
क्षपास्थानस्थितिस्तस्य राज्ञः शक्राधिकश्रियः । कस्य वाचस्पतेर्वाचा वक्तुं कार्त्स्न्येन शक्यते ॥९४९॥ चक्कलकम्॥
हैमैश्च राजतैश्चासीद्व्यवहारस्तदा घनः । मण्डले विरलामुष्मिन्दीनारैस्ताम्रजैः पुनः ॥९५०॥
दण्डनायकतां प्राप्य सुज्जः सर्वोन्नतिं भजन् । तस्मिन्काले स्वभूलोभाभीचो मुष्टिपचः परम् ॥९५१॥
निजा जयवने सूर्यामूलके विजयेश्वरे । आख्यान्ति यस्य लुब्धत्वं निर्व्ययस्थितयो मठाः ॥९५२॥

---

९२८. ¹) A₂ gloss ललाटलम्बमानकुरालकपुंलातिलको मतः. ९३१. ¹) Emended; A° पुंवेषा. ९३६. ¹) Thus corr. by A₂ from A₁ °दृशे. ९३८. ¹) Thus corr. by later hand from A₁ सौवर्णामाल°.—²) राढ्या supplied by A₂ in space left by A₁.

क्षुधितव्याधितानाथदीनार्तार्तिनिवारणम् । सुस्पष्टं प्राप पद्मस्य राज्यलक्ष्मीः कृतान्तताम् ॥९५३॥
नन्दिक्षेत्रे व्ययीकृत्य प्रत्यब्दं सप्त वासरान् । चम्पकः सफलां चक्रे सर्वकालार्जितां श्रियम् ॥९५४॥
कृष्णाजिनोभयमुखीमुख्यैर्दानैः क्षमाभुजा । अदरिद्रीकृता विप्रा निःशेषार्तिच्छिदार्थिनाम् ॥९५५॥
राज्ञी वसन्तलेखाख्या शाहिवंशाभिधाकरोत् । मठाग्रहारनगरे पूर्व्ये च त्रिपुरेश्वरे ॥९५६॥
माहेश्वर्यमयी काचिदियं ज्वालेव सोद्यमी । उदारव्यवहारं तु न तद्वाच्यं प्रचक्षते ॥९५७॥
अथ प्रवृद्धिं संप्राप्ताः शनकैर्नवमन्त्रिणः । पूर्वामात्यद्विषो राज्ञो मतिमोहं प्रचक्रिरे ॥९५८॥
कुष्ठार्ताङ्घ्रियुगः शिखी बहुपदं गृह्णाति धावन्नहिं भानुः पादसहस्रभाक्प्रतिपदं संचार्यतेनूरुणा ।
बध्यन्ते बलिनोपि पङ्गुबलैः सामर्थ्यहीनैश्च यद्भ्राम्यन्ते परिपूर्णवृत्तय इदं दैवस्य लीलायितम् ॥९५९॥
स सर्वशास्त्राधिगमप्रौढः परिवृढो विशाम् । सम्मोहितमतिश्चक्रे वैधेयैरपि मन्त्रिभिः ॥९६०॥
विपन्नस्य पितुर्वैरप्रतिकारविधित्सया । स राजधानीसमाक्रम्य मठादि निरलोठयत् ॥९६१॥
त्यागी तत्कोशसंभारं व्ययीकुर्वन्नितस्ततः । लुब्धस्य चाभिधां तस्य पापसेन इति व्यधात् ॥९६२॥
शुद्धान्ते शुद्धशीलानां ढौकितं मूढचेतसा । स्पष्टं षष्ट्यधिकं राज्ञा स्त्रीणां तेन शतत्रयम् ॥९६३॥
यादृशीस्तादृशीस्तत्र नारीर्विन्यस्यतानिशम् । नागृह्यन्त परं डोम्ब[1]जनंगमकुलाङ्गनाः ॥९६४॥
अत्रान्तरे पूर्यमाणो गूढं कोटपदातिभिः । पुनर्भुवनराजोभूल्लहरालब्धिलुब्धधीः ॥९६५॥
स दर्पितपुरं प्राप्तः कन्दर्पं द्वारनायकम् । श्रुत्वा योद्धुं विनिर्यातं ययौ भूयोप्यदृश्यताम् ॥९६६॥
तस्मिन्प्रसङ्गेपि नृपो दृप्यद्राजपुरीपतिः । संग्रामपालः केनापि हेतुना विक्रियां ययौ ॥९६७॥
कन्दर्पे कोटभृत्यानां भिन्नानां संग्रहोद्यते । कुप्यन्राजपुरीं राजा व्यसृजद्दण्डनायकम् ॥९६८॥
स महद्भिः समं सैन्यैर्गच्छंल्लोहरवर्त्मना । अधीरः कोटकच्छेषु सार्धं मासं व्यलम्बत ॥९६९॥
प्रत्यासन्नाच्छुचेर्मासात्प्रतापाच्च विरोधिनाम् । स्रस्यतस्तस्य यात्रायां न संकल्पोप्यराजत ॥९७०॥
अविशेषज्ञभावेन भर्तुस्तिष्ठन्निरुद्यमः । ततो जगाम कन्दर्प एवोपालम्भमात्रताम् ॥९७१॥
कृतप्रतिज्ञोनाहारतया राजपुरीजये । उपालम्भार्दितः सोथ निःसामग्र्योप्यचाचलत् ॥९७२॥
निराहारस्य वसतः कन्दर्पस्याद्रिगह्वरे । षष्ठेह्न्यभूद्राजपुरी योजनेभ्यधिके स्थिता ॥९७३॥
अभ्याहतः सोरिबलाद्रिपक्षास्त्राणि पातयन् । कदलीपल्लवान्मृद्नन्वनं सिंह इवाविशत् ॥९७४॥
दण्डनायकसैन्येभ्यः परमेकस्तमन्वगात् । सेनानीः कुलराजाख्यो बुद्धराजकुलोद्भवः ॥९७५॥
तं वाह्याल्यां राजपुर्या हतासंख्यादितं द्विषः । निहत्य शुक्लच्छत्राङ्कं कन्दर्पं मेनिरे हतम् ॥९७६॥
मध्याह्ने स तु कन्दर्पः स्वयं संग्रामविह्वली । राजधानीं राजपुर्या विवेशाल्पैः समं भटैः ॥९७७॥
द्विषां त्रिंशत्सहस्राणि योधानामनिवर्तिनाम् । ररोध राजपुर्यग्रे तत्पदातिशतत्रयम् ॥९७८॥
काश्मीरिकाणां[1] निहतं रणे तत्र शतद्वयम् । चत्वारि तु शतान्युर्व्यां खशानामप्यशेरत ॥९७९॥
भग्ने रिपुबले दूरमसंख्येयैश्चिताग्निभिः । संस्कुर्वन्निहताञ्शीघ्रणो मृत्योर्महानसः ॥९८०॥
तेनैवं स्वाम्युपालम्भवेतालो रभसार्पितः । रणश्मशाने वीरेण शमितो मांसशोणितैः ॥९८१॥

---

९६४. [1]) Emended; A डोम्म°. ९७९. [1]) Emended; A काश्मीरका°.

वासमात्रावशेषेऽह्नि पुनरेवाथ संहताः । द्विषः परिभवोत्तमाः कन्दर्पं योद्धुमाययुः ॥९८२॥
ततस्तानथ नाराचान्विचिक्षेप स संयुगे । लिप्तानौषधितैलेन विद्धा यैः प्राज्वलन्द्विषः ॥९८३॥
आग्नेयं वेत्त्यसावस्त्रमिति मूढा विशङ्किताः । ते दूरं प्रययुर्भीता निन्दन्तः पुनरागमम् ॥९८४॥
प्रगल्भभावः प्रतिभानमोजः प्रयोगचातुर्यमसंभ्रमश्च । महाशयानामतिसंकटेषु धैर्योपनद्धां न श्रियं जहाति ॥९८५॥
राजधानीं प्रविष्टः स भानावस्ताभिलाषिणि । भूयोऽप्यपश्यत्स छन्नां वाह्यालीं बहलैर्बलैः ॥९८६॥
योद्धुं यियासुः शुभाश्च प्राप्तं तं दण्डनायकम् । घोरां रणाटवीं दृष्ट्वा भयात्स्थगितसैनिकम् ॥९८७॥
स्वीयैर्दृष्टैः क्षतैः कैश्चिद्दृप्यन्त्यधिकमाहवे । पारकीयैस्त्रसन्त्यन्ये कोऽन्तरं वेत्ति देहिनाम् ॥९८८॥
आनीतोऽथ विनिर्गत्य तेनैव स भये ब्रुडन् । स्पर्धमानो यथाम्भोधौ मज्जन्हंसेन वायसः ॥९८९॥
रक्तप्रजं क्षीणसैन्यमभिन्नं बहुकोशवत् । परराष्ट्रं विशेदेवं स्ववीर्येणैव कोऽपरः ॥९९०॥
प्रणतात्करमादाय ततो राजपुरीपतेः । मासमात्रेण कन्दर्पः पुनः स्वं भुवमाययौ ॥९९१॥
प्रत्युद्गमादिसत्कारैः कृतपूजो महीभुजा । स दण्डनायकादीनां शिरःशूलावहोऽभवत् ॥९९२॥
परिहासपुरे पारिपाल्यं कुर्वन्कठोरधीः । वासगण्डाख्यया ख्यातिं निन्ये यस्तत्र पर्षदा ॥९९३॥
प्रभूतोत्कोचसंप्रीतसचिवप्रेरणस्पृशा । अपास्य वामनं राज्ञा पादाग्रादौ नियोजितः ॥९९४॥
आनन्दः स क्षणे तस्मिंश्छिन्नद्वाराधिकारिताम् । कन्दर्पद्वेषिणामासीन्मन्त्रिणामतिसंमतः ॥९९५॥
तत्प्रेरितस्ततः पार्श्वं लोहरे विप्रुताहितम् । मण्डलेश्वरतां दत्त्वा कन्दर्पं प्राहिणोन्नृपः ॥९९६॥
मन्त्रविक्रमसंपन्नः कुभृत्यैः स्वोदयेप्सुभिः । युक्त्या तया राजपशोः समीपात्सोऽपवाहितः ॥९९७॥
दूत्यार्होऽयमिति प्रहाय निकटाद्देशान्तरे वाग्मिनं सूरिं बन्धुवियोगकृन्ननु वचोमुष्येति संत्यज्य च ।
भूयो राज्यमसौ हरेदिति तथा हित्वा विचारोज्झितो धूर्तप्रेरणयाबुधो नृपपशुर्नायाति नाशं चिरात् ॥९९८॥
अदर्शनात्स्वबन्धापि कन्दर्पप्रीतिराशयात् । राज्ञो जगाल कालेन सा मुष्टेरिव वालुका ॥९९९॥
उत्कर्षपुत्रावादाय चिकीर्षुर्लोहरेशताम् । कन्दर्पो वर्तत इति क्षितिपं मन्त्रिणोऽवदन् ॥१०००॥
तथेति नृपतिर्गृह्णन्बन्धुं हन्तुमथाशु तम् । ससैन्यं व्यसृजत्पट्टं टक्कं चासिधराभिधम् ॥१००१॥
तयोः संप्राप्तयोर्वार्तां[1] तां लेखव्यत्ययाहिदन् । विमुखश्चकितात्मा च कन्दर्पोऽभूद्यथा मुहुः ॥१००२॥
केलिद्यूतक्षणे हस्तं गृह्णन्सेवकवत्[1]पुरः । आसीदसिधरस्तस्य बन्धुर्[2]अभ्युद्यतस्तदा ॥१००३॥
ततः पाणिं विनिष्कृष्य सोऽङ्गुष्ठाग्रेण तत्करम् । अमुञ्चत्सोऽथ निस्स्वक्कं[1] छिन्नः पक्षीव सोऽगमत् ॥१००४॥
अनन्तरज्ञो भूभृच्च तेनात्मा च नृपाश्रितः । विगर्ह्यते स्म खिन्नेन पट्टश्चैवमकथ्यत ॥१००५॥
नेयाशयो नरपतिः कुटुम्बं प्रहिणोतु मे । अर्पयित्वा ततः कोट्टं प्रयास्यामि दिगन्तरम् ॥१००६॥
आनीय दत्तास्तैर्ज्ञातीनादाय द्रोहवर्जितः । स विमुक्ताधिकारोऽथ मन्त्री वाराणसीं ययौ ॥१००७॥
हत्वा गयायां सामन्तमेकमन्यं निवेश्य च । काश्मीरिकाणां[1] चक्रे स श्राद्धशुल्कनिवारणम् ॥१००८॥

९८२. [1]) Emended; A °भवो तमाः. ९९१. [1]) Thus A; perhaps, to be read स्वभुवं. ९९४. [1]) Thus $A_1$; $A_2$ वासनं. ९९९. [1]) Thus corr. by $A_2$ from $A_1$ मुष्टिरिव. १००१. [1]) $A_4$ gloss मन्त्रिणं.—[2]) Thus $A_2$; $A_1$ टक्कं. १००२. [1]) तां supplied by $A_2$ in space left by $A_1$. १००३. [1]) Emended with C; A °न्सेवककस्पुरः.—[2]) Emended; A बन्धुर°. १००४. [1]) Doubtful emendation; A apparently निस्स्वकर्ण; R G निस्स्वकं. १००८. [1]) Emended; A काश्मीरकाणां.

स हत्वा चौरसेनाख्यं ससैन्यं दुर्गमेऽध्वनि । पूर्वाशामध्वनीनानां च व्यधासिद्धूतकण्टकाम् ॥१००९॥
व्याघ्रं निहत्योपसत्त्वं वाराणस्यां निरस्यता । पूर्वा दिग्भूषिता तेन मतैः सुकृतकर्मतैः ॥१०१०॥ 1010
ते तत्रिर्वासमादेव लब्धलक्षाः कुमन्त्रिणः । अन्योन्याद्वयथा जघ्नुश्च कार्याणि भूभुजः ॥१०११॥
स्वैराहारोदितगुरुमदाः सृङ्गकण्डूतिशान्त्यै दुर्वारेर्ष्याकलुषमतयो यत्र दुर्मन्त्रिमेषाः ।
ग्रन्थ्यन्योन्यं भवति गणितैर्वासरैरेव कैश्चिन्मध्यस्थाणोरिव नरपतेस्तत्र सर्वाङ्गभङ्गः ॥१०१२॥
अतिक्रामति कालेऽथ पार्थिवं हन्तुमुद्यमम् । दुद्रुक्षुर्जातराज्येच्छस्तान्वाङ्क्रिर्धम्मटोऽभजत् ॥१०१३॥
द्रोहापवादभागेव भवेद्राज्यमिदं पुनः । मामेव वैरयायुवत्वादनर्हेहिमतुपेष्यति ॥१०१४॥
इति संमन्त्र्य सुचिरं निहन्तुं पृथिवीभुजम् । प्रेरितो जयराजोऽभूत्तेनासरलचेतसा ॥१०१५॥युग्मम्॥ 1015
त्रिलावग्रामशान्तिश्च तीक्ष्णान्द्रोहाय भूपतेः । लोवरोधवर्भूहित्रा विदधे मध्यपातिनीः ॥१०१६॥
क्रमात्सिद्धयुन्मुखे तस्मिन्कार्ये राजपुरीं नृपः । दूत्याय व्यसृजज्ज्ञातु बहुमानेन धम्मटम् ॥१०१७॥
सहलमङ्गलगृहे सुदिनापेक्षया स्थितम् । तं सिद्धिभङ्गचकितो जयराजः समाययौ ॥१०१८॥
तमथं मण्डपे गूढं तयोर्मन्त्रायमाणयोः । प्रयागानुचरः कश्चिन्निःस्थवहितोऽशृणोत् ॥१०१९॥
तदावेदिततद्वार्तात्प्रयागात्सत्कथां ततः । बुद्ध्वा निवर्तयामास धम्मटं गमनान्नृपः ॥१०२०॥ 1020
कुलक्षयभयाच्चिह्नंतत्प्रतीकारमन्थरः । स्वमेव केवलं रक्षन्नासीत्स चकितोऽन्वहम् ॥१०२१॥
असिद्धिं जयराजस्तु दृष्ट्वा दूतैः स्वसंमुखौ । शमालडामरौ वीरौ वागपाजाभिधौ व्यधात् ॥१०२२॥
स्वभूर्त्यैर्भेदनिर्यातैर्थैयासुं तं निवेदितम् । श्रुत्वा क्षपायां क्षितिभृद्भिक्षु चिक्षेप रक्षिणः ॥१०२३॥
व्याजाद्यात्रां वदन्सज्जः प्रातस्तान्वाङ्क्रिरेव तम् । चतुष्कं पूजने धूर्तो जयराजमुपानयत् ॥१०२४॥
राज्ञो दत्तार्गले धाम्नि स्थितस्य स्नानमण्डपम् । सत्रा स भ्रातृपुत्रेण धम्मटेन ततोऽविशत् ॥१०२५॥ 1025
रक्षिणोऽथ बहिर्न्यस्य प्रयागः पार्थिवाज्ञया । जयराजं वधानेति नीचैर्धम्मटमभ्यधात् ॥१०२६॥
धम्मटे विश्रसञ्शस्त्रं जयराजस्त्यजेद्ध्रुवम् । निर्देशेनामुना वेत्ति स्वमज्ञातं च धम्मटः ॥१०२७॥
द्वयोरेकस्य वा युद्धे तयोर्मृत्यौ हितं च नः । व्यक्तीकृतैक्ययोर्वापि वधो लोकेऽप्यगर्हितः ॥१०२८॥
इति निर्ध्यायतः शश्वद्विरोधेन श्रेयसः । प्रज्ञास्य मत्यभाग्राज्ञो मन्त्रो युक्ततमस्तथा ॥१०२९॥तिलकम्॥
नावुद्ध मां ध्रुवं राजा तान्वाङ्क्रिरिति विश्वसन् । जयराजमुपागत्य ततो धाष्ट्र्याद्वचोऽब्रवीत् ॥१०३०॥ 1030
अप्रसन्नस्त्वयि नृपो यद्द्रोहोऽसि निश्चयात् । तत्त्वयाशु विशुद्ध्यर्थमसिधेनुः समर्प्यताम् ॥१०३१॥
दैवेन वा मोहितः स तद्विश्वासेन चात्यजत् । आक्षिप्यमाणः शस्त्रास्त्रकोविदः शस्त्रमन्यवत् ॥१०३२॥
वैकल्यदर्शनात्तस्मिन्धैर्यस्ततः स परुषां गिरम् । तन्वङ्गपौत्रष्टुल्लाख्यस्तं जगादाज्जकात्मजः ॥१०३३॥
न त्वं निःसत्त्व कथ्याया जातः कलशभूभुजा । आसीज्जनयिता नूनं क्लीबो यः कश्चिदेव ते ॥१०३४॥
निशायां धैर्यवर्याणां परिणाममजानता । तेनेत्युक्तः स शीताम्बुसिक्तश्लोपमोऽभवत् ॥१०३५॥युगलकम्॥ 1035
द्रोहोदन्तं पृच्छमानो धीरस्तन्मध्यपातिनम् । यातनाक्लेशितोऽप्यूचे स्वमेव न तु धम्मटम् ॥१०३६॥

१००९. ¹) च has been erased by A₁. १०१२. ¹) Thus A₁; corr. by later hand दुर्मन्त्रिपोताः. १०१४. ¹) Thus corr. by later hand from A₁ वेदया°. १०१८. ¹) Thus corr. by later hand from A₁ स्थितिम्. १०२४. ¹) Thus corr. by A₂ from A₁ पूर्वे; A₂ in margin धौतके. १०२९. ¹) Thus corr. by A₂ from A₁ प्राज्ञः.

विषघ्नमन्त्रवीर्येण मोघीकृतविषाशनः । रज्ज्वा निपीड्य ग्रीवायां ततो निशि विपादितः ॥१०३७॥
जल्यकेन प्रतीहर्त्रा शिरश्छित्त्वोज्झितं ययौ । भट्टारनड्वलातोये तद्गुर्मैस्त्वभोज्यताम् ॥१०३८॥
तमेकसप्तते वर्षे हत्वा भाद्रपदे नृपः । वधं गभीरहृदयो धम्मटस्याप्यचिन्तयत् ॥१०३९॥
आदिदेशाथ तत्सिद्ध्यै रहः शस्त्रभृतां वरम् । शूरं कलशराजाख्यं ठक्कुरं लोहराभयम् ॥१०४०॥
प्रहिणोति यदा दूतं प्रयागस्ते तदा त्वया । संपाद्यमेतदित्यूचे तं चोपचितसत्क्रियम् ॥१०४१॥
असिद्धिभीत्या त्वं दूतं स प्रहिण्वन्प्रयागकः । संमन्त्र्य क्रियतामेतदित्यूचे कुपितो नृपम् ॥१०४२॥
राज्ञि मन्त्रयमाणेथ पञ्चानीयाप्यमन्त्रिणः । वामनः सार्गले द्वारे त्यक्तदेहोऽब्रवीद्वचः ॥१०४३॥
मन्त्रश्च मन्त्रिणश्चैते न यावन्निःसृता बहिः । तावत्क्रियेत चेदेतन्न भद्राणि दरिद्रति ॥१०४४॥
राजाज्ञया प्रयागेन ततो दूते विसर्जिते । तीक्ष्णः कलशराजाख्यस्तनयाभ्यां सहाययौ ॥१०४५॥
तस्मिन्प्रसङ्गे तान्वाग्भिः श्येनस्य ददतातपम् । राजधान्यन्तरेवासीद्द्वित्रैरनुचरैः समम् ॥१०४६॥
पुरः कलशराजं तं दृष्ट्वा पश्चाच्च तत्सुतौ । यावत्साशङ्कमाचख्यौ तावद्भृत्यैर्निजैर्जहे ॥१०४७॥
शक्तोपि धम्मटः कर्तुं कृपाणीमिति वादिनम् । हन्तुं कलशराजं तु यावच्छस्त्रे व्यधात्करम् ॥१०४८॥
तावत्तेनाग्रतः पश्चात्तत्पुत्राभ्यां कृताहतिः । आसनादुच्चलन्नेव क्षिप्रं प्राणैरमुच्यत ॥१०४९॥
मुमूर्षुणा क्षतस्तेन ज्यायान्कलशराजजः । चिरमायुधवैगुण्याज्जामीक्ष्णप्रणितोभवत् ॥१०५०॥
तस्य त्वभाग्ययोगेन तेऽध्वेवाहःक्रुधो शस्त्रिणः । निजा कृपाणी सुश्रोट तेनाभद्रायुधोभवत् ॥१०५१॥
निहत्य पातितः पृष्ठात्स तैर्व्याधैरिवाण्डजः । भुवो मासाय संत्यक्तः श्वपाकैः पार्थिवाज्ञया ॥१०५२॥
राज्ञा तन्वङ्गनप्तारौ स्वयं रल्हणमल्हणौ । आगत्य प्राङ्गने त्यक्तकृपाणी परिरक्षितौ ॥१०५३॥
हत्वास्कन्दास्तु टुल्लाद्याः संरम्भेण युयुत्सवः । माययोदयसिंहेन दाम्भिकेनैत्य वञ्चिताः ॥१०५४॥
यूयं पुत्रा ममेत्युक्तवतस्ते धार्मिकस्य यत् । प्रत्ययात्तस्य शस्त्राणि तत्यजुर्जीवितेच्छवः ॥१०५५॥
राज्ञो विशुद्धिः क्रियतां पार्श्वमेत्येति तद्वचः । तैः समागत्य जगृहे मार्गो राजगृहान्प्रति ॥१०५६॥
तन्वङ्गजगृहोच्छिष्टैर्बाल एव विवर्धितः । टुल्लं ततो विहस्यैवं स्वच्छन्नमाहकोवदत् ॥१०५७॥
तन्वङ्गनप्तर्यत्पूर्वं जयराजमभाषथाः । न त्वं निःसत्त्व कृत्याया इति तद्विस्मृतं तव ॥१०५८॥
स ते तादृश एवायं वर्तते संकटः क्षणः । किं धैर्यावसरे मूढ वैक्लव्यमवलम्बसे ॥१०५९॥
तस्माज्जातोसि नियतं मत्पित्रोच्छिष्टमुष्टिना । अहं तु तेन वीरेण स्वपित्रा कीर्तिभागिना ॥१०६०॥
इत्युक्त्वा स रणे गृह्णन्खड्गधाराजलज्जलम् । पपात जन्ममालिन्यं मानी प्रक्षालयन्निव ॥ १०६१ ॥
नृपान्तिकं प्रयास्याम इति निश्चयवत्ततः । टुल्लादीन्राजपुरुषाः कारागारे निचिक्षिपुः ॥ १०६२ ॥
ते यौवनभरोन्मत्ता द्रुमा वासन्तिका इव । प्रत्यभासन्न कारुण्याद्रक्षणीयाः क्षमाभुजः ॥ १०६३ ॥
टक्कस्तु बिम्बियो नाम पापः संप्रेक्ष्य भूभुजम् । न्यजिघ्नत्तान्ग्रीवासु निशि पाशान्निवेशयन् ॥१०६४॥
टुल्लो विजयराजश्च बुल्लो गुल्लश्च तेलुवन् । तन्वङ्गपौत्राश्चत्वारो हता वध्यमहीतले ॥ १०६५ ॥

१०४३. 1) Emended; A मन्त्रिव°. १०४५. 1) A here and elsewhere प्रयागेण. १०४७. 1) Emended; A ° त्साशङ्कमा°
१०४८. 1) Thus A; perhaps, to be emended कृपाणीमतिवादिनीम्. १०५१. 1) क्रुधो supplied by A₂ in space left by A₁.
१०५४. 1) Emended; A °स्कन्दघायास्तु. १०५८. 1) Emended; A °नप्तो वत्पूर्वं.

हतानामपि सौन्दर्यं तेषामद्यापि वर्ण्यते । कथान्तरे वयोवृद्धैर्बद्धाश्रुस्यन्दुर्दिनैः ॥१०६६॥
सतताभ्यस्तताम्बूलैः असैस्तद्दशनाङ्कुरैः । कीर्णशोणाश्ममालेव क्षितिर्बध्यभूरभूत् ॥१०६७॥
वृद्धिमानीतयो राज्ञाप्युत्कर्षापत्ययोस्ततः । ज्यायान्प्रमिम्यें डोम्बाख्यो गूढदण्डैः कुलच्छिदा ॥१०६८॥
स्फुलिङ्गमिव संभाव्य तेजोविस्फूर्जितं शिशुम् । जघान जयमल्लं च तद्वद्विजयमल्लजम् ॥१०६९॥
गोमूंस्त्वगोत्रजान्हत्वा भोक्तुमेकस्य कस्यचित् । कुर्वन्ति दैवोपहता राज्यं निष्कण्टकं नृपाः ॥१०७०॥
संरूढं मधुगोलमुद्यद्विटपव्यूहावलीगह्वरे मूढः कर्तुमकृच्छ्रहार्यमभितः कस्यापि भव्यात्मनः ।
दैवप्रेरणया प्रकम्पविवशः पञ्चप्रहारैर्वृढं गङ्गोमृन्मधुपाभिहत्य शमयत्यश्वत्थपृथ्वीरुहः ॥१०७१॥
शान्तिद्रोहमहापाप्मनष्टधीरथ पार्थिवः । डिम्बानामप्यसंभाव्यामभजद्विटभोज्यताम् ॥१०७२॥
वामनस्यात्मजः क्षेमस्तं जानञ्जनकाह्वयम् । भैरवं कलशेशस्य च्छलहेमनिबर्हणे ॥१०७३॥
तामिच्छामच्छिनत्तस्य भक्तो युक्त्या प्रयागकः । धावतः श्वभ्रपातेच्छां धीरो यन्तेव दन्तिनः ॥१०७४॥
अनिशं नष्टचेष्टानां शवानामिव भूभुजाम् । अन्तःप्रवेशकुशलो यो वेताल इवाभवत् ॥१०७५॥
नप्ता हलधरस्याथ विटो लोष्टधराभिधः । जगाद निर्जने जातु राजानं रञ्जनेच्छया ॥१०७६॥ युग्मम्॥
ह्रियतां मामहेमादि कलशेश्वरसंभवम् । तत्प्रासादाश्मभिः सेतुं वितस्तायां करोमि ते ॥१०७७॥
आलेख्यं गगने लिखामि बिसिनीसूत्रैर्नयाम्यम्बरं स्वप्नालोकितमानयामि कनकं मथ्नामि वप्रं हिमैः ।
इत्याद्युक्तमपि स्फुटं जडमतिर्जानाति सत्यं नृपो यस्तादृक्त्रपया न वक्ति स गतव्रीडैः परं वञ्च्यते ॥१०७८॥
निषिषेध चिकीर्षां तु प्रयागस्तामपि प्रभोः । तदुपस्थायिकोपथ्याभ्यर्थनामिव रोगिणः ॥१०७९॥
अथ लोष्टधरो हास्यावसरे जातु भूपतिम् । बद्धस्य मोक्षो देवस्य क्रियतामित्यभाषत ॥१०८०॥
स्मित्वा किमेतदित्युक्तवन्तं तं स व्यजिज्ञपत् । उदभाण्डपुरे – –[1] भीमशाहिरभूत्पुरा ॥१०८१॥
विरोधान्पारिषद्यानां तत्कृतो भीमकेशवः । राज्ये कलशदेवस्य बद्धद्वारोऽभवच्चिरम् ॥१०८२॥
तैः शान्तवैरैर्विदधे यदाथ विभूतारतिः । चौरापहृतदुर्वर्णकवचो ददृशे तदा ॥१०८३॥
भूयोऽपि चक्रे तद्भीत्या कोशसामग्र्यभागिति । ततः प्रभृत्यसौ यावद्बद्धद्वारार्तिः स्फुटम् ॥१०८४॥
आदीयतां तदीयस्तत्कोशश्चौरभयाग्रहः । सोऽपि बन्धाद्विमुक्तोऽस्तु पुण्यदीपादिभोगभाक् ॥१०८५॥
इति संप्रेरितस्तेन तथा चक्रे स भूपतिः । कोशं ततः प्रपेदे च मणिस्वर्णादिनिर्भरम् ॥१०८६॥
अचिन्तयच्च यत्रेदृग्ग्रंस्तु शून्यद्वारास्पदे । कीदृक्कर्षापरेषु स्याद्वाढेषु सुरवेश्मसु ॥१०८७॥
कृतप्रायः स तत्रस्थैः पारिषद्यैस्ततो नृपः । निष्क्रयं रूढभारोद्धिद्वारणेन प्रदापितः ॥१०८८॥
क्रमेण सेनानानाङ्गव्ययव्यसनशालिनः । सुरार्थहरणे रूढा धीः संभावनया तया ॥१०८९॥
पूर्वराजार्पितान्कोशांस्ततः स भुवनाद्भुतान् । सर्वगीर्वाणवेश्मभ्यो लुब्धबुद्धिरपाहरत् ॥१०९०॥

---

१०६७. 1) Thus A₁; altered by later hand into °घोणाश्म°. १०६८. 1) Emended; A प्रमिम्ये. १०७०. 1) Emended; गोमृ°. १०७१. 1) Emended; A गङ्गोमृ°. १०७३. 1) Emended; A जान जनक°.—2) च supplied by A₂. १०८१. 1) Two aksharas are wanting; A does not indicate the lacuna.—2) Emended; A भीमशाहिर°. Cf. vi. 178. १०८२. 1) Doubtful emendation; A °स्पारिषद्यानां. Cf. vii. 1088. १०८५. 1) Emended; A °स्कोशश्चौर°. १०८७. 1) Emended; यत्रेदृग्ग्रंस्तु.—2) Emended with C; A कीदृक्कर्षा°. १०८९. 1) Thus A; G C सुराकृहरणे.

हतेषु कोशेष्वानेतुं देवानां प्रतिमा अपि । चकारोदयराजाख्यं देवोत्पाटननायकम् ॥१०९१॥
वदनेषु स नग्नाटैः शीर्णघ्राणाङ्घ्रिपाणिभिः । मूर्तिनाशाय देवानां शकृन्मूत्राण्यपातयत् ॥१०९२॥
स्वर्णरूप्यादिघटिता गीर्वाणाकृतयोलुठन् । अध्वस्विन्धनगण्डाल्य इव सावस्करेष्वपि ॥१०९३॥
त्रिबुधप्रतिमाश्वक्रुराकृष्टा गुल्फदामभिः । थूत्कारकुसुमच्छन्ना भ्रमन्नग्नाटकादयः ॥१०९४॥
ग्रामे पुरेथ नगरे प्रासादो न स कश्चन । हर्षराजतुरुष्केण न यो निष्प्रतिमीकृतः ॥१०९५॥
तस्य देवावधृष्यौ द्वौ परमास्तां प्रभाविनौ । नगरे श्रीरणस्वामी मार्ताण्डः पत्तनेष्विव ॥१०९६॥
द्वौ महाप्रतिमामध्याद्बुद्धबिम्बाववक्षताम् । दानप्रसङ्गे तं जातु याचित्वा त्यागिनं नृपम् ॥१०९७॥
परिहासपुरं जन्ममेदिन्यां कनकाभिधः । गायनः कुशलश्रीश्च श्रमणो नगरान्तरे ॥१०९८॥
अधिगतवतां लोके विश्वाद्भुतामपि संपदं न खलु विरतिर्दुष्कर्मभ्यो धनार्जनकाङ्क्षिणाम् ।
किमपि कमलावाप्त्यै पद्माकरोद्धृतिपातकं भजति कमलालीलावासो भवन्नपि हि द्विपः ॥१०९९॥
पैतामहेन पित्र्येण तथा राज्यचिकीर्षया । लोहरादाहृतार्थस्य कोशेनोत्कर्षभूपतेः ॥११००॥
युक्तोपि पूर्वराजार्थं देवीकोशेभ्यो जहार यः । ऐच्छद्धनार्जनं हा धिक्सोपि वास्तव्यपीडया ॥११०१॥युग्मम्॥
तदाज्ञामाश्रमादाय सचिवैरथ पापिभिः । ते ते नवनवायासनामाङ्का नायकाः कृताः ॥११०२॥
कालानुवृत्तिपरतां धिग्धिग्राजोपजीविनाम् । यत्र मन्त्री वयःस्थः सन्सदाचारोपि गौरकः ॥११०३॥
सर्वदेवगृहग्रामसर्वस्वापहृतिव्रतम् । स्वीचकाराशया भर्तुरर्थनायकनामपि ॥११०४॥ युग्मम् ॥
पार्षदः समरस्वामिदेवागारे सहेलकः । आप्तो विजयमल्लस्य यो राज्ञो द्वेष्यतां ययौ ॥११०५॥
द्विगुणोत्पत्तिदानेन सोर्थनायकतां गतः । लब्धावकाशो राजाग्रे क्रमेणासीन्महत्तमः ॥११०६॥
किमन्यद्धरता तेन सर्वार्थान्सर्वनायकैः । व्यधीयत धनावाप्त्यै पुरीशस्यापि नायकः ॥११०७॥
श्रीगर्भपदपर्यायच्छन्नजाग्रप्रभावतः । तथार्जितस्य कोशस्य सोनुरूपव्ययोभवत् ॥११०८॥
मृगीदृशां दुर्लभतां हयानां श्वासान्विटानां कुचनःसहत्वम् ।
वैतालिकानां च विकत्थनत्वं क्रेतुं क्षितीशाः क्षपयन्ति लक्ष्मीम ॥११०९॥
कोपप्रसादैर्दयिताजनस्य हयादिवृत्तान्तगवेषणेन ।
भृत्यानुवृत्त्या मृगयाकथाभी राज्ञां शिशूनामिव याति कालः ॥१११०॥
विलासहासासनयानदानपानाशनाद्या असतीः सतीर्वा ।
छायेव चेष्टाः क्षितिपालवर्गः परानुकारेण करोति सर्वाः ॥११११॥
अमानुषत्वं पुरुषाधिराजा विटस्तवैः स्वस्य विचिन्त्य सत्यम् ।
तृतीयमक्ष्यभ्यधिकं भुजौ वा ममेति मत्वा न विदन्ति मृत्युम् ॥१११२॥
निशास्तु येषां प्रभवन्ति दारा दिनेष्वमात्या नियताधिकाराः ।
अहो भ्रमः स्वस्य यदत्र तेपि विदन्ति भूपा प्रभविष्णुभावम् ॥१११३॥

---

१०९१. [1]) Emended with R C; A °त्पाटनायकम्. १०९३. [1]) Emended; A °कृत्या°. १०९४. [1]) Thus corr. by later hand from $A_1$ क्षम°. ११००. [1]) Emended; A °भूपतिः. ११०५. [1]) Emended; A च हेलकः. Cf. vii. 1170, 1319, 1358, 1359.

स्वादूचितं स्वादुतयैव भुङ्क्ते थूत्कृत्य मुञ्चत्यपि थूत्कृतानि ।
विश्वासितस्त्रासमुपैत्यकस्मात्प्रभुश्च बालश्च समानभावः ॥१११४॥
जायामित्यादि यत्किंचित्क्षितिपानां कटाक्षितम् । तत्समं हर्षदेवस्य आर्येन लघुतां ययौ ॥१११५॥
तुष्टः पटहवाद्येन ह्यातोद्यविदे ददौ । भीमनायकनाम्ने स करिणं करिणीसखम् ॥१११६॥
स्वशिष्यत्वेन तस्यासीद्गायनः कनकोथ सः । चम्पकावरजः खेदाद्गीताभ्यासकृतोद्यमः ॥१११७॥
प्रसादीकृतमस्मै च खेदच्छेदनमिच्छता । तेन काञ्चनदीनारलक्षमक्षतचेतसा ॥१११८॥
कर्णाटभर्तुः पर्माण्डेः सुन्दरीं चन्दलाभिधाम् । आलेख्यलिखितां वीक्ष्य सोभूत्पुष्पायुधक्षतः ॥१११९॥
उत्तेजयन्ति संघर्षे हास्ये जडमतीन्विटाः । सारमेयानिवाजस्रं प्रोत्साह्य प्राकृताशयाः ॥११२०॥
स विटोद्वेजितो वीतत्रपश्चक्रे सभान्तरे । प्रतिज्ञां चन्दलाप्राप्त्यै पर्माण्डेश्च विलोडने ॥११२१॥
कृतापश्चिमकर्पूरपरित्यागं प्रतिज्ञया । तं च स्तुतिमिषाद्देवं जहसुः कविचारणाः ॥११२२॥
भावावेशविशेषतः परिगतस्त्वं दाक्षिणात्योऽभ्रगो गन्धादप्यवधारितं यदुत ते कर्पूरकोलं करे ।
एकं चेदिदमङ्ग हर्षनृपतेस्तत्कल्पयोपायनं नो चेत्तिष्ठतु नालिकेरकुहरे संप्रत्यमुष्मिन्नतः ॥११२३॥
आ कर्णाटवसुंधराधववधादा चन्दलालिङ्गनादा कल्याणपुरप्रवेशनविधेरा पिम्मलादर्शनात् ।
आ राजाभयकाननान्तवसुधापारर्द्धिकौतूहलाद्देवेन प्रतिषिद्धमिद्धमहसा पोतासवसंचर्वणम् ॥११२४॥
विटः प्रसाद्य नृपतिं मदनः कम्पनापतिः । महत्तरत्वं जग्राह तस्याधिश्रार्पिताकृतेः ॥११२५॥
वस्त्रालंकारनिर्वाहकृतेमुष्याश्च वेतनम् । नित्यमादत्त भूपालाद्धायमीर्ष्याशमाय च ॥११२६॥
विटत्वे निस्त्रपत्वे च मदनस्य कथाक्रमः । मौग्ध्ये पारिप्लवत्वे च नृपस्य निकषोभवत् ॥११२७॥
मातेयं वप्पिका[1] नाकात्तवागतेति वादिभिः । संदर्श्य जरतीं नारीं मुषितः सोपरैर्विटैः ॥११२८॥
दासीश्च देवता एता इत्युक्त्वान्यैः प्रवेशिताः । उन्नतिं च श्रियं चौज्झत्प्रणमञ्जहसे जनैः ॥११२९॥
दास्यो मदनसंलापमन्त्राद्युल्लेखकारिभिः । अध्यापिता विटैस्तस्य मतिमोहं प्रचक्रिरे ॥११३०॥
ताभ्यः काभिरपि क्ष्माभृत्सुरतं समयोचितम् । वाञ्छन्तीभिः कृतः स्वाङ्गस्पर्शाद्भाग्योदयोज्झितः ॥११३१॥
आयुष्कामाय भूयांसं कालं जीवितकाङ्क्षिणे । आयुर्वर्षशतान्यस्मै ता मूढमतये ददुः ॥११३२॥
डोम्बेन पिण्डसिद्ध्यर्थी केनाप्येतद्रसायनम् । पिण्डसिद्धिकृदित्युक्त्वा पेयं किमपि पायितः ॥११३३॥
किं तस्य कथितैरन्यैर्मौग्ध्यैर्यो याचितो विटैः । म्रियमाणादिव धनादायुषोपि व्ययं व्यधात् ॥११३४॥
बलरूपेच्छुरपरानुपायान्ध्यानसेवत । कथयेत्कः सदाचारस्तामतोपि त्रपावहान् ॥११३५॥
स एवमन्धतामिस्रे[1] निक्षिप्तः शाश्वतीः समाः । मुग्धबुद्धिः स्वजात्येन[2] दुर्जातैश्च कुमन्त्रिभिः ॥११३६॥
मेघवाहनमुख्यानां कृत्ये लोकोत्तरे यथा । सन्त्यद्याल्पधियः केचित्संदेहान्दोलिताशयाः ॥११३७॥
तथास्मिन्नपि दुष्कृत्ये वर्ण्यमानेद्भुतावहे । भविष्यतीव कालेन नूनमप्रत्ययो जनः ॥ ११३८ ॥
राज्ये बहुफले तादृग्दुर्नीत्योपहतोप्यभूत् । आयुःशेषेण न वशो स रन्ध्रान्वेषिणां द्विषाम् ॥११३९॥

---

११२८. [1]) Emended; A वञ्चिका. Cf. vii. 319. ११३६. [1]) Emended; A °तामसे.—[2]) Emended; A स्वजारयेन; ; स्वजान्येन.

नर्तकीः शिक्षयन्नाचार्यत्वायाभिनयं स्वयम् । निष्कन्दीपोज्ज्वले धाम्नि दूरात्केनापि शत्रुणा ॥११४०॥
छिन्नेषुरपि नाभूद्यद्विहतो नर्तितोऽथ वा । फलं तस्यायुःशेषस्य प्रजानां कुकृतस्य वा ॥११४१॥
कश्चिदेवाथ शुद्धान्ते पातयन्तो महीपतेः । सर्वाशुद्धिनिधेः माभूद्वारीचारिकविभ्रवः ॥११४२॥
ते युवानो मदोन्मत्तास्ताः स्त्रियो यौवनोन्मदाः । नाशाय हर्षदेवस्य तस्मिन्नेवाभवन्क्षणे ॥११४३॥
निगृहीतास्तेन रोषात्सजाराः काश्चन स्त्रियः । काश्चित्स्वाकृष्य शुद्धान्ताज्जारैर्नीता दिगन्तरम् ॥११४४॥
स्वेन दौःशील्यदोषेण सर्व एव विशङ्किताः । भृत्यास्तस्याशुभान्यैच्छन्नयतन्त च शान्तये ॥११४५॥
तस्यापि शीलवैकल्यं तावत्सर्वत्र पप्रथे । यावत्कलशभूपालात्संजातस्योपपद्यते ॥११४६॥
शैशवे वर्धितो याभिरङ्कमारोप्य मातृभिः । सोऽङ्कमारोप्य ता एव चुम्बन्संबुभुजेऽनिशम् ॥११४७॥
संभोगं भगिनीवर्गे कुर्वता दुर्नयोदया । निगृहीता च भुक्ता च नागा पुत्री पितृस्वसुः ॥११४८॥
स तुरुष्कशताधीशाननिशं पोषयन्धनैः । निधनावधि दुर्बुद्धिर्बुभुजे ग्राम्यसूकरान् ॥११४९॥
अथ सेवाभिसारेण कदापि कुपितो नृपः । स मन्दबुद्धिरास्कन्दमदाद्राजपुरीं प्रति ॥११५०॥
विलोक्य सैन्यसामग्रीमनन्यसदृशीं पथि । त्रैलोक्याक्रान्तिसामर्थ्ये पार्थिवैस्तस्य शङ्कितम् ॥११५१॥
स तु पृथ्वीगिरिं दुर्गं दृष्ट्वा तद्ग्रहणोद्यतः । अप्रविष्टो राजपुरीं तन्मूले समुपाविशत् ॥११५२॥
मासमभ्यधिकं तेन तस्थुषा परिपीडिताः । प्रक्षीणाज्यादिसंभारा बभूवुर्दुर्गरक्षिणः ॥११५३॥
प्राशु संग्रामपालस्तानूरीचक्रे धरापतिः । कियन्तं न करं भीतः कियतीर्न च संविधाः ॥११५४॥
व्यपोढदार्ढ्ये नृपतौ स तदमतिगृह्णति । लुब्धमुल्कोचदानेन स्वीचक्रे दण्डनायकम् ॥११५५॥
अमन्यमाने नृपतौ व्यावृत्तिं प्रेरिता रहः । प्रवासवेतनं भूरि मार्गितुं तेन शस्त्रिणः ॥११५६॥
तैः प्राये प्राकृतप्रायैः कृते सोल्लुण्ठभाषितैः । राज्ञो दूरस्थकोशस्य कटकः क्षोभमाययौ ॥११५७॥
स तत्समर्थनां यावच्चक्रे तावद्विभीषिकाम् । तुरुष्कास्कन्दजामन्यां प्रददौ दण्डनायकः ॥११५८॥
अथाल्पधैर्यो नृपतिरुत्थाप्य कटकं ययौ । कृत्स्नां च कोशसामग्रीं तत्याजाध्वसु साध्वसात् ॥११५९॥
अपरीक्ष्यादृतो भृत्यः स्वामिनामतिसंकटे । करोति व्यसनापातमजात्योऽसिरिवाहवे ॥११६०॥
तेन स्वयमयोग्येन योग्यानन्याननिच्छता । कलङ्किता नरेन्द्रश्रीः क्षुद्राश्वेनेव मन्दुरा ॥११६१॥
ततः प्रभृति निर्वाणप्रतापस्य महीपतेः । प्रतापचक्रवर्त्याख्या सर्वतो म्लानिमाययौ ॥११६२॥
म्लानाननो न यत्सिद्धं स्वेन भृत्यैस्तथाखिलैः । तत्कर्म कृतवन्तं स कन्दर्पं बह्वमन्यत ॥११६३॥
आनिनीषोऽथ तं तस्य जडस्याकृत भूपतेः । दण्डनायक एवेच्छाच्छेदं पैशुनकर्मणा ॥११६४॥
ज्ञातद्रोहोऽथ नृपतिरबध्नाद्दण्डनायकम् । प्रातिपस्यानुरोधेन न क्रुधा न्यग्रहीत्पुनः ॥११६५॥
दुर्गे संदिग्धजीवोऽपि निवसन्संचिकाय सः । लुब्धस्ताम्बूलवस्त्रादि प्रहितं भृत्यबान्धवैः ॥११६६॥
आत्मनः सर्वनाशाय संजातं दैवमोहितः । वधार्हं प्रत्युत पुनर्निन्ये तं स्वपदं नृपः ॥११६७॥
तं विट्टाधाट्टुभिर्भूयो राजानमुदतेजयन् । पोषयामाजितं स्तोत्रैः कर्णाद्या इव कौरवम् ॥११६८॥

११४२. ¹) Emended; A सर्वभुञ्जनिधेः. ११५६. ¹) Emended; A प्रमन्यमाने. ११६५. ¹) Emended; A न्यवगृही°.
११६६. ¹) Conjectural reading; A दुर्गे.

वादी वाक्पराजितः प्रतिभटं गालीभिरत्याक्षिपन्योषिद्भ्रष्टसतीव्रता कुकलहैरुद्वेजयन्ती पतिम् ।
कायस्थश्च हताखिलार्थमहिमा कृच्छ्रे नृपं पातयन्स्वस्यासन्नपराभवस्य कुरुते भूयः समुत्तम्भनम् ॥११६९॥
भुक्तदेयधनो विभ्यत्तं सहेलमहत्तमः । उर्वीपतिं दुर्व्यसने प्रेरयन्स्वार्थपण्डितः ॥११७०॥
बन्धुमन्विष्य दरदां लवन्यैः सह लाहरैः । दुर्गघाताभिधं दुर्गं ग्रहीतुं तमचूचुदत् ॥११७१॥
तद्धि लक्ष्मनचन्द्राख्ये पुरा गोप्तरि डामरे । जनकद्वारपतिना हतेनन्तनृपाज्ञया ॥११७२॥
प्रायोपविष्टया द्वारे तत्पत्न्यापि समर्पितम् । कलशक्ष्माभुजा कृतोपेक्षं प्राप दरन्नृपः ॥११७३॥
तद्बलाहारदैः क्रान्तानन्तग्रामेत्र मण्डले । राजा च मन्त्रिणा चाथ बभूव स्वीकृतोद्यमः ॥११७४॥
निर्झरे[1] तत्र गोमृणां वृत्तये संभृतं हिमम् । अवग्रहेण तत्तस्मिन्क्षणे निःशेषतां ययौ ॥११७५॥
चारैस्तद्रन्ध्रमालक्ष्य तद्ग्रहाय महत्तमः । अभीक्ष्णं प्रेरयन्क्ष्मापं स च तत्रोद्यमं व्यधात् ॥११७६॥
वालगण्डं[1] तदुद्योगे प्रतिष्ठासुं नृपाज्ञया । चम्पको द्वारकार्यस्थमभिसंधातुमैहत ॥११७७॥
द्वारं निवार्य भूपेन प्रापितो मण्डलेशताम् । सर्वैः सहाभजद्द्वारं स हि द्वाराधिकारिभिः ॥११७८॥
विसूत्रितोपि[1] कटके तेन द्वारपतिस्ततः । तीर्त्वा मधुमतीं सिन्धुं सैन्यैर्दुर्गमवेष्टयत् ॥११७९॥
समस्तानपि सामन्तान्प्रहिण्वन्सर्वतः स्वयम् । एकप्रयाणान्तरितः कोटेपि न्यवसन्नृपः ॥११८०॥
त्यजन्निर्गण्डशैलादि दुर्गसंश्रयदुर्जयैः । काश्मीरिकाः[1] सह दरत्सैनिकैः समरं व्यधुः ॥११८१॥
विदधे प्राजिमठिकानाम्न्याघातपदे वसन् । सपुत्रो गुङ्गजो मल्लः संभ्रमानतिदुःसहान् ॥११८२॥
तत्पुत्रौ[1] दैवविस्पष्टोक्तराज्यप्राप्ती तदिच्छया । मानं व्यवर्धिषातां यौ वीरावुच्चलसुस्सलौ ॥११८३॥
अत्युद्दामस्तयोर्ज्यायान्द्विषन्नपि नृपासनम् । आसीन्नाभ्यर्थमाहात्म्याद्यात्रायां तत्र निर्गतः ॥११८४॥
अवग्रहेण भूपालप्रतापेन च शोषिताः । यथाकथंचित्तद्दुर्गं ररक्षुर्दारदा भटाः ॥११८५॥
अथाशेव विधेर्हर्षनतापपरिपन्थिनी । पपात महती वृष्टिरेकीकृतजलस्थला ॥११८६॥
दुर्गशृङ्गं हिमैः कृत्स्नं दुर्भेद्यैः पर्यवार्यत । अनुकूलेन विधिना संनाहैर्निहितैरिव ॥११८७॥
उत्थाने पातयन्कांश्चित्पतने कांश्चिदुत्क्षिपन् । वेधाः कन्दलयत्येव कन्दुकक्रीडितभ्रमम् ॥११८८॥
ततः स्मृत्वा गृहान्वृष्टिदुःस्थास्ते दुष्टमन्त्रिणः । चक्रिरे पूर्ववद्राज्ञः स्कन्धावारे विसूत्रणम् ॥११८९॥
ऊर्ध्वस्रोतोनुसारीव तिमिः शैलहताननः । ततोपि चक्रे व्यावृत्तिं राजा जयपराङ्मुखः ॥११९०॥
मुक्तापणः शीर्णकोशः त्यक्तभीकश्च्युतायुधः । कटकः सर्व एवाभूत्पलायनपरायणः ॥११९१॥
धावतः पथिभिस्तैस्तैः साक्रन्दान्राजसैनिकान् । पृष्ठलग्नरिपून्दीर्घा मार्गमसिष्यतापगा ॥११९२॥
क्षौमैः सहंसमालेव साब्जषण्डेव खेटकैः । सशैवलेव खड्गौघैः सशिलेव तुरंगमैः ॥११९३॥
सौवर्णैः सरथाङ्गेव राजतैर्भाजनैरपि । सफेनेव जनत्यक्तैरासीन्मधुमती सरित् ॥११९४॥
नीतानां च हतानां च दरदैः प्रसृतोदयैः । अभून्नदीहतानां च संख्या काचिन्न देहिनाम् ॥११९५॥
अनाथवत्तथा भूते सैन्ये त्रातुं कृतोद्यमः । एकस्तु सानुजो मानी नाचलन्माल्लिरुच्चलः ॥११९६॥

---

११७५. [1]) Emended; A निझारे. ११७७. [1]) Emended; A वालगण्डस्तदु°. ११७९. [1]) Thus or, perhaps, विसूत्रितेपि to be read for A विसूत्रितापि. ११८१. [1]) Emended; A काश्मीरकाः. ११८३. [1]) Emended; A तत्पुत्रो.

दरद्कूलाम्बुधिर्धावन्स विश्वाक्रमणोद्यतः । ताभ्यां वेलागिरीन्द्राभ्यामिव संस्तम्भितोखिलः ||११९७||
तौ रक्षित्वा बलं प्राप्तौ प्रसिद्धिमतुलां गतौ । पतिंवरेव राजश्रीर्भेजे लक्ष्येण तेजसा ||११९८||
ततः प्रभृति लोकस्य सर्वस्यासीदसौ मतिः । राज्यार्हौ मानिनावेतौ क्लीबोयं न तु भूपतिः ||११९९||
1200 तथा कृत्वापि यत्राशे दर्शनं परिजह्रतुः । तौ प्रीतिदायविमुखौ बबन्धास्थां ततो जनः ||१२००||
अथ शान्तरिपुत्रासो नगरं प्राविशन्नृपः । प्रतापस्तु दिशः प्रायान्मल्लराजतनूजयोः ||१२०१||
तौ रामलक्ष्मणावेताविति सर्वस्तदाब्रवीत् । रावणप्रतिमे राज्ञि भाव्यर्थानुगुणं वचः ||१२०२||
राजा तु गतलज्जः स नित्यकृत्योपमं जडः । कर्तुं प्रारभताखिन्नः पुनर्मण्डलपीडनम् ||१२०३||
अल्पापकारमपि पार्श्वगतं निहन्ति नीचो न दूरमसमागसमप्यरातिम् ।
श्वा निर्दशत्युपलमन्तिकमापतन्तं तत्त्यागिनं न तु विदूरगमुग्ररोषः ||१२०४||
1205 ततः प्रविष्टः संप्रीतः सेवया दत्तकम्पनम् । मदनं सोगृणोत्स्थैर्यं शंसन्तं तत्पराभवम् ||१२०५||
तद्रोषेण जिघांसुस्तमागो जग्राह सोपरम् । तस्य देवीत्रिष्टाशालेखोल्लङ्घनलक्षणम् ||१२०६||
प्राप्तो मडवराज्यात्स क्ष्माभुजादत्तदर्शनः । भीतो लक्ष्मीधरस्यागान्मन्दिरं टक्कमन्त्रिणः ||१२०७||
राजा प्रसाद्यमानोपि तत्कृतेन्येन मन्त्रिणा । सस्मितं वीक्षितं सैन्यैस्तं सपुत्रमघातयत् ||१२०८||
कोपस्मितं नरपतेरकालकुसुमं तरोः । वेतालस्याट्टहसितं नैवमेव प्रशाम्यति ||१२०९||
ये संप्ररूढविपुलप्रणयाभिमाना निःशङ्कमीश्वरनिवेशनमाचरन्ति ।
1210 मन्त्रानुषङ्करभसाद्भुजगेन्द्रसख्यं प्रख्यापयन्त इव ते प्रलयं प्रयान्ति ||१२१०||
कर्णेजपकुले तावन्मदनप्रलयावधिः । शापः सूर्यमतीदेव्याः प्रसारितभुजोभवत् ||१२११||
विक्रमालोकनोत्कम्पी निचिक्षेप क्षमापतिः । बद्ध्वा कलशराजं तं लक्ष्मीधरनिवेशने ||१२१२||
विरुद्धं तस्य बद्धस्य शिक्षापेक्षामिषान्नृपः । तेजोवधाय सत्रिधमुदयाख्यं व्यसर्जयत् ||१२१३||
लक्ष्म्या जाज्वल्यमानं तं वीक्ष्य प्रज्वलितः क्रुधा । लब्धासिधेनुः कस्माच्चिन्मनस्वी सहसावधीत् ||१२१४||
1215 तद्भृत्यैरथ संक्रुद्धैर्निपत्य स विपादितः । दुर्बुद्धेस्तस्य भूभर्तुरेवं भृत्या विपेदिरे ||१२१५||
मण्डले राजदण्डेन क्षतेनेव परिक्षते । क्षारपातोपमान्यापि प्राभूदुःखपरंपरा ||१२१६||
अहारि काञ्चनस्थाली यैः पार्थिवगृहादपि । सत्यप्यहस्करे जघ्नुस्तस्करास्तादृशा विशः ||१२१७||
प्रवर्धमाने मरके क्रन्दितध्वनिनिर्भरः । निर्घोषः प्रेतवाद्यानां न व्यरंसीद्दिवानिशम् ||१२१८||
षट्त्रीपमुद्रितप्रामे वत्सरे पञ्चसप्तते । अखण्डं सर्वभाण्डानां दुर्भिक्षमुदजृम्भत ||१२१९||
1220 दीन्नाराणां धान्यखारिः प्राप्याभूत्पञ्चभिः शतैः । दीन्नारेणाभवल्लभ्यं मार्द्वीकस्य पलद्वयम् ||१२२०||
ऊर्णापलस्य दीन्नारैः क्रयः षड्भिरजायत । लवणोषणहिङ्ग्वादेरभिधाप्यासन्दुर्लभा ||१२२१||
शवैर्नद्योभवन्नम्भःसंसेकोच्छूनविग्रहैः । छन्नतोया गिरिस्रस्तैश्छिन्नदारुघनैरिव ||१२२२||
एतद्व्यवहिता राजधानी दूरान्न दृश्यते । ध्यात्वेति सर्वतो राजा द्रुमाणां छेदमादिशत् ||१२२३||

---

१२०७. [1]) Emended ; A टक्क°. १२२३. [1]) Emended ; A व्यवहृता.

सप्रसूनफला वृक्षा गृहस्था इव पातिताः । कुटुम्बैरिव रोलम्बैरशोच्यन्त पदे पदे ॥१२२४॥
प्राणापहं महादण्डं तथार्तेपि जने नृपः । हलावहणे वृन्दोक्षे गण्डशैलमिवाक्षिपत् ॥ १२२५॥
निपीड्य लोकं कायस्थैर्महादण्डव्यवस्थया । पुरग्रामादिषु क्वापि न मृदप्यवशेषिता ॥१२२६॥
अथोल्बणत्वं संप्राप्तान्निहन्तुं सर्वडामरान् । स दण्डभृदिव क्रुध्यन्नादिक्षन्मण्डलेश्वरम् ॥१२२७॥
पूर्वं मडवराज्योर्व्यां होलडान्तः स डामरान् । हत्वास्कन्दोवधीत्तांस्तान्कुलाये विहगानिव ॥१२२८॥
घ्रता लवन्यानुसङ्कुन्तलोविकटाकृतिः । जीवन्मडवराज्यान्तस्तेन विप्रोपि नोज्झितः ॥१२२९॥
लावन्यबुद्ध्या शूलानि पान्थैरप्यथ रोपितैः । भीमरूपाभवद्भूमिर्भैरवस्य महानसः ॥१२३०॥
शूले लवन्यस्यैकस्य क्रूरां विन्यस्यतो वधूम् । ययुः सर्वे दिशो भीता लवन्या मण्डलेश्वरात् ॥१२३१॥
केचिद्बुभुजिरे तेषां गोमांसं म्लेच्छभूमिषु । अरघट्टघरट्टादिकृष्टाः केचिदवालगन् ॥१२३२॥
प्राहिणोत्प्राभृतं भूरि भैरवाय महीभुजे । लवन्यमुण्डमालालीरखण्डा मण्डलेश्वरः ॥१२३३॥
तोरणावलयो राजद्वारेदृश्यन्त सर्वतः । डामराणां करोटीभिर्घटीभिरिव निर्भराः ॥१२३४॥
द्वारे कङ्कणवस्त्रादि लम्बमानं नृपौकसः । नेता डामरमुण्डस्य यः कोपि स किलासवत् ॥१२३५॥
भोक्तुं डामरमुण्डानि व्याप्तविस्तीर्णतोरणाः । चिरदधुर्गृध्रकङ्काद्या राजद्वारोपसेवनम् ॥१२३६॥
यत्र यत्रास्त भूपालस्तत्र तत्र व्यधुर्जनाः । लवन्यमुण्डैरुच्चण्डैर्विस्तीर्णास्तोरणस्रजः ॥१२३७॥
गन्धेनाशुचिना घ्राणं कर्णौ भीमैः शिवारुतैः । अखिद्यत शवाकीर्णे श्मशान इव मण्डले ॥१२३८॥
बलेरकप्रपाप्रान्ताल्लोकपुण्यावधि व्यधात् । एकश्रेणीं मण्डलेशो डामरैः शूलकीलितैः ॥१२३९॥
एवं मडवराज्यं स कृत्वा निर्नष्टडामरम् । अथाक्रमराज्योर्व्यां कर्तुं तामेव पद्धतिम् ॥१२४०॥
अवश्यं न भविष्याम इति निश्चित्य डामराः । चक्रिरे क्रमराज्यस्था लौल्लाहे सैन्यसंग्रहम् ॥१२४१॥
तैः सर्वैर्दत्तसंग्रामैः कुर्वद्भिः कदनं महत् । आस्ते स्म तत्र सुचिरं निरुद्धो मण्डलेश्वरः ॥१२४२॥
किमन्यद्राक्षसः कश्चित्सुरतीर्थर्षिपूजितम् । निहन्तुं मण्डलमिदं हर्षव्याजादवातरत् ॥१२४३॥
उल्लासो रात्रिषु दिने स्वापः क्रौर्यमुद्रमता । अवाङ्मुखत्वं कर्तव्ये दक्षिणेशोचिते रतिः ॥१२४४॥
इत्यादयस्तस्य केचिद्धर्मा नक्तंचरोचिताः । तथा हि तत्कालभवैः प्रियाः प्राज्ञैः प्रकीर्तिताः ॥१२४५॥
अत्रान्तरे मल्लसूनुः कनीयान्यौवनोन्मदः । लक्ष्मीधरस्य गेहिन्या हृदयाह्लादकोभवत् ॥१२४६॥
सा हि राजसुते तस्मिन्संसक्ता प्रातिवेश्मिके । नारज्यत निजे पत्यौ वानरप्रतिमाकृतौ ॥१२४७॥
ज्ञातीनगण्यान्हत्वान्यान्कस्माद्राज्यार्हलक्षणौ । नावधीदद्भुतावेतौ राजसूच्चलसुस्सलौ ॥१२४८॥
इति लक्ष्मीधरेणेर्ष्यारोषादुक्तोपि भूपतिः । न चुक्रोधानुतापार्तिं पूर्वज्ञातिवधाद्गतः ॥१२४९॥
स्वयमन्यमुखेनापि स तेनोक्तस्ततोसकृत् । — —[1] घाते तदौद्धत्यं ध्यात्वा साध्वसमादधे ॥१२५०॥
ज्ञातिभीस्त्वनुवृत्त्यादि तेन विस्मरता ततः । संमन्त्र्य मन्त्रिभिः सार्धं दध्रे तद्वधनिश्चयः ॥१२५१॥
आसन्नवारवनिता धक्कनाख्याथ तं व्यधात् । भूभर्तुर्दुरभिप्रायं तयोः कर्णपथातिथिम् ॥१२५२॥

१२२४. ¹) Emended; A रोलम्बैर°. १२३२. ¹) Thus $A_2$; $A_1$ °वालयन्; G °वालगन्. १२३६. ¹) Emended; A व्यासा विस्तीर्णतोरणा. १२३९. ¹) $A_2$ gloss मूलम्——यावल्लोकभवनं (three *aksharas* illegible). १२४९. ¹) Emended; A चक्रोधा°. १२५०. ¹) $A_1$ indicates a *lacuna* of two *aksharas*.

सख्या दर्शनपालेन तत्रार्ये छिन्नसंशयौ । निरगातां निशीथिन्यां द्वित्रैस्तावनुगैः समम् ॥१२५३॥
षट्सप्ततेब्दे नगरान्मार्गशीर्षे च निर्गतौ । उच्चासवसतेः प्राप्तौ डामरस्योपवेशनम् ॥१२५४॥
प्रशस्तराजो बुभुक्षुः सिंहराजं निजानुजम् । सोभिसंधाय तौ निन्ये लवन्यो मण्डलान्तरम् ॥१२५५॥
ततो राजपुरीं ज्यायान्प्रायात्कल्हस्य भूपतेः । कनीयान्प्रययौ पार्श्वं कालिञ्जरधरेशितुः ॥१२५६॥
तयोर्निर्गतयो राज्यं न कौचिच्छ्रदधीयत । निमित्तज्ञेन राज्ञैव दुर्निमित्तैस्त्वशङ्क्यत ॥१२५७॥
लक्ष्मीधरमुखेनैव प्रार्थनां हन्तुमुच्चलम् । चक्रे संग्रामपालस्य सोङ्गीकृत्य धनं ततः ॥१२५८॥
स त्वन्तिकागतस्येषन्मल्लसूनोः कृतादरः । तया विशङ्कया शम्भोरासीदधिकगौरवः ॥१२५९॥
आसन्नाभ्युदयं शत्रुं द्वेष्टैव विधिचोदितः । शङ्काविष्करणाल्लोके नयेत्संभावनाभुवम् ॥१२६०॥
राजपुर्याः प्रकृत्यैव काश्मीरानर्थकाङ्क्षिताः । प्रभविष्णौ रिपौ प्राप्ते चक्रिकायां किमुच्यताम् ॥१२६१॥
कांश्चित्कृतिकप्रायान्पार्श्वयातानथोच्चलः । गमागमान्कृतोद्योगो डामराणामकारयत् ॥१२६२॥
डामरास्तु महोत्साहास्तमानेतुं व्यसर्जयन् । राज्ञा विप्रकृता दूतान्वितीर्णोपायनान्बहून् ॥१२६३॥
तं सूर्यवर्मचन्द्रस्य तनयो जनकाभिधः । चकारोपचितोत्साहं मायादूतैर्विसर्जितैः ॥१२६४॥
वीक्ष्य डामरदूतांस्ताञ्जहतो राजतो भयम् । व्यक्तं संग्रामपालेन निन्ये माहात्म्यमुच्चलः ॥१२६५॥
स कार्यगौरवात्प्राज्ञो मूर्ध्नि कर्पूरचूर्णनम् । कृत्वा तमविनाशाय यावद्विक्रष्टुमैहत ॥१२६६॥
तावत्कल्शराजाख्यस्तद्देशे मुख्यठक्कुरः । हर्षदेवार्पितोत्कोचस्तमेत्य विजनेब्रवीत् ॥१२६७॥
राज्ञः प्रसादनं त्यक्त्वा तवोच्चलहितैषिणः । कामधेनुं विनिर्धूय छागकण्ठमहे महः ॥१२६८॥
कोयं काश्मीरभूपानां कास्य शक्तिस्तपस्विनः । आराधनेन तद्राज्ञो विधेहि स्वमसाध्वसम् ॥१२६९॥
अयं राजगिरौ दुर्गे स्थाप्यतां पार्थिवस्ततः । स्यान्मनीषितवर्षी वश्चासान्मित्रं च सर्वदा ॥१२७०॥
तेनेति प्रभुराख्यातः खशानां स मिताशयः । तद्गीतः स्वार्थलुब्धश्च तथेति प्रत्यपद्यत ॥१२७१॥
तमभ्यधाच्च नो हन्तुं शक्तोहममुमुच्चलम् । त्वयैव बध्यतामेष मिषतः प्रेषितोन्तिकम् ॥१२७२॥
इत्युक्त्वा तं स्ववसतिं विसृज्यावददुच्चलम् । प्रातः कल्शराजस्य त्वया गन्तव्यमन्तिकम् ॥१२७३॥
इह प्रधानामात्योसौ तेन ते स्यादनत्ययः । ततो विपक्षोच्छित्त्यै त्वां प्रतिमोक्ष्यामि सानुगम् ॥१२७४॥
अथ तद्वसतिं गन्तुं चलितोन्येद्युरुच्चलः । प्राग्दुर्निमित्तैस्तत्कृत्यमाप्तैरथ विबोधितः ॥१२७५॥
मन्त्रे भिन्ने निवृत्तं तं श्रुत्वा खशनृपान्तिकम् । कुप्यन्कल्शराजोथ सज्जसैन्यः समाययौ ॥१२७६॥
तमास्कन्दाय संप्राप्तं जानञ्शस्त्रभृतां वरः । ऐच्छद्रणाय निर्गन्तुं निजभृत्यैः सहोच्चलः ॥१२७७॥
क्षोभे संप्रस्तुते तं स सान्त्वयित्वा खशाधिपः । तिष्ठन्कल्शराजेन सहानिन्ये निजां सभाम् ॥१२७८॥
निषेधाधायिनो भृत्यान्स विधूयौजसां निधिः । सज्जः खशसमाजं तं कोपकम्पाधरोविशत् ॥१२७९॥
द्रष्टुं तं नाशकत्कश्चित्कल्पान्तार्कमिवोल्बणम् । क्रुद्धं कल्शराजो वा राजा वा तेजसां निधिम् ॥१२८०॥
स विविक्तीकृते भाति खशाधीशं समन्त्रिणम् । सान्त्वयन्तं महातेजाः कोपरूक्षाक्षरोब्रवीत् ॥१२८१॥

१२५४. ¹) Thus $A_1$; $A_2$ gloss उच्चासो, corr. by later hand into उच्चास; $A_3$ reads उच्चास. १२५६. ¹) Thus corr. by $A_1$ from कालि°. १२५७. ¹) Emended; A कश्चि°. १२६३. ¹) Thus $A_1$; a later hand corrects डामरांस्तु महोत्साहांस्त° and विप्रकृतान्बू°. १२८०. ¹) Emended; A तमाश°. १२८१. ¹) Emended; A कृतो.—²) Emended; A खशाधीशो.

पूर्वं दार्वाभिसारेभूद्भारद्वाजो नरो नृपः । नरवाहननामास्य सूनुः फुल्लमजीजनत् ॥१२८२॥
स सातवाहनं तस्माच्चन्द्रोभूत्तत्सुतः कृती । गोपालसिंहराजाख्यौ चन्दुराजोप्यथाप्नवान् ॥१२८३॥
तदात्मजः सिंहराजो दिद्दाख्यां तनयां ददौ । क्ष्माभुजे क्षेमगुप्ताय सा वीरा भ्रातृनन्दनम् ॥१२८४॥
राज्ये संग्रामराजाख्यं व्यधादुदयराजजम् । भ्रातापि कान्तिराजोस्या जस्सराजमजीजनत् ॥१२८५॥
पितानन्तस्य संग्रामो जस्सस्तन्वङ्गगुङ्गयोः । अनन्तात्कलशक्ष्माभृद्गुङ्गान्मल्लोप्यजायत ॥१२८६॥
कलशाद्धर्षदेवाद्या जाता मल्लात्तथा वयम् । कोयमित्यादि तन्मन्दैः क्रमेस्मिन्कथ्यते कथम् ॥१२८७॥
पृथिव्यां वीरभोग्यायां क्रमो वा कोपयुज्यते । वीरस्य च सहायोस्तु कः स्वबाहुद्वयात्परः ॥१२८८॥
दिष्ट्या तदनुकम्प्यानां मूर्ध्नि हस्तमिवास्पृशन् । काश्मीरिकाणां भूपानां नाभूवं कुलपांसनः ॥१२८९॥
तस्माद्रक्ष्यथ मे शक्तिमित्युक्त्वा निर्गतस्ततः । विजयाय स पत्तीनां शतेनानुगतोचलत् ॥१२९०॥
निहतं शशमादाय तस्याग्रे कश्चिदाययौ । स तेन शुनिमित्तेन प्राप्तां मेने रिपुश्रियम् ॥१२९१॥
अरघट्टघरट्टादिकृष्टिमुत्सृज्य निर्गताः । डामरा वाट्टदेवाद्यास्तं यान्तमुपतस्थिरे ॥१२९२॥
कटकस्थस्य संग्रामपालस्यायातमन्तिकात् । तद्भ्यो राजपुर्यन्तः खिन्नं निन्युः प्रसवताम् ॥१२९३॥
भुक्त्वा तद्दत्तेर्गच्छन्स्वावासं स दिनात्यये । सैन्यैः कलशराजस्य दत्तास्कन्दोभवद्बहिः ॥१२९४॥
राशीभिर्निर्गमात्तस्मिन्द्वारं संरोध्य वारिते । तदीयाः सैनिका युद्धे लोष्टांवड्डादयो हताः ॥१२९५॥
मध्यं प्रविश्य शमिते प्रधानैस्तत्र संयुगे । सोल्पसैन्योपि संवृत्तः सुतरामल्पसैनिकः ॥१२९६॥
चैत्रस्य पौर्णमास्यन्तः कृच्छ्रमप्यनुभूतवान् । वैशाखासितपञ्चम्यां यात्रामत्रस्तधीर्व्यधात् ॥१२९७॥
विसृज्य वाट्टदेवादीन्विग्रहाय स्वकर्मभिः । आललम्बे प्रवेशेच्छां क्रमराज्याध्वना स्वयम् ॥१२९८॥
यं राजोदयसीहान्ते कापिलं क्षेमजात्मजम् । अस्थापयद्द्रोहरोध्वीं स विश्रान्तं मुमोच तम् ॥१२९९॥
स्वयमग्रे समग्राणां खड्गचर्मधरो व्रजन् । पलायने पूर्वशिष्यान्पर्णोत्से तद्भटान्व्यधात् ॥१३००॥
बद्ध्वा निःशङ्कमासीनं द्वारेशं सुज्जकाभिधम् । कश्मीरानामिषाकाङ्क्षी क्षिप्रं श्येन इवापतत् ॥१३०१॥
तं डामराश्च कतिचित्खाशिकाश्चाद्रिसंश्रयाः । राजद्विषः प्राप्तमार्गं सर्वतः पर्यवारयन् ॥१३०२॥
नभाकाशादिव स्रस्तं भुवो गर्भादिवोत्थितम् । निशम्यातर्कितं प्राप्तं चकम्पे हर्षभूपतिः ॥१३०३॥
मा भूदसौ बद्धमूलः क्रमराज्यान्तरस्थितम् । मा वधीन्मण्डलेशं च ध्यायन्नित्याकुलोथ सः ॥१३०४॥
विलम्बमाने संनद्धसैनिके दण्डनायके । त्वरितं प्राहिणोत्पट्टं वितीर्णासंख्यनायकम् ॥१३०५॥
दैवोपहतवीर्यो वा क्रान्तो वा द्रोहचिन्तया । अभ्यमित्रीणतां त्यक्त्वा स तु मार्गे व्यलम्बत ॥१३०६॥
अन्यांश्च यान्यांस्तिलकराजादीन्व्यसृजन्नृपः । ते ते पट्टं समासाद्य नाकुर्वन्नपनिर्गमम् ॥१३०७॥
दण्डनायकमुख्येपि लोके राज्ञा विसर्जिते । याते विमूढतां प्राप बद्धमूलत्वमुच्चलः ॥१३०८॥
वराहमूलं प्रविशन्नागतां द्विषतां बलात् । अश्वां सुलक्षणोपेतां राजलक्ष्मीमिवासदत् ॥१३०९॥
महावराहमौलिच्छत्रस्य मूर्ध्नि पपात च । तदंसस्थितया पृथ्व्या वरणार्थमिवार्पिता ॥१३१०॥

१२८३. ¹) Emended; A सार्थवाहनं. Cf. vi. 367. १२८५. ¹) Thus corr. by A₂ from A₁ °स्यास्सजारा°. १२८९. ¹) Emended; A काश्मीरकाणां. १२९५. ¹) Thus A₁; corr. by later hand into लोष्टवद्दा°. १२९८. ¹) Emended; A₁ वह°.—²) न्विग्रहा and र्भि supplied by A₂ in space left by A₁.—³) Emended; A आललम्ब. १२९९. ¹) Thus A; perhaps, to be emended डोम्बरा°. Cf. vii. 482. १३०४. ¹) Emended; A °स्थितिम्. १३०८. ¹) Thus A₁; A₂ °नायकसख्ये.

काकाख्यवैश्यकुलजैर्योधैः संरुद्धपद्धतिः । स हुष्कपुरमुत्सृज्य क्रमराज्योन्मुखो ययौ ॥१३११॥

अत्रान्तरे तमायान्तमाकर्ण्योत्सेकमागतैः । विद्रवोन्मुखतां निन्ये डामरैर्मण्डलेश्वरः ॥१३१२॥

तैर्हि प्रागेव भङ्गं स नीतो हत्वा महाभटान् । यशोराजमुखान्भूरीन्ययौ मन्दप्रतापताम् ॥१३१३॥

शनैरपसरन्सोथ तारमूलकमासदत् । उच्चलाधिष्ठितास्तेपि विद्विषन्तस्तमन्वयुः ॥१३१४॥

समेतामन्त्रसैन्येन तेन तत्र चिरं धृतः । उच्चलप्रलयाभ्रस्य पौरस्त्यानिलविभ्रमः ॥१३१५॥

सैन्ययोरुभयोस्तत्र जयश्रीकरिणीकृते । बभूव तुल्यसंघर्षः सेर्ष्ययोरिव दन्तिनोः ॥१३१६॥

आनन्दनामाप्युत्पिञ्जोत्थानमुच्चलमातुलः । चक्रे मडवराज्येपि निविडीकृतडामरः ॥१३१७॥

तद्विप्लवे डामरौघा दिग्देशेभ्यः सहस्रशः । उन्ममज्जुर्हिमापाये रन्ध्रेभ्य इव षट्पदाः ॥१३१८॥

तत्क्षणं क्षीणभाग्यस्य यथा द्वारपतिस्तथा । कायस्थः कम्पने राज्ञः सहेलो[1]भून्महत्तमः[2] ॥१३१९॥

आनन्देन कृतास्कन्दो बहुशो विहिताहवः । औज्झीन्मडवराज्यं स न वशद्विडभूत्तदा ॥१३२०॥

अथाद्भुतप्रतापेन वेष्टयित्वा महाचमूम् । उच्चलेनाहवे बद्धः ससैन्यो मण्डलेश्वरः ॥१३२१॥

न विद्मः किं तदा वृत्तं योधानां वल्किलाविदम् । ते सखड्गाश्वसंनाहा बद्धा वयमिति स्फुटम् ॥१३२२॥

तथा बद्धोपि निर्दध्यौ स भव्यः प्रभवे हितम् । स्वामिभक्तिर्विपर्येति पर्यन्तेपि न मानिनाम् ॥१३२३॥

तूर्णं पुरप्रवेशाय सोथ प्रैरयदुच्चलम् । विश्वास्य नेदृगन्योस्ति क्षण इत्यसकृद्ब्रुवन् ॥१३२४॥

विशतस्तस्य चानेकैः पुग्रामानवलुण्ठयत् । कर्मणानेन कौलीनमस्यास्त्विति विचिन्तयन् ॥१३२५॥

परिहासपुरे तेन स ततः संप्रवेशितः । श्वभ्राम्बुविषमायस्मान्निर्गमोत्यन्तदुर्गमः ॥१३२६॥

तत्रोच्चलं चतुःशाले स्वं च बन्धुमबूबुधत् । निजान्स निशि ते तत्तु न चक्रुस्तद्धितैषिणः ॥१३२७॥

यथा चित्तं तथास्य स्यात्कायश्चेत्साहसक्षमः । तदात्मनिरपेक्षस्य किं न सिध्येन्मनीषितम् ॥१३२८॥

क्लीबच्छन्नवपुस्त्वचा सह वसत्यच्छेद्यया कच्छपो निर्वर्मा रणकर्मसाहसमहोत्साहश्च सिंहः सदा ।
धिक्प्रावृष्कृतपक्षपातरभसो नीचेषु मुग्धो विधिर्वीराणां कुरुते शरीरमभितो वैकल्यशल्याहतम् ॥१३२९॥

संदिदेशाथ स क्ष्मापमाकृष्यायं मयागतः । शृगाल इव ते क्षिप्रः क्षिप्रं निर्गत्य वध्यताम् ॥१३३०॥

ततः समस्तसामन्तसैन्यसंततिसंयुतः । अद्य मृत्युर्जयो वेति निश्चित्य निरगान्नृपः ॥१३३१॥

स प्राणसंशये सर्वायासप्रशममादिशत् । पटहोद्घोषणेनासीत्परैरनुगतोखिलैः[1] ॥१३३२॥

प्राप्तं भरतसंत्रमं घ्नन्तः सैन्यं विरोधिनम् । आजानेयै राजभृत्याः क्षणान्मार्गमलङ्घयन् ॥१३३३॥

क्षुभितेभ्याविवायाते राजसैन्ये द्विषद्बलम् । मण्डलेश्वर एवान्तःप्रविष्टो निरनाशयत् ॥१३३४॥

अथोच्चलबले भग्ने विदुद्रुः केपि जाङ्गिकाः । भ्रान्त्वा राजविहारं च प्राविशन्केपि डामराः ॥१३३५॥

त्रिल्लसेनाभिधं दृष्ट्वा प्रविष्टं[1] डामरं परे । उच्चलोसाविति भ्रान्त्या विहारं तमदाहयन् ॥१३३६॥

सोमपालाभिधेनारिहयारोहान्तरे चिरम् । कुर्वन्दर्शनपालस्य पितृव्येण महाहवम् ॥१३३७॥

यत्नाज्जनकचन्द्राद्यैर्मानी व्यावर्तितो रणात् । परिहासपुरात्प्रायान्मृत्युवक्त्रादिवोच्चलः ॥१३३८॥

१३११. [1]) Thus $A_1$; corr. by later hand into कांकाख्यवैश्य°. १३१९. [1]) Emended; A सहलो.—[2]) Emended; A °भूत्मह-त्तमः. १३३२. [1]) Doubtful; thus emended with C; A °रीत्परैर°. १३३६. [1]) Thus $A_1$; corr. by later hand into प्रविष्ट.

वितस्तां गौरिकाबाल[1]मामासीर्त्वा हयान्वितः । स डामरैः सह पुनः प्रययौ तारमूलकम् ॥१३३९॥
जयेन तावन्मात्रेण कितवोल्ल इवोन्मदः । राजा प्रशंसयानन्दं राजधानीं न्यवर्तत ॥१३४०॥
जीवन्तमप्यरिं श्रुत्वा न पश्चाद्वलगत्स यत् । आसन्नुच्छ्वसितास्तेन भङ्गभाजोपि डामराः ॥१३४१॥
यातान्पलाय्य ताञ्ज्येष्ठामूलीये मासि सर्वतः । भूयोपि संघटयितुं स्थिरधीरैच्छत्सुस्सलः ॥१३४२॥
स्वदोर्मात्रसहायस्य पराक्रान्तस्य मानिनः । दुर्भिक्षान्तर्महोद्योगः स तस्य विषमोभवत् ॥१३४३॥
तन्मध्येतिदरिद्रोपि संभार्रं स ररक्ष यत् । तमुत्पाद्यानयद्राजा श्रीपरीहासकेशवम् ॥१३४४॥
तस्मिन्विघटिते पांसुः कपोतच्छदधूसरः । रोदसीच्छादनं हर्षशीर्षच्छेदावधि व्यधात् ॥१३४५॥
प्रागन्धकारो[1] देशेस्मिन्दिवसेपि व्यजृम्भत । रूपिकादिवसालोक इति यत्प्रथे जने ॥१३४६॥
निवेशिते परीहासकेशवे प्रशशाम तत् । तस्मिन्नुन्मूलिते भूयः सार्धं मासमजृम्भत ॥१३४७॥
किंचिदुच्छ्वसिते राज्ञि मन्दोद्रेकतया रिपोः । दिशा शूरपुरस्याथ सुस्सलः प्रत्यदृश्यत ॥१३४८॥
अवनाहे[1] स हि वसन्नुपालम्भपरैः पितुः । संदेशैः शंसतो ज्येष्ठमौदासीन्यादपाहृतः ॥१३४९॥
दत्तान्कल्हक्षितीशेन कांश्चिदादाय वाजिनः । चिरेण राजदाक्षिण्यमौज्झीत्तेन व्यलम्बत ॥१३५०॥
आरम्भादुदयान्तं च तिष्ठन्वैरेपि निष्ठुरे । साम प्रयुयुजे मोहावहं[1] मायानिधी रिपोः ॥१३५१॥
जित्वा माणिक्यनामानं तेन सेनापतिं रणे । प्रापि शूरपुरव्रज्याज्जयश्रीः श्रीश्च भूयसी ॥१३५२॥
तस्याभ्युदयपात्रस्य तया संप्राप्तया श्रिया । आरब्धिसमयः कृत्स्नः स विभूत्यद्भुतोभवत् ॥१३५३॥
मण्डलेश्वरपद्मादीनविचिन्त्योच्चलं ततः । प्राहिणोन्नृपतिर्योद्धुं सुस्सलं क्षिप्रकारिणम् ॥१३५४॥
तेन शूरपुरे भग्नास्तद्योधाः शौर्यशालिना । भूयांसः प्रलयं प्रापुर्मग्ना वैतरणीजले ॥१३५५॥
तत्र दर्शनपालस्य स्वामिद्रोहकृतो वपुः । विक्रामतो न संस्पृष्टं खिन्नयेव जयश्रिया ॥१३५६॥
राजसैन्यं तदन्यैर्युद्धतशेषं पलायितम् । लोकपुण्ये निवसतः सहेलस्यान्तिकं ययौ ॥१३५७॥
सुस्सलापातकल्पान्तं विशङ्क्यापि सहेलकः । तैस्तैर्भग्नैर्बलैः साकं नगरं प्राविशत्ततः ॥१३५८॥
एवमभ्येत्य नृपतौ सुस्सलेन विलङ्घिते । अवाप तारमूलस्थः प्रतिष्ठां पुनरुच्चलः ॥१३५९॥
बिभ्यद्भिस्तुरगानीकाल्पंस्तिप्रायैः स डामरैः । आनिन्ये शैलदुर्गेण भूयो लहरवर्त्मना ॥१३६०॥
राजाप्युदयराजाख्यं कृत्वा द्वारपतिं पुनः । प्राहिणोदुच्चलं जेतुं लहरं मण्डलेश्वरम् ॥१३६१॥
ततः पद्मपुरं प्राप्ते मातुले मल्लजन्मनोः । न कोपि कम्पनं भूपान्मन्त्री त्रासातुरोग्रहीत् ॥१३६२॥
को मेस्तीति विनिश्वस्य वदतोथ महीपतेः । अधिकारस्रजं हस्ताच्चन्द्रराजः समाददे ॥१३६३॥
अनाशीः शयने मृत्युर्येषां तेषां स वंशजः । श्रीजिन्दुराजमुख्यानामौचित्यं प्रत्यपादयत ॥१३६४॥
स द्रौणिरिव निर्नष्टे काले सेनापतिः कृतः । निर्गत्य तत्पद्मपुरादरिसैन्यं न्यवारयत् ॥१३६५॥
विपक्षः कम्पनेशः स तेन क्ष्मां क्रामता[1] शनैः । नवम्यां शुक्लनभसो हतोवन्तिपुरान्तरे ॥१३६६॥
स हि गोवर्धनधरोपान्ते कुर्वन्निराहवम् । स्वसैन्यैर्वर्जितो गीतं शृण्वन्परिमितानुगः ॥१३६७॥

१३३९. [1]) $A_2$ gloss परिहासपुरसमीपे गुरिकाबलमस्ति. १३४६. [1]) Emended; A °कारंदेशे°. १३४९. [1]) Thus $A_1$; $A_2$ (?) अवनाहे; $A_3$ gloss पौड्पावमामे. १३५१. [1]) Emended; A मोहोवहं. १३६०. [1]) Emended; A °नीकाल्पाभि°. १३६६. [1]) Emended, A क्रमता.

प्रविश्यारिहयारोहैर्वितस्तातीरवर्त्मना । प्राप्तोकस्माद्वधं लेभे प्रमत्तानां शुभं कुतः ॥ १३६८॥
प्रहितं चन्द्रराजेन क्ष्मापतिर्वीक्ष्य तच्छिरः । भूयो जयाशामकरोदानुकूल्यं विदन्विधेः ॥१३६९॥
वैमुख्येन व्रजन्कुर्यात्सांमुख्यैरन्तरा विधिः । प्रत्यागमभ्रमं सिंह इव व्यावृत्य वीक्षितैः ॥१३७०॥
अथ लब्धबलश्चन्द्रराजोमन्दोद्यमोविशत् । विजयक्षेत्रमाकर्षन्कटकं दशधाष्टधा ॥१३७१॥
तुलाधर इव स्रष्टा साम्यभङ्गं न चक्षमे । तदा द्वयोः कटकयोस्तुलायाः पुटयोरिव ॥१३७२॥
ग्रामे यतस्तृतीयस्मिन्दिवसे मण्डलेशितुः । अकालवृष्टिविवशं लहरे व्यद्रवद्बलम् ॥१३७३॥
शीतवातहता योधा मग्नाः केदारकर्दमे । तुरगासितनुत्रादि भ्रान्तिर्यञ्च इवामुचन् ॥१३७४॥
उच्चलेन ततो रक्ष्यमाणमप्यार्द्रचेतसा । ग्रामं जनकचन्द्राद्या निजघ्नुर्मण्डलेश्वरम् ॥१३७५॥
हर्षभूभृद्भृत्यवर्गे द्रोहशङ्काङ्किते परम् । कलेवरव्ययात्कीर्तिः क्रीता तेनैव मन्त्रिणा ॥१३७६॥
ध्रुवं संस्पर्धतो वन्द्या देवशर्मादयोस्य ते । न चेत्कोपि विपर्यासे दोषमुद्घोषयेज्जनः ॥१३७७॥
लवन्योन्मूलनारातिव्यूहव्यामोहनादयः । विध्यधीने फले ध्याते स्तुत्याः कस्य न तत्क्रियाः ॥१३७८॥
किं पातालतमो न हन्ति हिमगुः किं नो विषं भीतये पानीयं गिलतः किमान्तरशिखिध्वस्त्यै न धन्वन्तरिः।
सर्वत्रैकपदे प्रयात्यफलतां वाच्यो जडो नाम्बुधिः सिद्धेर्दैवविधेयतां विमृशतां स्तुत्यैव वस्तुज्ञता ॥१३७९॥
स्वामिकृत्योद्यमस्तुल्यस्तातिषु स्त्रीषु पूज्यताम् । गङ्गा तज्जननी स्वस्य नमस्यन्त्यविशङ्किताम् ॥१३८०॥
साहसे सा हि तनये यत्र तत्र महीभुजा । प्रहीयमाणे तं स्नेहमोहिताह स्म भूभुजम् ॥१३८१॥
अनन्यसंततेरेकं सुतमेतं प्रभो मम । मा नियुङ्क्था यत्र तत्र कार्ये संदेहितासुनि ॥१३८२॥
स तामकथयन्मातर्यथा तेनन्यसंततेः । तथा मेनन्यभृत्यस्य सोयमेकोवलम्बनम् ॥१३८३॥
स्वसंभवस्य तां[1] भर्तुर्भक्तिसंभावनामसौ । प्राप्तप्रतिष्ठानिष्ठायां मेने मानवती सती ॥१३८४॥
उच्चलस्य क्षणे तस्मिन्हिरण्यपुरमीयुषः । राज्याभिषेकं संभूय तत्रत्या ब्राह्मणा ददुः ॥१३८५॥
नृपमत्यन्तविवशं प्रसङ्गे तत्र मन्त्रिणः । भूयांसः सन्ति तैः सार्धं व्रज तल्लोहराचलम् ॥१३८६॥
प्रजा एव ततः शान्तोत्कण्ठा नवनृपं प्रति । त्वामानेष्यन्ति न चिराद्दिनैर्वा स्वयमेष्यसि ॥१३८७॥
सोभ्यधादवरोधस्त्रीकोशसिंहासनाद्यहम् । असामान्यं परित्यज्य गन्तुं सपदि नोत्सहे ॥१३८८॥
पुनस्तेकथयन्नामी यान्त्वध्यारुह्य वाजिनः । पृष्ठे विन्यस्य नेष्यन्ति कोशान्तःपुरयोषितः ॥१३८९॥
श्वपाकीकामुकोप्यासीद्यस्मिंस्तदपरोपि चेत् । सिंहासनं समारोहेत्काभिमानक्षतिस्ततः ॥१३९०॥
आस्तामेतत्परं ब्रूथ मन्त्रमित्यथ चोदिताः । ते पार्थिवेन भूयोपि ससंरम्भं बभाषिरे ॥१३९१॥
क्षत्रधर्मं पुरस्कृत्य शाश्वतां क्ष्मां क्षमाभुजाम् । को दै[1]न्यस्यावकाशः स्याद्दाशौर्येषां मृधे वधः ॥१३९२॥
अनुयोगश्च लज्जा च भयं धैर्यं च मन्त्रिणा । भूभुजां व्यसनोल्लासे शत्रवो न तु गोप्त्रिणः ॥१३९३॥
कार्यं न पश्येदलसः स्वयं यो भृत्येषु विन्यस्तसमस्तकृत्यः ।
नष्टव्राभयस्येव विनष्टदृष्टेः पदे पदे तस्य किलोपघातः ॥१३९४॥

१३७७. [1]) Emended ; A धान्व°. १३८२. [1]) Emended ; A नियुक्त्या. १३८४. [1]) Emended ; A सा भर्तु°. १३९२. [1]) Thus $A_1$ ; corr. by later hand into सैन्य°.

लङ्घेद्दंमस्य स्वयमासमास्त्रः स्वल्पस्य शत्रोः कलयन्बलानाम् ।
एवं किलादीर्घमतिर्ददाति स्वयं प्रवृद्धिं नयता विमुग्धः ॥१३९५॥ 1395
कालेन याति कृमितां महेन्द्रो महेन्द्रभावं कृमिरप्युपैति ।
अयं प्रथीयानयमप्रसिद्ध इत्येष निष्ठानुचितोभिमानः ॥१३९६॥
पराभवाधायि भयं जिगीषोः सर्वाङ्गवैकल्यवताहितेन ।
येनाभियुक्तः स समस्तसंपत्पूर्णोपि वैकल्यहतत्वमेति ॥१३९७॥
लब्धस्थितिः स्फीतविभूतिपात्रं दीनोभियोक्ता परपिण्डवृत्तिः ।
आद्ये कथं नाम पराभवः स्यात्रयं भवेत्रेह न तत्र भावः ॥१३९८॥
अमात्यवैमत्यवशेन निष्ठा दृष्टा न कार्यस्य तनीयसोपि ।
वैशाखरज्ज्वोरिव कर्षकाभ्यां पर्याययोगेन कृते विकर्षे ॥१३९९॥
समग्रशक्तेरेकेनाप्याशाक्रान्तस्य भूपतेः । वैरी सर्वाङ्गहीनोपि राज्यमायुश्च कर्षति ॥१४००॥ 1400
यत्र द्विषस्तत्र याहि क्रान्तां क्रान्तां च मेदिनीम् । पातार्थी न चिरादेवं पुनर्जयमवाप्स्यसि ॥१४०१॥
विधुरेपि जिगीषी भृत्यसहस्रपरिवारितैः । पतद्भिराहवे भूपैः क्षयात्स्वाभिक्षयोपलभ्यते ॥१४०२॥
नृत्यच्छिन्नशिरोधरोत्कुरनटे[1] ज्वालार्द्धवीणागुणप्रक्वाणिस्फुटदस्थिकञ्जांमुखशिखिज्वालाप्रदीपाङ्कुरे ।
धन्याः केप्युपलभ्य वीरशयने शान्ताभिमानज्वरोन्माथश्लाघ्यशरीरतासफलितस्निग्धाशिषः शेरते ॥१४०३॥
उदासमित्यन्यकृत्यं संचित्यं[1] कितवा इव । राज्ये भजन्ते दौःस्थ्यन्तः क्षत्रियास्त्रासहीनताम् ॥१४०४॥
मन्त्रान्तरानुयोक्तारं तदप्युत्सृज्य मन्त्रितम् । पदर्थं प्राप्तकालं च ते निःश्वस्य तमब्रुवन् ॥१४०५॥ 1405
उत्कर्षं वरसूस्त्यक्तुमपि शक्तोषि संकटे । अन्यथानुचितं किंचित्प्राप्स्यस्यहितचिन्तितम् ॥१४०६॥
स तानुवाच स्वं हन्तुं न शक्तोहं ततो मयि । भवद्भिरेव निधने प्रहर्तव्यमुपस्थिते ॥१४०७॥
गिरं कापुरुषस्येव क्लैब्यग्रस्तस्य तां प्रभोः । सवाष्पास्तेनुशोचन्तः पुनरेवं बभाषिरे ॥१४०८॥
प्रतीकाराय नः शक्तिर्न चेद्दैवहतौजसाम् । प्रत्युतैवंविधे कृत्ये प्रसरेयुः कराः कथम् ॥१४०९॥
पशून्पुरुषरूपान्स[1] नूनं भूभृत्पुपोष तान् । दुःखेनोदरवनं स्वस्य ये तादृग्दैन्यमीयुषः ॥१४१०॥ 1410
युगान्तानपि जीवित्वा कायः सापाय एव यः[1] । तस्यागमात्रसाध्येर्थे धिग्दैन्यमनुजीविनाम् ॥१४११॥
योषितोपि विशन्त्यग्निं ये ध्यात्वा विस्मृतिं व्रजेत् । भर्तृस्नेहः स पुंसोपि यस्य कोन्यस्ततोधमः ॥१४१२॥
शिल्पस्येव ये शोकभयदैन्याद्यविक्रियाः । भर्तुः पश्यन्ति तैरेषा भूः सतीर्थाप्यपावनी ॥१४१३॥
क्षुत्क्षामस्तनयो वधूः परगृहप्रेष्यावसन्नः सुहृद्दुग्धा गौरशनाद्यभावविवशा हम्भारवोद्गारिणी ।
निष्पथ्यौ पितरावदूरमरणौ स्वामी द्विषन्निर्जितो दृष्टो येन परं न तस्य निरये भोक्तव्यमस्त्यप्रियम् ॥१४१४॥
अथोपि मानुषपशून्स तान्नृपतिरब्रवीत् । उदात्तकृत्योप्याविष्टभूतैरिव विमोहितः ॥१४१५॥ 1415
एतस्मिन्नपश्चिमे काले भुक्तं राज्यं यथा मया । जानेविशालेच्छतया तथान्यो नोपभोक्ष्यते ॥१४१६॥

१३९५. ¹) ह supplied by $A_2$ in space left by $A_1$. १३९८. ¹) Thus corr. by later hand from $A_1$ सत्प्रभावः. १४०३. ¹) Emended; A. has written first °त्कुरनल and corrected this into °त्कुरनटो.—²) Thus cor. by $A_1$ from ज्वालाग्र°.—³) Thus corr. by $A_1$ from °किञ्जो.—⁴) च omitted in A. १४०४. ¹) Thus A; perhaps, to b emended संचिन्त्य. १४०९. ¹) Emended; A पुरुषं. १४११. ¹) Emended; A यः.

यमः कुबेरश्चीशाभे राज्ञां तिष्ठन इत्यसौ । मदेकशरणैवाभूत्ख्यातिरस्मिन्कलौ युगे ॥१४१७॥
रुद्रोपेन्द्रमहेन्द्राद्याः प्रयातारो यदध्वना । उपस्थितायां नियतौ तत्र मर्त्यस्य काः शुचः ॥१४१८॥
किं तु दूये यदेषा भूर्भुक्त्या कुलवधूरिव । मद्वोवाढ्ढ्नेटीव प्राप्ता प्रसभभोग्यताम् ॥१४१९॥
इतः प्रभृति यः कश्चिद्राज्यस्यास्य गतौजसः । चक्रिकामात्रसाध्यत्वं जानन्नाशां करिष्यति ॥१४२०॥
अलौकिके कृते यद्यत्तद्दीक्ष्य फलवन्ध्यताम् । प्राप्तोदयैरल्पसत्त्वैर्दर्पान्नूनं हसिष्यते ॥१४२१॥
कार्यारम्भः फलोल्लासमालोक्य प्रायशो जनैः । अनानुगुण्यगणनां कुर्वाणैर्न विगर्ह्यते ॥१४२२॥
पश्चान्तकोऽरिरवलम्बनभूः स नेत्रं दुग्धेन यस्य मरणं धियि कैरिवेत्थम् ।
पारं गते मथनकर्मणि मन्दराद्रेर्दोषोऽर्प्यते विगुणहेतुपरीक्षणेन ॥१४२३॥
शास्त्रसंदर्भविस्त्रेऽपि श्रीगर्भस्त्वमर्दशयम् । जनोपजीवनार्थं यत्तेज्ज्ञातं जाड्यसिद्धये ॥१४२४॥
उज्ज्वलेनापि सत्कृत्ये हस्तामोऽश्रेयचेतसा । दर्शितश्यामदशनं करिष्यन्ते विडम्बनाः ॥१४२५॥
ततोऽवमानाज्ज्वासात्संप्राप्नोत्य विहस्तताम् । समर्थनेच्छुर्वाञ्छामि मृत्युमीदृशमप्यहम् ॥१४२६॥
स्वैरेत्र स हतो नो चेत्कस्तस्माद्वसुधां हरेत् । लब्धां रक्षितुमिच्छामि ख्यातिमेतेन हेतुना ॥१४२७॥
मुक्तापीडः पुरा राजा ज्वलित्वा मूर्ध्नि भूभुजाम् । कार्पण्यप्रणयं प्राप लब्धरन्ध्रो विरोधिभिः ॥१४२८॥
स ह्युत्तरापथे मार्गपथस्थगितसैनिकः । मितानुगोऽहितैः रुद्धमार्गो भूदुर्गमेऽध्वनि ॥१४२९॥
तं शल्यो नाम सामर्थ्यवैरस्य[1]विवशो नृपः । बन्द्धुं प्रतिज्ञामकरोद्दाजिलक्षैर्युतोऽटभिः ॥१४३०॥
स सामप्रमुखोपायापायध्यानाकुलधीः । भवस्वाम्यभिधं कृत्यमपृच्छन्मुख्यमन्त्रिणम् ॥१४३१॥
असाध्यां सोऽपि निर्ध्याय विनिपातप्रतिक्रियाम् । न्याये निश्चित्य नैयत्यं कर्तव्ये प्रत्युवाच तम् ॥१४३२॥
उपाययुक्तिप्रत्युक्ते कृत्ये कीर्त्यभिमानिनाम् । निःसंभ्रमेव प्रतिभा लोभेनाक्षोभिते हृदि ॥१४३३॥
कृत्यं कृत्यविदो लब्धप्रसिद्धिपरिरक्षणम् । साम्राज्योपार्जनमुखो व्यापारस्त्वानुषङ्गिकः ॥१४३४॥
गच्छञ्शरीरविच्छेदादपि भस्मावशेषताम् । कर्पूरः सौरभेणेव जन्तुः ख्यात्यानुमीयते ॥१४३५॥
शान्तयोर्जीवितस्थानं द्वयमत्यद्भुतं द्वयोः । अनङ्गस्याङ्गनापाङ्गः स्तोतृजिह्वा यशस्विनः ॥१४३६॥
ख्यातसंरक्षणं नाम जन्तोः कल्पान्तरस्थितिः । वर्तते कीर्तिकायस्य संपूर्णाः परभागवः ॥१४३७॥
धीरैर्विधिश्च निर्ध्येयो विरोधित्वप्रधानवान् । यस्तेषामुन्नतिध्वंसाय यततेऽन्वहम् ॥१४३८॥
तुङ्गाग्रपातनहठव्यसनी विधाता स्वोत्पत्तिपद्मकुलेऽपि सरोजषण्डे ।
संकोचिनि द्विजपतावपि शुद्धिवन्ध्ये मातङ्गहस्तपतनैः कुरुतेऽवमानम् ॥१४३९॥
ये हठापातिनो धातुर्धियं[1] ख्यातिनिपातने । रक्षितुं समुपेक्षन्ते तैः किं नाम —[2] रक्षितम् ॥१४४०॥
जातिः क्ष्माभृति वंशजाभयतया ख्यातिप्रतिष्ठामिमामुद्दीप्यानलमुज्झितस्ववपुषः केऽप्यत्र वेत्राङ्कुराः ।
त्रातुं हन्त विदन्ति ये न विधिना क्रुद्धेन पृथ्वीभृता द्वारि द्वाःस्थकरैर्गतागतखलीकाराणि संप्रापिताः ॥१४४१॥
भोगान्निर्वाणभूयिष्ठानिष्टान्प्राणानवेत्य तत् । प्रतिष्ठासौष्ठवत्राणे संरब्धुं देव सांप्रतम् ॥१४४२॥

१४३०. [1]) Thus $A_1$; $A_2$ °वैवश्य°. १४४०. [1]) Thus corr. by $A_1$ or a later hand from °धातुरिवं.—[2]) The *lacuna* not indicated in A; न supplied in R C.

दण्डकालसकाख्यस्य तद्रोगस्याशुकारिणः । पार्थिवाकस्मिकोत्थानं भिषगद्य प्रकाश्यताम् ॥१४४३॥
श्वो वक्तास्म्यथ कर्तव्यं व्यापत्प्रक्षपणक्षमम् । उक्त्वेति स महामात्यो निर्गत्य स्वगृहानगात् ॥१४४४॥
दण्डकालसकं दण्डधरो व्यज्ञम्भिषामततः । अधीर इव चक्रन्द लुठन्निस्पन्दलोचनः ॥१४४५॥
स्वेदसंवाहनक्षेदभ्रमनाद्यैरुपक्रमैः । निःशैथिल्यव्यथं तेन मुमूर्षुं तं जनोऽवदत् ॥१४४६॥
ततो निश्चितमृत्युत्वं पत्युः कथयता कृतः । वह्निप्रवेशोऽमात्येन कृतशल्यनिवेदकः ॥१४४७॥
कर्तव्यशेषं दाक्षिण्यादनाचक्षाणमग्रतः । युक्तयोक्तनिष्ठुराचारमन्तस्तुष्टाव तं नृपः ॥१४४८॥
अप्रौढः सोढुमुग्रामां व्यथामस्मीति वादिना । राज्ञाप्यनलसाद्देहं ततश्चक्रेऽभिमानिना ॥१४४९॥
तेन प्राणानुपेक्ष्यैवमन्यख्यातेर्मनस्विना । ऊर्ध्वाधिरोहे सोपानं कृतं न निजकीर्तनात् ॥१४५०॥
एवं दैवोपनीतानामख्यातीनां चिकित्सितम् । स्वधियामात्यबुद्ध्या वा पारमेति मनस्विनाम् ॥१४५१॥
इत्युक्त्वा विरतो वंशबीजरक्षार्थमात्मजः । भोजो विसृज्यतां कोट्टमेवमूचेऽथ मन्त्रिभिः ॥१४५२॥
तं राजपुत्रं प्रस्थानमङ्गलान्ते विनिर्गतम् । पुनर्व्यावर्तयामास दण्डनायकमोहितः ॥१४५३॥
सा धीः स साहसारम्भस्तद्वैकल्यमापदि । नष्टमेकपदे तस्य नाशकाले ह्युपस्थिते ॥१४५४॥
लक्ष्मीतडिल्लता कीर्तिबलाका शौर्यगर्जितम् । प्रतापशक्रचापं च भागधेयाम्बुदानुगम् ॥१४५५॥
धीशौर्यादिगुणेन भाग्यसमये प्रागेव एको नृपः शक्रस्याक्रमणं क्रियेत न कुतोऽनेनेति संभाव्यते ।
मौग्ध्यं पङ्गुजडान्धवच्च स ततो गच्छत्यभाग्योदये दत्तेऽनेन पदक्रमो भुवि कथं नाभेति संचिन्त्यते ॥१४५६॥
विरोधिप्रतिरोधाय तान्त्रिसैन्यं विसर्जितम् । नगरस्थमपि क्ष्मापालप्रवासधनमादधे ॥१४५७॥
दायादाश्रयणं राजभृत्याः सर्वेऽपि चक्रिरे । ये केचिद्व्यवसन्गेहे ते देहैरेव केवलम् ॥१४५८॥
पराश्रयपरं हित्वा न संकल्पमपि व्यधुः । किं वा स्तुमस्तैस्तैर्ये स्त्रीवदमुञ्चन्नचिरादसून् ॥१४५९॥
यां क्राणश्रावतीनर्तक्यन्वये कापि नर्तकी । पुत्रीचक्रे क्वापि जातां जयमत्यभिधाथ सा ॥१४६०॥
भूत्वा गृहीतकौमारा तरुण्युत्कलरागिणी । धनलुब्धात्वरुद्धात्वमभजन्मण्डलेशितुः ॥१४६१॥
तस्मिन्हते तदैवास्तापत्रपोत्कलमाययौ । तथैव दैवयोगेन पट्टदेव्या भविष्यते ॥१४६२॥ तिलकम् ॥
आबद्धपङ्क्त्यश्चर्यामुत्कलाभ्यर्थिणीं व्यधुः । भूपालदर्शनेप्यस्तभीतयो राजसेवकाः ॥१४६३॥
वेतनस्वीकृतैः सर्वैः शिक्षाधायी पुरस्कृतः । लोभावमानायुद्धेप्य योधश्रद्धां हरन्युधि ॥१४६४॥
मन्दप्रतापतात्राभो नर्मोक्त्या मर्मभेदकृत् । आहारादिक्षणे कर्ता प्रक्रियार्थनया कलेः ॥१४६५॥
अतीव प्रभुदानादिमाहात्म्याख्यानकोविदः । एक एवोकरोद्योधः पृतनानां विलक्षणम् ॥१४६६॥ युग्मम् ॥
श्रीलेखाभ्रातृसूनोर्यस्तनयो व्यड्डुमङ्गलः । मल्लशातीयकोपेन स राज्ञास्कन्द्य घातितः ॥१४६७॥
मातुलस्यात्मजा मल्लापत्ययोस्तस्य गेहिनी । श्वश्र्वा समं स्ववसतीरादीप्य दहने मृता ॥१४६८॥
मौनव्रतादिनियमच्छन्नक्रौर्योऽन्तकोपमः । करोत्यभ्यन्तरान्भिन्नान्मल्लः परमदाम्भिकः ॥१४६९॥
तदेष पुत्रराज्येच्छुर्वध्यतां निर्भयं रिपुः । शाह्निपुत्रीभिरित्यूचे तस्मिन्नवसरे नृपः ॥१४७०॥

१४५५. [1]) Emended; A लक्ष्मीस्तडि°. १४५९. [1]) Emended; A °मुञ्चदचि°. १४६२. [1]) $A_1$ writes here ३ instead of तिलकम्. १४६६. [1]) $A_1$ writes here २ instead of युग्मम् (युगलकम्). १४७०. [1]) Emended; A °र्वध्यतां.

स्वयं प्रादात्समास्कन्दं द्वारि स्थितवतः पुरः । तस्य प्राणार्थिनो वाञ्छापूर्त्यै मल्लश्च निर्ययौ ॥१४७१॥
स हि वैराज्यसज्जाभ्यां पुत्राभ्यां प्रार्थितोपि सन् । मुनिव्रतः सदाचारानुरोधात्त्यक्तनृपम् ॥१४७२॥
विश्वासाय परं राज्ञो भ्रातृजाज्ञोर्भविष्यतोः । वैमातुरान्सल्हणादीन्वीर्षि दस्थानसहूते ॥१४७३॥
आसेदुषे मुनिदशामाजन्मप्रीणिताश्रये । तदा स तस्मै चुक्रोध प्रत्यासन्नवधो नृपः ॥१४७४॥
स सुराभ्यर्चनं कुर्वन्नाहूतः परिपन्थिभिः । रेजे तेनैव वेषेण समराय विनिर्गतः ॥१४७५॥
उपवीत्यक्षसूत्राङ्कपाणिर्दर्भोज्ज्वलाङ्गुलिः । भस्मस्मेरललाटाङ्को जामदग्न्य इवापरः ॥१४७६॥
स्नानार्द्रधवलश्यामलोलधम्मिल्ललीलया[1] । देहत्यागे प्रयागाम्बु धारयन्निव मूर्धनि ॥१४७७॥
उष्णीषी वीरपट्टेन खेटकेनोष्णवारणी । सोसिधारातीर्थपान्थो दण्डी खड्गेन दिद्युते ॥१४७८॥
भोगे पुरस्कृताः केचित्तद्भृत्याः पूर्वनिर्गताः । अमर्त्यनारीभोगेपि तस्यासन्नग्रभागिनः ॥१४७९॥
द्वौ रथ्यावष्टविजयौ द्विजौ पौरोगवस्तथा । कोष्ठकः[1] सज्जकाख्यश्च योद्धारो युद्धे हता बभुः ॥१४८०॥
क्षतोप्युदयराजाख्यः क्षतायुःशेषस्तथा[1] । प्राणैर्वियोगभागाजौ नाज्ञकोपि व्ययुज्यत ॥१४८१॥
विरोधियोधैर्निरन्ध्रं द्वारमालोक्य सर्वतः । त्यक्तकम्पो ददौ झम्पां स तेषामेव मूर्धनि ॥१४८२॥
शैवलेष्विव खड्गेषु खेटकेष्वम्बुजेष्विव । जरसा धवलो भ्राम्यन्राजहंस इवाबभौ ॥१४८३॥
क्षणाच्च ददृशे शातशरशङ्कुशताचितः । प्रवीरो वीरशयने सुप्तो भीष्म इवापरः ॥१४८४॥
सोप्यं गतायुषो राज्ञः किं नाभूत्तस्य तादृशः । चिच्छेद यः शिरः पृष्ठे हयं च भ्रमयन्स्मयात् ॥१४८५॥
राज्ञी कुमुदलेखाख्या मल्लस्यान्या च वल्लभा । गृहेष्वजुहुतां प्रीतिहोत्रे गात्राणि संभृते ॥१४८६॥
राजावकल्ययोः पत्न्यौ बाले सल्हणरल्हयोः । स्नुषे मल्लस्यासमती सहजा चाग्निसाद्गते ॥१४८७॥
सर्वोपभोगभागिन्यस्तदन्तःपुरयोषिताम् । परिवाराङ्गना वह्नौ पट्टाश्चैव विपेदिरे ॥१४८८॥
महागृहाग्नितापेन शोकोष्णैश्च जलाञ्जुभि. । तप्ताम्भसो वितस्तायास्तीरे वामे बभुव तत् ॥१४८९॥
प्रवर्धितायाः स्तन्येन द्रष्टुमक्षमया पयः । दास्यमानं निवापेषु पुत्र्याश्चान्द्राख्यया समम् ॥१४९०॥
धात्र्या परस्मिन्वै तस्मिंस्तीरे स्वान्तःपुरे स्थिता । माता भविष्यतो राज्ञोर्नन्दानिन्यकुलोद्भवा[2] ॥१४९१॥
महानसाग्निधूमेन संलक्ष्याग्नीक्ष्य पुत्रयोः । सोत्कण्ठं कटकौ सौधादुदग्दक्षिणदिक्स्थयोः ॥१४९२॥
क्रियतां दिवसैरेव पुत्री शम्भोः पितृद्विषः । जामदग्न्यार्थितं वंशे शाम्येति नृपतिं सती ॥१४९३॥
अनिषण्णेव दीप्ताग्नौ गृहे स्वं निरदाहयत् । प्रनृत्यन्तीभिरालीभिरिव ज्वालाभिरावृता ॥१४९४॥
वधे दर्शनपालस्तु नृपे प्राप्ते प्रतिक्षणम् । अत्यद्भुतैरन्तरायैरायुःशेषेण रक्षितः ॥१४९५॥
वर्धमानावरोधायुर्यद्वा द्रोहेण रक्षितः । शोषमानस्य पूयस्य रोगजस्य च भुक्तये ॥१४९६॥
कृष्णभाद्रनवम्यां तं वधं श्रुतवतोः पितुः । मल्लात्मजन्मनोः शोकः कोपेन निरपीयत ॥१४९७॥
आवाङ्किपुरकग्रामात्प्रज्वलत्क्रोधवह्निना । अधावद्विजयक्षेत्रं सोन्येद्युरथ सुस्सलः ॥१४९८॥
योद्धुमभ्यापतन्तं[2] तं चन्द्रराजोथ निर्गतः । पट्टदर्शनपालाद्यैः ससैन्यैः पर्यवर्ज्यत ॥१४९९॥
निजैरुपेक्षितश्चक्रे स चिरं तत्र दुष्करम् । स्वल्पसैन्योपि संग्रामं भूरिसैन्येन शत्रुणा ॥१५००॥

१४७७. 1) Emended; A °धम्मिल्ल°. १४८०. 1) Emended; A कोष्ठा. १४८१. 1) Emended; A क्षताञ्जु°. १४९१. 2) Emended; A राज्ञो नन्दा°. १४९९. 2) Emended; A योद्धुमस्थाप°.

अक्षोटमल्लः समरे तत्र मल्लश्च चाचरिः । अगातां राजपुत्रौ द्वौ स्वर्गस्त्रीभोगभागताम् ॥१५०१॥
रजोन्धकारे छत्रेन्दुद्योतिन्यालिङ्गितो हतः । चन्द्रराजः सुरस्त्रीभिरिन्दुराजोस्य[1] चानुगः[2] ॥१५०२॥
तस्मिन्नपि हते वीरे चक्रे हर्षमहीभुजः । आशारविन्दिनीमूलकन्दनिर्दलनं विधिः ॥१५०३॥
पद्मादयः प्रविश्याथ विजयेशाङ्गनं भयात् । प्रविष्टे सुस्सले तेषां द्वारं दत्तार्गलं व्यधुः ॥१५०४॥
आस्थानीयः परं पद्मनामा युद्ध्वा हतो बहिः । लक्ष्मीधरो मर्तुमिच्छुर्बद्ध्वा नीतः स डामरैः ॥१५०५॥
विजयेश्वरगञ्जाप्रसौधारूढोथ सुस्सलः । अधो ददर्श तान्सर्वान्पशूनिव भयाकुलान् ॥१५०६॥
धूर्तः स दत्तमध्यस्थो हस्तमानीतवान्पुनः । पद्मदर्शनपालौ द्वौ तेषां पूर्वं निजान्तिकम् ॥१५०७॥
निःश्रेण्यभावादारोढुमक्षमौ सुस्सलानुगैः । तौ मृताविव निर्बद्धपाणी रज्ज्वाधिरोपितौ ॥१५०८॥
तयोर्विदेशगमनं व्रीडादर्थायमानयोः । प्रतिश्रुत्याकरोद्धीमान्सुस्सलो ग्लानिमार्जनम् ॥१५०९॥
स्निग्धोक्त्या भृष्टमांसादिभोगैस्तस्यामतस्तयोः । तस्मिन्नेवाह्नि मन्दत्वं विदेशौत्सुक्यमाययौ ॥१५१०॥
केनाप्यधिष्ठितश्चक्रे परेद्युर्यत्स सुस्सलः । जान विश्वसजोप्यङ्गरोमाञ्चयति तत्स्मृतिः ॥१५११॥
जासटो नृपतिर्हर्षभूभर्तुर्मातुलात्मजः । उमाधरमुखाश्चान्ये राजानो यत्र च त्रयः ॥१५१२॥
राजपुत्रहयारोहतन्त्रिसामन्तसंततेः । न यत्र गणना काचित्सैन्येष्वष्टादशस्वभूत् ॥१५१३॥
विजयेशाङ्गनस्थानां द्वारमुत्पाट्य सोविशत् । एकाक्येवान्तरं तेषां सासिराक्षेपरूक्षवाक् ॥१५१४॥
स तत्र साक्षिणं कृत्वा क्षमावान्विजयेश्वरम् । प्रतिश्रुत्याभयं तेभ्यः प्रणतेभ्यो विनिर्ययौ ॥१५१५॥
पुनः सौधाग्रमारूढस्तान्सर्वानर्पितायुधान् । रज्जुबद्धकरान्भृत्यैरानिनाय ततोन्तिकम् ॥१५१६॥
स्वर्णरूप्यत्सरुश्रेणिपूर्णायुधपरिष्कृता । कीर्णपुष्पोपकारेव सुस्सलास्थानभूरभूत् ॥१५१७॥
विन्यस्य पशुपालानां पशूनिव स तान्करे । संरक्षितुं डामराणां त्र्यहं तत्राकरोत्स्थितिम् ॥१५१८॥
ततः सुवर्णसानूरग्रामं स प्राप्य बन्धनात् । पद्मदर्शनपालौ द्रागौज्झीद्देशान्तरोन्मुखौ ॥१५१९॥
पद्मः शूरपुरं प्राप्तो भार्ययागतया गृहात् । संसृष्टमानोप्यस्मार्षीदल्पसत्त्वो दिगन्तरम् ॥१५२०॥
यावन्मासाप्यौचिती सा विदेशोन्मुख्यलक्षणा । द्राग्धुर्दर्शनपालस्य पद्मेनाद्या विडम्बिता ॥१५२१॥
अहंपूर्विकया राज्यं जिघृक्षुरथ सुस्सलः । नगरासादनादिच्छदभिसंधातुमग्रजम् ॥१५२२॥
समानप्रायवयसोः[1] सर्वदोद्दामयोरभूत् । यस्माज्ज्येष्ठकनिष्ठत्वं प्रक्रियारहितं तयोः ॥१५२३॥
द्वित्रेष्वहःसु यातेषु क्रामंस्तां तां भुवं बली । उदतिष्ठद्राजधान्याः सविधादेव सुस्सलः ॥१५२४॥
निर्दग्धुं कलशा[1] तत्समस्तुतं भूपतेः सुतः । बुप्पापराभिधो भोजदेवो योद्धुं विनिर्ययौ ॥१५२५॥
आत्मवच्छङ्कमानेन कुमाराणां प्रदुष्टताम् । यो माध्यस्थ्यबलात्पित्रा हतौजा विदधे सदा ॥१५२६॥
कृतो गत्यन्तराभावात्तदानीं तु निरङ्कुशः । केषु केषु न युद्धेषु योधानामग्रणीरभूत् ॥१५२७॥
प्रपितामहतुल्यः स त्यागेनैव वर्धितः । कुर्यादुत्साहसंपन्नो निर्दायादा न किं दिशः ॥१५२८॥
नानीतिविश्राम कश्चित्प्रयोगस्तु विहीयते । अत्राविलभ्यते सर्वो विषयस्तु दुर्लभः ॥१५२९॥

१५०२. [1]) Thus corr. by $A_1$ from °मिन्दुराजो°.—[2]) Thus corr. by $A_1$ from चानगः. १५१०. [1]) Emended; A °इम्म°. १५२३. [1]) Emended with C; A वयसौ. १५२५. [1]) Thus $A_1$; C कलशात्मं; doubtful.

1530 स राजवनुदस्तानविक्रमस्य रिपोरभूत् । अत्युग्रमोधिकं जातस्तिमेरिव तिमिंगिलः ॥१५३०॥
कृतप्रभावं पितरि प्रपन्ने विगर्हणां नार्हति तत्प्रसूतिः ।
कल्कीभवेद्वोखिलमुज्झ्यते किं तैलेन दत्तः कुसुमाधिवासः ॥१५३१॥
देवेश्वरात्मजः पित्र्यः पार्थिवेनाधिगौरवम् । वर्धितोप्यभजत्पापः प्रतिपक्षसमाश्रयम् ॥१५३२॥
ततस्तदात्मजो भिक्षुः प्रस्थिते सुस्सलाहवे । नृपेणार्थ्यमानोर्थं खेदात्सावज्ञमीक्षितः ॥१५३३॥
1535 ज्ञास्यस्यथान्तरं राजन्ममेत्युक्त्वा विनिर्गतः । खड्गधाराजलैर्मानी म्लानिमक्षालयद्रणे ॥१५३४॥
सर्वनाशादभूद्दुःखं तथा न हृदि भूपतेः । तदन्तरापरिज्ञानात्कृतज्ञस्य यथाधिकम् ॥१५३५॥
विभवैर्नित्यसंमूढा जानते स्वन्तरं नृपाः । तदा शक्या यदा तेषां प्रलापैरेव सत्क्रिया ॥१५३६॥
भोजेन निर्जितानीको विद्रुतः सुस्सलो रणात् । लवणोत्सं पलाय्यागाद्विदर्शितगतागतः ॥१५३७॥
प्रत्यावृत्तस्ततो भोजस्तीव्रातपकदर्थितः । उद्यानान्तस्तनुं तल्पे पित्रा सह मुहुर्जहौ ॥१५३८॥
अथोत्तरेणोदतिष्ठत्पादः पारापृथीकसः । ज्यायान्मल्लात्मजः प्राप्तः सेतुराच्छिद्यतामिति ॥१५३९॥
1540 सुस्सलेन हृतं राज्यं नाथायासि द्रुतं यदि । स दण्डनायकेनाभूत्संदिष्ट इति पापिना ॥१५४०॥
अतो जवेन चाविक्षत्प्रथमं चावधीन्मृधे । नरेन्द्रेश्वरदेवाग्रवर्तिनं देवनायकम् ॥१५४१॥
अथोज्जगाम स्थामस्थः सह व्यूहेन सादिनाम् । नगराधिकृतो नागस्तस्यामाङ्गुरिसैनिकः ॥१५४२॥
यत्रास्थां पार्थिवोबध्नात्प्रधानपृतनान्विते । बभार नोच्चलाशङ्कां सुस्सलाहवनिर्गतः ॥१५४३॥
अल्पसैन्यो मल्लसूनुर्यावत्तस्मादशङ्कत । अपनीतशिरस्त्राणस्तावत्स तमवन्दत ॥१५४४॥
1545 मण्डलेश्वरचर्म स प्रियं शत्रोरविश्वसन् । ऊचे स्ववेश्म याहीति स च पापस्तथाकरोत् ॥१५४५॥
तस्य द्रोहफलं दृष्टमेतस्मिन्नेव जन्मनि । मण्डले यदनन्यस्मिन्भिक्षित्वा जीवितं जहौ ॥१५४६॥
ततो राज्ञा सरित्तीरं प्राप्तः प्रैक्षत डामरान् । सेल्वमे श्यामविकृतान्दावदग्धान्द्रुमानिव ॥१५४७॥
बलक्षवारबाणस्य तेषां मध्ये वपुर्बभौ । परं जनकचन्द्रस्य शुक्रस्येव तमोन्तरे ॥१५४८॥
महासेतुः स घटितो राज्ञा नौभिः स्वसिद्धये । पर्यवस्यन्विधिवशाच्छत्रूणां सिद्धये पुनः ॥१५४९॥
1550 अथारुरुहुरादाय वह्निं हर्म्यचतुष्किकाम् । शतद्वारे मर्तुकामा देव्यः श्राहिल्लतादिकाः ॥१५५०॥
लोको विरक्तः सेल्वमे दायादैः सह संगरम् । ददर्शाश्वयुजीलागिमिव निर्विक्रियः प्रभोः ॥१५५१॥
त्रिजये सावशेषेसौ वह्निदानोद्यताः प्रियाः । अनिशं वारयन्राजा सेल्वमे रणमग्रहीत् ॥१५५२॥
अथ विन्यस्तवर्माणं राजसेनागजं शरैः । सेतोर्जनकचन्द्राद्याः प्रमुखस्थमताडयन् ॥१५५३॥
स विद्धो मर्मसु शरैः पूत्कारोद्गारकृद्गजः । स्वचमूमेव चरणैरमृद्नाद्विमुखीकृतः ॥१५५४॥
1555 विधिनेव विरुद्धेन सिन्दुरेण कदर्थिता । अश्वयत्पत्तिहयारोहा समपद्यत वाहिनी ॥१५५५॥
सेतुं तीर्णस्ततो वैरिसैनिकैर्विमुखीकृतः । शतद्वाराङ्गनं प्राप्तः साश्वारोहोविशन्नृपः ॥१५५६॥
तदात्तवेषरहितो रहोपि ददृशे न यः । भुञ्जानस्यापि यस्यास्यमुद्रा नैव व्यभाव्यत ॥१५५७॥

१५३०. ¹) Emended with C; A जाता तिमेरिव. १५३१. ¹) Emended; A कल्की°, corr. by later hand into सल्की°. Cf. Böhtlingk, *Sanskrit Wörterbuch in kürzerer Fassung*, vi. 214 *b*. १५५२. ¹) Emended; A सावशेषोसो. १५५७. ¹) Emended; A °वेषर°.

स भयद्विगुणाकीर्णस्वेदमज्जिताम्बरः । पुनः पुनः क्षिप्यमाणस्तवमीसवोर्निजैः ॥१५५८॥
अनवस्थितपार्ष्ण्यन्ताघातप्रचलितं हयम् । निरोद्धुं बहुशः कर्षन्नष्टवल्गामहं करम् ॥१५५९॥
खल्वाटशीर्षपर्यन्तलम्बिनीः कुन्तलच्छटाः । प्रापयञ्श्रवणोपान्तं करेण गलितासिना ॥१५६०॥
लम्बलम्बनिर्मुखभोजपालिलताञ्चलात् । कालाहिनेव मूर्तेन वेष्टितोच्छुष्ककन्धरः ॥१५६१॥
निस्ताम्बूलतयोच्छुष्कौ जतुपीताविवाधरौ । ओष्ठावुत्क्षिप्य कृच्छ्रेण विह्वलो जिह्वया लिहन् ॥१५६२॥
कनीनिकासकरेणु क्षामधूसरमाननम् । उत्तानीकृत्य पृष्ठस्थाः पश्यन्दीनमनाः प्रियाः ॥१५६३॥
परिभ्रमन्नङ्गनाभ्यन्तरस्तः स ददृशे जनैः । वह्निदानोद्यतांस्ताश्च वारयन्करसंज्ञया ॥१५६४॥
मल्लराजस्य वेश्माभूद्राजधान्यन्तिकेऽपि यत् । तीर्त्वा जनकचन्द्रेण तत्र वह्निरदीप्यत ॥१५६५॥
राजधान्युन्मुखं दृष्ट्वा ज्वलन्तं वह्निमागतम् । भेजे पलायनं भोजो राज्यं निश्चित्य हारितम् ॥१५६६॥
स धूलैर्दिद्विषां भीमैर्नैर्जैरिव तिरोहितम् । द्वारं भित्त्वा तुरंगस्थः प्राङ्गणान्निर्ययौ बहिः ॥१५६७॥
पञ्चषैः सादिभिः सार्धं लोहरोन्मुख्यमाश्रितः । प्रतस्थे सेतुमुत्तीर्य सिंहराजमठाग्रगम् ॥१५६८॥
यातस्य दृक्पथात्सूनोः साश्रुरालोकयन्दिशम् । राजाश्ववारैः सहितो वेश्मनो बहिरभ्रमीत् ॥१५६९॥
अत्रान्तरे मर्तुकामास्त्रातुं काश्चिन्नृपाङ्गनाः । अदमिस्तत्परिजनैरभज्यत चतुष्किका ॥१५७०॥
शाहिपुत्र्यस्तदा ज्ञात्वा शत्रवः पतिता इति । मत्वा चतुष्किकाशृङ्गे ततोऽभिमुखदीपयन् ॥१५७१॥
वास्तव्या डामराश्चाय घ्नन्तोऽन्योन्यमुदायुधाः । ज्वलतः क्ष्मापतिगृहाद्भाण्डागारादलुण्ठयन् ॥१५७२॥
केचित्तत्र वधं प्रापुर्धिपदं केचनात्यजन् । अदृष्टवस्तुसंप्राप्तिः केषांचिद्धास्यदाभवत् ॥१५७३॥
सितेयं शर्करेत्येकः कर्पूरं वदनेऽक्षिपत् । ततः सरिति मज्जाण्डं निर्दग्धवदनो व्यधात् ॥१५७४॥
पामरैः स्वर्णचित्राणि केश्चित्स्वर्णमहेच्छया । विनिर्दग्धानि वासांसि विचितं भस्म चादरात् ॥१५७५॥
अविद्धमौक्तिकस्तोमः सिततण्डुलविभ्रमात् । क्वचित्पामरनारीभिर्घरट्टेषु विचूर्णितः ॥१५७६॥
वसन्त्यदृश्ये देशेऽस्मिन्खलीकारेण तादृशा । एवं विडम्बिता लक्ष्मीर्न पुनः क्वाप्यदृश्यत ॥१५७७॥
विद्याधरीरिवोदात्तवेषाः क्ष्मापतिसुन्दरीः । हरन्तो डामराः क्रूरा दृश्यन्ते स्म पदे पदे ॥१५७८॥
वसन्तलेखाप्रमुखाः सस्नुषास्तत्र चक्रिरे । निर्यातशेषाः स्वान्देहान्राज्ञ्यः सप्तदशाग्निसात् ॥१५७९॥
गृहाणां दह्यमानानामभूयत चटत्कृतिः । गाढोष्मक्वथमानाब्धिसिन्धुघोषप्रतीतिकृत् ॥१५८०॥
श्रीपद्मश्रीमपापार्श्वस्थितस्तद्वीक्ष्य पार्थिवः । आर्षं श्लोकमिमं शोकात्स्मृत्वापाठीत्पुनः पुनः ॥१५८१॥
प्रजापीडनसंतापात्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते ॥१५८२॥
दग्ध्वाथ राजधानीं तामुच्चलो डामरान्वितः । अस्यक्तसैन्यं वीक्ष्यारिं पारमेवातरत्पुनः ॥१५८३॥
ततो बुद्ध्वा मर्तुमिच्छन्निन्ये राजाकुलात्मताम् । उच्चावचैर्मतिद्वैधैः पदातीनां क्षणे क्षणे ॥१५८४॥
गच्छन्ननन्तपालादिराजपुत्रधिया मृधम् । दण्डनायकवाक्येन न्यषिध्यत पदे पदे ॥१५८५॥
बुध्यस्व लोहरं वापि याहीत्यूचे च चम्पकः । प्रयागस्योत्तरः पक्षः प्रत्यभाञ्चापिमः पुनः ॥१५८६॥

१५७१. 1) Emended; A °स्तदा ज्ञात्वा. १५७६. 1) Emended; A °स्तोमसित°. १५७७. 1) Emended; A वसन्त्यदृश्ये. १५७८. 1) Emended; A °वेषाः. १५८०. 1) Emended; A °भूवन्त. १५८६. 1) च wanting in A; supplied with R C.

वार्तामबुद्ध्वा पुत्रस्य नृपतिर्व्याकुलीभवन् । पदवीं भोजदेवस्य याहीत्याह स्म चप्पकम् ॥१५८७॥
मयागमात्रानुचरो राजन्संपत्स्यसे क्षणात् । तस्मान्मामपि मा त्याक्षीरित्यूचे तं स निःश्वसन् ॥१५८८॥
सोन्तर्बाष्पस्तं बभाषे निर्द्रोहोसीति कथ्यते । त्वयाप्यस्मिन्क्षणे कस्मात्तस्मादुल्लङ्घ्यते वचः ॥१५८९॥
विना पुत्रं न पश्यामि सार्केपि दिवसे दिशः । त्वं तस्मिन्नङ्कसंवृद्धे न मन्युं कर्तुमर्हसि ॥१५९०॥
अश्वनिमित्तं कलहस्तेष्वेव दिवसेष्वभूत् । मन्त्रिणो राजपुत्रेण तेन तस्याभिमानिना ॥१५९१॥
गिरा प्रभोरुपालब्धस्तदागूरणगर्भया । स लज्जानम्रवदनो राजपुत्रानुसार्यगात् ॥१५९२॥
पञ्चाशताश्ववारैः स भ्रातृभृत्यादिभिः समम् । उत्तीर्णः सरितः पारमात्मना पञ्चमोभवत् ॥१५९३॥
आगूहयेश्ववारे च शेषाराजात्मजे पथि । हताश्वे पतिते सोभूज्जनकेनान्वितो भ्रमन् ॥१५९४॥
अनाप्नुवन्नात्मजमुर्वीशो वा वर्त्मनाप्यटन् । गलितेहनि संप्राप वितस्तासिन्धुसंगमम् ॥१५९५॥
एवमाप्तान्परान्पुत्रमन्वेष्टुं प्राहिणोन्नृपः । अन्येपि तन्मिषं लब्ध्वा तस्य पार्श्वादथाचलन् ॥१५९६॥
उत्कोचादायिना क्रुद्धं राजपुर्यादिविग्रहे । योग्यानसहता भृत्यान्निःसारः कटकः कृतः ॥१५९७॥
लोहरप्रस्थितौ विघ्नं राजा[1] पुत्रस्य कारितः । प्रवेशितः पुरं वैरी राजन्यन्याहवाकुले ॥१५९८॥
सर्वस्वध्वंसिना येन स एव नृपतेरभूत् । तदाप्युचितकर्तव्यनिषेद्धा दण्डनायकः ॥१५९९॥ तिलकम्॥
राज्ञः कृत्यावसन्नस्य शृण्वतो बहुमन्त्रितम् । नैकत्र स्थितिः कर्तव्ये क्वाप्यधीरधियोभवत् ॥१६००॥
सर्वैर्यथा निखिलरन्ध्रमुखेन वंशः संपूरितो न खलु शब्दमपाकरोति ।
तैस्तैस्तथा बहुपथप्रचयेन मन्त्रः संकल्पितः किल न निश्चयमभ्युपैति ॥१६०१॥
भाग्यक्षयस्यैतदेव लक्षणं प्राकृतोपि यत् । अपृष्टः कथयेद्धार्ष्ट्यान्मन्त्रं स्वहृदयोचितम् ॥१६०२॥
त्रैलोक्यनाम्ना सूतेन शंसता दण्डनायकम् । निरोध्य वल्गामित्यूचे भूयः क्ष्माभृद्रणोन्मुखः ॥१६०३॥
एकाङ्गैः साश्ववारैः प्राग्जिगाय त्वत्पितामहः । तद्गच्छामोक्षपटलोपान्तं तत्संग्रहेच्छया ॥१६०४॥
पदातिप्रायसैन्यांस्तान्निहन्मः संहतान्रिपून् । पश्चान्निपत्य तैः साकं श्येना इव विहंगमान् ॥१६०५॥
ततश्चिचलिषावेव राज्ञि तत्कटको विशः । सपृष्ठचम्बुहस्तो रङ्गप्रेक्षिलोक इवागमत् ॥१६०६॥
पारेवितस्तां प्राप्तेभ्यः पाथेयायात्मजन्मनः । स शेयाराजजन्मभ्यो रत्नग्रैवेयकाद्यदात् ॥१६०७॥
आरामिकैस्तैः संग्रामे राजचिह्ने क्षणादिव । तेजःस्फारोर्जितो राजा गतश्रीर्ददृशे जनैः ॥१६०८॥
पदे पदे भज्यमानसैन्योक्षपटलादिषु । स्थानेषु चाश्रमीत्कश्चिन्न च तस्यापदन्तिकम् ॥१६०९॥
संश्रयार्थ्यथ बभ्राम सायं वेश्मानि मन्त्रिणाम् । प्रवेशं प्रददौ चास्य न कोपि द्वारि तस्थुषः ॥१६१०॥
प्रायोपवेशकुशलाः शङ्कास्त्यन्ते न कुत्रचित् । मिथ्यासंभावनाभूमिर्भूपानां ब्रह्मबन्धवः ॥१६११॥
ये केपि देशे तस्यास्मिंस्तद्गेहेष्वास्थया भ्रमन् । प्रविविक्षुर्गृहान्प्राप कपिलाख्यस्य मन्त्रिणः ॥१६१२॥
तस्मिंल्लोहरकोट्टस्थे तत्पत्न्या यातुमर्थितः । नौभिश्च कोट्टं गन्तुं न प्राविक्षद्दैवमोहितः ॥१६१३॥

१५९४. 1) Emended; A आगृहरि.—2) Thus A; cf. vii. 1607. १५९७. 1) Emended; A °निसारः. १५९८. 1) Emended: A राजपुत्रस्य. Cf. vii. 1453. १५९९. 1) $A_1$ writes here ३ instead of तिलकम्. १६०४. 1) Emended; A प्राग्जिगायन्तत्पिता°; C °गाय तत्पिता°. १६०७. 1) $A_1$ शेया – – राजजन्मभ्यो; या subsequently supplied by $A_1$ or later hand · but comp. शेषाराजात्मजे. vii. 1594.

आर्तस्य तस्य तत्पुत्रैः पितृद्रोहकारिभिः । कणिकैकसमर्णस्य स्वं निःस्वैरिव गोपितः ॥१६१४॥
सदोषोस्मीति सोशासीत्स्वयं शृण्वन्विगर्हणाम् । तदेव गोपिताशेषकृत्यो दुर्मन्त्रिभिः पुरा ॥१६१५॥ 1615
गृहीतसर्वनिराश्रयः पार्श्वस्थेष्वप्यविश्वसन् । अभूत्प्रश्रुतमुत्तीर्णो नितरां विरलानुगः ॥१६१६॥
प्रख्यापयन्तः संभूतिं षट्त्रिंशति कुलेषु ये । तेजस्विनो भास्वतोपि सहन्ते नोच्चकैः स्थितिम् ॥१६१७॥
तेप्यन्तेनन्तपालाद्या राजपुत्रास्तमत्यजन् । सान्द्रतां दधति ध्वान्ते स्थगिताशाः पदे पदे ॥१६१८॥[1]
वाहनाज्जोहिलमठोपान्तं प्राप्यावतीर्णवान् । स दण्डनायकेनापि तत्यजे सानुजन्मना[1] ॥१६१९॥
इहास्मच्छ्वशुरावासस्तत्र वस्तुमिमां निशाम्[1] । वीक्ष्य ते स्थानमेष्यामीत्युक्त्वा व्याजेन सोचलत् ॥१६२०॥ 1620
पिपासोरनुजं तस्य पाथेयार्थं प्रयागकः । ययाचे कुडमस्मै स प्रादात्सक्तून तत्पुनः[1] ॥१६२१॥
एकांशुकावशेषश्रीस्ततो वा शेषजीवितः । प्रयागशेषानुचरो नृपतिः समपद्यत ॥१६२२॥
सूदश्चण्पकभृत्यस्य जल्लकाख्यस्य तत्क्षणम् । मुक्तो नामान्तिकं प्राप्तो नृपतेराप्ततामगात् ॥१६२३॥
उद्रीपविहितैः खातैरग्रे दुःसंचरा क्षितिः । आग्यतस्तानुवाचेति नारी काचिद्गृहान्तरात् ॥१६२४॥
ततस्तीरे वितस्तायाः निषण्णेस्मिन्प्रयागकः । गन्तुं जयपुरं कोट्टमाजुहाव स नाविकान् ॥१६२५॥ 1625
स हि प्राक्संविदं चक्रे तत्रत्यैः सह शास्त्रिभिः । नृपं प्रेषाभयं नेतुं भीमादेवस्य[1] मन्दिरम् ॥१६२६॥
उच्चलाभ्यर्थिणाप्युचे भीमादेवेन येन सः । राज्ञोनुगो गमिष्यामि प्रविष्टस्योपवेशनम् ॥१६२७॥
नौचरैरानतां नावमारुरोह न भूपतिः । नाशोन्मुखः समासन्नदृष्टिपातभयाकुलः ॥१६२८॥
पर्यापतत्कालकरस्थभोगिसंदर्शनेनेव मतिप्रदीपः ।
क्षिप्रं प्रशान्त्युन्मुखतामुपैति विनाशकालेषु शरीरभाजाम् ॥१६२९॥
तस्मिन्द्रोहसुभिक्षेपि यस्य मानवतः परम् । अनन्यालोकिनी दृष्टिर्भेजे कुलवधूव्रतम् ॥१६३०॥ 1630
नील्लाश्वीयः स बिम्बाख्यो डामरैर्मिलितो[1]हितैः ।
तदापि प्रययौ राज्ञा विस्मृतिं संश्रयार्थिनः ॥१६३१॥ युगलकम् ॥
ततः प्रावर्तत त्यक्तुं वारि वारिमुचां गणः । क्ष्मामिव क्षालयितुं द्रोहस्पर्शेन दूषिताम् ॥१६३२॥
भूर्निर्जना वृष्टिपातस्तमिस्रा दुःसहाग्निता[1] । वैरिभीतिरिति प्राभूत्किं किं तस्य न दुःखदम् ॥१६३३॥
इति वृत्तानुरोधेन धिग्दुष्कर्मविधायिनाम् । अस्मर्तव्यमपि व्यक्तं नाम ग्राहिष्यतेधुना ॥१६३४॥
सोमानन्दाभिधानस्य पूज्याः सिद्धस्य देवताः । सोमेश्वराभिधाः सन्ति काश्चित्पितृवनान्तरे[1] ॥१६३५॥ 1635
तल्लाञ्छिताङ्गना शुक्लतरपच्छन्नवाटिका । अभूद्गुणाभिधानस्य कुटी क्षुद्रतपस्विनः ॥१६३६॥
वारस्त्रियां[1] स विरहभुजंगीतिप्रसिद्धया । भिक्षाख्यया समं भेजे चेष्टितं कुट्टिनोचितम् ॥१६३७॥
तस्य प्रतापगौरीशदेवागारान्तिकस्थितेः । कुटीं मुक्तेन तां निन्ये क्ष्माभृद्वस्तुं स तां क्षपाम् ॥१६३८॥
मुक्तमालम्ब्य नृपतिस्तमालम्ब्य प्रयागकः । यान्ति स्म कि[illegible]द्योतेन क्ष्मां पश्यन्तोन्तरान्तरा ॥१६३९॥
निरुष्णीषोङ्गसंस्यूतकृतवासाः स्खलन्नृपः । स तां प्रयागमुक्ताभ्यां कथंचित्प्रापितः कुटीम् ॥१६४०॥ 1640

---

१६१८. 1) $A_1$ writes here ३ (instead of युग्मम्?). १६१९. 1) Emended; A सोनुजन्मना. Cf. vii. 894. १६२०. 1) Emended; A निजाम्. १६२१. 1) Emended with C; A तं पुनः. १६२६. 1) Emended; A भूमादेवस्य. १६३१. 1) Emended; A डामराभि°. १६३३. 1) Thus A. १६३५. 1) Thus $A_2$; $A_1$ °वनान्तिके. १६३६. 1) Thus $A_2$; $A_1$ अभूच्छिन्नाभि°. १६३७. 1) वारस्त्रिया supplied by $A_2$ in space left by $A_1$. १६३४. 1) Emended; A वामम्.

तदा कुमन्त्रिनिष्कृष्टं स व्यापद्दारणक्षमम् । शोचन्सस्मार कन्दर्पं रुद्रं दैत्यमिवोत्पलः ॥१६४१॥
प्राकारमूर्ध्ना मुक्तेन प्रविष्टेन हतार्गलाम् । नृपः कुटीप्राङ्गणोर्व्यां विवेशास्थिततापसाम् ॥१६४२॥
विशतोश्मक्षतः पादस्तस्यासृग्दक्षिणोत्यजत् । मेने तेनानिमित्तेन स मृत्युं समुपस्थितम् ॥१६४३॥
कुड्यामर्गलरुद्धायां निषण्णस्याङ्गने ययौ । रात्रिर्भीतिमतो¹ भीमा तस्य घोराभ्रमालिनी ॥१६४४॥
पङ्कोपलिप्तः पङ्काङ्कस्थण्डिलस्थो निनाय ताम् । दासकम्बलिकाच्छन्नगात्रो वृष्टघुस्तरां निशाम् ॥१६४५॥
विसस्माराम्तरा दुःखमासीनप्रचलायितैः । निर्निद्रस्त्वभवच्छ्वभ्राद्बुद्धयन्निव समाकुलः ॥१६४६॥
कोऽहं केनाभिभूतोद्य क वर्ते कोनु गोधुना । किं कृत्यमिति निध्याय मुहुर्मुहुरकम्पत ॥१६४७॥
हृतं राज्यं प्रिया दग्धा भ्रष्टः सूनुरबान्धवः । जातोस्म्येकाक्ष्यपाथेयो लुठन्भिक्षाभुजोऽङ्गने ॥१६४८॥
इत्येकैकं च निध्याय दुःखं नैक्षिष्ट सोपरम् । प्राप्तावसादं शोचन्तमात्मतुल्यं कथास्वपि ॥१६४९॥ युग्मम् ॥
भोजस्तु वाजिभिर्द्वित्रैरवशिष्टैः समं व्रजन् । हस्तिकर्णान्तरं प्राप निर्गत्य नगरान्तरात् ॥१६५०॥
व्रजतस्तस्य धीरासीन्नियतं पञ्चषैर्दिनैः । पुनः संप्राप्नुयां राज्यं यदीन्द्रोपि भवेद्रिपुः ॥१६५१॥
गर्भवास इव पौरुषे स्फुरत्किं न कर्म पुरुषश्चिकीर्षति ।
कर्मवायुरिव संस्पृशन्हठान्मूढमेव कुरुते तु तं विधिः ॥१६५२॥
मातृभिर्दत्तपाथेयं भृत्यं नागेश्वराभिधम् । प्रतीक्षमाणश्चक्रे स रङ्गवाटान्तरे स्थितिम् ॥१६५३॥
शून्ये देवगृहे तत्र तिष्ठञ्छ्रुत्वा तमागतम् । स निर्ययौ तेन तस्मिन्निःशङ्कं प्रहतं पुनः ॥१६५४॥
तत्र मातुष्कृतद्रोहे क्षत्रधर्मादविच्युतः । राजपुत्रः स यच्चक्रे न तत्कस्याद्भुतावहम् ॥१६५५॥
स सिंह इव संहारं कृत्वा युधि विरोधिनाम् । अलाङ्करागलिप्ताङ्गो वीरशय्यामभूषयत् ॥१६५६॥
भ्राताप्यस्य मातुलापत्यं विपेदे पद्मकाभिधः । खेल्लो लालितश्चैव संख्येसंख्यपराक्रमः ॥१६५७॥
मठं सूर्यमतीदेव्याः शर्वर्यामु स्तोविशत् । भ्राताप्यस्य रणभ्रान्तो लवणोत्सात्समाययौ ॥१६५८॥
हतं भोजं श्रुतवतोर्हर्षमात्रे स्थिते तयोः । मनस्युत्खातशूलेश्चिरेव्यैका पर्यशिष्यत ॥१६५९॥
प्राप्तमप्राप्तवद्राज्यं तथापि प्रत्यभात्तयोः । प्रवासे विस्मृते राज्यसुखे लब्धे च कुत्रचित् ॥१६६०॥
प्राह्णे कुतश्चिदानीतो मुक्तेनान्विष्य तापसः¹ । प्रणम्य नृपतिं चक्रे स्वकुटीं तां¹ निरर्गलाम् ॥१६६१॥
तां दंशमशकाकीर्णामास्तीर्णतृणविष्टराम् । कृताम्बुसेकां मुक्तेन नृपतिः प्राविशत्कुटीम् ॥१६६२॥
यच्चिरा बहुमानोभूच्छ्रुतया भूभुजामपि । स भूभृच्चाटुकारित्वं भीतो भिक्षाभुजोप्यगात् ॥१६६३॥
भिक्षाकस्योचितं ग्राम्यमनुदात्तं त्रपावहम् । आलापाभ्यवहाराभ्यां तस्य शृण्वन्स विव्यथे ॥१६६४॥
स भिक्षाकः प्रयागेन विक्रयायाधरांशुकम् । निजं दत्त्वा विससृजे विपणिं भोज्यसिद्धये ॥१६६५॥
कटूक्तिः कटुवागग्रे परोक्षं भेदभीतिकृत् । स तापसो दौःस्थ्यहेतुर्नृपस्यारिर्यथाप्यभूत् ॥१६६६॥
मध्याह्ने स्कन्धविन्यस्तभोज्यभाण्डकरण्डिका । तपस्विन्याप्यथानिन्ये तेन क्षुद्रतपस्विना ॥१६६७॥
भृत्यभिक्षाकयोः पूर्वं स्त्रिया अप्यथ पार्थिवः । स्वं वीक्ष्य गोचरीभूतं निराशो जीवितेऽभवत् ॥१६६८॥

---

१६४४. ¹) Emended with C; A °भीतिवती. १६६१. ¹) प्राह्णे कुतश्चि, पसः, चक्रे स्वकुटीं तां, supplied by A₂ in space left by A₁. १६६२. ¹) Thus corr. by A₂ from A₁ चाधम°.—²) Emended; A °मेचका°.

तेन प्रयागोपहृतं भोज्यं तदनुरोधतः । स्पृष्टमेव न भुक्तं तु तीव्रदुःखोल्बणात्मना ॥१६६९॥
का वार्तेति प्रयागेन प्राङ्गनस्थेन पृष्टया । तापस्या भाव्यया व्यक्तमुक्तो भोजवधस्ततः ॥१६७०॥
मिथ्यैतदिति तेनार्थं कथ्यमानोपि पार्थिवः । श्रुतिं तामङ्कशकुनं परीक्ष्याबुद्ध नान्यथा ॥१६७१॥
नारोहति गिरं शत्रोरप्रियाख्यायिनोपि यत् । तस्य संववृते दुःखं निमग्नस्य तदापदि ॥१६७२॥
स शोचन्नात्मजं बाल्ये नीत्वै यां यन्त्रणां व्यधात् । आजन्म दुःखदायित्वं मेने तस्यात्मनस्तया॥ १६७३॥
हतः स समरे वृत्त्या प्रवीरस्पृहणीयया । अङ्के तेनातिवात्सल्यादङ्कशायीव लालितः ॥१६७४॥
गात्रेषु हारान्पुत्रस्य यौवनव्यूढवक्षसि । पश्यन्नात्मनि संकल्पैर्विह्वलः सोकृताशिषः ॥१६७५॥
रक्षणीयो हतो[1] बालो वृद्धस्त्वेवं स्वजीवितम् । रक्षाम्यनुचिताचारैर्[2]जिह्रायेति स चिन्तयन् ॥१६७६॥
एवं स पुत्रशोकेन धृतावाच्यव्यथो व्यथन् । निनाय तापसावासे द्वितीयामपि यामिनीम् ॥१६७७॥
कृतार्थनः प्रयागेन प्रयातुं भगवन्मठम् । शोकहारितधी रात्रौ न संकल्पमपि व्यधात् ॥१६७८॥
लम्बेन्दुवदनं सान्द्रावश्यायाम्भोश्रुवर्षिणी । रथाङ्गाक्रन्दिनी रात्रिः सशोकेवाथ सागमत् ॥१६७९॥
क्षुत्पिपासापरिक्षामं प्रभुं वीक्ष्य स तापसः । प्रार्थ्यते स्म प्रयागेन प्रातर्भोक्तव्यसिद्धये ॥१६८०॥
उपनिन्ये विनिर्गत्य प्रविष्टस्तापसस्तयोः । सव्यञ्जनान्नपूर्णे द्वे पात्रे -- क्षणात्पुरः ॥१६८१॥
कस्यापि गृहिणो यागोत्सवादेते मयाहृते । तस्मिन्नित्युक्तवत्यूचे विनिश्वस्य प्रयागकः ॥१६८२॥
राजन्स्वामिवियोगेस्मिन्पश्य लोकस्य सुस्थताम् । स तं जगाद विहसन्किं मूढ इव भाषसे ॥१६८३॥
यो गतो गत एवासौ तत्क्षत्या नापरः क्षतः । सर्वो निजसुखापेक्षी न किंचित्कोपि शोचति ॥१६८४॥
लोकैकचक्षुषि गते परलोकमर्के लोकः स्वपित्यखिल एव सुखं गृहेषु ।
कोन्यो विचिन्तयितुमर्हति विश्वमेतत्तिष्ठेन्मया विरहमेत्य कथं किलेति ॥१६८५॥
पुत्रस्य स्नेहविश्वासः पूर्वमास्त क्षये श्रुते । यथैकः प्रभवेन्नान्यस्तथा स्नेहोपि देहिनः ॥१६८६॥
अहमेव हतं पुत्रं श्रुत्वा जीवितजीविनम् । तिष्ठामि स्वस्थवद्यत्र तत्रान्यो निन्द्यतां कथम् ॥१६८७॥
इत्युक्त्वा विरते राज्ञि पुनर्गूढं प्रयागकः । प्रैरयत्तापसं भोज्यं कर्तुं ते भाजने त्यजन् ॥१६८८॥
ह्यस्तनव्ययशिष्टं मे पर्याप्तं नास्ति वेतनम् । यते तथापीत्युक्त्वा स सखेद इव निर्ययौ ॥१६८९॥
गोप्यं रहस्यभणितमत्यल्पहृदयातिथि । अमृतं पारतमिव नाल्पसत्त्वैः सुदुर्जरम् ॥१६९०॥
कुल्यो मनोरथो नाम विप्रस्य वनवासिनः । सुहृत्तपस्विनस्तस्य तां कथामुपलब्धवान् ॥१६९१॥
राज्ञः संदर्श्य दायादं भवावो भूतिभाजनम् । इत्युक्त्वा तेन निन्ये स द्रोग्धूर्तां क्षुद्रतापसः ॥१६९२॥
अज्ञे भृत्येन गर्वेण जातः सोम्स्येन केनचित् । सदृशं यत्सदसतोर्ज्ञापकं जन्मकर्मणोः ॥१६९३॥
इल्लाराजस्तां प्रवृत्तिं बुद्ध्वा ताभ्यां न्यवेदयत् । उच्चलाय समादिक्षत्कार्ये तत्र तमेव सः ॥१६९४॥

---

१६७१. 1) Emended; A तेनार्धं. १६७३. 1) स्तया supplied by $A_2$ in space left by $A_1$. १६७६. 1) Thus corr. by $A_2$ from $A_1$ हुतो.—2) रक्षाम्यनु and ताचारै supplied by $A_2$ in space left by $A_1$. १६७९. 1) Thus corr. by later hand from $A_1$ °वदना.—2) Emended with C; A °श्यायांम्भो°. १६८१. 1) Two *aksharas* wanting in fourth *pâda;* the *lacuna* not marked in A; C तद्दीक्षणात्पुरः. १६८६. 1) Thus $A_1$; $A_2$ पूर्वमासक्षये. १६८८. 1) प्रैरयत्तापसं supplied by $A_2$ in space lef by $A_1$. १६९२. 1) Emended; A द्रोग्धूतां.

केचित्तु भूतिभिक्षाख्य[1]मिल्लाराजोपसर्पणे । कायस्थं कारणं प्राहुस्तयोस्तापसविप्रयोः ॥१६९५॥
वार्ता चेदृगतीतेयं सुबहुश्रोत्रसंकुले । काले तत्कृत्यपाशस्य तस्यैव द्रोहमुख्यता ॥१६९६॥
श्वपाकस्कन्धमारूढो लब्ध्वा तास्ता विमाननाः । विपेदे यत्स कारायां युक्तं तत्तस्य कर्मणः ॥१६९७॥
क्षुत्क्षामो हर्षदेवस्तु प्रयागेनार्थितोसकृत् । मत्यये पुत्रशोकेपि भोजनायाकरोन्मनः ॥१६९८॥
गृहीतभोजनं आनन्मार्गं प्राप्तं स तापसम् । तमोरेर्वैरिवैरैक्षि नीडाद्विभुरिवाण्डजः ॥१६९९॥
अपश्यंश्च कुटीं कृत्स्नां वेष्टितामेत्य शस्त्रिभिः । शुश्राव चाङ्गनद्वाराद्वार्यमाणार्गलाध्वनिम् ॥१७००॥
आनन्दाख्यं ततो द्रोहमङ्गनात्तापसाधमम् । सशस्त्रिणं मुक्तमहीस्थाश्रयन्तं व्यलोकयत् ॥१७०१॥
मुक्तं विसृज्य कृत्वा च द्वारमुद्घाटितारारि । त्यक्तभीरादधे लघ्वीं क्षुरिकामन्तिकास्थिताम् ॥१७०२॥
एकस्तत्सविधं क्रूरः साहसाहंक्रियोन्मदः । आरुरोहाथ कृष्टासिधेनुः कवचितो भटः ॥१७०३॥
तं राजा संकटकुटी[1]रुद्धायामोप्यपातयत् । क्षितौ व्यायामकुशलो नावधीत्कृपया पुनः ॥१७०४॥
पतितेन हतेनार्थो वराकेणामुना न मे । इत्यूचे दुरहंकारमत्तस्तस्मिन्नपि क्षणे ॥१७०५॥
नीध्रमुत्पाद्य निपतन्नेकोन्योप्युत्पतन्भटः । भयाद्भूमौ न्यपततां तं विलोक्योद्यतायुधम् ॥१७०६॥
पृष्ठे पूर्वं प्रविष्टस्य[1] निघ्नन्स्थानकनिष्ठुरः । स दरोरिव चामुण्डा रेजे दण्डाकृतिः क्षणम् ॥१७०७॥
न सिंहनादैर्नो भेरीतूर्यघोषैर्न वोन्मदैः । शस्त्रशब्दैः स शुशुभे भूपस्यान्तक्षणे रणः ॥१७०८॥
आखोर्भाण्डप्रवेशस्य बिडाला इव डामराः । परं प्रवेशितास्तस्य निःशब्दं शस्त्रिणः कुटीम् ॥१७०९॥
अथान्यो नीध्रमार्गेण संप्रविष्टः प्रयागकम् । हत्वा दोष्णि च शीर्षे च राजानं समुपाद्रवत् ॥१७१०॥
राज्ञः प्रहरतः शस्त्रं वञ्चयित्वा स शस्त्रभृत् । वक्षसि क्षुरिकाघातद्वयं प्रादात्कृतत्वरः ॥१७११॥
वर्णान्महेश्वरेत्येनान्निरुक्का गतजीवितः । पपात निहतो भूमौ छिन्नमूल इव द्रुमः ॥१७१२॥
पलाय्य संप्रविशतो योग्यश्रीरस्य यादृशः । चक्रवर्त्यपि स प्राप वधं वेश्मनि तादृशम् ॥१७१३॥
नान्यः स इव कालेस्मिन्ददृशे भूतिमान्नृपः । गर्भनिर्हरणत्वं च तस्येवान्यस्य नेक्षितम् ॥१७१४॥
यद्येकेनैव संग्रामवैमुख्येनोन्नतात्मनः । सर्वप्रकारसुभगं माहात्म्यं तस्य खण्डितम् ॥१७१५॥
नेयबुद्धित्वमेवासीदथवा तस्य दूषणम् । सर्वक्लेशावहा दोषाः कृत्स्नास्तन्मन्त्रिणां पुनः ॥१७१६॥
द्वाचत्वारिंशतिं[1] साष्टमासा यस्य वयःसमाः । स शुक्लभाद्रपञ्चम्यां हतोब्दे सप्तसप्तते ॥१७१७॥
राजा दुर्योधन इव स्ववंशाच्छेदमिच्छता । सोभूज्ज्ञातकयोगेन कारितः स्वकुलक्षयम् ॥१७१८॥
तस्यासन्क्ष्मार्कजौ[1] जीवबुधौ भक्रोष्णगू[2] शशी । तनयामित्रजामित्रखेषु कर्कटजन्मनः[3] ॥१७१९॥

---

१६९५. [1]) Emended; A भूमिभ्ना°. Cf. viii. 94. १७०४. [1]) Emended; A संकटी कु°. १७०७. [1]) Emended with C; A प्रविष्ट. १७१७. [1]) Emended; A द्वाचत्वारिंशत. १७१९. [1]) Emended; A तस्यासी क्ष्मा°.—[2]) Emended with C; A °ष्णगी.—[3]) A₂ explains this verse by the following *janmachakra* :



यम्यदैत्येऽध्वगापेषु क्षमहात्मजनेषु सन् । आहुः ब्रह्मशिलाकाराः कौरवादीन्कुलान्तकान् ॥१७२०॥ 1720
निर्ब्रह्मण्यो जनः कृत्स्नो देशेऽस्मिन्वैरिणोऽन्तिकम् । दस्योरिव शिरश्छित्त्वा स्वामिनोऽपि निनाय तत् ॥१७२१॥
तस्योत्तमाङ्गे भूभर्तुश्छिद्यमाने ससागरा । चकम्पे भूर्निरभ्रापि चोर्वृष्टिं महतीं जहौ ॥१७२२॥
तन्मुण्डे लगुडारूढे यद्युक्तं जनो व्यधात् । अभूत्तेनाभिशापेन सोऽपि दीर्घोपसर्गभाक् ॥१७२३॥
मण्डले देवबिम्बानां यथामुष्मिन्विपाटनम् । तथा सर्वं प्रवृत्ते भूपतेर्मुण्डखण्डनम् ॥१७२४॥
नैशिष्ट नन्दिकरः प्राग्मीचित्स्वादुखलो नृपः । भूत्वा चिरमुदक्सुस्तु कारयामास बाह्निसात् ॥१७२५॥ 1725
धिक्कष्टं तस्करस्येव तादृशश्चक्रवर्तिनः । गोबलाद्यां विना माता शरीरेणान्तसत्क्रिया ॥१७२६॥
भृत्यस्त्यक्तो नष्टवंशो गौरकाख्येन केनचित् । स काष्ठागारिणा चक्रे नमोनाथ इवाभिसात् ॥१७२७॥
दीर्घो हर्षनृपोदन्तः सोऽयं कोऽप्यद्भुतावहः । रामायणस्य नियतं प्रकारो भारतस्य वा ॥१७२८॥
भाग्याम्बुवाहनडितसत्तरलाः श्रियस्तास्तावदवसानविरसं प्रसभोचतत्वम् ।
तथापि नैव बत मोहहताशयानां शान्तिं प्रयाति विभवानुभवाभिमानः ॥१७२९॥
मात्रत्यप्यधरोऽधिकापरिकरे नैकापि चक्रन्द तं तावत्स्वप्यनुगेषु नानुसृतवान्कोप्यास्त तीर्थे न वा ।
लोकस्य स्वसुखोपलिप्तमनसो वीक्ष्येति निःस्नेहतां निर्वेदं समुपेत्य नाभ्यति विकस्वान्ते वनान्ते रतिम् ॥१७३०॥ 1730
नाटी किंचिद्भवति नियतं यत्र पश्चाच्च किंचिन्मध्ये कस्मात्सपदि घटयन्सौख्यदौःस्थ्यानुरोधम् ।
निःशीर्षाङ्घ्रिर्नट इव मुहुः कोपि जन्तुर्नटित्वा नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति ॥१७३१॥
श्रीः सातवाहनकुलेऽकृत कान्तिराजवंशे त्वजन्त्युदयराजकुले प्रतिष्ठाम् ।
भृङ्गं सुरैर्विरहितं जहती हिमाद्रेर्दिव्ये तटे सुरगिरेरिव वासरश्रीः ॥१७३२॥

इति काश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कवेः कृतौ राजतरङ्गिण्यां सप्तमस्तरङ्गः ॥
समाशानवनावत्यां त्र्यधिकोनायां महीभुजः । उत्कर्षोदयराजस्य वंश्या जाताः प्रकीर्तिताः ॥ -
राजानः ६ श्लोकाः १७२३[1] ॥

१७२८. ²) A₂ gloss स्नु. १७३१. ¹) Emended; A मीवात°.—²) Emended; A कान्स्तराज°. Cf. vii. 1285.
*Colophon.* Thus A₁, perhaps for १७३२. A₂ adds here लिखितमेव यथा राजानकरत्नकण्ठेन.

## ॥ अष्टमस्तरङ्गः ॥

ॐ नमो विघ्नहर्त्रे ।

गौडाः कञ्चुकिनो जरद्दरवृषः कुब्जस्तुषारद्युतिर्नित्याप्तोपि बहिष्कृतः परिकरः सोयं समस्तोप्यहो ।
अर्धाङ्गस्तीकृताङ्गनस्तया[1] चारित्रचर्याविदा सा भिक्षाङ्गुरितं चराचरगुरोरन्तःपुरं पार्वती ॥१॥
उच्चकोपप्रसादोभूत्कंचित्कालं[1] नवो नृपः । प्राङ्मन्थादिव पाथोधिरव्यञ्जितविषामृतः ॥२॥
सोदरो डामरीयश्च तस्याभूतां भृशोन्मदौ । मेघस्येव पुरो वातावग्रहौ स्फूर्तिहारिणौ ॥३॥
यत्किंचनविधाय्यासीद्भ्राता यवीयनोन्मदः । राज्ञो दुष्प्रक्रिया दौःस्थ्यकरी वात्सल्यशालिनः ॥४॥
सोनिशं हि गजारूढो विकोशासिः[1] परिभ्रमन् । आत्तसारां महीं पीतरसां रविरिवाकरोत् ॥५॥
एकीभूतानमून्सर्वाण्डामराग्निर्दहामिना । इत्युक्तं तेन नोर्वीभृत्तस्यैकापो वचोमहीत् ॥६॥
इत्यवो मन्त्रिसामन्ता द्वैराज्येच्छुः सहोदरः । भूर्निष्कौशल्यभूः किं न भूपतेस्तस्य संकटम् ॥७॥
अधिराज्याभिषेकेण सत्कृत्य भ्रातरं ततः । पातुं लोहरसंबन्धं प्राहिणोन्मण्डलान्तरम् ॥८॥
द्विरदायुधपत्त्यश्वकोशामात्यादि स व्रजन् । निनाय सर्वं वात्सल्यादनिषिद्धोग्रजन्मना ॥९॥
आशङ्क्य कोष्ठभृत्येभ्यः प्रवेशे प्रत्यवस्थितिम् । उत्कर्षजं प्रतापाख्यं सह निन्येब्रवीच्च तान् ॥१०॥
कुर्याममुं नृपमहं प्रातिहार्यं समाचरन् । नम्राः स्वभृत्यवत्तस्थुर्भूभुजो भूम्यनन्तराः ॥११॥
दिनानि सप्त संरुद्धे मार्गे तदनुयायिनाम् । गायनः कनको लब्धान्तरो देशान्तरं ययौ ॥१२॥
वाराणस्यां विजहता निर्वेदात्तेन जीवितम् । हर्षभूभर्तृभृत्येषु व्यक्तं निन्ये कृतज्ञता ॥१३॥
ऊर्ध्वाधिरोहं दाक्षिण्याद्दस्यूनामुच्चलः पुनः । सेवास्मृत्या सुधीः सेहे चन्दनो भोगिनामिव ॥१४॥
तथा जनकचन्द्रेण दर्पाद्व्यवहृतं तदा । राजान्ये डामराश्चासन्यथा नष्टप्रभा इव ॥१५॥
अभयस्योरशाभर्तुस्तनयायामजीजनत् । राज्ञ्यां विभवमत्यां यं भोजो हर्षनृपात्मजः ॥१६॥
जातं मृतद्वित्रिपुत्रानन्तरं गुरुभिः शिशुम् । आयुष्कामैस्तमाबद्धाभव्यभिक्षाचराभिधम् ॥१७॥
अब्दमप्यपरिसंतानतन्तुत्वेनाप्रियोचितम् । ररक्ष तद्गिरा राजा राज्याश्चाङ्के समार्पयत्[1] ॥१८॥ तिलकम् ॥
तमादाय स्वयं यासौ यावद्राज्येकरोन्मनः । तावद्भारोङ्गितज्ञो नीतिकौटिल्यमुच्चलः ॥१९॥
तुल्योत्साहासहिष्णुत्वादस्मै कुप्यन्तु डामराः । एष एवातिसत्काराद्वाह्यास्तु विशदाशयः ॥२०॥
इति संचिन्त्य स द्वारदिस्सां तस्योदघोषयत् । यया विकारं भययुर्भीमादेवादयोखिलाः ॥२१॥

१. [1]) Thus $A_1$; $A_2$ निम्याङ्गु°. २. [1]) Emended; A °भूर्त्किंचित्कालं. ५. [1]) कोशासि supplied by $A_2$ in space left by $A_1$. १०. [1]) Emended with C; A कृतं. १८. [1]) Emended with C; A समर्पयत.

तेषां तस्य च मात्सर्ये यदा पर्वाभिमानवी । तदान्योन्याभिता भृत्याः पणं चक्रुर्युयुत्सवः ॥२२॥
दिदृक्षुः क्ष्मापतिस्तेषां सेतुपृष्ठे रणं मिथः । वार्यमाणोपि सचिवैरारुरोह चतुष्किकाम् ॥२३॥
द्वन्द्वयुद्धे प्रवृत्ते तु डामरैरुभयाश्रितैः । अथ प्रारभ्यताकस्मात्संरब्धैर्दारुणो रणः ॥२४॥
सेतुद्वयाध्वना युद्धे लग्ने राज्ञि सरित्तटात् । योधा जनकचन्द्रस्य शरवर्षमवाकिरन् ॥२५॥
वान्तः शराः ससीत्कारास्ते स्पृष्टनृपविग्रहाः । मग्नाः स्तम्भेष्वदृश्यन्त कोपेनेव प्रकम्पिनः ॥२६॥
आकृष्य दोर्भ्यां भूपालं बलादिव ततोनुगाः । प्रविष्टा मण्डपद्वारं चक्रिरे पिहितार्गलम् ॥२७॥
शस्त्रं जनकचन्द्राद्या भीमादेवादयोपि ते । चतुष्किकायां चकृषुस्ततोन्योन्यं जिघांसवः ॥२८॥
तुमुले तत्र शल्याङ्कं भीमादेवानुगोभिनत् । तीक्ष्णो जनकचन्द्रस्य कालपाशात्मजोर्जुनः ॥२९॥
स वीक्ष्य स्वं क्षतं द्रोहं प्रयुक्तं भूभुजा विदन् । पादप्रहाराञ्चिदधे क्रोधाद्द्वारि नृपौकसः ॥३०॥
अभग्ने तत्र संत्रासास्त्नानद्रोण्यन्तरं गतम् । अधावत्कृष्टशस्त्रीको भीमादेवो जिघांसया ॥३१॥
स्तम्भच्छन्नस्तद्विलोक्य तद्गेहगणनापतिः । मध्यं जनकचन्द्रस्य कृपाणेन द्विधा व्यधात् ॥३२॥
तस्मिन्हते तदनुजौ गग्गसज्ञौ प्रधाविती । स एव करवालेनालक्षितोकृत विक्षतौ ॥३३॥
अवभज्य तह वक्षः सुचिरं नावतिष्ठते । उदयकर्मा च पुमानिहस्यात्स्युवतं रिपुम् ॥३४॥
स हि द्विभाद्रे तत्राब्दे हर्षान्ताहादनन्तरम् । अन्यूनानतिरिक्तैर्येस्त्रिभिः पक्षैरदृश्यत ॥३५॥
यद्द्रोपकर्तुरप्येष द्रोहं यत्स्वामिनो व्यधात् । औत्कट्यात्पाप्मनस्तस्य क्षिप्रमेव क्षयं ययौ ॥३६॥
सान्तस्तोषे कोपशोकावाविष्कुर्वति कृत्रिमौ । भीमादेवः पलायिष्ट गग्गस्तु व्यश्वसीन्नृपे ॥३७॥
प्रहिते लोहरं गग्गे स्वमुल्लाघयितुं क्षतम् । त्रस्तास्तेन व्यसृज्यन्त स्वोर्वीरन्येपि डामराः ॥३८॥
उपायापकृतैः प्राप्यं राज्यं दस्युभिरुज्झितम् । एवं शनैरवष्टम्भं भेजे भूपतिरुच्चलः ॥३९॥
तेनाथ लब्धस्थैर्येण दिनैरेव जिगीषुणा । त्याजिताः क्रमराज्यान्तर्हयसैन्यादि डामराः ॥४०॥
ततो मडवराज्यं स प्रस्थितो त्रिप्रियप्रियान् । डामरान्कालियमुखान्बद्ध्वा शूले व्यपादयत् ॥४१॥
हल्लाराजोपि बलवांस्तेन क्रान्तक्षितिः क्रमात् । बलैर्नगर एवोभैरवस्कन्देन घातितः ॥४२॥
प्राग्जन्मप्रेमसंस्कारादन्तरज्ञतयाथ वा । तस्य पुत्र इव प्रीतिर्गग्ग एव व्यवर्धत ॥४३॥
न सेहे नाममात्रं यः कण्टकानां प्रियप्रजः । नृपो गग्गाय चुक्रोध सापराधाय न क्वचित् ॥४४॥
राज्यारम्भेनुयुक्तेन भीमादेवेन धीमता । उक्ते शुभावहे शिक्षे द्वे स मन्त्रवदस्मरत् ॥४५॥
एकया लोकवार्तायै प्राक्कालप्रभृति निर्गतः । बहिरहिरिय बाह्यालीरवारीद्वादिनक्षयम् ॥४६॥
अन्ययोत्थानशीलेन भुक्त्वा नामारि वैरिणः । अर्धरात्रेपि यात्राभिस्तेनाक्षिप्यत विग्रहः ॥४७॥
तस्यैवालुप्तधैर्यस्य राज्ञां मध्ये मनस्विनः । कार्पण्योपहतं वृत्तं मार्प्यभूदमलीमसम् ॥४८॥
अथोच्चलसदाचारजाह्नवीजलमज्जनात् । कुनृपोदीरणोद्भूता गिरः पाप्मापनेष्यते ॥४९॥
तेनानुपचिताङ्गेन मायशो विनिवारिताः । अनूरुणेव सद्वृष्टिध्वंसिनो ध्वान्तसंचयाः ॥५०॥

२६. ¹) स्तू supplied by $A_2$ in space left by $A_1$. २७. ¹) Emended; A पिहता°. ३९. ¹) Emended; A प्रावराज्य. ४४. ¹) Emended; A सापराध न क्वचित्. ४७. ¹) Thus $A_1$; corr. by later hand into अन्यायो°. ४८. ¹) तस्यैवालुप्तधैर्यस्य राज्ञां मध्ये supplied by $A_2$ in space left by $A_1$.—²) Thus $A_2$; $A_1$ कार्पण्यापहतं.—³) Thus $A_2$; $A_1$ मामाभूद°.

प्रायोपविष्टमभवे देहत्यागप्रतिज्ञया । निबद्धया प्रत्यवेक्षां धर्माध्यक्षानकारयत् ॥५१॥
निशम्य कृपणस्यार्तिं क्रन्दितं तदभिद्रुतम् । बभूव तस्य स्वात्मापि नाभिमान्यो महात्मनः ॥५२॥
कार्मिणो यस्य वा दोषादार्तोक्रन्दितमुद्ययौ । तस्य स्वबान्धवाक्रन्दैस्तस्मिन्कुले शशाम तत् ॥५३॥
अबलानुग्रहव्यग्रे तस्मिन्राजनि सर्वतः । वास्तव्या बलिनस्तस्थुरबलास्त्वधिकारिणः ॥५४॥
सोऽन्वेषैकपरो राजेत्यज्ञात्वा कथितं जनैः । यं यं स्वदोषमश्रौषीत्तं त्वरितमत्यजत् ॥५५॥
येन केनापि संप्राप्तः प्राप्त्युपायेन पार्थिवः । अमोघदर्शनः सोऽभूत्कल्पवृक्ष इवार्थिनाम् ॥५६॥
सुधावर्षी प्रियालापप्रीतिदायैर्जनप्रियः । नाशकत्सेवकांस्त्यक्तुं विश्रम्भ[1]भवनेष्वपि ॥५७॥
प्राप्यप्रभैः प्रतिकलं तस्य सेवाविधायिभिः । प्राप्तं त्रिचतुरान्वारान्क्षणदास्वपि दर्शनम् ॥५८॥
सेव्यमानः सदाक्षिण्यः क्षणेनैव फलप्रदः । कस्यैन्द्रजालिकैरुप्तः शाखीव न बभूव सः ॥५९॥
वास्तव्यानां निदाघार्तिं तेन दैन्यनिवारणम् । चक्रे पितेव पुत्राणां संत्यक्तेतरकर्मणा ॥६०॥
स्वकोषितानि धान्यानि विक्रीणानोऽल्पवेतनैः । दुर्भिक्षमुद्गतावेव जघान जनवत्सलः ॥६१॥
निवार्य चौर्याचरणात्कृपार्द्रस्तस्करानपि । कोशाध्यक्षान्स विदधत्कारागर्भजीविकान् ॥६२॥
कः संविभाज्यः केऽलभ्या विपदः कस्य मण्डले । इत्यन्विष्यन्सदैवैकं चारैश्चिन्तापरोऽभवत् ॥६३॥
तस्यैकोऽप्यर्थनैःस्वार्थं नाम कोऽपि महान्गुणः । अनुषक्तो गुणैस्तैस्तै राज्ञः पल्लवितोऽभवत् ॥६४॥
स स्थित्यै दण्डयन्दण्ड्यानधाक्षेपभयाद्धनम् । तेषां नादत्त सत्कर्म शुद्धये तांस्त्वकारयत् ॥६५॥
प्रस्तुतस्यार्थिने दातुं वस्तु तस्यैकसंख्यया । सहस्रसंख्यया दानभङ्गागात्पूर्णतां यदि ॥६६॥
भूपतेर्धीर्यथा मह्यं देहि देहीति गां वदन् । तथास्मै देहि देहीति वदन्दाता स शुश्रुवे ॥६७॥
अनुदात्तं क्षिप्तकालं क्षीणसंख्यमसत्कृतम् । नेमृदूतादिनीतार्धं न तद्दत्तमदृश्यत ॥६८॥
उत्सवे दैन्यविश्रमी रञ्जने कार्यसाधने । आलेख्यलीनशाखीव न सोऽलभ्यफलोऽभवत् ॥६९॥
उत्सवे शिवरात्र्यादौ जनतां सोऽसिचद्धनैः । महयोगे पयःपूरैर्महेन्द्र इव मेदिनीम् ॥७०॥
ताम्बूलदानव्यसनं पराध्योत्सवता तथा । नाभूद्धर्षनृपस्यापि तादृक्तस्यास्त[1] यादृशी ॥७१॥
लोष्टमात्रावशेषेऽपि लब्धे नृपपदे व्यधात् । स दानविभ्रमांस्तान्ये[1] धनदेनापि दुष्कराः ॥७२॥
निर्माणलोठनैर्धौतामजलं वाजिनां क्रयैः । काश्मीरिकोऽपि[1] चक्रे स न भूतस्करसाद्धनम् ॥७३॥
अध्वन्यध्वनि योगेन प्राणविन्यासनैस्तथा । बभूव सर्वकृत्यज्ञः सोऽन्तरात्मेव देहिनाम् ॥७४॥
भोगाग्राज्योचिताग्निप्रा भैषज्यं व्याधिपीडिताः । वेतनं वृत्तिहीनाश्च तस्मात्समुपलेभिरे ॥७५॥
पिण्योपरागकेत्वादिदुर्निमित्तोपशान्तिषु[1] । गोसहस्राश्वहेमादिसंभवैः सोऽभजद्द्विजान् ॥७६॥
नन्दिक्षेत्रे पुरं कृत्स्नं दग्धमुत्पातवह्निना । पूर्वाधिकगुणं तेन नवं राज्ये व्यधीयत ॥७७॥
श्रीचक्रधरयोगेशस्वयंभूस्थानयोजनम् । जीर्णोद्धृतिव्यसनिना कृतं तेन सुकर्मणा ॥७८॥
हर्षदेवेन यो निन्ये श्रीपरीहासकेशवः । परिहासपुरे तं स नवं नरपतिर्व्यधात् ॥७९॥

५३. [1]) Emended; A दौषादर्शि°; C दोषादर्शा°. ५७. [1]) A विस्रम्भ°. ७१. [1]) Thus $A_1$; $A_2$ °स्यास्तु. ७२. [1]) Emended; A °विभ्रमास्तान्ये. ७३. [1]) Emended; A काश्मीरकोऽपि. ७६. [1]) Emended; A °पमार्तिषु.

प्राग्वर्णितभुजावल्या भूषितो हर्षनीतया । तेन त्रिभुवनस्वामी निर्लोभेन महीभुजा ॥८०॥
जयापीडाहृतं हर्षोत्पाटने प्लुष्टमग्निना । सिंहासनं नवं चक्रे स राज्यककुदं नृपः ॥८१॥
लब्ध्वा तदर्धाध्यारोहं भर्तुः प्रेम्णातिदुर्लभम् । सामान्ययापि देवीत्वं जयमत्या न दूषितम् ॥८२॥
सा ह्यानृशंस्यमाधुर्यत्यागसत्प्रियतानयैः । अस्तम्भार्तपरित्राणमुख्यैर्भव्याभवद्गुणैः ॥८३॥
लब्धभूपालवाल्लभ्या नार्यः क्रोधात्प्रजासु यत् । राक्षस्य इव भङ्गाय लावण्यललिता अपि ॥८४॥
प्रियप्रजस्यायमन्यो गुणः सर्वगुणाग्रणीः । उच्चलक्ष्मापतेरासीदर्थनैस्पृह्यशालिनः ॥८५॥
जिघांसवः पापकामाः परस्वादायिनश्च ताः । रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥८६॥
तेनेतिहासिनीं नीतिं श्रद्दधानेन सर्वदा । येन संपठता श्लोकं कायस्थोन्मूलनं कृतम् ॥८७॥
यस्ते विषूचिकाशूलसंन्यासेभ्यः किलेतरे । ग्रन्थ्याशुकारिणो विश्वं प्रजारोगा नियोगिनः ॥८८॥
पितरं कर्कटो हन्ति मातरं हन्ति पुत्तिका । हन्ति सर्वं तु कायस्थः कृतघ्नः प्राप्तसंभवः ॥८९॥
गुणान्समर्थ्य स्फुरता येनैवोत्थाप्यते शठः । वेताल इव कायस्थस्तमेवाहन्ति हेलया ॥९०॥
विषवृक्षो नियोगी च यदेशाश्रित्य वर्धते । विघ्नं करोति तस्यैव स्थानस्थानभिगम्यताम् ॥९१॥
तेन ते क्ष्माभुजा मानक्षतिकार्यनिवारणैः । काराप्रवेशैश्च खलाः शमं नीताः पदे पदे ॥९२॥
कार्यान्निवार्य बहुशः सहेलाद्यान्महत्तमान् । भङ्गामूत्रमयं वासः कारायां पर्यधापयत् ॥९३॥
स कार्यवेषं हास्याय समार्यं चारणोचितम् । अकारयद्भूतभिक्षं धावनं डोम्बैर्योधवत् ॥९४॥
स प्रांशुर्वेष्टितश्मश्रुदध्योपेतोत्फलन्पुनः । शूलहस्तः सजाम्बूकः केपामासीच्च हास्यकृत् ॥९५॥
स शीर्षदर्शनं साम्यवादवेश्याश्रिटान्वितम् । मिषवेश्यं कंचिदग्रे नृत्तवाद्यमकारयत् ॥९६॥
बद्धान्त्यं शकटे नर्म क्षुरलूनार्धमस्तकम् । अकारयत्सटाम्बष्टचीनपिष्टच्छटाङ्कितम् ॥९७॥
ते कुम्भवादनैर्मुण्डमण्डनैश्चाङ्किताभिधाः । नियोगिनो भ्रम्यमाणाः सर्वतः ख्यातिमाययुः ॥९८॥
कार्यभ्रष्टा मलक्लिन्नक्षीणवस्त्रावगुण्ठनाः । सर्वार्थिनो व्यभाव्यन्त केऽप्यटन्तः प्रतिक्षपम् ॥९९॥
वृथावृद्धाः सुखप्राप्यं पाण्डित्यं भूर्जखर्परे । मत्वा बाला इवाचार्यगृहे प्रारेभिरे श्रुतम् ॥१००॥
केप्युच्चैरट्टभिक्षाकाः सादरं स्तोत्रपाठिनः । कृतानुपाठाः स्वापत्यैः प्राज्ञे लोकमहासयन् ॥१०१॥
माता स्वसा सुता भार्या स्वापि कैरप्यकार्यत । सामन्तसेवनं कार्यप्राप्त्यै सुरतसेवया ॥१०२॥
जातकस्वप्नशकुनसुलक्षणनिरीक्षणम् । कारयद्भिः शठैरन्यैर्गणकाः परिखेदिताः ॥१०३॥
पिशाचा इव शुष्कास्या रूक्षश्मश्रुकचाः कृशाः । बद्धाः परैर्व्यभाव्यन्त भ्रुकुलामुखराकृतयः ॥१०४॥
नृपेण कार्थिणां दर्पलिङ्गनाशे विपाटिते । अक्ष्णोर्ज्ञातिपरिज्ञानक्षमत्वं समजायत ॥१०५॥
भारतस्तवराजादिस्तोत्रपाठमशिश्रियन् । ते दुर्गोत्तारिणीविद्याजपं व्याकुललोचनाः ॥१०६॥
इत्थं दौःस्थ्योदये दीर्घे मज्जन्तो नित्यदुर्जनाः । तस्मिन्राजनि कायस्था व्यलोक्यन्त पदे पदे ॥१०७॥
भिन्नसंधानभूर्यर्थदानभोज्यादिढौकनैः । न हि मोहयितुं शक्ताः राज्ञं तं तेऽन्यराजवत् ॥१०८॥
तान्प्रजाकण्टकान्दुष्टान्कृतधीरकृतानिशम् । तैस्तैः शुचिभिरध्यक्षैः स विशामीश्वरो वशान् ॥१०९॥

९४ [1]) Emended ; A °भूतभिषधा°.—[2]) Emended, A डांम्ब°.

भूतेशस्य यथा पुरी हुतवहप्लुष्टा स्वदाशावलाद्भूयः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमाम् ।
एवं कायस्थकुटुम्बिकुम्भिलचिवमाया[1] पञ्चानलीलीढामुच्चलदेव निर्वृतिसुखस्थित्या पुरीं स्वां क्रियाः ॥११०॥
शिवरथ्योत्सवे[1] शोकमग्नं शिवरथाभिधः । विद्वान्पदंस्तेन द्वारस्थाध्यक्षो व्यधीयत ॥१११॥
व्यवहारानभिज्ञोपि कंचित्कालमदीदृशत् । शुचित्वादार्यसाम्नः स क्षामन्कृतयुगस्थितिम् ॥११२॥
शीघ्रदण्डत्वमुच्चण्डतेजसस्तस्य भूपतेः । क्रूरानुद्दिश्य कायस्थान्धीमद्भिर्बहमन्यत ॥११३॥
न हि क्षुद्राश्वकायस्थपिशाचाविष्टवैरिणाम् । शासन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ॥११४॥
चिरेण दण्डिता ह्येते कुर्युर्दण्डभयाद्द्रुतम् । लब्धान्तराः प्राणहरं कृच्छ्रं किंचित्प्रशासितुः ॥११५॥
दण्ड्यानां दण्ड्यमानानां पुत्रस्त्रीमित्रबान्धवाः । राज्ञा विचारशीलेन न तेनोपद्रुताः क्वचित् ॥११६॥
कर्णेजपांश्चोष्टधरप्रमुखांस्तेन दुःखदैः । कर्मभिः क्लिश्नताध्वापि पैशुन्यस्य खिलीकृतः ॥११७॥
विस्मृतिं लब्धराज्यानां पूर्वसंकल्पवासनाः । प्रयान्ति प्राप्तजनुषां गर्भवासस्पृहा इव ॥११८॥
प्राभाज्यावेगमात्किंचित्सदसद्यद्यचिन्तयत् । राज्ये तत्र विसस्मार जातिस्मर इवोच्चलः ॥११९॥
ददर्श शत्रोरद्रोहान्यान्द्रोग्धृन्वा पुरानुगान् । कर्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् ॥१२०॥
स्मरेत्कोपपत्तिः पूर्वपत्निद्रोहं कुतोदितः । पूर्वस्वाम्यरितां चाथ कुभृत्यस्येश्वरो जडः ॥१२१॥
शेषाहिदेहान्मेदिन्या समं प्रज्ञापि राज्यभुत् । तस्मिन्परिणता नूनं कृत्याकृत्यविवेक्तरि ॥१२२॥
तथा ह्येकस्य वणिजो व्यवहर्तुश्च सोभवत् । विवादे संशयं छिन्दन्नेत्रं स्थेयाद्यगोचरे ॥१२३॥
सौहृदागूढसद्भावे व्यापदौपयिकं धनी । न्यासीचकार दीनारलक्षं कोपि वणिग्गृहे ॥१२४॥
तेनोपयुज्यमाना च व्ययेषु वणिजः करात् । कियत्यपि गृहीताभूद्वा[1]संमाश्चान्तरान्तरा ॥१२५॥
विंशतिंशाब्दं[1] यातासु समासु न्यासधारिणम् । गृहीतशेषं दातुं स धनं प्रार्थयताथ तम् ॥१२६॥
वणिक्तु कुकृती तस्य न्यासमासाद्य सोधमः । कालापहारमकरोत्तैस्तैः कलुषधीर्मिषैः ॥१२७॥
स्रोतोभिरर्थस्तमम्भोधौ लभ्यं मेघमुखैः पयः । प्राप्तिर्भूयस्तु नास्त्येव वणिग्न्यस्तस्य वस्तुनः ॥१२८॥
तैलाक्तिरधमुखः स्वल्पालापो मृद्वाकृतिर्भवन् । न्यासग्रासविवादोद्यो वणिग्व्याघ्राद्विशिष्यते ॥१२९॥
विवादे श्रेष्ठिना शाठ्यं स्मितैः प्राक्सख्यदर्शनैः । मुक्तं मुक्तं ज्ञायमानं प्राणान्तेपि न मुच्यते ॥१३०॥
निसर्गवञ्चका वेश्याः कायस्थो दिविरो वणिक् । गुरूपदेशोपस्कारैर्विशिष्टाः सचिवादिपोः ॥१३१॥
चन्दनाङ्कालिके श्वेतांशुके धूपाधिवासिनि । विश्वस्तः स्यात्किराते[1] यो विप्रकृष्टस्य नापदः ॥१३२॥
ललाटदृक्पुटश्रोत्रहृन्न्यस्तचन्दनः । षड्बिन्दुर्वृश्चिक इव क्षणात्प्राणान्तकृद्वणिक् ॥१३३॥
पाण्डुश्यामोमिधूमार्द्रैः सूक्ष्मास्यो गहनोदरः । तुम्बीफलोपमः श्रेष्ठी रक्तं मांसं च कर्षति ॥१३४॥
सोथ निःशोषितमिषः क्रुद्धो निर्बन्धकारिणः । गणनापत्त्रिकां तस्य सभ्रूभङ्गमदर्शयत् ॥१३५॥
यदादौ श्रेयस इति न्यस्तमश्रेयसे पदम् । आनरेभ्यस्त्वयं तैतोर्गृहीता षट्शती त्वया ॥१३६॥
क्षिप्तोपानत्कषाबन्धे शतं चर्मकृतेर्पितम् । विपादिकाकृते दास्या नीतं पञ्चाशतो घृतम् ॥१३७॥

११०. [1]) A₁ indicates here a *laceuna* of one *akshara*. १११. [1]) Emended with C; A लोक°. १२५. [1]) Emended; A °भूवसमा°. Cf. viii. 154. १२६. [1]) Emended; A विंशाद्विशयातासु. Cf. v. 210. १३२. [1]) Emended; A किराते.

स्फोटने भाण्डभारस्य क्रन्दन्त्याः कृपयार्पितम् । कुलाल्या बहुशः पश्य भूर्जे लग्नं शतत्रयम् ॥१३८॥
शिशुभ्योस्य बिडालस्य क्रीताः पोषाय मूषिकाः । त्वया शतेन वात्सल्याद्दृष्टान्मत्स्यरसस्तथा ॥१३९॥
चरणोद्वर्तनं सर्पिः शालिचूर्णं च सप्तभिः । क्रीतं शतैः श्राद्धपक्षस्नाने च घृतमाक्षिकम् ॥१४०॥
गीतं क्षौद्रार्द्रकं कासायासायार्भकेण ते । सोव्यक्तजिह्वः किं वेत्ति वक्तुं लग्नं शतं ततः ॥१४१॥
वृषणोत्पाटको भिक्षाचरस्ते हट्टयाचकः । यो वारितो गुडपटुस्तस्मै दत्तं शतत्रयम् ॥१४२॥
आनीते भट्टपादानां मध्यं सर्वस्वयोपरि । शतं शतद्वयं धूपशम्बामूलपलाण्डुषु ॥१४३॥
इत्याद्यचिन्त्यतायुक्तान्परिहार्यव्ययानसौ । तस्यैकीकृत्य गणनां लाभेपि शनकैर्व्यधात् ॥१४४॥
वर्षमासपक्षतिथिप्रत्यावृत्तिः पुनः पुनः । संसारस्येव तस्यान्तं न ययौ नर्तिताङ्गुलेः ॥१४५॥
स मूलधनं पिण्डीकृत्याथ सकलान्तरम् । प्रसारितोष्ठस्तत्रैव मीलयन्नभ्यधान्मृदु ॥१४६॥
शल्यमुद्धर निक्षेपं नयोज्ज्ञासधनं स्थिरम् । विश्रम्भदत्तं निर्दम्भं दीयतां सकलान्तरम् ॥१४७॥
तस्य धर्म्यं वचो जानन्क्षणमुच्छ्वसितोभवत् । क्षुरं क्षौद्रोपलिप्तं तु ध्यात्वा पश्चादतप्यत ॥१४८॥
युक्त्यापह्नुतसर्वस्वं क्रौर्यानार्यमथार्थकः । विवादे नाशकज्जेतुं नापि स्थेया विचारकाः ॥१४९॥
स्थेयैरनिश्चितन्यायं पुरो न्यस्तं ततो नृपः । तदित्थमिति निश्चित्य वणिजं तमभाषत ॥१५०॥
अद्यापि न्यासदीनाराः सन्ति चेत्सत्प्रदर्श्यताम् । अंशः कियानपि ततस्ततो वच्मि यथोचितम् ॥१५१॥
तथा कृते तेन वीक्ष्य दीनारान्मन्त्रिणोब्रवीत् । राजभिर्भाविनां राज्ञां नाम्ना टङ्कः क्रियेत किम् ॥१५२॥
न चेत्कलशभूपालकाले न्यासीकृतेष्वमी । दीनारेषु कुतष्टङ्का मन्नामाङ्का अपि स्थिताः ॥१५३॥
निश्चित्यैव लक्षेण वणिक्तस्माद्व्यवाहरत् । वणिजो द्रविणेनायमप्यासेनान्तरान्तरा ॥१५४॥
तस्माद्यदा यदेतेन गृहीतं दीयतां ततः । तदा प्रभृत्यथावज्ञाभोस्मै वणिजोर्थिनः ॥१५५॥
न्यसनानेहसश्चैव प्रभृत्यस्मै प्रयच्छतु । लक्षाहस्तण्डिताल्लाभं किं वाच्यं मौलिके धने ॥१५६॥
अवधारयितुं शक्यं मादृशैः सघृणैरियत् । श्रीयशस्करवद्दीक्ष्यमीदृक्षेषु तु युज्यते ॥१५७॥
विवादे संदिहानस्य युक्तं क्षान्त्यानुशासनम् । आध्यं दण्डधराचारैः प्रयुक्तकुहकैः पुनः ॥१५८॥
अनिर्हार्येषु शल्येषु महामर्मगतेष्विव । सविवादेषु चोपेक्षां कालापेक्षी व्यधान्नृपः ॥१५९॥
प्रथये पार्थिवस्येत्थं निश्चोद्यं तस्य पालनम् । प्रजासु जागरूकस्य मनोरिव मनस्विनः ॥१६०॥
सख्यं कारणनिर्व्यपेक्षमिननाहंकारहीना सतीभावो वीतजनापवाद उचितोक्तिस्त्वं समस्तप्रियम् ।
विद्वत्ता विभवान्विता तरुणिमा पारिप्लवत्वोज्झितो राजत्वं विकलङ्कमत्र चरमे काले किलेत्यन्यथा ॥१६१॥
स तादृशोपि राजेन्द्रचन्द्रमाः सङ्किलाभवत् । मात्सर्याविष्टवैशद्यादोषोल्कावर्षभीषणः ॥१६२॥
औदार्यशौर्यधीधैर्यगुणतारुण्यमत्सरः । बभूव संख्यातीतानां मानप्राणहरो नृणाम् ॥१६३॥
मानोन्नतैश्च भूयोपि वाक्पारुष्यदवाहतैः । लाघवं प्रभुपालम्भैः पार्थिवोप्यनुभावितः ॥१६४॥
प्रशमानां फणीन्द्राणामिव कोपोद्भवं विना । तेजो विस्फूर्जितं ज्ञेयं न हि नाम शरीरिणाम् ॥१६५॥

---

१४७. ¹) A विश्रम्भ°. १४९. ¹) Emended with C; A क्रौर्यानर्थ°. १६२. ¹) Emended; A स किला°.

विविधे भूतसर्गेस्मिन्न स कश्चिन्न विद्यते | वपुर्वंशश्चरित्रादि यस्य दोषैर्न दूषितम् ||१६६||
जातिः पङ्करुहाद्वपुः कपिलताक्रान्तं शिरः खण्डनभ्रश्यच्छुचिशीलतादिविगुणाचारप्रदुष्टं यशः |
विश्वस्रष्टुरिति प्रभूतविषयव्याप्तिस्पृशो दुःसहा दोषा यत्र पुरोस्तु तत्र कतमो निर्दोषतोत्सेकभूः ||१६७||
अविचार्येति भूपालः स चकारानुजीविनाम् | वंशचारित्रदेहादिदोषोद्घोषणमन्वहम् ||१६८||
अन्योन्यद्वेषमुत्पाद्य संख्यातीता महाभटाः | युद्धभद्रालुना तेन द्वन्द्वयुद्धेषु घातिताः ||१६९||
मासार्धदिनमाहेन्द्रमहाद्यवसरेषु सः | निनाय योधान्संनद्धानन्योन्यप्रधनैर्धनम् ||१७०||
स नाभूदुत्सवः कश्चित्तदा यत्र नृपाङ्गने | भूमिर्न सिक्ता रक्तेन हाहाकारो न चोद्ययौ ||१७१||
नृत्यन्त इव निर्याता गृहेभ्यो वंशशोभिनः | बान्धवैर्निन्यिरे योधा लूनाङ्गाः पार्थिवाङ्गनात् ||१७२||
स्निग्धश्यामकचांशादरमभुनाकल्पशोभिनः | हतान्वीक्ष्य भटाञ्जाया मुमुदे न तु विव्यथे ||१७३||
नार्यो राजगृहं गत्वा प्रत्यायातेषु भर्तृषु | मेनिरे दिवसं लब्धमनास्था नित्यमन्यथा ||१७४||
अत्रेत्थमहं कुर्यामित्यहंक्रियया वदन् | साचिव्यमव्याहतवाग्यैस्तैर्भृत्यैरजिग्रहत् ||१७५||
प्रवर्धमानांस्तानेव विद्वेषकलुषाशयः | हताधिकारान्विदधे बहुशश्च विमानितान् ||१७६||
दङ्ककः कम्पनाधीशः प्रवृद्धौ तत्र सक्रुधि | विद्रुतो विषलाटायां निपत्य निहतः खशैः ||१७७||
तेन स्ववर्धितो द्वाराधीश्वरो रक्ककाभिधः | हताधिकारो विदधे विभूतिं वीक्ष्य भूयसीम् ||१७८||
माणिक्यसैन्यपतिना द्वारेकस्माद्विवारिते | खिन्नेन विजयक्षेत्रे चक्रे व्रतपरिग्रहः ||१७९||
कम्पनाद्यधिकारस्थाः पत्रीरास्तिल्लकादयः | काकवंशा मार्दवेन तत्कोपं नानुभाविताः ||१८०||
भोगसेनो निरनुगः क्षीणवासा भवन्कृतः | तेनातिसेवाप्रीतेन राजस्थानाधिकारभाक् ||१८१||
यस्येन्द्रद्वादशीयुद्धे सान्द्रसैन्योपि विद्रुतः | क्षुद्रचन्द्रगचन्द्रोपि रौद्रमालोक्य विक्रमम् ||१८२||
येपि सज्जाभिधानस्य पुत्राः सामान्यशास्त्रिणः | तान्नुच्छुच्चुक्यञ्ञान्स मन्त्रिणः समपादयत् ||१८३||
पुत्रौ विजयसिंहस्य तत्सेवात्यक्तदुर्दशौ | तिलको जनकश्चास्तामामात्यश्रेणिमध्यगौ ||१८४||
यमेलाभयवाणादिमुख्या द्वारादिनायकाः | कस्तान्समर्थः संख्यातुं तडित्तरलसंपदः ||१८५||
द्विजाः प्रशास्तकलशादयः पूर्वं तदन्तरे | प्रापुर्बालद्रुमान्तःस्थजीर्णानोकहविभ्रमम् ||१८६||
कन्दर्पः क्ष्माभुजा दूतैः समानीतोपि नाददे | तस्यासहनतां वीक्ष्य प्रार्थितोप्यधिकारिताम् ||१८७||
आस्थानाचारसंलापव्यवहारादि मण्डले | नवमेवाभवत्सर्वं तस्मिन्नभिनवे नृपे ||१८८||
लक्ष्मीः कार्मणचूर्णाङ्का स्वेदयेव वशवर्तिनः | धीरानपि विधायेयं करोत्युन्मार्गवर्तिनः ||१८९||
सपिण्डानामपि व्यक्तमूलत्रोक्षणतत्परा | प्रेततेव नरेन्द्रश्रीर्जातिखेदापकारिणी ||१९०||
समस्तसंपत्पूर्णोपि यस्मात्सुस्सलभूपतिः | दध्यौ भ्रातुरवस्कन्दं राज्यापहरणोद्यतः ||१९१||
अकस्मादशृणोत्स्वप्नमिव तं शीघ्रपातिनम् | स्थाने वराहवार्ताख्यमुल्लङ्घ्यायान्तमग्रजः ||१९२||
क्षिप्रकारी विनिर्गत्य तमप्राप्तपदं ततः | निपत्य सैन्यैर्बहुलैः सोपकारमकारयत् ||१९३||
विद्रुतस्यास्पदे तस्य नानोपकरणैर्युतैः | ताम्बूलवल्लीकुटैश्च सामग्री समभाव्यत ||१९४||

---

१८४. [1]) Emended with C; A °चास्तम°. १८६. [1]) Emended, A °जीर्णानोकह°. १९४. [1]) Emended; A ताम्बूलवेल्लाकु°.

कृतकार्यपरावृत्त्यासावकल्पोपि पार्थिवः । मत्वाभूतं तमन्मृणोदन्येषुः क्रूरविक्रमम् ॥१९५॥
गग्गचन्द्रस्तदादेशाद्गत्वा बहलसैनिकः । चक्रे सुस्सलभूपालबलनिर्दलनं ततः ॥१९६॥
अलंकृतैः सौस्सलैर्योधैराहवायासनिःसहैः । क्रान्तिविमानोद्यानेषु पुनारीणाममुच्यत ॥१९७॥
भर्तृप्रसादस्यानृण्यं प्राणैर्युधि समर्पितैः । राजपुत्रौ गतौ तत्र सहदेवयुधिष्ठिरौ ॥१९८॥
बराश्वान्सुस्सलानीकाद्गग्गस्तान्प्राप विह्वलान् । चक्रे भूरितुरंगस्य यैर्भूपस्यापि कौतुकम् ॥१९९॥
निविष्टकटकं तं स श्रुत्वा सेल्यपुराध्वना । क्रमराज्योन्मुखं यान्तं द्रुतमन्वसरन्नृपः ॥२००॥
अन्विष्यमाणसरणिः प्रयत्नाद्भ्रमजन्मना । प्रविवेश दरद्देशं परिमेयपरिच्छदः ॥२०१॥
वर्त्ममार्गे तस्य राजा डामरं लोष्टकाभिधम् । स सेल्यपुरजं हत्वा नगरं प्राविशत्ततः ॥२०२॥
तस्मिन्दूरं गते वैरकलुषोपि स नाददे । भ्रातृस्नेहेन संरम्भं महीतुं लोहरं गिरिम् ॥२०३॥
कल्हः कालिञ्जराधीशो दौहित्रीं पुत्रवद्गृहे । याममवर्धयत स्नेहादपुत्रः पितृवर्जिताम् ॥२०४॥
राज्ञो विजयपालस्य सुतां सुस्सलभूपतिः । उपयेमे स तां श्रीमाननघां मेघमञ्जरीम् ॥२०५॥
तस्य प्रभावाधिष्ठानाच्छिन्नोरपि न लोहरे । शक्तिरासीद्विरुद्धानामपि कथाय वैरिणाम् ॥२०६॥
धीरः सुस्सलदेवोपि मार्गैर्निर्गत्य दुर्गमैः । आसद्भूरिभिर्मासैः स्वोर्वीं दुर्गिरिवर्त्मना ॥२०७॥
प्रशान्ते व्यसने तस्मिन्धीरस्योच्चलभूपतेः । अन्येपि व्यसनाभासा स्वपक्षध्वंसिनोभवन् ॥२०८॥
भीमादेवः समादाय भोजं कलशदेवजम् । साहायकार्थमानिन्ये दरद्राजं जगद्दलम् ॥२०९॥
सल्हो हर्षमहीभर्तुरवरुद्धात्मजोभवत् । भ्राता दर्शनपालस्य सञ्जपालस्तु तद्बलम् ॥२१०॥
नीतिज्ञेन ततो राज्ञा सार्धेव दरदीश्वरः । आक्षेपाहारितः प्रायात्मस्यावृत्य निजां भुवम् ॥२११॥
सल्हस्तमन्वगाच्छन्नं भोजोप्यक्षस्त्वमण्डलम् । भेजे सुस्सलदेवस्य सञ्जपालोनुजीविताम् ॥२१२॥
गृहीतार्थेन भृत्येन निजेनैव प्रदर्शितः । भोजः क्षिप्रं नृपात्प्राप निग्रहं तस्करोचितम् ॥२१३॥
देवेश्वरात्मजः पित्थकोपि द्वैराज्यलालसः । डामरानाश्रिते राज्ञि निर्याते व्यग्रंवविशः ॥२१४॥
विचारपरिहारेण धावन्तः सर्वतो जडाः । तिर्यञ्च इव हास्याय प्रसिद्धिशरणा जनाः ॥२१५॥
मल्लस्य रामलाख्योर्ह सूनुरास दिगन्तरे । अहसूदः कश्चिदेवं चक्रिकाप्रतुरो वदन् ॥२१६॥
निन्ये प्रवृद्धिं व्यामूढैर्बहुभिर्विप्रवप्रियैः । धनमानादिदानेन भूमिपैर्भूम्यनन्तरैः ॥२१७॥युग्मम्॥
ग्रीष्मे प्रविष्टः कश्मीरानेकाकी धर्मपीडितः । व्यधीयत छिन्ननासः परिज्ञाय नृपानुगैः ॥२१८॥
कटके पर्यटन्नाज्ञः स एव ददृशे पुनः । स्वजात्युचितभक्ष्यादिविक्रयी सस्मितं जनैः ॥ २१९॥
मिथ्यैव नीतिकौटिल्यैः क्रियतेभ्युदयभ्रमः । शक्यतेपरथा कर्तुं न दैवस्य मनीषितम् ॥२२०॥
शान्तापि ज्वलति क्वापि क्वचिद्दीप्तापि शाम्यति । दैववातवशाच्छक्तिः पुंसः कक्षाग्निसंनिभा ॥२२१॥
पलायनैर्नापयाति निश्चला भवितव्यता । देहिनः पुच्छसंलीना वह्निज्वालेव पक्षिणः ॥२२२॥

---

१९९. ¹) Emended; A °भीकाम्गाग्ग°. २०४. ¹) Emended; A कालिञ्जर°. *Cf.* vii. 1256. viii. 618.
२१४. ¹) Emended with C; A °व्यग्र°. २१६. ¹) Thus corr. by A₂ from A₁ मल्लरामाला°. २१७. ¹) A₁ writes here २ instead of युग्मम्.

नाग्निजलाद्रिविषशस्त्रग्रहप्रयोगैर्न श्वभ्रपातरभसेन न चाभिचारैः ।
शक्या निहन्तुमसवो विधुरैरकाण्डे भोक्तव्यभोगनियतोच्छ्वसितस्य जन्तोः ॥२२३॥
भिक्षाचरः समादिष्टवधो जयमतीगृहात् । नक्तं वध्यभुवं निन्ये वधकैः पार्थिवाज्ञया ॥२२४॥
मान्नि प्रस्फोट्य निक्षिप्तो वितस्तायां समीरणैः । क्षिप्तस्तटं क्षणं स्पन्दमानवक्षाः कृपालुना ॥२२५॥
द्विजेनैकेन संप्राप्तश्चिराल्लब्धचेतनः । आससत्यभिधानाया धात्र्यादिष्टेति गौरवात् ॥२२६॥
शाहिपुत्रीभिरुक्ता या दत्तधात्र्या तया । नीतो देशान्तरं गूढं ववृधे दक्षिणापथे ॥२२७॥ तिलकम् ॥
स वृत्तमस्याभिज्ञाय पुत्रवज्जयवर्मणा । मालवेन्द्रेण शस्त्रास्त्रविद्याभ्यासमकार्यत ॥२२८॥
अन्यदीयं घातयित्वा तत्तुल्यवयसं शिशुम् । रक्षितो जयमत्यैव स किलेत्यपरेऽब्रुवन् ॥२२९॥
देशान्तरागताद्दूतात्तां वार्तामुपलब्धवान् । अत एवाभवत्तस्या भूभृद्विरलितादरः ॥२३०॥
बहिष्प्रतिविधिंस्तस्य धीरो मार्गवर्तिभिः । चक्रे तदप्रवेशाय संबन्धं पार्थिवैः समम् ॥२३१॥
ईर्ष्यामगोपयज्जायाः शङ्कामच्छादयन्नृपः । स्वयमन्याभिगम्यत्वं करोति हि जडो जनः ॥२३२॥
भिक्षाचरे हते बालं कंचिदादाय तत्समम् । तज्जाया ख्यातिमनयद्दिष्ट्यैवेत्यपरेऽब्रुवन् ॥२३३॥
तथ्येन सोऽस्तु मिथ्या वा प्रतिष्ठां तां तथाप्तवान् । यथा लघुत्वमानेतुं न दैवेनाप्यशक्यत ॥२३४॥
स्वप्नेन्द्रजालमायाणामपि निर्विषया इमाः । कर्मवैचित्र्यजनिताः काश्चिदाश्चर्यविप्रुषः ॥२३५॥
स राजबीजी नाशाय विशां गूढं व्यवर्धत । पुरग्रामादिदाहाय कक्षान्तरिव पावकः ॥२३६॥
रोहत्यन्तिकसीमनि प्रतिविषावीरुद्विषक्ष्मारुहः काले प्रावृडुपप्लुताब्जसलिले मूर्छत्यगस्त्योदयः ।
सर्गच्छेदविधिक्षमानुदयतो दृष्ट्वा किलोपद्रवान्संधत्ते प्रतिकारकल्पनमहो दीर्घावलोकी विधिः ॥२३७॥
अजायत विपन्मज्जज्जगदुद्धरणक्षमः । तस्मिन्नेव क्षणे यस्मात्सुस्सलक्ष्मापतेः सुतः ॥२३८॥
तज्जन्मकालादारभ्य सर्वतो जयमर्जयन् । नामान्वर्थं नृपस्तस्य जयसिंह इति व्यधात् ॥२३९॥
शास्तुः सर्वार्थसिद्धाख्या यथा सर्वार्थसिद्धिभिः । तथा तस्याभिधान्वर्था नात्यजद्गुडिशब्दताम् ॥२४०॥
मुद्रां स कुङ्कुमस्याङ्कैस्तदीयस्याभ्युपागताम् । विलोक्योच्चलदेवोऽभूद्विमन्युर्भ्रातरं प्रति ॥२४१॥
बालस्यैवाङ्घ्रिमुद्रास्य वैरं पितृपितृव्ययोः । निवारयन्ती विदधे सुस्थितं मण्डलद्वयम् ॥२४२॥
स स्वर्गिणः पितुर्नाम्ना ततः सुकृतसिद्धये । चकारोच्चलभूपालः पैतृके स्थण्डिले मठम् ॥२४३॥
गोभूमिहेमवस्त्रान्नदाता तस्मिन्महोत्सवे । आश्चर्यकल्पवृक्षत्वं त्यागी सर्वार्थिनामगात् ॥२४४॥
प्रसादैः प्रहितैस्तेन महार्घैः श्लाघ्यसंपदा । महान्तोऽपि दिगन्तेषु पार्थिवा विस्मयं ययुः ॥२४५॥
भर्तृप्रसादाधिगतां श्रियं नेतुं परार्थ्यताम् । विहारं समठं देवी जयमत्यपि निर्ममे ॥२४६॥
केषांचित्पूर्वपुण्यानां विरहेण महीभुजः । हताभीष्टाभिधानोऽभून्मठो नवमठाख्यया ॥२४७॥
सुस्सां स्वसारमुद्दिश्य परस्मिन्स्थण्डिले पितुः । विहारोऽपि कृतस्तेन नोचितां ख्यातिमाययौ ॥२४८॥
मृत्योर्मस्तकपातित्वं तस्याकलयतः किल । न निष्ठां स्वप्रतिष्ठासु संप्रपेदे व्यवस्थितिः ॥२४९॥

२२७. ¹) $A_1$ writes here ३ instead of तिलकम्. २३०. ¹) Emended; A °तात्तादूतसुप°. २३४. ¹) Emended with C; A °श्चकृत. २३७. ¹) $A_2$ gloss प्रतिविषा वीरुत् यस्या उपविषेत्यादिनामान्तरं कोशे यथा विश्वाविषा प्रतिविषातिविषोपविषारुणा शृङ्गीमहौषधं चेति (*Amarakośa* ii. 4. 99-100). २४७. ¹) Emended; A °न्मडे.

आसन्नशाम्यत्संमर्दप्रसरत्पांसुघोनिशम् । दिने दिने राजपथा उपप्लवविशृङ्खलाः ॥७३७॥ तिलकम्[1] ॥
प्रतिमल्लूषमायास्तु सर्वारम्भेण वैरिषु । अथ ध्रुवं जितो राजेत्यशायि प्रतिवासरम् ॥७३८॥
धीरः कः सुस्सलादन्यो न यः प्रत्यभियोगिनाम् । कृच्छ्रेणापि स्वराष्ट्रेण कष्टं धैर्यादपारयत् ॥७३९॥
व्रणपट्टाञ्जनं शल्योद्धारं पथ्यधनार्पणम् । शस्त्रक्षतानां सततं कारयन्स व्यलोक्यत ॥७४०॥
प्रवासवेतनप्रीतिदायभैषज्यदायिभिः । शस्त्रिलोके नरपतेर्निःसंख्योभूद्धनव्ययः ॥७४१॥
युद्ध एव विपन्नानां क्षतानां च स्ववेश्मसु । नित्यं नरतुरंगाणां सहस्राणि क्षयं ययुः ॥७४२॥
तुरंगबहलैर्हन्यमाना नृपबलैस्ततः । लाहरा मल्लकोष्ठाद्या मन्दोद्रेकत्वमाययुः ॥७४३॥
भिक्षैराभ्यन्तरैरेव दत्तमन्त्राः सुरेश्वरीम् । ते निन्युर्भिक्षुमल्पेन तन्मार्गेण युयुत्सवः ॥७४४॥
सेतुना स्वल्पपार्श्वेन धन्विप्रायैः सरोन्तरे । अत्रापि तैर्जयो मोचिवाजिभ्यश्च भयं रणे ॥७४५॥
द्रोग्धाथ कम्पनेशः सं[1] निवसन्विजयेश्वरे । बलितां डामराभिन्ये मन्दोद्रेकं स्फुरन्क्षणे ॥७४६॥
लवन्यलोको मा शासीदशक्तिं मेव गच्छतः । पृष्ठे निपत्य मा कार्षीद्व्यथां चेति विचिन्तयन् ॥७४७॥
स प्रभावं दर्शयितुं प्राप्तस्य विजयेश्वरम् । अज्जराजस्य सेनायां व्यावृत्य प्रस्थितोभवत् ॥७४८॥
सार्धां शतद्वयीं तस्य योधानां हतवानपि । संत्यज्य विजयक्षेत्रं द्रोहकृन्नगरं ययौ ॥७४९॥
पथि नान्वसरन्भीत्या भयार्ता डामराः क्वचित् । नदन्तोद्रिशिरोरूढा मार्गान्सर्वांश्च तत्यजुः ॥७५०॥
त्यक्त्वा मडवराज्यं स प्रविष्टो व्यसनातुरम् पूर्वचेष्टां स्मरन्भूपं जहास कृतसत्क्रियम् ॥७५१॥
हतरामात्यवत्स्थामस्थितोथ न निजोचितम् । रणे प्रादर्शयत्किंचित्साक्षिभूत इव स्थितः ॥७५२॥
ततो मडवराज्यास्ते समस्ता एव डामराः । अभ्येत्य प्रत्यपद्यन्त[1] तां महासरितस्तटीम् ॥७५३॥
उपायाः सामभेदाद्या रिपुचक्रे प्रयोजिताः । राज्ञो विफलतां जग्मुर्बहिरातैः प्रकाशिताः ॥७५४॥
क्रान्ततत्तन्महीपालमण्डलस्यापि भूपतेः । फलं दोर्विक्रमस्यास्यमासीन्नगररक्षणम् ॥७५५॥
अमरेशो द्वारपतिः सार्धं तस्थौ नृपात्मजैः । राजानवाटिकोपान्ते राजस्थानीयमन्त्रिणः ॥७५६[2]॥
दूरद्वीपान्तरगता इव स्वीचक्रिरे नपात् । ते प्रवासधनं भूरि न चायुध्यन्त कुत्रचित् ॥७५७॥
कटका द्विविधाः सर्वे पर्यायेण जयाजयौ । लेभिरे विजयादन्यत्र तु पृथ्वीहरः क्वचित् ॥७५८॥
मधुमत्तेन तेनाजौ वेतालेनेव वल्गता । प्रायो वरा वराः सर्वे ग्रस्ता नृपचमूभटाः ॥७५९॥
उदयस्येच्छाटिकुलोद्भूतस्यैकस्य पप्रथे । युवदेवस्यापि शौर्यमेकस्मिंस्तु तदाहवे ॥७६०॥
पृथ्वीहरस्यापजह्रे द्वन्द्वयुद्धाभिमानिना । प्रहृत्य कृष्टकूर्चेन कराग्रेणासिवल्लरी ॥७६१॥
युद्धे पुरोपकण्ठेषु वर्तमाने शराहताः । स्त्रीबालाद्या अपि वधं प्रमादात्प्रतिपेदिरे ॥७६२॥
एवं जनक्षये घोरे वर्धमाने किमप्यभूत् । अनुत्साहान्नृपो गेहादपि निर्गन्तुमक्षमः ॥७६३॥
तस्मिन्निरुद्धसंचारे सोमपालस्तदन्तरे । अलुण्ठयद्वाह्लिकां[1] लब्धरन्ध्रो ददाह च ॥७६४॥
सिंहे गजाहवव्यग्रे तद्गुहामपरिग्रहे । समयो ग्रामगोमायोः पौरुषस्यापरोस्तु कः ॥७६५॥

७३७. [1]) $A_1$ writes ३ instead of तिलकम्. ७४६. [1]) Thus corr. by $A_3$ from $A_1$ कम्पनेशस्व. ७५३. [1]) Thus corr. by $A_3$ from $A_1$ °पद्यन्त. ७५६. [2]) $A_1$ writes here २ for युग्मम् which would be in its place after the following verse. ७६४. [1]) Emended; A °वाहलिकां. Cf. viii. 581. 831. 1947 (*C*).

राष्ट्रद्वयोपमर्देन राजा निःसदृशेन सः । तेने क्षपाविधेयोभूत्स्वमपि द्रष्टुमक्षमः ||७६६||
सर्वानौचित्यबहलः सर्वव्यसनदुःसहः । सर्वदुःखमयः कालस्तस्यावर्तत कोपि सः ||७६७||
तथाप्यस्खलिते तस्मिन्हितव्याजाद्धितापहः । शजानवाटिकाधिपैः प्रायश्चक्रे विरागिभिः ||७६८||
प्रार्थयन्ते स्म ते युद्धे तटस्थास्तव मन्त्रिणः । गृहीत्वा नीविरेतेभ्यो लोहराद्री विसृज्यताम् ||७६९||
न चेद्याप्य इवैतस्मिन्व्यसने स्थायितां गते । को दध्यात्र परैर्नीतं प्रत्यासन्नं शरत्फलम् ||७७०||
न प्रत्यभित्सीत्ताटस्थ्यं यत्कालापेक्षया नृपः । तस्मिंस्तैर्दर्शिते शङ्कां निखिला मन्त्रिणो दधुः ||७७१||
शक्तिस्तृणं कुञ्जयितुं न यस्य स तदार्थिभिः । विसृष्टव्यवहारस्त्रं निन्ये राजा शठद्विजैः ||७७२||
कर्मस्थानोपजीव्युग्रपारिपथ्यादिसंकुला । तत्पार्श्वात्प्रययौ बुद्धिमन्या सेनेव वैरिणाम् ||७७३||
तत्स्थान्त्वनक्षणे तैस्तैः प्रमादैरुत्थितैरगात् । देशो व्याकुलतां कृच्छ्रं लुण्ठिश्चापदमोत्कटा[1] ||७७४||
अदृष्टपार्थिवास्थानैः शठैरव्यवहारिभिः । ऊचे तैः सान्त्वयन्राजा दुःस्थितस्तत्तदप्रियम् ||७७५||
लवन्यविप्रवाद्याशः सोधिको विप्लवोभवत् । गलरोगः पादरोगादिव तीव्रव्यथावहः ||७७६||
काञ्चनोत्कोचदानेन तन्मध्येधिकचक्रिकाम् । कांश्चित्स्वीकृत्य स प्रायं कथंचिद्विन्यवीवरत्[1] ||७७७||
विजयो वर्णसोमादिशास्त्रिवंश्यो हठात्पुरम् । प्रविशन्भिक्षुसेनानीरश्वारोहैरहन्यत ||७७८||
तेनातिरभसात्स्थानं भित्त्वा प्रविशता पुरम् । प्रायशः कृत एवाभूत्तदा राज्यविपर्ययः ||७७९||
ईषन्मन्दप्रतापेन लवन्येष्वपि[1] भूपतेः । पृथ्वीहरेण संधित्सा भेदेच्छोः संप्रकाशिता ||७८०||
तस्मिन्धुर्ये जिगीषूणां संधित्सौ भूभुजा समम् । द्वयेपि सैनिकाः शान्तं तममन्यन्त विप्लवम् ||७८१||
राज्ञा नागमठोपान्तमानेतुं प्रहितांस्ततः । क्षीनमात्यान्सुविश्वस्तानागच्छंश्छद्मनावधीत् ||७८२||
धात्रेयो मम्मको गुङ्गो द्विजो रामश्च वारिकः । तेषां तिलकसिंहस्य पार्श्वे भृत्यास्त्रयो हताः ||७८३||
नौविर्दत्तो गौरकस्तु हतो भूनपतिं स्मरन् । दृष्टे त्वाक्रन्दिनि परैः प्रहतं करुणोज्झितैः ||७८४||
तद्दैशसं श्रुतवतो देशः सर्वो विरागकृत् । राजधान्यन्तरे राज्ञो दुरुक्तिमुखरोभवत् ||७८५||
इषे शुक्लचतुर्दश्यां तद्विपर्यस्तमण्डलम् । अतिवाहयितुं कष्टं दिनमासीन्महीपतेः ||७८६||
अथ संजातवैक्लव्यो नेदमस्तीति चिन्तयन् । किं कृत्यमित्यसदृशानपि पप्रच्छ भूपतिः ||७८७||
विषमे वर्तमानस्य तस्य कश्चित्स नाभवत् । अन्तर्जहार्म[1] यो नान्त ---[2] न तुनोष वा ||७८८||
तमपि व्यसनापातं तस्य सोढवतस्ततः । अभजन्त क्रमाद्भृत्याः प्रतिपक्षसमाश्रयम् ||७८९||
कम्पनेशस्य बिम्बाख्यो भ्राता द्वैमातुरोहितान् । समाश्रयद्वारकार्ये तद्वत्तं प्रत्यपद्यत ||७९०||
गूढं जनकसिंहेन दूतान्प्रेषयतानिशम् । भिक्षवे भ्रातृतनया वाग्दत्ता निरवर्त्यत ||७९१||
असिवाजितनुप्रादि हत्वा भिक्षाचरान्तिकम् । अश्ववारा व्यभाज्यन्त प्रयान्तः प्रतिवासरम् ||७९२||
किमन्यद्व्यक्तमेवाह्नि येत्रसन्पार्थिवान्तिके । अलक्ष्यन्तामतो भिक्षोस्ते निशायां गतत्रपाः ||७९३||
इतो याति ततश्चेति लोको व्यक्तमतन्द्रितः[1] । इति राजनि कुण्ठाशे कोप्यजृम्भत विप्लवः ||७९४||

७७४. [1]) Emended with C; A °पदिमोत्कटा. ७७७. [1]) A₁ has first written °द्विन्यवीवृतत् and then indicated the above reading between the lines. ७८०. [1]) Conjectural reading; A न वन्येष्वपि. ७८८. [1]) Emended with C; A °हार्सो.— [2]) Thus A; C नास्तवंहिर्यो न. ७९४. [1]) A₁ has first written °तन्द्रितः and then indicated the above reading in margin.

795 डामरैः शरदुत्पत्ती नीतायां सर्वतस्ततः । कान्दिशीकोभवल्लोकः कृत्स्नो धनजनोज्झितः ॥७९५॥
प्रयाते सुस्सलनृपे स्वर्णपूर्णामिमां महीम् । भिक्षुः कुर्यादिति मृषा लोकस्यासीद्विनिश्चयः ॥७९६॥
क दृष्टा त्यागिता भिक्षोः कुतो वा तस्य संपदः । परामर्शो[1] नैवेति गतानुगतिको जनः ॥७९७॥
संदृश्यते परिवृता चिरमम्बरेण रेखा स्वयं न खलु या शशिनो नवस्य ।
तस्यां जनः प्रकुरुते नतिमम्बरार्थी धिग्लुब्धतामपसरत्सदसद्विचाराम् ॥७९८॥
त्रिजये राजवर्ग्याणां भुप्रमीव इवाभवत् । भिक्षुपक्षजये लोको हृष्टमासीद्विशृङ्खलः ॥७९९॥
800 द्विज्कौलेयकन्यायो राजडामरसंघयोः । ततोन्योन्यभयभ्रश्यद्वैरयोरुदजृम्भत ॥८००॥
राजाभ्यन्तरभेदेन राज्ञः स्थैर्येण चारयः । ऐच्छन्पलायितुं भीता अज्ञातान्योन्यनिश्चयाः ॥८०१॥
बान्धवानपि दुधुक्षुर्[1]नविश्वस्तो विदन्नृपः । स्थितौ पलायने वापि अवधे न स्वजीवितम् ॥८०२॥
तं महाव्यसने वासःस्वर्णन्नादिवर्षणम् । नाभ्यनन्दन्गृहीतार्था निनिन्दुः शस्त्रिणः परम् ॥८०३॥
नष्टोयं नैव भवितेत्यभीतेर्जल्पतो जनात् । वचो रोगी भिषक्त्यक्त इव शृण्वन्स विव्यथे ॥८०४॥
805 अप्यग्रोपस्थितं किंचित्तदावेशेन ढौकयन् । सविलासं सगर्वं च तमैक्षिष्टानुगव्रजः ॥८०५॥
सोन्य एवाभवत्तस्मिन्क्षणे साहसिकोप्यहो । स्वगृहादपि निर्गन्तुं नाशकद्भयाकुलः ॥८०६॥
यावद्वैक्यसंघभेदाच्चलितुं डामरव्रजाः । तैरेव शस्त्रिभिस्तावच्चिन्ते भूभृद्विलुण्ठताम् ॥८०७॥
ते कृष्टशस्त्रा द्वाराणि रुन्धन्तो नृपमन्दिरे । प्रवासवित्ते लब्धव्ये प्रायं चक्रुः पदे पदे ॥८०८॥
ददन्नं धनेशश्रीर्देयादप्यधिकं नृपः । तेषामभिमतो नाभूदप्रमाणाभिलाषिणाम् ॥८०९॥
810 भर्तुं चित्र[1]लिपुत्सीर्थमृणिकैरिव सामयः । स रुद्धा निखिलैर्देयं दापितोथ गतत्रपैः ॥८१०॥
स्थानपालैरपि प्रायकृद्भिराक्रम्य दापितः । धनं सुवर्णभाण्डादि चूर्णीकृत्य विशृङ्खलैः ॥८११॥
समुद्रमालं नगरं ततः क्षुभ्यत्क्षणे क्षणे । सोभूदब्धिमिवोद्वृत्तं न संस्थापयितुं क्षमः ॥८१२॥
एकदा प्रातरेवान्यै रुद्धद्वारः स्वशस्त्रिभिः[1] । सर्वतः क्षोभमागच्छन्नगरं स व्यलोकयत् ॥८१३॥
ततः क्षोभं शमयितुं जनकं नगराधिपम् । पुरभ्रमार्थमादिश्य चलितुं क्षणमैक्षत ॥८१४॥
815 कथंचिद्दानमानाभ्यां तानावर्ज्यापि शस्त्रिणः । सावरोधः स संनद्धो राजधान्या विनिर्ययौ ॥८१५॥
अङ्गना[1]तुरगारूढो बहिर्यावन्न निर्ययौ । राजधान्यन्तरे लुण्ठिस्तावत्प्रारम्भि तस्करैः ॥८१६॥
अरुदन्केपि केप्युच्चैरनदन्केप्यलुण्ठयन् । तद्भृत्या आज्यमुत्सृज्य तस्मिन्व्रजति शस्त्रिणः ॥८१७॥
विशृङ्खलस्वपाकोपशङ्किभिः शस्त्रिणां नृपः । सहस्रैः पञ्चैरासीद्व्रजन्ननुगतोध्वनि ॥८१८॥
वर्षे षण्णवते[1] कृष्णषष्ठ्यां मार्गे विनिर्गतः । याममात्रावशेषेह्नि सभृत्यो द्रोहविह्वलः ॥८१९॥
820 निर्जैर्हरद्भिरश्वादि त्यज्यमानः पदे पदे । स प्रतापपुरं प्राप क्षपायामल्पसैनिकः ॥८२०॥
तिलकस्य पुरो गत्वा प्रामस्थापं च विश्वसन् । तत्र बन्धोरिवाश्रूणि चिरं दुःखोल्बणोमुचत् ॥८२१॥
द्रोहं न कुर्यादेवं मे चिन्तयित्वेति सत्वरम् । वेश्म हुष्कपुरेन्येद्युस्तस्य च प्राविशत्स्वयम् ॥८२२॥

---

७९७. 1) Emended; A °मर्ष. ८०२. 1) Emended; A दुदुक्षुन्°. ८१०. 1) Emended with C; A चित्रालि°.
८१३. 1) Emended; A स शस्त्रिभिः. ८१६. 1) Emended; A आङ्गना°. ८१९. 1) Emended with C; A षण्णवते.

तद्वीरवेण खानादि कृत्वैच्छसैन्यसंमदम् । प्रविश्य क्रमराज्यं स कर्तुं भूयो जयोत्सुकः ॥८२३॥
गूढं युयुत्सून्कल्याणवाडादीनथ डामरान् । आनीय स पुरस्तस्य धैर्यभ्रंशमकारयत् ॥८२४॥
गुहासेन तथा युक्त्या निष्कृष्टः स ततो ययौ । स्वीकुर्वन्स्वर्णदानेन दस्यून्मार्गविरोधिनः ॥८२५॥
प्रयान्तं तत एवोज्झीत्तिलकस्तत्सहोदरः । प्रयाणमेकमानन्दो दाक्षिण्यादन्वगात्तु तम् ॥८२६॥
भृत्यस्त्यक्तः स दानेन विक्रमेण च तस्करान् । अगान्मार्गेण ग्रामयक्षायुःशेषेण रक्षितः ॥८२७॥
प्राणं सिंहनखा क्षुमाद्रिगहनस्थाराद्वरण्यस्य ये तेषां बालगलाभयादपि भवेत्कालातिवाहः क्रमात् ।
ये दन्ताः करिणां रणप्रहरणं तेष्वामुमुर्दीप्यतां क्रीडायां करताडनानि न दृढा शौर्यस्य कक्षिः क्वचित्॥८२८॥
जन्तूनां विक्रमस्त्यागयशःप्रज्ञादयो गुणाः । भवे भिन्नस्वभावेऽस्मिंश्च भवेयुरभङ्गुराः ॥८२९॥
भास्वानप्यौग्र्यमृदुतां भिन्नावस्थां[1] दिने दिने । तां तामायाति जन्तूनां कः प्रभावेषु निश्चयः ॥८३०॥
अशक्नुवन्नङ्गुलिकामरिमुष्टां निरीक्षितुम् । मन्युनिःशब्दसैन्योऽग्निमारुरोह स लोहरम् ॥८३१॥
स्वं कलत्रमपि द्रष्टुं तत्रातित्रपयाक्षमः । शयनीयविमुक्ताङ्गस्तप्यते स्म दिवानिशम् ॥८३२॥
हस्तदीपादनिर्गच्छन्नन्तर्गेहाद्दिनेष्वपि । दाक्षिण्याद्दर्शनं मात्राद्भृत्यानां भोजनक्षणे ॥८३३॥
विलेपनानि नास्प्राक्षीन्नारुरोह तुरंगमान् । गीतनृत्तादि नैक्षिष्ट सुखगोष्ठीर्न चादधे ॥८३४॥
तान्यंस्ताटस्थ्यमौखर्यनैक्ष्ण्यद्रोहादि दर्शितम् । एकेनैकेन च स्मृत्वा स्मृत्वा देव्यै न्यवेदयत् ॥८३५॥
अन्वगात्स्वां भुवं त्यक्त्वा मामेतेऽन्वगुरित्यपि । निन्ये वृद्धिं पराध्र्यभीः स दाक्षिण्याज्जनार्पणैः ॥८३६॥
कश्मीरेषु गते तस्मिंस्तदैवाखिलमन्त्रिणः । पुराणराजधान्यग्रे ससैन्याः समगंसत ॥८३७॥
मन्थ्यथारोहसामन्ततन्त्रिपीरादिसंमतः । तेषां जनकसिंहोऽभूदग्रणीर्नगराधिपः ॥८३८॥
स भिक्षोर्मल्लकोष्ठाद्यैरग्रैः कृतगतागतैः । विश्वासाय सुतभ्रातृसुतौ[1] नीर्वि प्रदापितः ॥८३९॥
प्रावर्तत भयभ्रश्यत्स्त्रीबालाद्यावृते पुरे । अराजकाथ रजनी सर्वभूतभयावहा ॥८४०॥
निहताः केऽपि मुषिताः केऽपि केऽप्यरिभिः पुरे । दग्धागारा व्यधीयन्त दुर्बला राजवर्जिते ॥८४१॥
सैन्यैरन्येद्युरुन्नादैर्निरुद्धाखिलदिक्पथः । सिन्दूरारुणपुण्ड्राश्वसादिमण्डलमध्यगः ॥८४२॥
विकोशशस्त्रकदलीषण्डदुर्लक्ष्यविग्रहः । मृगेन्द्र इव लोकस्य भयकौतूहलावहः ॥८४३॥
वीरपट्टाञ्चलश्लिष्टैर्यौवनोद्रेचितैः कचैः । अबद्धैः शोभितः पृष्ठे जयश्रीबन्धशृङ्खलैः ॥८४४॥
कुण्डलद्योतिना स्निग्धधवलायतदृष्टिना । प्रत्यग्रश्मश्रुणा चारुचन्दनोल्लेखशोभिना ॥८४५॥
ताम्राधरेण वक्त्रेण श्रीसांनिध्याधिकत्विषा । पक्षपाति विपक्षाणामपि संपादयन्मनः ॥८४६॥
असेर्विकोशस्यान्तःस्थां श्रियमन्येन वल्गता । केसरच्छटया चापि[1] चामरेणेव वीजयन् ॥८४७॥
पदे पदे निवृत्ताश्वः सामन्तैरुपपादिताम् । स्वीकुर्वन्नर्हणां भिक्षुः प्राविशन्नगरं ततः ॥८४८॥ कुलकम् ॥
तस्यार्भकस्य धात्रीव पृष्ठस्थो मल्लकोष्ठकः । प्रययावप्रगल्भस्य सर्वकार्योपदेष्टृताम् ॥८४९॥
अयं पितुः प्रियस्तेऽभूत्त्वमस्याङ्के विवर्धितः । राज्यस्यायं मूलमिति प्रत्येकं समदर्शयत् ॥८५०॥

---

८२३. [1]) Emended; A जयोत्सुकः. ८२४. [1]) A °न्कल्याणवाळादी°. ८३०. [1]) Emended with C; A भिन्नावस्थां. ८३९. [1]) Doubtful emendation; A सुताधि राज°. ८४७. [1]) A omits here two *aksharas* without indicating a *lacuna*; चापि supplied with C.

गृहं जनकसिंहस्य प्राक्कन्याश्वाप्रयेविशत् । राजलक्ष्मीं स संप्राप्तुं राजधानीं ततः परम् ||८५१||
दूरनष्टे कुले तेन पुनरुद्वेचिते ययौ । बद्धास्थो गर्भगेपत्ये स्त्रीजनोनवहास्यताम् ||८५२||
दृष्टेन तादृशा भिक्षोरिति वृत्तेन शत्रुषु । विश्वस्तेष्वपि साशङ्का नोपहास्या जिगीषवः ||८५३||
प्रावर्तन्त धनाधीशश्रियः सुस्सलभूपतेः । कोशेन नीतशेषेण विलासा नवभूपतेः ||८५४||
वाजिवर्मासिभूयिष्ठां राजलक्ष्मीं विभेजिरे । राजडामरलुण्ठाकमन्त्रिणो यन्त्रणोज्झिताः ||८५५||
पुरे स्वर्ग इवास्वादं भोगानामुपलेभिरे । दस्यवो ग्रामभोगार्हाः पिशाचा इव गह्वराः ||८५६||
आस्थाने न बभौ भूभृद्ग्रामीणैः सर्वतो वसन् । प्रलम्बकम्बलप्रायम्लिलासावरणैः समम् ||८५७||
भिक्षाचरस्यासंभाव्यप्रादुर्भावतया प्रथाम् । डामरा अवतारोयमित्यन्यां निन्यिरे प्रथाम् ||८५८||
राज्यस्यानन्यदृष्टस्य कर्तव्येषु मुमोह सः । अदृष्टकर्मेव भिषग्भैषज्यस्य पदे पदे ||८५९||
शनैर्जनकसिंहेन कृतभ्रातृसुतार्पणम् । कम्पनाधिपतिर्दत्तकन्योपि तमशिश्रियत् ||८६०||
शुक्लो राजपुरीयस्य राज्ञः कटकवारिकः । पादाग्राधिकृतोद्राक्षीत्स्वार्थमर्थं न तु प्रभोः ||८६१||
सर्वाधिकारिणं राजलक्ष्मीर्बिम्बमशिश्रियत् । राजशब्दस्यैव पात्रमभूद्भिक्षाचरः परम् ||८६२||
वेश्यायत्तीकृतैश्वर्यः प्राकृताचारभागपि । अन्तरङ्गः सदसतां किंचिद्बिम्बस्तदाभवत् ||८६३||
द्वैमातुरो दर्यकस्य भ्राता साश्चर्यशौर्यभूः । नृपान्तरङ्गज्येष्ठत्वं ज्येष्ठपालोप्यशिश्रियत् ||८६४||
मन्त्रिणो भूतभिक्षाद्यास्तस्य पैतामहा अपि । लक्ष्मीसरोजिनीभृङ्गा बहवोन्ये जजृम्भिरे ||८६५||
मुग्धे राज्ञि प्रमत्तेषु मन्त्रिभूपेषु दस्युषु । उत्थानोपहतं राज्यं नवत्वेपि बभूव तत् ||८६६||
स्त्रीभिर्नवनवाभिश्च भोज्यैः प्राज्यैश्च रञ्जितः । भिक्षुर्नैक्षिष्ट कर्तव्यं सुखानुभवमोहितः ||८६७||
स सुखानुभवप्रावृड्विप्रान्धो विजयोद्यमे । स्वैः प्रेरितः सभामध्ये स्वमुमैच्छन्मदालसः ||८६८||
दर्पेण सचिवे वाक्यं कथयत्यनुकम्पिकाम् । न स चुक्रोध मुग्धस्तु पितरीवान्वरज्यत ||८६९||
निष्प्रतिष्ठैः सेव्यमानो वेश्योच्छिष्टैरशिष्टवत् । अष्टचेटोचिताश्लेष्टा विटैः प्रैर्यत सेवितुम् ||८७०||
पानीयरेखाप्रतिमस्थैर्यस्याखिलवस्तुषु । तस्याप्रमाणवचसः सेवां प्रणयिनो जहुः ||८७१||
यदूचुः सचिवास्तत्तानन्ववोचत्स भूभृतः। वचः सुषिरगर्भस्य तस्य किंचित्समुद्ययौ ||८७२||
सचिवैः स्वगृहान्नीत्वा दत्तभोज्यः स मुग्धधीः । धनी विपन्नपितृक इव प्रमुषितो विटैः ||८७३||
आहारमुष्टीर्बिम्बस्य गृहे बिम्बानितम्बिनी । तस्याश्वस्येव वडवा रागिणोमगताहरत् ||८७४||
वञ्चयित्वा दृशौ पत्युर्दर्शितैः स्मेरया तया । कुचकक्षकटाक्षैः स लुप्तधैर्यो व्यधीयत ||८७५||
पृथ्वीहरो मल्लकोष्ठश्चान्योन्योद्भूतमत्सरौ । क्षोभं व्यधत्तां संरब्धौ राजधान्याः क्षणे क्षणे ||८७६||
स्वयं राज्ञा कृतोद्वाहं गृहान्गत्वापि कारितौ । तावन्योन्यमुपैक्षेतां न मन्युं विक्रमोन्मदौ ||८७७||
अथ पृथ्वीहरगृहात्कृतोद्वाहः स्वयं नृपः । जातामर्षेण सुस्पष्टं मल्लकोष्ठेन तत्यजे ||८७८||
सुस्सञ्जनककाणोपि संबन्धापेक्षयोज्झितः । विरागमोजानन्दादीन्निन्ये ब्राह्मणमन्त्रिणः ||८७९||

८५१. 1) Thus A. ८५४. 1) A कोषेण. ८६२. 1) Emended with C; A राजा लक्ष्मीबिम्बमशिश्रयत. ८६५. 1) Emended; A °भूतभिक्षा°. Cf. vii. 1695. viii. 94. ८७०. 1) Emended with C; A वेश्यैच्छि°. ८७४. 1) Emended; A °मुष्टिर्बि°.— 2) Emended with C; A तस्याश्वेव ८७७. 1) Emended; A °मुपेक्षेतां.

तटस्थो द्राग्भूद्बुद्धिमायभृत्यविधेयधीः । विसृष्टव्यवहारस्तं निग्रहं च ययौ नृपः ॥८८०॥
डामरस्वामिके लोके प्राभवस्को न विप्लवः[1] । ब्राह्मण्यो धर्षणं यत्र श्वपाकेभ्योपि लेभिरे ॥८८१॥
अराजकेथ वा भूरिराजके मण्डले तदा । समस्तव्यवहाराणां स्फुटं तुत्रोट पद्धतिः ॥८८२॥
ठीधारा भैक्षवे राज्ये निष्प्रचाराः पुरातनाः । तच्छतेन तु नव्यानामशीतेरभवत्क्रयः ॥८८३॥
राजपुर्यध्वना बिम्बं ससैन्यमथ पार्थिवः । लोहरं प्राहिणोत्कर्तुं सुस्सलास्कन्दमुन्मदः ॥८८४॥
तुरुष्कसैन्यमानिन्ये सोमपालेन सोन्वितः । साहायकाय सङ्गारे विस्मये मित्रतां गते ॥८८५॥
संदर्श्य पाशमेतेन बद्ध्वा क्रक्ष्यामि सुस्सलम् । इत्येक एकोश्वारोहस्तुरुष्काणामकत्थत[1] ॥८८६॥
काश्मीरिकं[1]खशम्लेच्छयोधव्यतिकरोभवत् । न केषां नाम संभाव्यो विश्वोत्पाटनपाटवः ॥८८७॥
भिक्षाचरः प्रयाते तु बिम्बे विगलिताङ्कुशः । न कासामव्यवस्थानां मूढः स्थानमजायत ॥८८८॥
स निमन्त्र्य निजं नीतो गृहं बिम्बावरुद्धया । भोगसंभोगदानेन धर्षण्या पर्यतोष्यत ॥८८९॥
कार्यापेक्षापि तस्यासीच्च मन्त्रिस्त्रीसमागमे । कौलीनभीतेरासन्ननिपातस्य कथैव का ॥८९०॥
आयूनानुगुणं[1] भोज्यं कुम्भकांस्यादिवादनम् । तत्र प्राकृतकामीव न स जिह्राय शीलयन् ॥८९१॥
शनैः शनैस्ततो नष्टावष्टम्भस्य महीपतेः । काले भोज्यमपि प्राप्यं नासीद्दलितसंपदः ॥८९२॥
तावत्प्रलोभक्रौर्यादिक्रान्तो यः प्रागगर्यत । स सुस्सलोथ लोकानामभिनन्द्यत्वमाययौ ॥८९३॥
धनमानादिनाशं या चिरकालस्य चक्रिरे । काङ्क्षन्ति स्म यनोत्कण्ठास्ता एवागमनं प्रजाः ॥८९४॥
प्रत्यक्षदर्शिनोथापि साश्चर्या वयमस्य यत् । ताः प्रजाः कोपिताः केन केन भूयः प्रसादिताः ॥८९५॥
क्षणाद्वैमुख्यमायान्ति सांमुख्यं यान्ति च क्षणात् । न हेतुं कंचिदीक्षन्ते पशुमायाः पृथग्जनाः ॥८९६॥
ते मल्लकोष्ठजनकादयो दूतैर्विसर्जितैः । त्यक्तराज्यं पुनर्भूपं जयोद्यममजिग्रहन् ॥८९७॥
अक्षोसुत्रामहारेय लोकैश्छिक्कस्य लुण्ठिते । तदवस्था ब्राह्मणाः प्रायं नृपमुद्दिश्य चक्रिरे ॥८९८॥
तैश्चान्यैश्चामहारैश्च संभिन्नैर्विजयेश्वरे । राजानवाटिकाप्रायो नगरेपि न्यविक्षत ॥८९९॥
ओजानन्दादिभिर्मुख्यद्विजैस्तेजितास्ततः । गोकुलेपि व्यधुः प्रायं त्रिदशालयपर्षदः ॥९००॥
युग्यार्पितैः सितच्छत्रवस्त्रचामरशोभिभिः । विबुधप्रतिमावृन्दैः सर्वतश्छादिताङ्गनः ॥९०१॥
काहलाकांस्यतालादीवाद्यक्षोभितदिङ्मुखः । अदृष्टपूर्वो ददृशे पारिषद्यसमागमः ॥९०२॥
ते सान्त्वमाना भूभर्तुर्दूतैस्तैरेकवादिनः । न विना लम्बकूर्चं नो गतिरित्यब्रुवन्वचः ॥९०३॥
ते हेलया लम्बकूर्चाख्यया सुस्सलभूपतिम् । तं निर्दिशन्तोमन्यन्त क्रीडापुत्रकसंनिभम् ॥९०४॥
प्रायं प्रेक्षितुमायातैः पौरैः सह दिने दिने । अमन्त्रयन कां कां न व्यवस्थां पर्षदां गणः ॥९०५॥
नृपापातभयात्क्षोभं मुहुर्मुहुरुपागतैः । पारिषद्यैश्च पौरैश्च योद्धुमास्थीयतोद्यमम् ॥९०६॥
बद्ध्वं जनकसिंहस्य नगरं तन्मतेन तत् । सज्जं सुस्सलदेवस्य क्रूरत्वमानयनेभवत् ॥९०७॥
प्रायाहारयितुं पूर्वमपहारद्विजान्नृपः । प्रययौ विजयक्षेत्रं तत्रासीच्च हतोद्यमः ॥९०८॥

---

८८१. [1]) $A_1$ had first repented here the second half of verse 878, but has subsequently erased it and written as above. ८८६. [1]) Conjectural reading; A °स्तुरुष्काणमकत्थत; C °तुरुष्कैः समकत्थत. ८८७. [1]) Emended; A काश्मीरक°. ८९१. [1]) Emended with C; A °गुणो.

तन्मध्ये निखिलांस्तत्र डामरांस्तिलकोऽब्रवीत् । व्यापादयेति तं तच्च सर्वैकामो न सोमहीत् ॥९०९॥
राज्ञ एव मुखाद्बुद्ध्वा लवन्यास्तद्विशश्वसुः । तस्मिन्पृथ्वीहरमुखास्तत्रसुस्तिलकात्पुनः ॥९१०॥
भागिनेयं प्रयागस्य क्षत्तारं लक्ष्मकाभिधम् । बन्धुमैच्छन्नृपोऽस्निग्धं प्रययौ स तु सुस्सलम् ॥९११॥
ततः प्रविश्य नगरं संनिपत्याखिलं जनम् । अकारणविरक्तानां पौराणां प्रददौ सभाम् ॥९१२॥
युक्तमप्युक्तवांस्तत्र हतोक्तिः शठबुद्धिभिः । पौरैः स चक्रे नास्त्येव भेषजं विप्रवस्पृशाम् ॥९१३॥
अत्रान्तरे सोमपालबिम्बाद्या लोहरे स्थितम् । यांतुं सुस्सलभूपं ते सर्वे पर्णोत्समाययुः ॥९१४॥
तं च पद्मरथो नाम राजा कालिञ्जरेश्वरः । मैत्रीं संस्मृत्य कल्हाधीरायौ तत्कुलोद्भवः ॥९१५॥
सोथ शुक्लत्रयोदश्यां वैशाखे बलिभिः समम् । तैर्मानी सुस्सलो राजा संग्रामं प्रत्यपद्यत ॥९१६॥
प्रेक्षकैर्वर्ण्यतेद्यापि स पर्णोत्सान्तिके रणः । तस्याद्भुतोऽत्रमानाभिक्षालनप्रथमक्षणः ॥९१७॥
कुतोप्येत्य निजस्फारस्ततः प्रभृति भूपतिम् । तमशून्यं पुनश्चक्रे मृगेन्द्र इव काननम् ॥९१८॥
भयस्खलितपाशानां कालपाशैः समागमम् । स चकार तुरुष्काणां क्षणात्पुष्कलविक्रमः ॥९१९॥
मातुलं सोमपालस्य निन्ये कवलतां बली । रणे तत्कोपवेतालो वितोलासरितस्तटे ॥९२०॥
किमन्यदल्पसैन्यः स बहूनपि स तान्व्यधात् । हतविद्रुतविध्वस्तान्यथात्मपरिपन्थिनः ॥९२१॥
काश्मीरिकाणामौचित्यं किं नाभूत्स्वामिनो ददुः । एकस्य ये रणं नष्टाः कुकीर्तिमपरस्य च ॥९२२॥
तुरुष्कैः सह यातेषु सोमपाले गतत्रपाः । बिम्बं काश्मीरिकास्त्यक्त्वा राजान्तिकमशिश्रियन् ॥९२३॥
ये धनूंषि शिरांस्यत्र नमयन्तोऽद्भुताशयाः । कुलप्रभोः पुरः स्पष्टं न ते धृष्टा ललज्जिरे ॥९२४॥
आगच्छद्भिस्ततः पौरैर्डामरैश्च समं नृपः । प्रतस्थे दिवसैर्द्वित्रैः कश्मीराभिमुखः पुनः ॥९२५॥
राजपुत्रः साहदेविः कल्हणो विशतः प्रभोः । डामरान्क्रमराज्यस्थान्संगृह्याग्रेसरोऽभवत् ॥९२६॥
य एव प्रथमं राजसैन्याद्विक्षुमशिश्रियत् । स एव बिम्बो राजानं तमुत्सृज्य समाययौ ॥९२७॥
अन्ये जनकसिंहस्य संमता मन्त्रितन्त्रिणः । प्रत्युद्यन्तो व्यलोकयन्त नृपतिं निरपत्रपाः ॥९२८॥
काण्डिलेत्राभिधग्रामजन्मा शस्त्री सुलक्षणः । भाङ्गिले कश्चिदभवच्छून्ये क्रान्तोपवेशनः ॥९२९॥
भिक्षुर्वितीर्णमार्गं तं सुस्सलान्तिकगामिनः । लोकस्यात्रान्तरे जेतुं सहपृथ्वीहरो ययौ ॥९३०॥
जितवांस्तं बबन्धेच्छां निहन्तुं सुस्सलोन्मुखम् । क्रोधाज्जनकसिंहं च वार्तां तां च विवेद सः ॥९३१॥
नगरस्थेन तेनाथ पौराश्वारोहतन्त्रिणः । संघट्याखिलान्भिक्षोः प्रातिपक्ष्यमगृह्यत ॥९३२॥
जानंस्तेनावृतं राज्यं ततो भिक्षाचरो नृपः । पृथ्वीहरेणानुयातो नगरं सहसाविशत् ॥९३३॥
सेतौ सदाशिवाग्रस्थे तत्सैन्यैः सह संगरम् । दृप्यञ्जनकसिंहोऽथ सान्त्वमानोपि सोमहीत् ॥९३४॥
दृष्टं जनकसिंहस्य योधानां वल्गतां मदात् । अविशङ्क्य पराभूतिं मूहूर्तं सुभटायितम् ॥९३५॥
अल्केन समं पृथ्वीहरस्तद्भ्रातृसूनुना । अन्येन सेतुना तीर्त्वा तस्य सैन्यमनाशयत् ॥९३६॥
तन्त्र्यश्वारोहपौरेषु विद्रुतेषु सबान्धवः । नक्तं जनकसिंहोथ पलाय्य लहरं ययौ ॥९३७॥

---

९१०. 1) Emended; A मुखाद्बुद्धा. ९११. 1) Emended; A बन्धुमै°. ९१४. 1) Emended; A लहरे. ९२१. 1) Emended; A °ध्वस्तवधा°. ९२२. 1) Emended; A काश्मीरका°. ९२३. 1) Emended; A काश्मीरका°. ९२९. 1) Emended with C; A °वेशनः. ९३१. 1) Emended with C; A स. ९३७. 1) Emended with C; A तन्त्र्यारोह°.

भिक्षुपृथ्वीहरौ प्रातस्तत्पृष्ठमहणोद्यतौ । तत्पंक्तासेश्वराराका धृष्टा भूयोऽप्यशिभियन् ॥९३८॥
शिम्बा क्षिप्रं स्वकक्ष्यान्तर्निबुधप्रतिमा भयात् । ते पारिषद्यविप्राद्याः प्रायमुत्सृज्य विद्रुताः ॥९३९॥
शून्यानि सुरयुग्यानि रक्षन्तः केऽपि भिक्षुणा । प्रायाभिवृत्ता वयमित्युक्तवन्तो न बाधिताः ॥९४०॥
यो जानके भैक्षत्रेष्य वल्गत्तुङ्गतुरंगमान् । दृष्टवन्तो वयं सैन्ये सादिनोऽप्यपि साद्भुताः ॥९४१॥
भिक्षुराजप्रदीपेन द्योतितः क्षणभङ्गिना । पैतृव्येणाधिकारेण[1] स्यालस्तिलकसिंहजः ॥९४२॥
गते जनकसिंहस्य प्रतिपक्षानुसारिणाम् । विभातु वेश्मभङ्गादि लब्धं भिक्षुमहीभुजा ॥९४३॥
अत्रान्तरे हुष्कपुरे नीतेषु तिलकादिषु । भङ्गं सुल्हणसिम्बाद्यैः समेतानन्तसैनिकैः ॥९४४॥
अथायातैर्मल्लकोष्ठजनकाद्यैः ससैनिकैः । अपरैरपि सामन्तैर्बलबाहुल्यशालिभिः ॥९४५॥
अन्वीयमानो दिवसैर्द्वित्रैराक्रान्तमण्डलः । विशांक्षद्दरमार्गेण विपक्षालक्षितोऽपतत् ॥९४६॥
नगरापणवीथ्यन्तर्हयारोहमुखान्पुरः[1] । द्रोहयोधानुपायातांस्तदैवोज्झितसाध्वसः ॥९४७॥
वेष्टितालम्बकूर्चेन वक्रेण[1] भ्रुकुटीभृता । कोपकम्पिततारेण फुल्लनासापुटस्पृशा ॥९४८॥
कांश्चित्संतर्जयन्निन्दन्नन्यान्भ्रमांस्तथापरान् । तीव्रानपश्यामवपुस्ताम्यन्काल इवोल्बणः ॥९४९॥
आशीर्घोषकृतां पुष्पवर्षिणां पुरवासिनाम् । पूर्वापकारिणां श्रेणीष्ववज्ञान्यस्तलोचनः ॥९५०॥
स्कन्धमात्रोपरि न्यस्तं कवचं हेलया दधत् । केशानन्तशिरस्त्रान्तनिःसृतान्धूलिधूसरान् ॥९५१॥
पद्ममालां च बिभ्राणः सकोशासिस्तुरंगिणाम् । आकृष्टखड्गमालानामन्तर्वल्गत्तुरंगमः ॥९५२॥
ससिंहनादैरुद्दामैर्भेरीभांकारनिर्भरैः । बलैर्भरितदिक्कोशः सुस्सलः प्राविशत्पुरम् ॥९५३॥ कुलकम् ॥
षड्भिः सद्वादशदिनैर्मासैर्ज्यैष्ठे सितेऽहनि । स सप्तनवताब्दस्य तृतीये पुनराययौ ॥९५४॥
राजधानीमप्रविष्टो भिक्षुं पूर्वपलायितम् । अन्विष्यन्क्षिप्तिकातीरे सलवन्यं[1] व्यलोकयत् ॥९५५॥
सरित्पारं रिपौ प्राप्ते स सपृथ्वीहरो गतः । मार्गे लवन्यैर्मिलितैरन्यैः साकं न्यवर्तत ॥९५६॥
तं विद्राव्य रणे राजा बद्ध्वा प्रहतिविक्षतम् । सिंहं पृथ्वीहरज्ञातिं राजधानीमथाविशत् ॥९५७॥
उपभोगैः सपत्नस्य तत्कालनिःसृतस्य सा । अङ्किता मानिनस्तस्य वेश्मवोद्वेगदाभवत् ॥९५८॥
भिक्षुः संत्यज्य कश्मीरान्सह पृथ्वीहरादिभिः । ग्रामं पुष्याणनाडाख्यं सोमपालाश्रयं ययौ ॥९५९॥
प्रस्थितो[1] डामरान्सर्वान्राजा स्वीकृत्य तु व्यधात् । खेर्यां वड्डात्मजं मल्लं हर्षमित्रं च कम्पने ॥९६०॥
पूर्वापकारं स्मरतो देशकालानपेक्षिणः । ..............................[1] ॥९६१॥
भिक्षुसंपर्कजं गन्धमपि सोढुमशक्नुवन् । भृत्येभ्यः खण्डशः कृत्वा हेमासिंहासनं ददौ ॥९६२॥
अनयोपार्जितां त्यक्तुमनीशा डामराः श्रियम् । समन्योऽथ नृपाज्ञीता नात्यजन्भिक्षवोद्यमम् ॥९६३॥
भिक्षुस्तु राज्यविभ्रष्टः स्वहदो विषये वसन् । उत्साहं सोमपालस्य दानमानैः पुनर्ययौ ॥९६४॥
बिम्बः साहायकप्रार्थी त्रिस्मयस्त्यम्भितकं गतः । तस्मिन्विरोधिभिर्बेडे[1] रणे धीरस्तनुं जहौ ॥९६५॥
भिक्षाचरो[1] बिम्बभृन्यो भजन्दुर्नयपात्रताम् । अनैषीद्वचदौर्बल्यं तच्छ्रियां तां गतत्रपः ॥९६६॥

---

९४२. [1]) Emended; A पितृव्येणा°. ९४७. [1]) Emended; A °मुखान्पुरः. ९४८. [1]) Emended with C; A वक्रेण. ९५५. [1]) Emended; A सलवन्यो. ९६०. [1]) Thus A; perhaps to be emended प्रस्थितो. ९६१. [1]) Here two *pâdas* are missing. A does not indicate the *lacuna*; C supplements पूर्वविद्वेषिण्स्तस्य न कृपां प्रतिपेदिरे. ९६५. [1]) Emended; A °बेडे; C °बेड्डो. ९६६. [1]) Emended with C; A भिक्षाचरे.

निपत्य स्वल्पसैन्योपि ततः शूरपुरे बली । जित्वा पृथ्वीहरो वद्यास्मजं व्यद्रावयद्रणात् ॥९६७॥

तस्मिन्पलायिते भिक्षुं पुनरानीय सोविशत् । भुवं मडवराज्यानां दस्यूनां स्वचिकीर्षया ॥९६८॥

तबरथैर्मडुजन्याथैर्डामरैः स्वीकृतैः समम् । जगाम विजयक्षेत्रं विजेतुं कम्पनापतिम् ॥९६९॥

जितस्तेनाहवे हर्षमित्रो निहतसैनिकः । विजयेश्वरमुत्सृज्य भीतोवन्तिपुरे ययौ ॥९७०॥

विजयक्षेत्रआस्तास्तपुरमामोऽव्रवा अपि । जना भयेन प्राविक्षन्नथ चक्रधरान्तिकम् ॥९७१॥

सोपि च्छिन्नभुपभुग्नीहिधनोपेतैरपूर्यत । स्थानं तथैव राज्ञश्च योधैः सायुधवाजिभिः ॥९७२॥

अन्याकडैरथ स्पष्टं लोकोल्लुण्ठनलालसैः । ते[1] भैक्षवैरवेष्ट्यन्त कटकैर्व्योमदिक्तटैः ॥९७३॥

तान्दारुमयवप्रौघद्वारगुप्ते सुरीकसः । अङ्गने[1] तिष्ठतो हन्तुं बन्दुं वा नाशकन्द्विषः ॥९७४॥

तदन्तरस्थितं दग्धुं कर्पूराख्यं स्ववैरिणम् । कश्चित्कतिस्थलीग्रामजन्मा निर्गुणडामरः ॥९७५॥

पापो जनकराजाख्यस्तत्राग्निमुददीदिपत् । मूढस्तादृगपर्यन्तजन्तुसंहारनिर्घृणः ॥९७६॥

तमापतन्तं ज्वलितं ज्वलनं वीक्ष्य सर्वतः । भूतग्रामस्य सुमहान्हाहाकारः समुद्ययौ ॥९७७॥

विशस्कृतान्तवाहारिभियेव छिन्नबन्धनैः । अधैरसूधीसंचारा भ्रमद्भिर्जघ्निरे जनाः ॥९७८॥

प्राच्छाद्यत चलज्ज्वालाकरालैर्धूमराशिभिः । व्योम पिङ्गकचश्मश्रुजालैर्नक्तंचरैरिव ॥९७९॥

निर्धूमस्य विसारिण्यो ज्वाला हव्यभुजो दधुः । संतापद्रुतहेमाभस्वर्णलहरीभ्रमम् ॥९८०॥

संतापविद्रुतव्योमचारिमौलिपरिच्युताः । रक्तोष्णीषा इव भ्रेमुर्ज्वालाभङ्गा नभोङ्गने ॥९८१॥

दीर्घदारुमन्थिभङ्गजन्मा चटचटारवः । तापप्रक्वथ्यमानाभ्रगङ्गाघोष इवोद्ययौ ॥९८२॥

स्फुलिङ्गैः शोषविध्वस्तजन्तुजीवितसंनिभैः । अमाद्दि गहनव्योममार्गभ्रमणसंभ्रमः ॥९८३॥

शकुनैः शावसंचारशोकादाक्रन्दिभिर्नभः । मानुषैर्दह्यमानैश्च भूमिर्मुखरिताभवत् ॥९८४॥

भ्रातॄन्भर्तॄन्पितॄन्पुत्रानालिङ्ग्याक्रन्दनिर्भराः । भीमीलितदृशो नार्यो निरदह्यन्त वह्निना ॥९८५॥

तदन्तरात्साहसिका ये केचिन्निरयासिषुः । बहिस्ते निहताः क्रूरैर्डामरैर्मृत्युचोदितैः ॥९८६॥

तावन्तो जन्तवस्तत्र व्यपद्यन्त तदा क्षणात् । स्विन्ना एव न ये दग्धास्तावतापि कृशानुना । ९८७॥

अन्तः शान्तेषु सर्वेषु बहिः शान्तेषु हन्तृषु । क्षणादेव प्रदेशः स निःशब्दः समजायत ॥९८८॥

वह्नेः कहकहाशब्दो ह्रस्वीभूतार्चिषः परम् । स्वियतश्च शवौघस्य श्रुतः सिमसिमाध्वनिः ॥९८९॥

विलीनासृग्वसामेदोनिःष्यन्दाः सरणीशतैः । प्रसस्रुर्विस्रगन्धश्च योजनानि बहून्यगात् ॥९९०॥

एकः सुश्रवसः कोपाद्वितीयो दस्युविप्लवात् । दैदग्धुतवहाबाधो घोरश्चक्रधरेभवत् ॥९९१॥

भूतग्रामस्य संहारः संवर्त इव वह्निना । तादृक्त्रिपुरदाहे वा खाण्डवे तत्र वाभवत् ॥९९२॥

पुण्येऽह्नि शुक्लद्वादश्यां नभसः कुकृतं महत् । तद्भिक्षुः कृतवान्प्राज्यलक्ष्म्या भाग्यैश्च तत्यजे ॥९९३॥

सकुटुम्बेषु दग्धेषु तदार्थी गृहमेधिषु । पुरग्रामसहस्रेषु गृहाः शून्यत्वमाययुः ॥९९४॥

मङ्गाख्यो डामरश्चिन्वकण्ठभ्राताजोगरोऽब्रवः । प्रीतिं प्रासैस्तदीयार्थैः कापालिक इवाययौ ॥९९५॥

९७०. 1) Emended with C; A विस्राव°. ९७३. 1) Emended; A तैर्भैक्षवे°. ९७४. 1) Emended with C, A आङ्गने. ९७५. 1) Emended; A निर्गुण्डा°. ९९१. 1) Emended with C; A दैदग्धुत°. ९९२. 1) Emended; A भूतग्रामसंहार°; C भूतग्रामाविष्ट°. ९९५. 1) Emended; A °जोगरोऽब्रव:.

भवक्कोथ विजयक्षेत्रं भिक्षाचरस्ततः । लब्ध्वा नागेश्वरं पापं यातनाभिरमीमरत् ॥९९६॥
गर्ह्ये पैतामहे वंशे किं नाशीत्तस्य चेष्टितम् । पितृद्रुहः स तु वधः सर्वप्रीतिकरोभवत् ॥९९७॥
सुहिणी हर्षमित्रस्य पत्न्यौ स्वक्का पलायिते । पृथ्वीहरेण संप्राप्ते विजयेशाङ्गनान्तरात् ॥९९८॥
निमित्तभूतमेतास्वप्रजासंहारवैशसम् । स्वं निन्दन्सुस्सलो राजा ततो योद्धुं विनिर्ययौ ॥९९९॥
संवेगात्पाप्मनः शीघ्रं निरयक्लेशभुक्तये । प्राप्तो जनकराजेन वधोवन्तिपुरान्तिके ॥१०००॥
यत्कृते क्रियते कर्म लोकान्तरसुखान्तकम् । स मूढैः सुलभापायः कायश्चिरं न गण्यते ॥१००१॥
कम्पनाधिपतिं सिम्बं कृत्वा डामरमण्डलम् । चकर्ष विजयक्षेत्रादन्यतोपि ततो नृपः ॥१००२॥
शमालां प्रययौ पृथ्वीहरो मडवराज्यतः । विजित्य मल्लकोष्ठेन त्याजितो निजमण्डलम् ॥१००३॥
क्षिप्ताः केचिद्वितस्तायां केचिच्चक्रधराङ्गने । अक्रियन्तामिसात्कष्टुमशक्त्या बहवः शवाः ॥१००४॥
क्रमराज्येथ कल्याणवाडादीञ्जिल्हणोजयत् । आनन्दोनन्तजस्तत्र ततो द्वाराधिपोभवत् ॥१००५॥
शूले प्रमापितं सिंहं नयन्पृथ्वीहरो बली । सार्धं जनकसिंहाद्यैरयुध्यत्क्षिप्तिकातटे ॥१००६॥
तीर्थं प्रस्थाप्यमानेषु विपन्नास्थिष्विहास्त्यहः । भाद्रे मास्येकमबलाक्रन्दिताक्रान्तदिक्पथम् ॥१००७॥
हतवीराबलाक्रान्दमुखरे नगरान्तरे । पृथ्वीहराहवे सर्वैर्दिवसैरन्वकारि तत् ॥१००८॥ युग्मम् ॥
अथायातो यशोराजस्यालः शूरो दिगन्तरात् । श्रीवक्को विदधे राज्ञा खेरीकार्याधिकारभाक् ॥१००९॥
अप्रियं स लवन्यानां तेपि वा तस्य नाचरन् । कालं तु गूढसौहार्दैरन्योन्यस्यात्यवीवहन् ॥१०१०॥
पुनराश्वयुजे राजा शमालां निर्गतस्ततः । पर्णोत्सग्रामे युधि भङ्गमनीयत ॥१०११॥
नित्याभ्यासेन युद्धानां लब्धोत्कर्षो न्यदर्शयत् । सर्वत्रीरामणीर्भिक्षुस्तत्पूर्वं तत्र विक्रमम् ॥१०१२॥
तुक्कद्विजादयो मुख्या भिक्षुपृथ्वीहरादिभिः । आसारापातविवशा निहताः सौस्सले बले ॥१०१३॥
प्रधानवीरभूयिष्ठे सैन्यद्वन्द्वे न कोप्यभूत् । स वीरचरतः संख्ये भिक्षोरैक्षिष्ट यो मुखम् ॥१०१४॥
पृथ्वीहरस्य भिक्षोश्च संग्रामे भूरिवार्षिके । कादम्बरीपताकाख्ये द्वे अश्वे पीतपाण्डुरे ॥१०१५॥
आस्तामत्यद्भुते याभ्यामनेकतुरगक्षये । न विपन्नं प्रकृतिभिर्नान्वभाव्यथ वा क्रमः ॥१०१६॥
सैन्यानां संकटे त्राणमभ्रान्तिरविकत्थनः । अभूत्क्लेशसहो वीरो नान्यो भिक्षाचरात्कचित् ॥१०१७॥
योधानां सौस्सले सैन्ये विद्रवेषु न कश्चन । त्राणं बभूव तेनैते वहशो बहुधा हताः ॥१०१८॥
नष्टेषु डामरानीकाः केचिद्भग्नेषु सैनिकाः । भिक्षाचरगजेन्द्रेण कलभा इव पालिताः ॥१०१९॥
नान्यस्योत्थानशीलत्वं दृष्टं पृथ्वीहरात्तदा । स्वयं यो भैक्षवे द्वारे जजागार प्रतिक्षपम् ॥१०२०॥
ततः प्रभृत्यभूल्लोप्ता पुरः पश्चाच्च सर्वदा । विश्वेदेव इव श्राद्धे युद्धे भिक्षुर्महाभटः ॥१०२१॥
आहवे साहसं कुर्वन्सर्वतः सोभ्यधाद्द्विजान् । एवमस्खलितस्थैर्यमुपपत्तिमसंत्यजन् ॥१०२२॥
न मे राज्याय यत्नोयं पर्याप्तं दुर्यशः पुनः । कृत्स्ने प्रसक्तुं पूर्वेषां व्यवसायं व्यपोहितुम् ॥१०२३॥
अनाथा इव ते नाथा विप्रां व्यापादनक्षणे । ज्ञात्वा नष्टं कुलं नाथवन्तो नूनं स्पृहां दधुः ॥१०२४॥

---

१००३. [1]) Emended with C; A मङ्ख. १००५. [1]) A °वाडाडी°.—[2]) Emended with C; A°दीञ्जल्हणो°. १००८. [1]) Emended: A °बलाक्रान्तसु°. १००९. [1]) Emended; A अथ यातो.

इति मत्वा लोठकथेष्टे[1] सुहृदमिश्रयः । दूयमानोस्मि दायादुःखदायी दिने दिने ॥१०२५॥
मास्त्वेवाप्राप्तकालस्य विपत्तिरिति जानतः । कस्य साहसवैमुख्यमुत्पद्येत यशोर्थिनः ॥१०२६॥
किं कार्यगतिकौटिल्यैरुक्तैस्तान्यथ वा कथम् । न वदामः प्रतिज्ञाय स्वयमार्येऽध्वनि स्थितिम् ॥१०२७॥
सोत्कर्षपीठवाङ्गिक्षोरथाङ्कूषत डामराः । ततो दायादविच्छेदं नास्याकृषत जातु चित् ॥१०२८॥
प्रापाज्याधिगमाशाशामन्येषां राजबीजिनः । चिन्तयन्तो व्यवहर्तिं व्युत्पद्यन्ते शनैः शनैः ॥१०२९॥
पितुः पितामहस्याथ न दृष्टं तेन किंचन । अत एवाभजन्मोहं राज्यं संप्राप्तवान्पुरा ॥१०३०॥
तस्य भूयोपि चेदाप्स्यंस्कैव वार्ता विपाटने । सापेक्षं वीक्षितुं जाने न दैवेनाप्यशक्यत ॥१०३१॥चक्कलकम्॥
जानंश्छत्रन्यकौटिल्यं प्रमादात्स हतेहिते । प्राप्नुयां राज्यमित्याशां बद्धादान्यत्यवाहयत् ॥१०३२॥
दस्यूनां सुस्सलो राजा मेने तत्स्वहितं मतम् । जिगीषुर्नीतिविक्रान्त्योः प्रभुक्तौ लिप्सुरन्तरम् ॥१०३३॥
युद्धे स्वान्स स्मरन्वैरं नापासीत्तेन तेऽभजन् । नास्मिन्विश्वासमेतस्माद्धेतोर्नास्याभवज्जयः ॥१०३४॥
इत्थं नानामतैः पक्षप्रतिपक्षैरुपेक्षितम् । राष्ट्रं निखिलमेवागात्सर्वतः शोचनीयताम् ॥१०३५ ॥
वस्तुंबन्धाद्विटपिनिवहैर्निर्महव्यग्रवन्यव्याधप्रस्तानलपरिभवः कोपि नन्वन्वभावि ।
हा धिग्दन्ती विघटनपरः सोपि माथप्रमीषां लभ्यं श्रेयो विधिविधुरितैर्नान्यतो न स्वतोपि ॥१०३६॥
द्वैराज्ये प्रभवत्येवमकाण्डपतितैर्हिमैः । विधर्शं सुस्सलक्ष्माभृदजयद्दैक्षवं बलम् ॥१०३७॥
पुष्याणनाडं भूयोपि भिक्षुपृथ्वीहरौ गतौ । अन्यैर्लवन्यैर्भूभर्तुर्नतिर्दस्तकरैः कृता ॥१०३८॥
सिम्होपि कम्पनाधीशो व्यधाद्विजितडामरः । सर्वां मडवराज्योर्वीं वीरः शमितविप्लवाम् ॥१०३९॥
तावत्यापि विपक्षाणां शान्त्या शीतलतां गतः । पूर्ववैरं स्वपक्ष्याणां प्रादुश्चक्रेथ भूपतिः ॥१०४०॥
जिघांसौ कथिते राजन्युल्हणेन पलायितः । मल्लकोष्ठः सोपि कोपाद्राज्ञा राष्ट्रात्प्रवासितः ॥१०४१॥
अनन्तात्मजमानन्दं बद्धा द्वाराधिकारिणम् । व्यधत्त सैन्धवं प्रज्जिनामानं राजबीजिनम् ॥१०४२॥
गतोथ विजयक्षेत्रं सिम्हेन सहितोविशत् । नगरं तं च विश्वस्तं बद्धा कारागृहेक्षिपत् ॥१०४३॥
अनुस्मृतिमहावात्याप्रेरितोमर्षपावकः । आचचाम क्षमावारि तस्य भृत्यान्दिधक्षतः ॥१०४४॥
सिंहभकनसिंहाभ्यामनुजाभ्यां सहावधीत् । शूलेधिरोप्य सिम्हं स रोषावेशविलुप्तधीः ॥१०४५॥
कम्पने श्रीवर्कं चक्रे सुज्जि प्रज्जेः सहोदरम् । बद्धा जनकसिंहं च राजस्थाने न्ययोजयत् ॥१०४६॥
आप्ताश्च मन्त्रिणश्चासंस्तस्य वैदेशिकास्ततः । स्वदेशजस्तु सोभूयो लोहरस्थं तमन्वगात् ॥१०४७॥
अथ सर्वेपि साशङ्कास्तं त्यक्त्वाभ्यर्थयन्रिपून् । शतिकीयः कश्चिदासीद्राजधान्यां नृपाश्रितः ॥१०४८॥
तेनाप्रतिसमाधेयो भूयः शान्तेप्युपप्लवे । इत्थमुत्थापितोनर्थो न पुनर्यः शमं ययौ ॥१०४९॥
एकाक्षेपे परेपि स्युर्यत्र भृत्या विशङ्किताः । तत्रापराधे प्राज्ञस्य राज्ञोवज्ञैव शस्यते ॥१०५०॥
माघेथ मल्लकोष्ठाद्यैराहूताः पुनराययुः । ते शूरपुरमार्गेण भिक्षुपृथ्वीहरादयः ॥१०५१॥
वितस्तापरिखाक्षिप्ता भूरगम्या द्विषामियम् । इति मायाग्रवमठं त्यक्त्वा राजगृहं नृपः ॥१०५२॥

१०२५. [1]) $A_1$ gloss स्वर्वं. १०२६. [1]) Emended with C; A मास्त्वेवमास°. १०३१. [1]) Emended; A चेदाप्स्यंस्कैव.—[2]) $A_1$ writes here ४ instead of चक्कलकम्. १०३३. [1]) Doubtful emendation; A जिगीषोर्नी° and प्रभुक्तौ लिप्सरन्तरम्; C जिगीषोर्नी° and प्रवक्षी लिप्सरन्तरः. १०३८. [1]) A पुष्पाण°. १०४८. [1]) Emended; A त्यक्ताधिश्र°. १०५१. [1]) Emended; A °कोष्ठाद्यै आहूताः.

वर्षेष्टानवते चैत्रे डामरेषु युयुत्सुषु । अभ्येत्य मल्लकोष्ठेन प्रागेवासादि संगरः ॥१०५३॥
सोश्वारैः सह रणं चकार नगरान्तरे । नृपावरोधैः सौधाग्रादालोकितमथाकुलैः ॥१०५४॥
भिक्षुणा क्षिप्तिकातीरे स्कन्धावारं न्यबध्यत । ....................[1] ॥१०५५॥
नृपोद्यानाद्रुमाञ्छिन्द्युरिन्धनाय महानसे । दूर्वाङ्कुरान्मन्दुराभ्यो वाहभोज्याय डामराः ॥१०५६॥
पृथ्वीहरस्तु संगृह्णन्दस्यून्मडवराज्यजान् । चकार विजयक्षेत्रे चावस्कन्दकसंभ्रमम् ॥१०५७॥
तावत्प्राज्यभुजान्मल्लकोष्ठयुद्धाय भूपतिः । आदिदेशादावस्कन्दे वैशाखे साहसोन्मुखः ॥१०५८॥
अकस्मात्पतिते तस्मिन्हतावष्टम्भविक्षताः[1] । प्रययुः सेतुमुल्लङ्घ्य जीवाश्वस्ताः कथंचन ॥१०५९॥
नगरं मल्लकोष्ठाजिव्यग्रे प्रज्जावथाविशत् । पृथ्वीहरानुजः सुज्जिं निर्जित्य मनुजेश्वरः ॥१०६०॥
परं पारं वितस्तायां सेतुच्छेदादनाप्नुवन् । अर्वाचि तीरे स गृहान्दग्ध्वागात्क्षिप्तिकां ततः ॥१०६१॥
लब्धान्यैर्नगरं प्राप्तं मत्वा सुस्सलभूपतिः । आययौ विजयक्षेत्रात्सैन्यमुत्थाप्य विह्वलः ॥१०६२॥
अहंपूर्विकयारातिशङ्कितैश्च निर्भैर्बलैः । पीडितस्तस्य गम्भीरासिन्धुसेतुरभज्यत ॥१०६३॥
स कृष्णषष्ठ्यां ज्यैष्ठस्य तस्यासंख्यवधभूर्वयः । यथाग्निना चक्रधरे तथा तत्राम्भसा मृतः ॥१०६४॥
भुजमुद्यम्य शमयन्सैन्यानां संभ्रमं नृपः । बलैर्भ्रष्टैस्तथा पृष्ठे पतितः सरिदन्तरे ॥१०६५॥
अनभ्यस्ताम्बुतरणैराश्लिष्य ब्रुडितोसकृत् । तरदायुधविद्धाङ्गः स निस्तीर्णः कथंचन ॥१०६६॥
अनुत्तीर्णं बलं त्यक्त्वा पारे सामन्तसंकुलम् । सहस्रांशेन सैन्यस्य तीर्णेनानुगतो ययौ ॥१०६७॥
संत्यक्तानन्तसैन्योपि सोवष्टम्भमयो नृपः । प्रविश्य नगरं मल्लकोष्ठमुख्याञ्जनेमहीत् ॥१०६८॥
विजयस्याथ जननी सिल्लाख्या स्वामिनोज्झितम् । निनाय देवसरसं सैन्यं तद्विजयेश्वरात् ॥१०६९॥
साथ पृथ्वीहरेणैत्य हता तत्रोपवेशने । डिक्कश्च दग्धो भूपालसैन्यं विद्रावितं च तत् ॥१०७०॥
परं व्यायामविद्याविद्रुते निखिले बले । द्विजः कल्याणराजाख्यः समरेभिमुखो हतः ॥१०७१॥
मन्त्रिडामरसामन्तसंकुलात्सौस्सलाद्बलात् । पृथ्वीहरेणागृह्यन्त बद्धा वृन्दानि शस्त्रिणाम् ॥१०७२॥
अन्वगात्स वितस्तान्तं यावत्तान्विद्रुताम्बलात् । ओजानन्दद्विजादींश्च बद्धा शूले व्यपादयत् ॥१०७३॥
मन्त्रिणो जनकश्रीवकाद्या राजात्मजास्तथा । तीर्त्वाद्रिं विषलाटायां शरणं प्रययुः खशान् ॥१०७४॥
इत्थं पृथ्वीहरो लब्धजयः संगृह्य डामरान् । जिगीषुर्भिक्षुणा साकं नगरोपान्तमाययौ ॥१०७५॥
भूयोपि मानुषाश्रीषसंहर्ता सर्वतस्ततः । रणः प्रववृते प्राग्वत्पुरे हतस्य भूपतेः ॥१०७६॥
निर्निरोधः पथानेन नृपावसथ इत्यभूत् । सैन्ये मडवराज्यानां स्वयं पृथ्वीहरोग्रणीः ॥१०७७॥
तत्तत्सामन्तकुलजैर्वीरैः काश्मीरकैर्भटैः । समेतं डामरकुलं दुर्जयं सर्वतोभवत् ॥१०७८॥
काश्मीरकाः शोभकाद्याः काकवंश्याः सहस्रशः । प्रख्याता भैक्षवे पक्षे रक्ताद्याश्चापरेस्फुरन् ॥१०७९॥
नदतः स्वबलाद्धार्यं तुमुलं शृण्वतोन्मिषत् । पृथ्वीहरेणागण्यन्त वाद्यभाण्डानि कौतुकात् ॥१०८०॥
हित्वा भूयश्च तूर्यादि परिच्छेदेषु स कौतुकी । श्वपाकदुन्दुभीभाण्डशतानि द्वादशाशकत् ॥१०८१॥

---

१०५५. [1]) Here two *pâdas* seem to be lost. A does not indicate the *lacuna*. C adds रामेण वानरी सेना यथा पाथोनिधेस्तटे. १०५८. [1]) Emended; A °दवास्कवदस्कन्दं. १०५९. [1]) Emended with C; A °विक्षतः. १०६१. [1]) Emended with C; A °ग्ध्वागात्क्षि°.

तथा विमद्दसैन्योपि भिक्षार्हैशैर्नृपात्मजैः । भिन्नैः स्वदेशजैश्चारीन्मतिजमाह सुस्सलः ॥१०८२॥
राजन्याविच्छटिकुलोद्भूतावुदयधन्यकौ । चम्पावल्लापुराधीशावुदयब्रह्मजज्जलौ ॥१०८३॥
ओजो मल्हणहंसानां धुर्यौ हरिहडौकसः । क्षत्रिकाभिक्षिकाख्यानसव्यराजादयस्तथा ॥१०८४॥
बिडालपुत्रा नीलाद्या भावुकान्वयसंभवाः । रामपालः सहजिको युवा तस्य च नन्दनः ॥१०८५॥
नानावंश्याः परेप्युग्रसंग्रामव्यग्रताजुषः । पुरोपरोधसंनद्धानरुन्धन्सर्वतो रिपून् ॥१०८६॥
तनूजर्मिर्विशेषेण रिल्हणेन महीभुजः । रणाग्रेसरतामाहि विजयाद्यैश्च सादिभिः ॥१०८७॥
स्वयमुद्यमिना राज्ञा वर्मणेव निजौ भुजौ । सुज्जिप्रज्जी पाल्यमानावभूतां रणकर्मठौ ॥१०८८॥
ताभ्यां साधारणीकुर्वन्नाज्योत्पत्तिं महीपतिः । स महाव्यसने तस्मिन्सव्यगूढधुरोभवत् ॥१०८९॥
तत्पक्षा भागिकशरद्भासिमुम्मुनिमुङ्कटाः । कलशाद्याश्च कुशला विपक्षक्षोभणेभवन् ॥१०९०॥
भूभर्तुष्टक्कविषये लवराजस्य नन्दनः । आसीत्कमलियश्चास्य संग्रामाग्रेसरः प्रभोः ॥१०९१॥
प्रहारं बलिनस्तस्य चामरध्वजशोभिनः । प्रभिन्नस्येव नागस्य हयारोहा न सेहिरे ॥१०९२॥
अनुजः साज्जिकः पृथ्वीपालो भ्रातुः सुतोस्य च । पाञ्चालाः फल्गुनस्येव पार्श्वरक्षित्वमाययुः ॥१०९३॥
एतावद्भिर्भृत्यरत्नै राष्ट्रेपि कुपितेजयत् । भूरिस्वर्णार्पणोपात्तैर्वाजिभिश्च महीपतिः ॥१०९४॥
तत्र तत्राहवे सोपि बभ्रामाजश्रमो नृपः । उत्सवे गृहमेधीव मण्डपे मण्डपे स्वयम् ॥१०९५॥
तस्य हि व्यसनं त्रासहेतुः प्राभूदुपक्रमे । प्रवृद्धिं प्राप्तमभवद्धैर्यावाप्त्यथ धीमतः ॥१०९६॥
दैन्यकृद्भयमापाते मध्यपाते न तादृशम् । करक्षिप्तं यथा शीतं मज्जने न तथा पयः ॥१०९७॥
वैरिसैन्यतमो यत्र यत्र ज्योत्स्नेव निर्ययौ । सितासिता च भूभर्तुस्तत्र तत्रास्य वाहिनी ॥१०९८॥
एकदा कृतसंकेतास्तुल्यमाहवमेलके । महासरितमुत्तीर्य डामरा नगरेपतन् ॥१०९९॥
असीसनगरस्थानविभक्तकटको नृपः । परिमेयाश्ववारस्तान्विशतः स्वयमाद्रवत् ॥११००॥
नाभजड्डामरानीकस्तेन विद्रावितो धृतिम् । हेमन्तमरुता कीर्णपर्णराशिरिवेरितः ॥११०१॥
यानन्दः काककुलजो लोष्टशाह्यनलादयः । अन्ये च डामरानीके ख्याता भूभृद्भटैर्हताः ॥११०२॥
लभाभिघातानानीताश्चाशः क्रूरस्य दृक्पथम् । बहूञ्जिघ्नुश्चण्डाला इव राजोपजीविनः ॥११०३॥
भयाद्गोपाद्रिमारूढा अपरे भैक्षवास्ततः । आसन्नमृत्यवोभूवन्कटकैर्वेष्टिता द्विषाम् ॥११०४॥
यो मार्गो दुर्गमः पक्षिणोपि यातुं ततः स तान् । तत्र व्यापारयामास भिक्षुर्मानी तुरंगमान् ॥११०५॥
कथंचित्पक्षिणा विक्रमीवस्तस्यापहीन्मुहुः । पार्श्वे पृथ्वीहरो रुद्धं द्विशाश्चान्ये महाभटाः ॥११०६॥
वेलाद्रिभिरिवोद्भूतैः सिन्धौ तैर्हिषतां बले । रुद्धे गोपाचलं त्यक्त्वा तेन्यानारुरुहुर्गिरीन् ॥११०७॥
अथोद्दतिष्ठद्योमेव राजानीकस्य वाहिनी । मल्लकोष्ठस्य पश्यक्षोभिताशेषदिक्तटा ॥११०८॥
अरिपृष्ठ महद्भयैस्तिष्ठन्स्वैर्वर्जितो बलैः । तदाज्ञाव्याख्निलैरेव हतो राजेत्यसंशयम् ॥११०९॥
आपातं सुस्सलो राजा यावत्तस्याविशोद्ध्वान् । तावत्तावरजः भञ्जिराजनाम रणाङ्गनम् ॥१११०॥

१०८४. 1) Thus A₁ in margin; A₁ तेजो in text. १०९०. 1) Thus A; perhaps to be emended मुङ्कटाः; cf. vii. 589. १०९३. 1) Emended (i.e. पाञ्चालाः); A पाञ्चालो.—2) Thus A; perhaps read with C फाल्गुन°. ११०४. 1) Thus A₂; A₁ विषाद. ११०८. 1) Emended; A °तिष्ठ मेन, C °तिष्ठत सुस्सेन. १११०. 1) Emended with C; A भाजिज°.

आषाढबहुलाहम्यां स हयारोहमेलकः । निजश्लाघ्यध्वनिप्रत्तसाधुवादो महानभूत् ॥११११॥
ताभ्यां स शमिते युद्धे सद्भनुः ससमीरणः । दावो नभोनभस्याभ्यामिव प्रापाम्बुवृष्टिभिः[1] ॥१११२॥
संग्रामबहले काले तादृगन्यो न कोप्यभूत् । यादृक्स दिवसो वीर्यशौटीर्यनिकषोपलः ॥१११३॥
अनीकिनी लाहरी सा विलम्बेनाययाविति[1] । तेषामुत्पाटनेच्छूनां नाभवद्धस्तमेलकः ॥१११४॥
अन्योन्यस्य परिज्ञाता दिवसे तत्र संकटे । भिक्षोर्भूमिभृता शक्तिर्भूमिभर्तुश्च भिक्षुणा ॥१११५॥
ततो मडवराज्यांस्तान्योद्धुं तत्रैव निर्दिशन् । क्षिप्तिकारोधसा युद्धमेत्य पृथ्वीहरोग्रहीत् ॥१११६॥
दिगन्तराद्रथायातो यशोराजो महीभुजा । मण्डलेश्वरतां निन्ये रिपून्प्रतिजिहीर्षुणा ॥१११७॥
खेरीकार्ये पुरा तस्य लवन्या दृष्टविक्रमाः । रणेषु मुखमालोक्य शतशः प्रचकम्पिरे ॥१११८॥
कुङ्कुमालेपनच्छत्रहयादिप्रतिपत्तिदः । सर्वेषामभिनन्द्यत्वं तं राजा स्वमिवानयत् ॥१११९॥
दीर्घोपप्लवयाप्येन दुःस्थितः स्वास्थ्यलिप्सया । जनो बबन्ध तत्रास्थां नववैद्य इवातुरः ॥११२०॥
ज्यायांसं पञ्चचन्द्राख्यं शेषाणां गर्गजन्मनाम् । नृपतिर्मल्लकोष्ठस्य प्रातिपक्ष्ये[1] न्ययोजयत् ॥११२१॥
शिशुश्चुड्डाख्यया मात्रा पालितः स शनैः शनैः । आश्रीयमाणोनुचरैः पित्र्यैः किंचित्प्रथां ययौ ॥११२२॥
यशोराजानुयातेन राज्ञा जन्येषु निर्जिताः । केचित्तत्पक्षमभजन्भग्नाः[1] केचिच्च डामराः ॥११२३॥
सभिक्षुः प्रययौ पृथ्वीहरः स्वमुपवेशनम् । मल्लकोष्ठोन्मुखो राजा निर्जगामामरेश्वरम् ॥११२४॥
अत्रान्तरे मल्लकोष्ठो विसृज्य निशि तस्करान् । सदाशिवान्तिके शून्यां राजधानीमदाहयत् ॥११२५॥
पृथ्वीहरेण भूयोपि योद्धुमागच्छतासकृत् । प्रज्जिसुज्जिमुखा युद्धमकुर्वन्क्षिप्तिकातटे ॥११२६॥
वारं वारं लवन्यः स नगरे निर्दहन्गृहान् । प्रायः शून्यत्वमनयद्वितस्तातीरमुत्तमम् ॥११२७॥
तत्र तत्र रणान्कुर्वन्प्राणसंदेहदायिनः । आचक्रामाथ नृपतिर्लहरं बहलैर्बलैः ॥११२८॥
निःसेतुं तरतः सिन्धुं दृतिभङ्गाद्ययुर्जले । मन्दिरं कन्दराजाद्यास्तदीयाः समवर्तिनः ॥११२९॥
दरदेशं ययौ मल्लकोष्ठो राज्ञा निराकृतः । सपुत्राप्यभजच्चुड्डा मारोहं लहरान्तरे ॥११३०॥
आनिन्यिरे जय्यकेन लवन्येन नृपान्तिकम् । त्रिपलाटान्तरात्तेथ जनकश्रीवकादयः ॥११३१॥
लहरारब्ध्यतिक्रान्तनिदाघः शरदागमे । शमालां निर्ययौ राजा यशोराजान्वितस्ततः ॥११३२॥
भग्नं पृथ्वीहरत्रासात्सैन्यं रक्षन्ननीमुखे । आजौ सज्जात्मजो डोम्बनामा राजसुतो हतः ॥११३३॥
युद्धं सुवर्णसानूरग्रामशूरपुरादिषु । कुर्वञ्शश्वन्नृपः प्राप पर्यायेण जयाजयौ ॥११३४॥
श्रीकल्याणपुराद्भङ्गं नीते पृथ्वीहरादिभिः । श्रीवक्के नागवत्साद्या युधि प्रापुः प्रमापणम् ॥११३५॥
पौषे सुवर्णसानूरान्निहन्तुं मातुरन्तकम्[1] । टिक्कं स देवसरसं व्यसृजद्गर्गवल्लभाम् ॥११३६॥
स्वेन राज्ञश्च सैन्येन सहिता सा जिताहिता । अकस्मात्तत्र टिक्केन निपत्य निहता युधि ॥११३७॥
स स्त्रीवधं व्यधात्पापी द्वितीयमपि निर्घृणः[1] । विशेषः कोथ वा तिर्यङ्म्लेच्छतस्कररक्षसाम् ॥११३८॥
अबलां स्वामिनीं हन्यमानां त्यक्त्वा पलायिताः[1] । चित्रं पशूपमाः शस्त्रं स्वीचक्रुर्लाहराः पुनः ॥११३९॥

---

१११२. [1]) The text of this verse appears to be defective. १११४. [1]) A विलम्भेन. ११२१. [1]) Emended with C; A प्रातिपक्षे. ११२३. [1]) Emended with C; A °कान्पक्ष°. ११३६. [1]) Conjectural reading: A मातुरन्तिकम्. Cf. viii. 1069 ff. and 1138. ११३८. [1]) Emended with C; A द्वितीयामपि. ११३९. [1]) Emended with C; A °यितः.

ईषल्लाघागतं शय्यां भूय एवोल्बणं नृपः । ज्ञात्वा मड्डवराज्यं स प्रययौ विजयेश्वरम् ॥११४०॥
मल्लराजतनूजानां निजा जिह्वेव दुर्जना । बभूव प्रभविष्णुत्वे व्यापद्यापातदूतिका ॥११४१॥
प्रायशापातने काले भृत्यास्तितउवृत्तयः । दर्शयन्ति समुत्सार्य सारं दोषतुषग्रहम् ॥११४२॥
आ बाल्यात्संस्तुताश्चीलवणःपरुषभाषितैः । निर्गीर्वैर्यशोराजो राज्ञि तस्मिन्व्यरज्यत ॥११४३॥
स दुर्जातिर्महासैन्ययुतोवन्तिपुरस्थितः । अभजत्तम उत्थाय प्रतिपक्षसमाश्रयम् ॥११४४॥
वैरिपक्षगते तस्मिन्बलैः सर्वोत्तमैः समम् । विह्वलो विजयक्षेत्रात्पलायिष्ट महीपतिः ॥११४५॥
धिग्राज्यं यत्कृते सोपि सेहे प्राणाभिरक्षिषुः । मुष्णद्भिश्चौरचण्डालप्रायैः परिभवं पथि ॥११४६॥
माघे पलाय्य नगरं प्रविष्टः स वधाभिधे । भृत्ये द्रोग्धर्यशङ्किष्ट स्वेषामपि तनूरुहाम् ॥११४७॥
काश्मीरके जनेशेषे निराशो नितरां ततः । अकुन्यस्तोत्तमाङ्गेनभूत्प्राञ्जिपक्षे क्षमापतिः ॥११४८॥
मुद्रिता रुद्रपालादिपूर्वराजात्मजप्रथा । प्रज्जिना विक्रमत्यागनयाद्रोहादिभिर्गुणैः ॥११४९॥
तेनैव वर्धितामुत्र देशे विशदकीर्तिना । कालदौरात्म्यलुलिता प्रतिष्ठा शाखशाम्बयोः ॥११५०॥
अमन्त्रयत संगम्य यशोराजस्तु भिक्षुणा । नेच्छन्ति डामरा राज्यं तत्र विक्रमशङ्किताः ॥११५१॥
उत्पाद्य पुनरुत्पिञ्जं साधिष्ठानबला वयम् । राज्यं स्वयं ग्रहीष्यामो यास्यामो वा दिगन्तरम् ॥११५२॥
इति तैर्मन्त्रिते छुड्डां हतां श्रुत्वा दरत्पुरात् । आगत्य मल्लकोष्ठोपि प्राविशत्स्वोपवेशनम् ॥११५३॥
वर्षोथ दुस्तरः ख्यात एकाब्दशतसंख्यया । सर्वभूतान्तकृल्लोके प्रावर्तत सुदारुणः ॥११५४॥
वसन्ते डामराः सर्वे प्राग्वन्मार्गैर्निजैर्निजैः । आगत्य भूयो भूपालं नगरस्थमवेष्टयन् ॥११५५॥
धीरः सुस्सलदेवोपि पुनरासीद्दिवानिशम् । निःसीमसमरस्तोमारम्भसंरम्भभाजनम् ॥११५६॥
दाहलुण्ठनसंग्रामकर्मशौण्डैः स डामरैः । प्राग्विप्लवेभ्योप्यधिको विप्लवः पर्यवर्धत ॥११५७॥
महासेरित्पथे निर्निरोधे तस्थुर्विविक्षवः । नगरं ते यशोराजभिक्षुपृथ्वीहरादयः ॥११५८॥
ततः कतिषुचिद्युद्धाहेषु यातेषु संगरे । निर्जेनैव यशोराजः परकीयभ्रमाद्धतः ॥११५९॥
कल्याणजेन हि समं विजयाख्येन सादिना । सौस्सलेन तु संग्रामे परावृत्तीः प्रदर्शयन् ॥११६०॥
विप्रलब्धैः सवर्णाश्वकवचावेक्षणाभिज्ञैः । शूलायुधिभिरुद्दामैः शूलाघातैरहन्यत ॥११६१॥
भिक्षो राज्यं समर्थोयं दातुं हन्तुं ततश्च नः । भीत्या तैर्डामरैरेव स घातित इति श्रुतिः ॥११६२॥
यथैष तेन विश्वस्तः स्वामी द्रोहेण वञ्चितः । तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे ॥११६३॥
पृथ्वीहरस्तत्र तत्र योधयित्वाथ डामरान् । क्षिप्तिकारोधसा भूयोभ्येत्य संग्राममग्रहीत् ॥११६४॥
तत्राधिष्ठानयोधानां भिक्षुपक्षोपजीविनाम् । पौरुषं स्वपरोत्कर्षपरिभावि व्यभाव्यत ॥११६५॥
वह्निदानमहायोधसंहाराद्यैरुपद्रवैः । एकमेकमहस्तत्रानेहस्यासीद्वयावहम् ॥११६६॥
अतपत्तरणिस्तीक्ष्णमभीक्ष्णं भूरकम्पत । ववुर्द्रुमाद्रीन्भञ्जन्तो महोत्पातप्रभञ्जनाः ॥११६७॥
पवनोत्थापितैः पांसुकूटैर्दध्रे महोद्धतैः । व्योम्नि प्रोत्तम्भनस्तम्भभङ्गिर्निर्घातदारिते ॥११६८॥

११४८. ¹) A काश्मीरिके.—²) Emended; A निराशो. ११५३. ¹) Emended with C; A °न्त्रितेच्छुड्डां. ११५७. ¹) Thus corr. by $A_2$ from $A_1$ – – – – भूस. ११६८. ¹) Thus A; G महोद्धतैः.

ज्येष्ठस्य शुक्लैकादश्यां प्रवृत्तेथ महारणे । काष्ठीले डामरा वह्निमेकस्मिन्प्रददुर्गृहे ॥११६९॥
सोमिर्वा मारुतोद्भूतः प्रसरन्वैद्युतोथ वा । जज्वालैकपदे कृत्स्नं नगरं निरवग्रहः ॥११७०॥
दृष्टस्तदानीमेतावद्गजस्यूह इवापतन्[1] । माक्षिकस्वामिनो धूमो बृहत्सेतौ यदुत्थितः ॥११७१॥
अथेन्द्रदेवीभवनविहारं सहसागमत् । ततो नगरमुज्ज्वालं क्षणात्सर्वमदृश्यत ॥११७२॥
न भूमिर्न दिशो न द्यौर्धूमध्वान्ते व्यभाव्यत । दुदुक्षामुखचर्माभो दृश्यादृश्योभवद्रविः ॥११७३॥
धूमान्धकारसंच्छन्नास्ततः प्रज्वलताग्निना । अपुनर्दर्शनायेव मुहुराविष्कृता गृहाः ॥११७४॥
वितस्तादृश्यतोज्ज्वालवेश्माश्लिष्टतटद्वया । रक्ताक्तोमयधारेव कृतान्तस्यासिवल्लरी ॥११७५॥
ब्रह्माण्डोर्ध्वकवाटान्तसंस्पर्शोत्पतितोन्नतैः । ज्वालाकलापैः संवृद्धैर्हैमच्छन्नवनायितम् ॥११७६॥
उच्चावचैर्युतो ज्वालाशृङ्गैर्हैमाद्रिसंनिभः । वह्निर्धूमच्छलान्मूर्ध्नि बभाराम्बुधरावलिम् ॥११७७॥
आविर्भवन्तो[1] ज्वालाभ्यो गृहाश्चक्रुर्मुहुर्मुहुः । अदग्धा एतं[2] इत्याशां विमुग्धगृहमेधिनाम् ॥११७८॥
ज्वलितैस्तापितजला[1] वितस्ता पतितैर्गृहैः । और्वोष्मवेदनाक्लेशं विवेद सरितां प्रभोः ॥११७९॥
दीप्तपक्षैः खगैः सार्कं ज्वलिता बालपल्लवाः । उद्यानद्रुमषण्डानां व्योमोड्डयनमादधुः ॥११८०॥
सुधासिताः सुरगृहा ज्वालासंवलिता बभुः । क्षयसंध्याम्बुदाश्लिष्टहिमाद्रिशिखरभ्रमम् ॥११८१॥
मज्जनाश्वासनौसेतुकदम्बैः प्लोषशङ्कया । अपास्तैर्नगरस्याम्भस्यर्युर्नद्योपि शून्यताम् ॥११८२॥
किमन्यन्मठदेवौकोगृहाट्टादिविवर्जितम् । नगरं क्षणमात्रेण दग्धारण्यमजायत ॥११८३॥
लोष्टावशेषे नगरे धूमश्यामो निरास्पदः । उच्चैरेको बृहद्बुद्धो दृष्टो दग्धद्रुमोपमः ॥११८४॥
सैन्येषु ज्वलितावासत्राणाय चलितेष्वथ । शतमात्रेण योधानां युतो भूभृदजायत ॥११८५॥
पारं गन्तुं वितस्ताया भिन्नसेतुं तमक्षमम् । लब्धरन्ध्रा द्विषोनन्ता निहन्तुं पर्यवारयन् ॥११८६॥
पुरं दग्धं स्वमुत्सन्नं[1] प्रजा नष्टाश्च चिन्तयन् । आसन्नं मरणं राजा निर्विण्णो बहुमन्यत ॥११८७॥
प्रस्थातुमथ तं प्रत्यङ्मुखमाशङ्क्य विद्रुतम् । संश्रितोन्यैः क्व मल्लियः क्व देवेत्यब्रवीद्वचः ॥११८८॥
संरम्भस्मितविद्योति चन्द्रनोल्लेखमाननम् । परिवर्त्य निरुद्धाश्वो धीरः स तमभाषत ॥११८९॥
तदद्य करवै भूमेः कृते हम्मीरसंगरे । चकार राजा भिञ्जो यस्तोभिमानी पितामहः ॥११९०॥
कुतस्त्योप्येष[1] दायादो यद्वातास्माकमस्मि वा । स हर्षदेवोपदृश्यन्नः कार्यशेषं पलायितः ॥११९१॥
को नाम मानिनां पङ्क्तौ प्रविष्टोन्ते निजां भुवम् । असिक्तां स्वाङ्गरक्ताक्तां[1] व्याघ्रः कृत्तिमिवोज्झति ॥११९२॥
इत्युक्त्वोदञ्चयन्वल्गामुत्क्षिप्तप्रमुखं हयम् । संस्प्रष्टुमिच्छुः[1] पाणिभ्यां कृपाणमुदनामयत् ॥११९३॥
ततो निगृह्य[1] वल्गायां वाजिनं लवराजजः । ऊचे भृत्येषु सत्स्वग्रे प्रवेशार्हो न भूभुजः ॥११९४॥
प्रहारविक्लवस्तिष्ठन्गृहादेकोभ्युपाययौ । संकटे तत्र भूभर्तुः पृथ्वीपालोन्तिकं परम् ॥११९५॥
कौलपुत्र्यं सुवंशस्य वात्सल्यादेव भूपतिः । स्वस्यात्मनिष्क्रयां[1] मेने सेवाविष्कृत्युपक्रियाम् ॥११९६॥

---

११७१. 1) Thus corr. by A₁ from °पतत्. ११७८. 1) Emended with C; A °भवन्तो.—2) Emended; A वत. ११७९. 1) Emended with C; A ज्वलितैस्ता°. ११८७. 1) Emended; A स्वमुत्सन्नं. ११९१. 1) Emended with C; A कुतस्त्येवेष; doubtful. ११९२. 1) Emended with C; A स्वाङ्गरक्तां. ११९३. 1) Emended; A संस्प्रष्टुमिच्छु; cf. viii. 1528 ११९४. 1) Emended with C; A निर्गृह्य. ११९६. 1) Emended with C; A स्वस्यात्मनिष्क्रियां.

अथ स्थितास्त्रिभिर्व्यूहैरहितास्तेकिरञ्शरान् । हन्तुं वामेन ते योधाः सर्वे वाहनदुर्मदाः ॥११९७॥

स प्रेरयंश्च तुरगं दैवात्तस्य च तादृशः । सहस्राण्यपि भूरीणि व्यधीयन्त विरोधिनाम् ॥११९८॥

अल्पसैन्यो द्विषत्खड्गमण्डलप्रतिबिम्बितः । नृपः साहाय्यकायातविश्वरूप इवाबभौ ॥११९९॥

1200 कलविङ्कानिव श्येनः कुरङ्गानिव केसरी । एको व्यद्रावयद्भूरीनरीन्सुस्सलभूपतिः ॥१२००॥

निपात्य पत्तीन्लुब्धानाम्खुराग्राण्यपि वाजिनाम् । प्राहरंस्ते हयारोहा व्यूहव्याहतरंहसः ॥१२०१॥

बिम्बितज्वलनज्वालाः सर्व एव महाभटाः । हन्तव्याश्च हताश्चासन्नसृक्स्रोतोरुणा इव ॥१२०२॥

स द्विषां कदनं कृत्वा दिनस्यान्ते न्यवर्तत । बाष्पायमाणोस्तकाशं[1] हव्याशेनोज्झितं पुरम् ॥१२०३॥

तादृशेप्यजिते तस्मिञ्जयाशागौरवं द्विषः । स चौज्झीद्रमणीयस्य विनाशाज्जीवितादरम् ॥१२०४॥

1205 आपन्स्वपन्श्वलंस्तिष्ठन्खादन्भक्षय सोरिभिः । निर्गच्छन्नित्यमाहूतो न कैरुद्धाप्यमीक्षितः ॥१२०५॥

वह्निनिर्दग्धसर्वान्नसंभारे मण्डलेखिले । दुःसहः सहसैवाथ घोरो दुर्भिक्ष आययौ ॥१२०६॥

दीर्घविप्लवसंक्षीणसंचया डामरैर्बहिः । उत्तब्धोत्पत्तयो रुद्धसंचारा दग्धमन्दिराः ॥१२०७॥

अनाप्नुवन्तो विधुरे राज्ञि राजकुलागमम् । दुर्भिक्षे तत्र सामन्ता अपि क्षिप्रं विपेदिरे[1] ॥१२०८॥

वह्निनिष्ठ्यूतशेषाणि वेश्मान्यन्नाभिलाषिभिः । बुभुक्षार्तैर्जनैर्दग्धो ददाहाग्निर्दिने दिने ॥१२०९॥

1210 सरितां सेतवो वारिसंसेकोच्छूनविग्रहैः । दुर्गन्धाः कुणपै रुद्धमार्गैस्तीर्णास्तदा जनैः ॥१२१०॥

निर्मांसनरकङ्कालकपालशकलाकुला[1] । उवाह सर्वतः श्वेता क्षितिः कापालिकव्रतम् ॥१२११॥

कृच्छ्रसंचारिणोक्षीभुश्यामक्षामोत्थविग्रहाः । व्यभाव्यन्त बुभुक्षार्ता दग्धस्थाणुनिभा जनाः ॥१२१२॥

अथ प्रबन्धयुद्धेन दिनैः क्वापीषुणा क्षतः । पृथ्वीहरो मृत इति श्रुतिर्मिथ्यैव पप्रथे ॥१२१३॥

गाढप्रहारविवशे तस्मिन्प्रच्छादिते जनैः । तां वार्तां श्रुतवान्राजा ननन्दायुद्ध चोद्धतम् ॥१२१४॥

1215 धीरेव पुंश्चली व्याजौत्सुक्यसंदर्शनेन तम् । जयश्रीर्लोभयन्त्यासीन्न तु भेजे समुत्सुकम् ॥१२१५॥

एकान्तवामहृदयो विधिरानुकूल्यं मिथ्या प्रदर्श्य विशिनष्ट्यनुबन्धि दुःखम् ।
अन्धीकरोति भृशमभ्रमगं ज्वलन्तं भास्वन्महौषधिभिदे प्रकटय्य वज्रम् ॥१२१६॥

दीर्घदुःखानुभूत्यन्ते यदीयागमनोत्सवम् । तपःफलमिव क्ष्माभृत्काङ्क्षन्नासीन्मनोरथैः ॥१२१७॥

वात्सल्येनान्वितं प्रेम गौरवेण प्रियं वचः । औचित्येन च दाक्षिण्यं सापत्न्यमिव या दधे ॥१२१८॥

तस्योपकरणीभूतविभूतिर्गृहिणी प्रिया । तस्मिन्काले महादेवी विपेदे मेघमञ्जरी ॥१२१९॥तिलकम्[1]॥

1220 विनोदशून्यनिर्विण्ण[1]लोकयात्रं जगद्विदन् । प्राणै राज्येन वा कृत्यं न स किंचिन्निरैक्षत ॥१२२०॥

सा भर्तुर्व्यसनोदन्तैः कृशा काश्मीरसंमुखी । औत्सुक्यात्तत्यानासीच्छ्रान्ता फुल्लपुरान्तिके ॥१२२१॥

पूर्वं तद्दर्शनाशाया दुर्वार्तायास्ततोतिथिः । भवन्नतोधिकं राजा दुःखावेगेन पस्पृशे ॥१२२२॥

राज्ञीमज्ञातपारुष्यतयादूषितभक्तयः । अनुसस्रुश्चतस्रस्ताः परिवारवरस्त्रियः ॥१२२३॥

अप्रत्यक्षे क्षयेप्यस्या भक्त्युद्रिक्तास्त्वमत्यजन् । तेजो नामाभवत्तद्वद्वन्द्यो भृत्यान्तरेधिकम् ॥१२२४॥

1225 स दासंनिहितोन्यस्मिन्नह्न्यायासो निजं शिरः । तच्चितोपान्तखड्गेन भङ्क्त्वा प्राविशन्नदीम् ॥१२२५॥

११९७—११९८. [1]) The text in these two verses appears to be corrupt or incomplete. १२०३. [1]) Thus A. १२०८. [1]) Emended; A प्रपे°. १२११. [1]) Emended with C; A °कुला.. १२१९. [1]) $A_1$ writes here ३ instead of तिलकम्. १२२०. [1]) ण्ण supplied by $A_3$ in space left by $A_1$.

आहवाह्वानसंरम्भैः शोकविस्मृतिकारिणः । राज्ञो द्विषः कार्यवशादुपकारित्वमाययुः ॥१२२६॥
स राज्यमथ निक्षेप्तुकामो निर्विण्णमानसः । व्युत्क्रान्तशैशवं पुत्रमानिन्ये लोहराचलात् ॥१२२७॥
मण्डलेश्वरतां पज्जेर्भ्रातृव्यं भागिकाभिधम् । नीत्वा च गुप्तिमकरोल्लोहरे कोशदेशयोः ॥१२२८॥
वराहमूलं संप्राप्तमथायातः प्रियं सुतम् । आश्लिष्य विषयो राजा बभूवानन्दशोकयोः ॥१२२९॥
राजसूनुस्त्रिभिर्वर्षैः प्रत्यायातः स्वमण्डलम् । स पश्यन्पितरं चान्तरसुस्थितमतप्यत ॥१२३०॥
खेदम्लानाननो लोष्टावशेषं सोऽविशत्पुरम् । अम्बुलम्बाम्बुदो दावनिर्दग्धमिव काननम् ॥१२३१॥
राज्येऽभ्यषिञ्चदायादस्याद्येह्नि जनकोऽथ तम् । अवादीद्राज्यतन्त्रं च कृत्स्नमुत्काकुगद्गदः ॥१२३२॥
श्रान्ताः पितृपितृव्यास्ते न यां वोढुमशक्नुवन् । धुरमुद्वह तां वीर त्वयि भारोऽयमर्पितः ॥१२३३॥
साम्राज्यप्रक्रियामात्रपात्रं पुत्रं नृपो व्यधात् । न त्वार्पिपदधीकारं तस्मिन्दैवविमोहितः ॥१२३४॥
अभिषेकविधावेव राजसूनोः शमं ययुः । पुरोपरोधावग्राहव्याधिचौराद्युपद्रवाः ॥१२३५॥
संपन्नसस्या च तथा देवी संववृते मही । दुर्भिक्षं श्रावणे मासि यथावग्रशमं ययौ ॥१२३६॥
अत्रान्तरे सिंहदेवो रणे कुर्वन्नरिक्षयम् । कर्णजपैर्जनयितुर्द्रोग्धायमिति सूचितः ॥१२३७॥
कोपादविमृशस्तत्त्वं स बन्द्धुं तं व्यसर्जयत् । कृत्यात्मकं राजसूनुस्तत्तु प्रागेव बुद्धवान् ॥१२३८॥
कोपस्मितोत्कटस्याग्रे स तस्याप्रतिभोऽभवत् । निनाय रक्षामात्रेण पार्थिवाज्ञाममोघताम् ॥१२३९॥
अभुक्तवान्मनस्तापात्प्रत्ययोत्पत्तये पितुः । साकं तेन सुतोऽन्येद्युर्गन्तुं प्रावर्ततान्तिकम् ॥१२४०॥
आक्षेप्तुं शङ्कितोऽशक्य इति मत्वा स मन्त्रिभिः । मार्गाद्व्यवर्तयत तं पिता मिथ्या प्रसादयन् ॥१२४१॥
अन्तस्तु निधिकायेति प्रविश्यानर्कितागमः । बद्ध्वैनं स्थापयिष्यामि कारायामिति सोऽनिशम् ॥१२४२॥
धिग्राज्यं यत्कृते पुत्राः पितरश्चेतरेतरम् । शङ्कमाना न कुत्रापि सुखं रात्रिषु शेरते ॥१२४३॥
पुत्रपत्नीसुहृद्भृत्या येषां शङ्कानिकेतनम् । विस्रम्भभूर्भूपतीनां कस्तेषामिति वेत्ति कः ॥१२४४॥
साह्याभिधानप्रख्यातकुमारोपान्तवासिनः । खलपालस्य तनयः स्थानकाख्यस्य कस्यचित् ॥१२४५॥
शैशवे पांशुपाल्येन वर्धितो डामरोद्भवैः । गृहीतशस्त्रस्तत्स्थैर्यं क्रमाड्डिक्कस्य लब्धवान् ॥१२४६॥
प्रथमाब्दात्प्रभृत्यात्तद्रूपो भूभर्तुराप्तताम् । प्रययावुत्पलो नाम वैरिविच्छेदमिच्छता ॥१२४७॥
स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुम् । जगादाङ्गीकृतैश्वर्यदानष्टिक्कोपवेशने ॥१२४८॥
कृतप्रतिश्रवं तस्मिन्नर्थे तं च महर्द्धिभिः । दानैरुपाचरद्रञ्जपतिनाम्न्याप्ययोजयत् ॥१२४९॥
भोगलोभप्रभुद्रोहचिन्तादोलायमानधीः । स कार्यं परिहार्यं वा न कृत्यं निश्चिकाय तत् ॥१२५०॥
प्रासोष्टापत्यमथास्यास्तद्वधूः कार्यतो नृपः । ततश्च प्राहिणोत्तस्यै पितेव प्रसवोचितम् ॥१२५१॥
सा तस्मात्सुपचारस्य कारणं परिशङ्किता । पतिं पप्रच्छ निर्बन्धात्सोऽपि तस्यै न्यवर्णयत् ॥१२५२॥
न कार्यः स्वामिनो द्रोहः कृते वास्मिन्न सुस्सलः । त्वामेव शनकैर्हन्याद्रोग्धायमिति चिन्तयन् ॥१२५३॥
वरं स एव विश्वास्य व्यापाद्यस्तव वेश्मधः । भवेन्ने स्वामिपुत्रादिकुटुम्बं स्याद्विभूतिभाक् ॥१२५४॥

---

१२३८. ¹) A °विमृशं°.—²) Emended; A बन्धुं. १२४४. ¹) Thus A. १२५१. ¹) Emended with C; A प्राहिणो°.

भार्येयेति प्रेर्यमाणः स निश्चयविपर्यये । टिक्कं विदितवृत्तान्तं कृत्वा वड्डोद्यमः कृतः ॥१२५५॥
गतागतानि कुर्वाणे दुधुक्षावथ पार्थिवः । स पुत्र इव विश्वासं ययौ दैवविमोहितः ॥१२५६॥
विपर्यस्ता मतिः पुत्रे विश्वासो वैरिसंभिते । जायते क्षीणभाग्यानां को नाम न विपर्ययः ॥१२५७॥
वैधेयैः स्वार्थलोभान्धैर्यैः सहानर्थसमागमः । सरघोपद्रवः क्षौद्रलुब्धैरिव न चिन्त्यते ॥१२५८॥
तं पीडितं प्रज्जिना च राज्ञा चावनतिं ततः । उत्पलोऽकारयट्टिक्कं नीतिं चादापयत्स्तुतम् ॥१२५९॥
राजाथ देवसरसं जितं संत्यज्य कार्तिके । बाहुकाख्यमगाद्ग्रामं खेरीविषयवर्तिनम् ॥१२६०॥
स कल्याणपुराभ्यर्णे रणैस्तैस्तैर्विलक्षताम् । भिक्षुकोष्ठेश्वरमुखानपि निन्ये महाभटान् ॥१२६१॥
मध्याद्भिक्षाचरादीनां सुज्जिः[1] काककुलोद्भवम् । जीवग्राहं महावीरं युधि जग्राह शोभकम् ॥१२६२॥
भवकीयस्य कृत्वादौ विजयस्य पराभवम् । भूभुजा तद्गृहा दग्धाः कल्याणपुरवर्तिनः ॥१२६३॥
दग्धे वड्डोसके[1] भिक्षाचरो नष्टाभयो व्यधात् । त्यक्त्वा तां क्ष्मां शमालायां ग्रामे काकरुहे स्थितिम्[2] ॥१२६४॥
अनुजो भवकीयस्य विजयस्य भयान्नृपम् । संश्रितस्तेन तुङ्गेण बद्ध्वा कारागृहेऽर्पितः ॥१२६५॥
भूरिसैन्यानुगं शूरपुरे विन्यस्य रिल्हणम् । आस्कन्दाशङ्किनीं राजा चक्रे राजपुरीमपि ॥१२६६॥
इत्थमुद्दण्डया वृत्त्या खण्डितोद्दण्डडामरः । स्तोकावशेषं सोऽपश्यत्कर्तव्यमरिनिर्जयम् ॥१२६७॥
भिक्षाचरो लवन्याश्च शक्तिक्षयमुपागताः । विदेशगमनं भीता रिपौ बलिनि मेनिरे ॥१२६८॥
किमप्यभाग्यावतारैर्भिक्षुपक्षजुषां यतः । जीवतामप्यनुल्लासान्निर्जीवत्वमिवाययौ ॥१२६९॥
स सोमपालकौटिल्यं स्मरन्क्रुधा हिमात्यये । श्मशानोर्वीं राजपुरीमिति ध्यायन्व्यवर्तत ॥१२७०॥
शान्तप्रायस्वदेशोर्वीविग्रहस्य महीपतेः । तस्यार्णवान्तक्रमणप्रतीतिः समभाव्यत ॥१२७१॥
शतैकीयो योऽवशिष्टो विग्रहक्षपिते जने । वर्षं वर्षं स तद्राज्ये युगदीर्घं त्वमन्यत ॥१२७२॥
असुखवासदारिद्र्यप्रियनाशादिवैशसैः । स राज्यकालः सर्वस्य परितापावहोऽभूत् ॥१२७३॥
नरः पौरुषनैष्ठुर्यशालित्वेन करोति किम् । विधातृवृत्तिवैचित्र्यपराधीनासु सिद्धिषु ॥१२७४॥
पुरोभूतं कंचित्परिहरति राशिं तम इव व्यतीते कस्मिंश्चिद्वारिरिव विवृत्यास्यति दृशम् ।
स्वमुत्क्रुष्टासन्नं क्वचन नृपतिं दर्दुर इव क्रमेल्कदुर्दृष्टः स्फुटमिति गतीनामनियमः ॥१२७५॥
विश्वासनिहतानिन्दुमुखालादीन्पुरावसत् । नित्यं त्रिकोशशङ्को यः पुराविज्ञो निशम्य च ॥१२७६॥
विदूर[1]थादिवृत्तान्तं नादात्केलिक्षणे क्षुवन् । स्त्रीषु संभुज्यमानासु[2] विश्वासविशदां दृशम् ॥१२७७॥
स बन्धाविव निर्बन्धाद्विशश्वास यदुत्पले । तत्र संभाव्यते केन दैवादन्यो विमोहकृत् ॥१२७८॥
टिक्कादयो भूमिपतेः सुज्जेर्वान्यतरे[1] हते । स्वां तुल्यकार्यकर्तारं विद्म इत्यूचुरुत्पलम् ॥१२७९॥
सुज्जिर्न व्यश्वसीत्तस्मिन्स जिघांसुस्तु भूभुजम् । तत्र तत्राभवत्सज्जः प्रसङ्गं नासदत्पुनः ॥१२८०॥
प्रतिभुवविलम्बेन समन्वीरथ भूपतेः । प्रत्ययोत्पत्तये देवसरसाधीविमात्मजम् ॥१२८१॥

१२५८. 1) A₂ gloss सरघा मधुमक्षिका (*Amara*. ii. 5. 26). १२६२. 1) Emended; A सुज्जि. १२६४. 1) A वड्डोसके; perhaps read वड्डोरसके. Cf. वाड्डेरस्सः viii. 1306.—2) Emended with C; A स्थितं. १२७३. 1) The last two *pādas* have become in A partly illegible by an ink blot and have been repeated in the margin by the same hand which supplemented the gloss to i. 110. १२७४. 1) Emended with C; A °वैचित्र्य°. १२७७. 1) Emended with C; A विदूरथा°.—2) Emended; A °मानात्स्वाविश्वास°. १२७९. 1) Emended; A °न्यतमे.

व्याघ्रप्रशस्तराजादींस्तीक्ष्णांश्चात्मसमान्परान्[1] । आदाय कार्यमित्रैर्मे सिध्येदित्युक्तवान्नृपम् ॥१२८२॥
उचित्योचित्य सेनाभ्यो गृहीतैः साहसक्षमैः । शनैः समं त्रिचतुरैः पत्तीनामेकदा ययौ ॥१२८३॥ तिलकम्[1]॥
समयान्वेषिणो हन्तुस्तस्यासन्नस्य सर्वदा । प्रियाहारादिदानेन हन्तान्तःप्रीतिकार्यभूत् ॥१२८४॥
तुरंगं मन्दुराचक्रवर्त्यौचयं नगरस्थितम् । अस्वस्थमुल्लाघयितुं तुरगव्यसनी नृपः ॥१२८५॥
स लक्ष्मक[1]प्रतीहारकल्याणप्रमुखान्निजान् । पार्श्वाद्विसृष्टवांनासीत्क्षणे तस्मिन्मितानुगः ॥१२८६॥
भृङ्गारो लक्ष्मकापत्यं निशम्याप्तैर्निवेदितम् । व्यधाच्छ्रुतिपथे राज्ञस्तदुत्पलचिकीर्षितम् ॥१२८७॥
विरुद्धे बन्धुधीर्दृष्टहिंसारम्भेपि संभवेत् । आसन्नजीवितान्तस्य जन्तोः सूनापशोरिव ॥१२८८॥
स शापो गान्धार्यास्तदपि सदृशो भाषितमृषेस्त उत्पाताश्चक्षुः स्वमपि तदभीमं प्रकटयत्[1] ।
कुलान्तं तत्त्राणाक्षममकृत वैकुण्ठमपि तद्विदन्नप्यन्यत्वं क इव भवितव्यस्य कुरुताम् ॥१२८९॥
मिथ्यैतदित्यधिक्षिप्य क्षितिपालः प्रदर्शयन् । तमकुल्योत्पलादींस्तानपस्थानेवमब्रवीत् ॥१२९०॥
द्रोग्धुः सुतोभवद्योगादनिच्छन्स्वात्स्वमेव मे । त्वां दुष्टमुत्पलाचष्टे स्वेनान्यैर्वाथ चोदितः ॥१२९१॥
ते छादयन्तः स्मेरास्या धाष्ट्र्येन भयवैकृतम् । वक्ति देवो यदस्माभिर्वाच्यमित्येवमूचिरे ॥१२९२॥
निर्यातेष्वथ तेष्वीषत्साशङ्क इव निश्चलाम् । द्वाःस्थेनाकारयद्दूरानन्तिके मुख्यशस्त्रिणः ॥१२९३॥
उन्मनाश्च किमप्यासीद्विनिःश्वस्य स चिन्तयन् । साशुश्च न रतिं लेभे नृत्तगीतादिदर्शने ॥१२९४॥
मेने वैदेशिकप्रायानाप्तानपि धृतभ्रमः । पुण्यक्षये पिपतिषुर्वैमानिक इवाम्बरात् ॥१२९५॥
राजान्तरङ्गाः साशङ्काः प्रभौ शाठ्येन मोहिते । पूत्कारमैच्छन्दातारमन्यं केचिदचेतनाः ॥१२९६॥
अयमेव स कालस्य बलात्कवलनग्रहः । विदन्तोपि यदायान्ति जन्तवः कृत्यमूढताम् ॥१२९७॥
सर्वान्तरक्षणेव्यस्तचक्षुषो दिवसद्वयम् । उत्पलाद्याश्च साशङ्काः कथमप्यत्यवाहयन् ॥१२९८॥
रहः क्षणप्रार्थिनस्तांस्तृतीयेह्न्यब्रवीन्नृपः । स्नात्वा प्रत्यूषे तत्पूर्वं भोक्तुं यात मुहुर्गृहम् ॥१२९९॥
देवतार्चनपर्यन्तमवसायाह्निकं विधिम् । आजुहावोत्पलं दूतैर्मध्याह्ने च रहःस्थितः ॥१३००॥
कार्यसिद्धिं श्रद्दधानो वैजन्याद्राजसद्मनः । राज्ञोभ्यर्णं स साशङ्कं द्वाःस्थ[1]दत्तानुगोविशत् ॥१३०१॥
प्रावेशयद्वारि रुद्धं व्याघ्रं तदनुजं नृपः । शेषाणामपि भृत्यानामादिदेश बहिःस्थितिम् ॥१३०२॥
विलम्बमानेष्वाप्तेषु केषुचित्सदृशो वचः । सत्यं तस्योद्ययावास्तां सोम द्रोग्धा य इत्यपि ॥१३०३॥
ताम्बूलदायकः श्रीडवयास्तेनावरोधितः । सांधिविग्रहिको विद्यान्नाहिलश्चान्तिके परम् ॥१३०४॥
दूतौ टिक्कस्यार्यदेवतिष्यवैद्या[1]भिधावुभौ । तत्र प्रसङ्गादासातामज्ञातोत्पलसंविदौ ॥१३०५॥
वाडौरसः[1] सुखराजा[2]ख्यो डामरो भिक्षुसंमतः । प्रयास्यति प्रभोर्दृष्ट्वा पादौ तत्कार्यसिद्धये ॥१३०६॥
इत्युक्तवांस्तेष्वहःसु तं नृपं नातिदूरगम् । ससैन्यं डामरं[1] चक्रे स्वस्य त्राणार्थमुत्पलः ॥१३०७॥
तथा चैनं तस्थिवांसं कृत्यमस्त्यमुनेति च । उक्त्वा प्रशस्तराजं तं पार्श्वं प्रावेशयद्द्रुतम् ॥१३०८॥
प्रविष्टो निर्जनं बाह्यमाकलय्य स मण्डपम् । अलक्ष्यमाणव्यापारो द्वारमर्गलितं व्यधात् ॥१३०९॥

१२८२. [1]) Emended; A °स्मसराम्परान्. १२८३. [1]) A₁ writes here ३ instead of तिलकम्. १२८६. [1]) Thus A₁; A₂ पद्मक.°— [2]) का supplied by A₂ in space left by A₁. १२८९. [1]) Emended; A प्रकटयन्. १३०१. [1]) Emended; A हास्य. १३०५. [1]) Emended; A °स्यार्यदेवतिष्यवैद्य°; Cf. viii. 1543. १३०६. [1]) A वाळौरसः perhaps read वाडोरसः. Cf. वडोसके viii. 1264.—[2]) A सु×ख°. १३०७. [1]) A डमरं.

स्नानार्द्रकेशं शीतालुतया प्रावारवेष्टितम् । कृत्वा कृत्स्नं वपुः कृष्टशस्त्रीकं विष्टरोपरि ॥१३१०॥
आसीनं वीक्ष्य नृपतिं प्रसङ्गो नेदृशो भवेत् । विज्ञप्तिं कुरु भूभर्तुरित्यूचे व्याघ्र उत्पलम् ॥१३११॥
स तया संज्ञया व्यग्रः पादप्रणतिकैतवात् । राज्ञोऽग्रमेत्य तच्छस्त्रीं विष्टरस्थामपाहरत् ॥१३१२॥
विकोशां चाकरोत्पश्यंस्तां तयोद्भ्रान्तलोचनः । प्राह स्म हा धिक्किं द्रोह इति यावद्वचो नृपः ॥१३१३॥
प्राहरत्प्रथमं तावत्सव्ये पार्श्वे तथैव सः । तस्य प्रशस्तराजेन मूर्धनि प्रहृतं ततः ॥१३१४॥ युग्मम् ॥
व्याघ्रेणाथ क्षतं वक्षस्ताभ्यामेवासकृत्तदा । प्रहृतं तत्र स पुनः प्राहरच्च द्विरुत्पलः ॥१३१५॥
पूर्वमेव प्रहृत्या हि छिन्नपार्श्वास्थिमालया । मेने कृष्टान्यतच्छस्त्रीकं स तं प्रोषितजीवितम् ॥१३१६॥
गत्वा तमोरिं पूत्कर्तुमिच्छन्व्याघ्रेण राहिलः । पृष्ठे कृताहतिश्छिन्ना नालिका नोज्झितोऽसुभिः ॥१३१७॥
ताम्बूलदायकस्त्यक्त्वा कङ्कोलाद्यञ्जको व्रजन् । दीनो निजेभ्यः कारुण्यादुत्पलेनैव रक्षितः ॥१३१८॥
अन्तः समुत्थिते क्षोभे बाह्यमण्डपवर्तिभिः । टिक्काद्यैः कृता लुण्ठिर्द्रोहगृध्नैरुदायुधैः ॥१३१९॥
उत्पलो निहतो राज्ञेत्यवेत्य कटकस्थितैः । बहिःस्थान्हन्यमानांस्त्रान्समाश्वासयितुं ततः ॥१३२०॥
रक्तार्द्रशस्त्रं संदर्श्य तमोरेर्वपुरुत्पलः । ऊचे मया हतो राजा न त्याज्या वयमूरिति ॥१३२१॥
तच्छ्रुत्वा दुःश्रवं राजभृत्याः क्वापि भयाद्ययुः । द्रोहानुगास्त्वङ्गनान्तर्लब्धोल्लासा व्यधुः स्थितिम् ॥१३२२॥
निर्यान्तो मण्डपात्तीक्ष्णा निजघ्नुर्नागकाभिधम् । द्वारालाविष्टं निष्कृष्टकृपाणीकं नृपानुगम् ॥१३२३॥
भूपालशय्यापालस्य त्रैलोक्याख्यस्य सेवकः । निन्दन्द्रोहं टिक्काद्यैर्द्वाःस्थैरेको विपादितः ॥१३२४॥
उत्कृष्टं नष्टसत्त्वानां मध्ये राजानुजीविनाम् । सखेटकासिं धावन्तं भावुकान्वयभूषणम् ॥१३२५॥
दृष्ट्वा सहजपालाख्यं पार्श्वद्वारेण निर्ययुः । तीक्ष्णाः स त्वपतद्भूमौ तद्भृत्यप्रहतिक्षतः ॥१३२६॥
जाते कुकीर्तिकालुष्यपात्रे राजात्मजव्रजे । वैलक्ष्यक्षालनं सिद्धं तस्य स्वक्षतजैः परम् ॥१३२७॥
हतो दौःशिकसंबाधिदेहो राजात्मजक्रमात् । विड्डाग्निजन्मा नोनाख्यस्तीक्ष्णपक्षैः पुरो गतः ॥१३२८॥
अक्षतान्व्रजतो वीक्ष्य तीक्ष्णान्प्रासान्तरोन्मुखान् । चित्रार्पिता इव क्रोधाद्धावन्केऽपि शस्त्रिणः ॥१३२९॥
राजवंश्या महीपालप्रीतिपात्रमथाययुः । स्थगयन्तोऽङ्गनं स्थूलकाया जनविवर्जितम् ॥१३३०॥
तांस्तान्कापुरुषान्हर्षदेवोदन्तात्प्रभृत्यलम् । स्मृत्वा च कीर्तयित्वा च कृतभारग्रहा इव ॥१३३१॥
जाता दुष्कृतसंस्पर्शात्खेदात्कर्तुं न शक्नुमः । पापात्पापीयसां येषां नामग्रहणसाहसम् ॥१३३२॥
अङ्गनान्मण्डपारूढिं मन्वानाः पौरुषं महत् । पापिनः केऽपि तन्मुख्या ददृशुः स्वामिनं हतम् ॥१३३३॥
अधरेणाप्तसंस्कारलेशावेशप्रकम्पिना । वदन्तं दन्तदष्टेन स्वान्तस्थामनुतप्तताम् ॥१३३४॥
वञ्चितः कथमेषोऽहमिति मामेति चिन्तया । निस्पन्दे जीवितान्तेऽपि तथैव दधतं दृशौ ॥१३३५॥
श्यामायमानं बाष्पेण व्रणवक्त्रैरुदश्वता । अन्तःप्रशान्तामर्षाग्निशेषधूमलताश्रिया ॥१३३६॥
आननस्यास्फुटीभूतचन्दनोल्लेखकुङ्कुमम् । रक्तया लिखितस्येव घनक्षतजलाक्षया ॥१३३७॥
आहवानाक्तजटीभूतकेशं नग्नं भुवि च्युतम् । पर्यस्तपाणिचरणं स्कन्धामालम्बिकन्धरम् ॥१३३८॥

१३१३. ¹) Emended with C; A विकोशं. १३१४. ¹) $A_1$ writes here २ instead of युग्मम्. १३१८ ¹) Emended; A कङ्कुला°. १३२४. ¹) Conjectural reading; A °शयापालस्य.—²) Emended; A °र्द्वास्थश्चैको.—³) Emended; A व्यपादितः. १३२८. ¹) Emended; A हतदेहि°. १३३३. ¹) The first *pāda* of this verse has been first omitted and subsequently supplied by $A_2$ in margin. १३३८. ¹) A कन्धरम्.

तं वीक्ष्य नोचितं किंचिदभिरुस्ते नराधमाः । वैजन्यस्य फलं भुङ्क्ष्वेत्यावेगादधिचिक्षिपुः ॥१३३९॥
बद्धा तुरंगे युग्ये वा न तैर्नीतधिताभिसात् । कर्तुं न वा पारितः स प्राणत्राणाय धार्मिकैः ॥१३४०॥
आस्तां विलम्बसाध्यं वा कर्मैतद्वाष्ट्रदारुसात् । सज्जाभिं चाभिसात्रेहमपि कश्चिन्न नाकरोत् ॥१३४१॥
राजवाजिनमेकैकं नेऽध्यारुह्य पलायिनाः । निर्लुण्ठितस्तु कटको ग्रजग्धामेषु डामरैः ॥१३४२॥
न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयन् । मृतं हतं लुण्ठितं वा प्रचलन्सहितेऽध्वनि ॥१३४३॥
न कोपि शस्त्रभृत्सोभूत्स्मृत्वा मानोन्नतिं पथि । परैराक्षिप्यमाणो यः शस्त्रं वस्त्रं च नात्यजत् ॥१३४४॥
लवराजयशोराजद्विजौ व्यायामवेदिनौ । कान्दश्च राजा निहता वीरवृत्त्या ययुः परम् ॥१३४५॥
अदूरादुत्पलाद्यास्तु कटकं वीक्ष्य विद्रुतम् । प्रविष्टा वाद्युवं छित्त्वा शिरो निन्युर्महीपतेः ॥१३४६॥
गतेषु देवसरसं तेषु छिन्नशिरा नृपः । हतचौर इव प्राप ग्राम्याणां प्रेक्षणीयताम् ॥१३४७॥
एवं द्रोहैस्तृतीयाब्दामावास्यायां स फाल्गुने । पञ्चपञ्चाशतं वर्षाणायुषोतीतवान्हतः ॥१३४८॥
विलासशयनस्थस्य सिंहदेवस्य सा श्रुतौ । प्रेमाक्ष्येनैत्य दुर्वार्ता धात्रेयेण व्यधीयत ॥१३४९॥
संभाव्यते योनुभावः सशास्त्रस्याभियश्रुतौ । हतशस्त्रोपि तं प्राप स तदा पितृवत्सलः ॥१३५०॥
मोहलुप्तस्मृतिः स्मृत्वा चिरादुन्नतचेतनः । तत्तुःखाहतधतिर्विललाप स्फुटास्फुटम् ॥१३५१॥
मदर्थं कुर्वता राज्यं प्रयत्नादपकण्टकम् । अधमे किं महाराज त्वयात्मा परिभावितः ॥१३५२॥
अहेतेः पश्यतः शत्रूनन्ते वैरविशुद्धये । अपि ते मानिनोगच्छंस्तात संभावनाभुवम् ॥१३५३॥
त्वया निवेधिते वैरे पिता भ्राता च ते दिवि । निर्मन्युः संप्रति त्वं नु वर्तसे मन्युदुःस्थितः ॥१३५४॥
अनरण्यकृपद्रोणजामदग्न्यादिषु स्पृहाम् । कुल्यक्षालितवैरेषु मा कार्षीः कांचन क्षणम् ॥१३५५॥
शोच्यस्त्वदाश्रयो मन्युरहं शोधयिता नृप । ब्रुवे न तत्र यातं यत्त्रैलोक्यमभियोज्यताम् ॥१३५६॥
वात्सल्योत्पुलकस्मेरं स्निग्धोक्तिमधुरं मुखम् । मद्दर्शने यदासींत्ते तन्मे पुर इवाधुना ॥१३५७॥
इति चान्यच्च विलपन्गाम्भीर्यालक्ष्यतीकृतः । ह्रीशोकभयमूकान्स ददर्शामात्पितुः पुरः ॥१३५८॥
आशिक्षयत यन्मन्युर्दाक्षिण्यं निरुरोध तत् । तथाप्येवं स तानूचे किंचिदाक्षेपकर्कशम् ॥१३५९॥
कोशैः सद्वंशतां वीक्ष्य कुर्वतः सत्क्रियां गताः । धिग्भवन्तश्च शस्त्रं च तातस्यान्ते विपर्ययम् ॥१३६०॥
यन्मत्पितृवधे निहते कृतमुच्छिष्टजीविभिः । मान्यानां भवतां सिद्धं हा धिक्तदपि नाधुना ॥१३६१॥
इत्युपालभ्यमानस्तान्द्विवैरन्तिकमागतैः । द्विवैरमात्यैः कर्तव्यश्रुतयेवाहितः कृतः ॥१३६२॥
प्रस्थानं लोहरे केचिद्ब्रुवः संत्यज्य मण्डलम् । त्वरां च तत्र राज्यन्ते वदन्तो भैक्षवं भयम् ॥१३६३॥
गर्गात्मजं पञ्चचन्द्रमालम्ब्य लहरस्थितम् । हैराज्याचरणायान्ये धीरप्राया बभाषिरे ॥१३६४॥
न हि स्वगृहवद्विक्षोर्भविक्षोर्नगरान्तरम् । अज्ञापि प्रत्यवस्थानं केनाप्यसति सुस्तले ॥१३६५॥
आत्मन्यसंभावनया तादृशां मन्त्रिणां नृपः । सान्तःखेदं भो विधेयं ब्रुध्यथेत्यब्रवीद्वचः ॥१३६६॥
कालापेक्षापरिव्यक्तपितृव्यापत्तिदुःस्थितः । स कोशादिव्ययादिक्षद्रक्षिणस्त्राणदीक्षितान् ॥१३६७॥

१३४६. ¹) Thus A; cf. वाद्युवं viii. 1459. १३४९. ¹) Emended; A धार्मीयेन. १३५०. ¹) श्रुभाव supplied by $A_2$ in space left by $A_1$. १३५५. ¹) Thus A. १३६०. ¹) Emended; A कुहत:. १३६१. ¹) Emended with C; A न हते. १३६४. ¹) Emended; A °लम्ब्य. १३६६. ¹) तादृशां supplied by $A_2$ in space left by $A_1$.

इतश्चेतश्च बम्भ्रम्यमाणैः प्रोद्यत्तुमुलस्वरम् । अन्योन्याख्यायिभिर्लोकैः पुरं मुखरतामगात् ॥१३६८॥
प्रनृत्तवेतालमालेव कालरात्र्याकुलेव च । बभूव सा यामवती सर्वभूतभयावहा ॥१३६९॥
दीनैर्निर्वातनिष्कम्पैश्चिन्तास्पन्दैश्च मन्त्रिभिः । तिष्ठन्परिवृतो राजा स्वान्तरेवमचिन्तयत् ॥१३७०॥
निर्हारे सततमस्तुपमाहते शून्यवेश्मनि । तातोपि निहतः शून्ये मयि जीवत्यनाथवत् ॥१३७१॥
कष्टमेतादृशायशःपङ्कक्षालनमावधि । कथं गोष्ठीषु शक्ष्यामि द्रष्टुं मानवतां मुखम् ॥१३७२॥
विरोधिसंश्रयार्थिभ्यो देशेभ्यः सैन्यनायकाः । सहिमैरेव दुर्लङ्घ्यैः कथमेष्यन्ति वर्त्मभिः ॥१३७३॥
इत्थं विमृशतस्तस्य तत्सीमाभिषङ्गिनः । ययौ भीतिमतो भीमा कथंचित्सा निशीथिनी ॥१३७४॥
प्रातश्चतुष्किकां पौरसमाश्वासाय निर्गतः । नष्टं कटकमन्वेष्टुं सोश्वारूढान्व्यसर्जयत् ॥१३७५॥
मार्गानश्वीयसंचारैस्तुषारैर्विवृतोज्झितान् । आश्लिष्टवसुधा मेघाः कर्तुं प्रारेभिरे ततः ॥१३७६॥
मनागप्यलब्ध्वा सैन्यस्य मोक्षसैन्येषु दूरतः । निवृत्तेषु नियुक्तेषु विमृश्य नृपतिः क्षणम् ॥१३७७॥
यद्यदेनादृतं तत्तत्परित्यक्तं मयाधुना । दत्तं चारीडिभतवतामभयं सागसामपि ॥१३७८॥
इत्याज्ञां भ्रमयामास पटहोद्घोषणैः पुरे । साशीर्घोषास्ततः पौरास्तत्रारज्यन्त सर्वतः ॥१३७९॥तिलकम्॥
अनन्तरनृपाचारवैधर्म्यीकारकलया । तया सोनघया वृत्त्या फलं सद्योनुभावितः ॥१३८०॥
शतादप्यूनसंख्यैर्यः स्थितवाननुगैः समम् । अनुरागहतैर्लोकैस्तत्कालं पर्यवार्यत ॥१३८१॥
मिथोकथावेदनं प्रीतिदायोपायः प्रभोः पुरः । भर्जलोकस्याप्यमन्त्रिपदवीं लक्ष्मकोपहीत् ॥१३८२॥
राज्यं शम्भ्यां नयत्येवं प्राज्ञे राज्ञि नयक्रमैः । याति मध्यं दिने भिक्षुर्विविक्षुः पुरमाययौ ॥१३८३॥
तस्य डामरपौराश्ववारलुण्ठाकसंकुलः । अदृष्टपूर्वो ददृशे सैन्यव्यतिकरस्तदा ॥१३८४॥
हतं श्रुत्वा रिपुं राज्योत्सुकः स नगरं व्रजन् । राजा काकात्मजेनेति तिलकेनाभ्यधीयत ॥१३८५॥
इतः समस्तविद्वेष्यः स दैवाद्यदि सुस्सलः । कथं प्रकृतयो जग्मुर्गुणवन्तं तदात्मजम् ॥१३८६॥
पुरप्रवेशे का राजंस्तस्मादेकमहस्त्वरा । एहि पद्मपुरं यामो मार्गं रोद्धुं विरोधिनाम् ॥१३८७॥
आगच्छन्तो नष्टसैन्याः सुज्जिमुख्या महाभटाः । निहता यदि वा रुद्धास्तत्र सायुधवाहनाः ॥१३८८॥
प्रविष्टोसि ततो न्यस्तशस्त्रो द्वित्रैर्दिनैर्ध्रुवम् । नगरं नगरौकोभिः स्वयमभ्यर्थितागमः ॥१३८९॥
अलमेतैर्भरन्मन्त्रैर्वदन्त इति चक्रिरे । स च कोष्ठेश्वराद्याश्च स्मेरास्तस्यावधीरणाम् ॥१३९०॥
राज्यं विदद्भिः संभारं तांस्ताञ्शासनपट्टकान् । कृतमर्थयमानैश्च विलम्बं कारितो निजैः ॥१३९१॥
अतो बहुहिमापातविवशाशेषसैनिकः । आसदन्नगरोपान्तं समयेन स तावता ॥१३९२॥
एतस्मिन्नन्तरे लब्धे निःसैन्यस्य ससैनिकः । गर्गात्मजः पञ्चचन्द्रो नृपतेः पार्श्वमाययौ ॥१३९३॥
हतस्वामिपरित्यागमन्युक्षालनकाङ्क्षिभिः । राजपुत्रैः समं सोथ वीरो योद्धुं विनिर्ययौ ॥१३९४॥
असंभावनसंग्रामान्वीक्ष्य तान्भिक्षुसैनिकाः । यावत्प्रारेभिरे योद्धुं तावत्किमपि सर्वतः ॥१३९५॥
क्षणेनैव ययुर्भङ्गं तांस्तान्वीक्ष्य हतान्निजान् । न संस्तम्भयितुं शेकुः स्वचमूश्च पलायिनीः ॥१३९६॥

१३७३. 1) Emended; A °नायकः. १३७४. 1) A विमृश्य°.—2) A निर्यायिनी. १३७७. 1) Thus A; perhaps read मोचसैन्येषु.—2) A विमृश्य. १३७९. 1) A₁ writes here ३ instead of तिलकम्. १३९१. 1) Emended; A संभारांस्तांस्त्वरा°.

सेनानाथाश्च ये मुख्या भिक्षुपृथ्वीहरादयः । अदृष्टपूर्वं संत्रासं तेऽप्यशास्त्रिवशाययुः ॥१३९७॥
विद्रवन्तोनुयाताः स्युस्ते चेद्दूरं नृपानुगैः । तच्छून्यमवशिष्येत क्षणादेव न किंचन ॥१३९८॥
वैमुख्यं तेषु यातेषु चिरात्साम्मुख्यमाययौ । नवभूभृत्प्रभावेण नगरे विधुरे विधिः ॥१३९९॥
अन्यथा कल्पितो लोकैरन्यथा दैवयोगतः । इत्थं राज्ञोर्द्वयोरासीद्विजयापजयक्रमः ॥१४००॥
कांश्चिन्निपातयति बद्धपदं क्षणेन कांश्चित्परं निपतितुं नयति प्रकर्षम् ।
संकल्पनिर्विषयविस्तरानुभाव ओघोम्भसामिव तटं पुरुषं विधाता ॥१४०१॥
अथ तत्तद्भयस्थानशान्तः सुज्जिर्दिनात्यये । दावव्याप्ताद्रिनिष्क्रान्तो निःसहोहरिवाययौ ॥१४०२॥
मेधाचक्रपुरग्रामस्थितः श्रुत्वा हतं नृपम् । स हि संमन्त्र्य राज्यमन्तर्नौत्सुक्यादचलत्परम् ॥१४०३॥
रिल्हणादीन्स्थिताञ्छूरपुरादौ सैन्यनायकान् । प्रतीक्षमाणस्तैः सार्कं निर्बाधं नगरेविशत् ॥१४०४॥
तन्निशायां प्रत्यभिज्ञाकृते तेषामनश्वराम् । स्वावासपृष्ठे ज्वलतो दीपानस्थापयत्ततः ॥१४०५॥
वैमत्यात्ते तु पत्तीनां विद्रुतानां पृथक्पृथक् । निशि क्वापि परिभ्रष्टा न तत्कटकमाययुः ॥१४०६॥
प्रत्यूषे प्रचलंस्तैस्तैः पृष्ठलग्नैः स डामरैः । न मुहूर्तमपि त्यक्तः प्रहरद्भिरितस्ततः ॥१४०७॥
वृद्धस्त्रीबालभूयिष्ठान्सहप्रस्थायिनो जनान् । ययौ रक्षन्पुरः कृत्वा पशुपालः पशूनिव ॥१४०८॥
पञ्चाशत्या हयारोहैः सह व्यावृत्य तिष्ठता । कंचित्क्षणं तेन रक्षा तेषां कर्तुमशक्यत ॥१४०९॥
शाखाषण्डद्रुमव्यूहसंबाधेऽध्वन्यसाध्वसैः । बाध्यमानोरिभिर्लोकं सोत्याक्षीत्तु पदे पदे ॥१४१०॥
हतस्य स्वामिनः स्वामिसूनोश्च व्यसनस्थितेः । आनृण्याकाङ्क्षिणा तेन तत्र ह्यात्मैव रक्षितः ॥१४११॥
येषां प्राणपरित्यागे निश्चयं बध्नतामपि । न योग्यकालापेक्षास्ति किं तैर्हंसपशूपमैः ॥१४१२॥
हन्तुं तं नष्टमायान्तं रुद्ध्वा पद्मपुरान्तिकम् । अवसन्डामराः क्रूराः खड्डूवीविषयौकसः ॥१४१३॥
खेरीतल्लालशाग्रामादुत्थाय पृथुसैनिकः । व्रजंस्तेनाययौ तत्र प्रसङ्गे श्रीवक्रः पथा ॥१४१४॥
तमनष्टानुगं सुज्जिरसाविति विशङ्किताः । निपत्य ते विदधिरे हतलुण्ठितसैनिकम् ॥१४१५॥
मेरुश्च सज्जनश्चाश्ववारौ तत्राहवे हतौ । क्षतो वड्डात्मजो मल्लो दिवसैर्यो व्यपद्यत ॥१४१६॥
उदीर्णविहितश्वभ्रवहत्सलिलसंकटम् । उदीपपूरवालाख्यं स्थानं तत्र क्षणेभवत् ॥१४१७॥
युद्ध्वा युद्ध्वा प्रचलतस्तत्र पद्मपुराद्बहिः । रुद्धसैन्यस्य विशिखैः श्रीवक्रस्याविशद्बलम् ॥१४१८॥
प्रहारविवशो नासौ सुज्जिर्ज्ञात्वेति डामरैः । स निर्लुण्ठ्य परित्यक्तः पूर्वमैत्र्यनुरोधतः ॥१४१९॥
लुण्ठितश्रीवक्रानीककोशभारमहानतैः । तैः कैश्चिद्दलितैरासीत्सुज्जेर्मार्गेनुपद्रवः ॥१४२०॥
प्रस्थिते पथिकेकस्माद्यन्त्रेपूत्सादयन्वने । आयुःशेषो मृगेन्द्रस्य विदध्यादध्वशोधनम् ॥१४२१॥
निःशस्त्रसैन्यो निर्यातः सुज्जिः पद्मपुरान्तरे । उदीपश्वभ्रसविधे संग्रामोदायि डामरैः ॥१४२२॥
पदातिकोशांश्चास्त्रादि मुष्णतः सोनवेक्ष्य तान् । तीर्त्वा श्वभ्रं वाजिगम्यां साश्ववारो भुवं ययौ ॥१४२३॥
ततः परं प्रशान्तारिभयं दूराद्विरोधिनः । भ्रूभङ्गतर्जनीकम्पकक्षालैरतर्जयत् ॥१४२४॥

१३९८. ¹) Emended with C; A ताबून°. १४०३. ¹) Emended; A मेधाचक्रं पुर°. १४१७. ¹) A, had written in margin a gloss of which only इति भावना is now legible. १४२०. ¹) Emended; A लुण्ठितः श्री°. १४२३. ¹) A °कोष°.— ²) Emended with C; A सोनवीक्ष्य.

संत्रस्तैश्छन्नमार्गं तैस्त्यक्तमादाय च द्रुतम् । प्रविश्य नगरं साश्रुर्नृपतेः पार्श्वमाययौ ||१४२५||

ध्यायति भ्रातरीवायं तस्मिन्ग्रामे अहो नृपः । दुःखोष्णैरश्रुभिः सार्धं वैरिव्यापातसाध्वसम् ||१४२६||

महत्तमोमन्त्रवनुरानन्दस्तत्र वासरे । लोचनोड्डारकग्रामे डामरैः प्रचलन्हतः ||१४२७||

तत्तन्मङ्कल्यदण्डादिदुःसहायासकारणात् । स विपत्पतितो नाभूत्कस्यापि करुणावहः ||१४२८||

भासाभिधः सुज्जिभृत्यो लोकपुण्यात्पलायितः । भ्रान्तोवन्तिपुरे विक्षवन्तिस्वामिनोङ्गनम् ||१४२९||

कल्पनोद्दालकः[1] क्षेमानन्दः स च तदन्तरे । भमर्षणैरवेष्टयेतां[2] डामरैर्होलडोद्भवैः ||१४३०||

इन्दुराजोपि सेनानीः कुलराजकुलोद्भवः । टिक्के तद्वेष्टितो ध्यानोड्डारे[1] ध्याजादशिश्रियत् ||१४३१||

पिङ्गदेवादयोन्येपि बहवः सैन्यनायकाः । भतिष्ठन्क्रमराज्यान्तर्डामरैः कृतवेष्टनाः ||१४३२||

पाते वनस्पतेः शाखा इव तन्नीडविच्युताः । इत्थं हताः[1] क्षताधांसस्तत्र तत्र नृपानुगाः ||१४३३||

निष्पादत्रा हिमप्लुष्टचरणा नग्नविग्रहाः । क्षुत्क्षामा बहवोभूवन्मार्गेषु गलितासवः ||१४३४||

न व्यलोक्यत मार्गेषु तदा नगरगामिषु । पलालच्छन्नदेहेभ्यो मानुषेभ्यः परः क्वचित् ||१४३५||

घासं विलासवासस्त्वं तेपि चित्ररथादयः । निन्युर्धैरचिरेणैव महामात्यैर्भविष्यते ||१४३६||

द्वितीयेपि दिने रुद्धसंचाराः पक्षिणामपि । तुषारवर्षिणो मेघा न मुहूर्तं व्यरंसिषुः ||१४३७||

वनपूर्वाभिधग्रामस्थितस्य कटकाद्भटान् । भिक्षोर्निक्षिप्य धन्योथ सिंहदेवमशिश्रियत्[1] ||१४३८||

निशम्य कृतसत्कारं नृपं तदनुयायिनाम् । सर्वेपि भैक्षवास्तस्थुः सैनिका नगरोन्मुखाः ||१४३९||

मन्दप्रतापे दायादे संग्रामावसरास्ततः । राज्यश्रतको राजानमनुमन्तुं विनिर्ययुः ||१४४०||

परापातभयाच्छीतापाताच्च विवशैर्जनैः । न ता नेतुमशक्यन्त दूरस्थं पितृकाननम् ||१४४१||

चक्रिरे स्कन्दभवनोपान्ते देहाश्रितामिषात् । ते सत्वरं ततस्तासामदूरे राजसद्मनः ||१४४२||

राज्ञी चम्पोद्भवा देवलेखा तरललेखया । स्वस्रा सहाविशद्वह्निं कपोलेखावधिर्विधेः ||१४४३||

गुणोज्ज्वला जज्जला —[1] मृता वल्लापुरोद्भवा । गग्गात्मजा राजलक्ष्मीरपि वह्नौ व्यलीयत ||१४४४||

मत्वा हिमव्यपायान्ते राज्यरोधं निजप्रभोः । डामरा नवभूभर्तुर्हिमराजाभिधां व्यधुः ||१४४५||

ददर्श सौस्सलं मुण्डमथ भिक्षुरुपागतम् । गाढामर्षाभिसंदीप्तैर्दृक्पातैर्निर्दहन्निव ||१४४६||

कोष्ठेश्वरज्येष्ठपालादयस्तत्सत्क्रियोद्यताः । असहासन्नतां वैराद्भजता तेन वारिताः ||१४४७||

नगरं हिमवृष्ट्यन्ते स यियासुर्युयुत्सया । ताटस्थ्येनाहिताकृष्टान्भृत्याञ्ज्ञात्वाब्रवीद्वचः ||१४४८||

प्रसह्य प्राप्नुयां राज्यमिति पृथ्वीहरे सति । हते तु तस्मिन्दायादे विपन्नः[1] स्यां पतिर्भुवः ||१४४९||

इत्यचिन्तयमेतत्तु दैवात्संजातमन्यथा । राज्यस्याशापि विरता हते प्रत्युत वैरिणी ||१४५०||

किं राज्येनाथ वा कृत्यं भोगमात्रोपयोगिना । जिगीषोरुचितं कस्य ममेवान्यस्य सेत्स्यति ||१४५१||

मुण्डं न्यपातयद्भूमौ यः पूर्वेषां पुरा मम । सिंहद्वारे मदीयेद्य तन्मुण्डं वर्तते लुठत् ||१४५२||

दश मासान्मदायानां सुखच्छेदं व्यधत्त यः । तत्तदुःखं स तु मया दशाब्दाननुभावितः ||१४५३||

१४३०. [1]) Doubtful emendation; A गोद्दालकः. — [2]) Emended with C; A °रवेष्टयेत. १४३१. [1]) Emended; A °डारं. १४३३. [1]) A हताःक्षताधांसस्तत्र with diplography. १४३८. [1]) Emended; A °शिश्रयत्. १४४१. [1]) Thus $A_1$; corr. by later hand into नाकेतु°. १४४४. [1]) One *akshara* wanting; the *lacuna* not indicated in A; C supplements सा. १४४९. [1]) Emended; A विपन्नां; C °दायादे विपन्नः

एवं निर्व्यूढकर्तव्यतया नैष्प्राण्यबन्ध्यताम् । उपशान्तमनस्तापः सुस्थित्या शेषमायुषः ॥१४५४॥
इत्याप्युक्त्वा गतश्छिक्काभ्यर्णे तं प्रणतं व्यधात् । प्रीत्या स हेमघटिकश्वेतच्छत्रादिभाजनम् ॥१४५५॥
तद्विलम्भेण राज्याशापिशाच्योदितया पुनः । गृहीतोऽभ्येत्य शीतार्तस्तस्यावन्तर्विचिन्तयन् ॥१४५६॥
अत्यन्तानुचितं चान्यह्लबन्धैः संविविधित्सुभिः । रक्षितं रक्षिणो न्यस्य हतक्ष्माभृत्कलेवरम् ॥१४५७॥
विपक्षाभ्यर्णेऽप्यस्मिन्स्वामिनोऽन्ते किमीदृशी । दशा शरीरस्येत्यन्तः कृतशस्त्रेण चिन्तयन् ॥१४५८॥
दिदृक्षाव्याजतः सज्जकाख्यो नगरशस्त्रभृत् । आयातो वाड्डुकं गोमृत्युर्जित्वाभिसाध्यधात् ॥१४५९॥तिलकम्॥
स भर्तुर्नवताद्दर्वादारभ्यासादितच्छलैः । भूतैरधिष्ठितस्तिष्ठन्प्रजासंहारकार्यभूत् ॥१४६०॥
देवताधिष्ठिताविष्टदेहिवाक्यादिति श्रुतिः । भावितद्वधसंवादजनितप्रत्ययोदयी ॥१४६१॥
मदीयानन्ययास्येन छेत्ता भ्रमयिता च यः । तन्मुण्डस्यास्य स पुमांल्लब्धः क्षमो मृतस्तथा ॥१४६२॥तिलकम्॥
भिक्षुः कापुरुषाचारहतौचित्यो व्यसर्जयत् । प्राचण्डाख्यालये मुण्डमथ राजपुरीं रिपोः ॥१४६३॥
उच्चलात्मजया तत्र देव्या सौभाग्यलेखया । नेतृन्पितृव्यमुण्डस्य जिघांसन्त्या निजानुगैः ॥१४६४॥
राजपुर्यामाकुलत्वं नीतायामाससाद तत् । तद्भर्तुः सोमपालस्य दूरस्थस्यान्तिकं चिरात् ॥१४६५॥युग्मम्॥
आदीनत्वं मधुक्षैब्यमाम्यधर्मादिकर्मसु । तिरश्च इव शोच्यस्य नेयबुद्धेः खशप्रभोः ॥१४६६॥
सभ्यैरुच्चावचं तत्र कर्तव्यं परिचिन्तितम् । स्वोचितं व्यञ्जितौचित्यानौचित्यं निरवग्रहैः ॥१४६७॥
नागपालस्तु सौभ्रात्रं लब्ध्वा भ्रातुः स्थितोऽन्तिके । सेहे मुण्डावक्षेपस्य नोपकर्तुर्विमाननाम् ॥१४६८॥
सुदीर्घदर्शिनोऽप्यन्ते कश्मीरेभ्यः पराभवम् । विशङ्क्योचुः सर्वथेदं सत्कार्यं वः शिरः प्रभोः ॥१४६९॥
क्रियते येन नियतेरन्यथात्वं सनाथताम् । विनिहत्य हरेर्दृष्टाः कुर्वन्तो यत्र जम्बुकाः ॥१४७०॥
तद्दोपालपुरे कालागुरुचन्दनदारुभिः । काष्ठैर्निष्ठां शिरो निन्ये वीतिहोत्रेऽथ शत्रुभिः ॥१४७१॥
यथा प्राप्तिभ्रंशा धरणिपतिभावस्य विविधा यथा ह्रासोल्लासा अपि समरसीमासु बहुशः ।
यथा तत्तद्दीर्घव्यसनविनिपातानुभवनं तथा दृष्टस्तस्य प्रमयसमयोऽप्यद्भुततरः ॥१४७२॥
कस्यापरस्य तस्यैव लेभिरे वह्निसत्क्रियाम् । एकत्रेतरगात्राणि मुण्डमन्यत्र मण्डले ॥१४७३॥
टिक्कादयोऽथ नगरं यान्तोऽवन्तिपुराध्वना । तत्र हन्तुं व्यलम्बन्त भासादीन्पूर्ववेष्टितान् ॥१४७४॥
गुडाग्न्युद्दीपनमात्रप्रहारच्छेदकारिभिः । न ते जेतुमशक्यन्त तैः प्रयत्नपरैरपि ॥१४७५॥
स्थितैर्महाश्मप्राकारगुप्ते सुरगृहाङ्गने । तैर्हन्यमानास्ते स्थातुं गन्तुं वा नाभवन्क्षमाः ॥१४७६॥
एवं ग्रामविलम्बेषु तेषु लब्धान्तरः सुधीः । स्वीचकार प्रदानेन खडूवीडामरान्नृपः ॥१४७७॥
गृहीतनीविना तेषां सुज्जिः प्रायोजि सत्वरम् । तेन भासादिमोक्षाय पञ्चचन्द्रादिभिः समम् ॥१४७८॥
प्रापावन्तिपुरं यावन्न स तावत्तदभगान् । कच्यात्मजादीनालोक्य भङ्गं टिक्कादयो ययुः ॥१४७९॥
देवागाराद्विनिर्याता भासाद्यास्ते च विद्विषाम् । भग्नानामनुगान्हत्वा सुज्जेरन्तिकमाययुः ॥१४८०॥

---

१४५६. [1]) Emended with C; A शीतार्त°. १४५९. [1]) Thus A; cf. वाड्डुकं viii. 1346. — [2]) $A_1$ writes here ३ instead of तिलकम्. १४६२. [1]) $A_1$ writes here ३ instead of तिलकम्. १४६५. [1]) $A_1$ writes here २ instead of युग्मम्. १४६६. [1]) Emended; A आदीनास्व. १४७०. [1]) Emended with C; A के. १४७३. [1]) Emended with C; A एकचेतरगा°.

लब्धप्रतापे नगरं प्रविष्टे कम्पनापतौ । आययाविन्दुराजोपि टिक्कं संत्यज्य सानुगः ॥१४८१॥
चक्रे चित्ररथश्रीवभासादीनपि भूपतिः । पादाग्रहारखेर्यादिकर्मस्थानाधिकारिणः ॥१४८२॥
यथापूर्वमधीकारानजहत्सुज्जिरप्यभूत् । प्रतीहारमुखप्रेक्षी का कथेतरमन्त्रिणाम् ॥१४८३॥
प्रतीहारोपि निःसीमडामरग्रामसंमतः । तत्रेदप्रक्रियां कुर्वन्नगाढ़ाशः प्रतीक्ष्यताम् ॥१४८४॥
स नासीदस्तुतस्यूहे कोपि तत्प्रेरणेन यः । नाशिभिर्यन्नृपं नो वा बभूवाभ्यर्णोन्मुखः ॥१४८५॥
भिक्षुर्तेशिल्यसदृशस्फूर्तिर्धूर्तो महीपतिः । आहारमप्यनासाद्य तन्मतं न व्यपेयत ॥१४८६॥
इत्थं नगरमात्रान्तर्लब्धपादप्रसारिकः । सोवर्तिष्ट समासन्नफलं कन्दलयन्नयम् ॥१४८७॥
संघट्याखिलान्भिक्षुर्डामरान्विजयेश्वरे । अथाध्यष्टांदधिष्ठानं जिघृक्षुः शिशिरात्यये ॥१४८८॥
अदृष्टपूर्वं स्वयमूनक्षैक्यं वीक्ष्य डामराः । भिक्षोर्हस्तगतं राज्यं मत्वाशङ्किषताथ ते ॥१४८९॥
एकैकस्यैवं धीशौर्यमित्रामित्रादि दृष्टवान् । नोत्तिष्ठेत्प्राप्तराज्यः किमास्कन्देषु गृहान्तरात् ॥१४९०॥
इति संमन्त्र्य ते राज्यं सोमपालाय दित्सवः । दूताभिगूढं प्राहिण्वन्सोपि दूतं व्यसर्जयत् ॥१४९१॥
आकाराचारवैकृत्यैः पशुतुल्यस्य तस्य तैः । राज्यभोगा अभङ्गा नो भविष्यन्तीत्यचिन्त्यत ॥१४९२॥
भोपलोभोज्झितौचित्यदस्युसंघविकीर्षितम् । देशेत्र पापात्पापीयो दैवाच्च समपादि तत् ॥१४९३॥
दास्येप्ययोग्यो यो राज्ये स इत्यास्तां प्रपाल्यतः । शक्येत पातुं देशोयं किमीषदपि तादृशा ॥१४९४॥
शालीन्पलालपुरुषोवति यः कृशानुदग्धाननघटकपेटकभीतिदानैः ।
त्रातुं स काननतरून्विहितो श्रिदध्यार्त्कि तत्र भञ्जनकृतां वनकुञ्जराणाम् ॥१४९५॥
भिक्षोर्नैदिष्टतां दिष्टवृद्ध्याजानतो.भजन् । तद्भूतो डामरान्गूढं नीविदानोद्यतान्व्यधात् ॥१४९६॥
वैशाखेथ कृतारम्भस्तदा संभावितत्वरः । निर्गत्य नगरात्सुज्जिर्गम्भीरातीरमाययौ ॥१४९७॥
तस्याभियोगः श्लाघ्योभूद्योद्धुं यत्समवायिनः । एकाकी तावतो वीराननूरीकृत्य स निर्ययौ ॥१४९८॥
अन्तःपाते साहसानां नाङ्गुलं तद्विधेर्वशात् । जीयते लक्षमेकेन लक्षेणैकोथ वा युधि ॥१४९९॥
पारं तरीतुं निःसेतोः सरितोपारयन्नसौ । पारे परस्मिन्नहितानपश्यच्छरवर्षिणः ॥१५००॥
द्वित्रा निशाः स ते चासंस्तस्याः सिन्धोस्तटद्वये । रुद्धाः संनाहिनोन्योन्यरन्ध्रावेक्षणदीक्षिताः ॥१५०१॥
अथावन्तिपुराग्नौभिरानीताभिरबन्धयत् । सेतुं साम्बोतरत्सुज्जिरादस्य तरणीं स्वयम् ॥१५०२॥
तरन्तमेव तं दृष्ट्वा योधैः कतिपयैः समम् । द्विषन्नमूर्मेदलोला द्रुमालीवाभयन्नला ॥१५०३॥
दृष्टं मुहूर्तवेलावदाक्रन्दः स च सत्तटम् । अरुद्ध सेतुस्तीर्णाथ योधा भ्रमाथ विद्विषः ॥१५०४॥
न खड्गी न हयारोहो नापि शूली न चापभृत् । व्यावृत्य प्रेक्षितुं कश्चिदशकद्विद्रुताद्बलात् ॥१५०५॥
निबद्धश्वभ्रशैथिल्याल्लोलपल्ययने हये । कोष्ठेश्वरस्याश्ववारा व्यलम्बन्स्तान्तरे क्षणम् ॥१५०६॥
निर्यन्त्र्य तेपि पर्याणं सुज्जौ पश्चात्प्रधाविते । वात्योद्धूतं रजश्चक्रमिव क्षिप्रं तिरोदधुः ॥१५०७॥
हतलुण्ठितविध्वस्तध्वजिनीका विरोधिनः । व्यामोड्डारादिषु ग्रामेष्वमिलन्खण्डशो गताः ॥१५०८॥

१४८५. [1]) Emended with C; A नाशिभयन्नृपं. १४८८. [1]) Emended; A भिक्षून्डा°.—[2]) Emended; A अथाधिष्ठ°; C अथाविष्ठ°. १४९०. [1]) Conjectural reading; A एकैकस्योपधीशौर्यं°. १४९३. [1]) Emended; पापीये. १५०१. [1]) Emended with C; A °वीक्षण°. १५०५. [1]) Emended with C; A प्रेक्षितुः. १५०७. [1]) Emended; A निर्यन्त्र्य; C निर्यत्य.

विजयेशाभगं तीर्त्वा वितस्तासेतुमग्रगः[1] । भासोपि दस्यून्विदधे पलायनपरायणान् ॥१५०९॥
उषित्वा विजयक्षेत्रे तदान्येद्युरुपागते । कम्पनेशे[1] ययुस्त्यक्त्वा ध्यानोड्डारं विरोधिनः ॥१५१०॥
तत्र स्थित्वा दिनैः कैश्चित्स देवसरसोन्मुखः । शिबिरे भेदनिर्यातैरेत्य ठक्कस्य गोत्रिभिः ॥१५११॥
जयराजयशोराजौ तन्मुख्यौ भोजकात्मजौ । प्रविश्य देवसरसं व्यधाड्डिक्कोपवेशने ॥१५१२॥
ययुर्विनष्टसंघातास्तस्मिन्पश्चात्प्रधाविते । भिक्ष्वादयः शूरपुरं स्वोर्वीं कोष्ठेश्वरादयः ॥१५१३॥
गर्हां महाभये सोमपालदूतः पलायितः । दास्याः सुतेन प्रहितः कुत्रास्मीति प्रभोर्व्यधात् ॥१५१४॥
स हि तादृग्गुहारम्भक्षोभसाध्योन्नतीक्ष्णताम् । तस्य सिंहीस्पृहाक्रान्तगोमायुवदमन्यत ॥१५१५॥
प्रमादात्स्वामिनो राज्यं चिरं नष्टं मितैर्दिनैः । सुज्जिः प्रसाद्य प्रददावेवं स स्वामिसूनवे ॥१५१६॥
शमालादीनपि व्यूढान्दानोपायेन डामरान् । पौरांश्च भिक्षाश्रयिणो राजाभ्येतुं प्रचक्रमे ॥१५१७॥
राज्ञः परीक्ष्य सामर्थ्यमथ कुर्मो यथोचितम् । इति सर्वाभिसारेण तं संमन्त्र्य रणं दधुः ॥१५१८॥
रजोजवनिकालक्ष्यभटीघनटताण्डवः । दामोदरेभूत्संग्रामः स वीरग्रामघस्मरः ॥१५१९॥
कोष्ठेश्वरवशं यातं रक्षता पितरं क्षतम् । लब्धाः सहजपालेन श्लाघाः प्रकृतिभिः समम् ॥१५२०॥
श्रमस्तत्राविशेषोभूद्राज्ञो भिक्षाचरस्य च । भिक्षुस्त्वहन्यसंवेद्यं विवेदात्मपराजयम् ॥१५२१॥
ततः प्रभृति यः प्रातः स न सायमदृश्यत । योथ वा न परेद्युः स सैनिको भैक्षवे बले ॥१५२२॥
एवं त्यक्त्वा परान्पौरडामरेषु नृपान्तिकम् । प्रयात्सु लाभसत्कारान्मुदितान्प्राप्नुवत्सु च ॥१५२३॥
काप्यहंपूर्विकोत्तस्थौ मनुजेश्वरकोष्ठयोः । प्रयातुं पार्थिवाभ्यर्णं लाभसौख्याभिलाषिणोः ॥१५२४॥
ज्ञात्वाथ तत्कालरुहागृहीतस्वपरिच्छदः । देशान्तरोन्मुखो भिक्षुराषाढे मास्यथाचलत् ॥१५२५॥
अनुयाद्भिः स दाक्षिण्यशेषाद्विहितसान्त्वनैः । तदार्थैर्डामरैः क्रुध्यन्न निरोद्धुमपार्यत ॥१५२६॥
अकरोत्स्वैरिणीसूनुतया शीलबहिष्कृतः । अतिरूपेषु दारेषु तस्य कोष्ठेश्वरः स्पृहाम् ॥१५२७॥
सटां हरेः फणारत्नमहेर्ज्वालां हविर्भुजः । बालां च तस्य संस्प्रष्टुं[1] कोप्रशान्तस्य शक्नुयात् ॥१५२८॥
समं सौस्सलिना बद्धसंधिराभयकाङ्क्षिणः । सोमपालः स्वविषये नादात्तस्य प्रतिश्रयम् ॥१५२९॥
उद्वेजितः प्राणहरैः प्रयत्नैस्तस्य सर्वतः[1] । तद्देशं दुर्गममहीसीमान्तं सुल्हरीं ययौ ॥१५३०॥
त्रिगर्तेषु दया शीलं चम्पायां मद्रमण्डले । त्यागो दार्वाभिसारेषु मैत्री नामस्थधर्मिणाम् ॥१५३१॥
पीडयेत्स्वयमभीर्भूभृद्दूरस्थे त्वयि डामरान् । त्वामेवाभ्यर्थ्य राजानं ततः कुर्युः क्रमेण ते ॥१५३२॥
इमां तद्रजामोर्थयितुं सांप्रतं नरवर्मणः । मन्त्रिभिर्युक्तिभिस्तूक्तमपि मन्त्रं न चाग्रहीत् ॥१५३३॥
प्रसाल्पपरिवारोस्मद्गृह इत्यथ गृह्णतः । श्वशुरप्रार्थनां तस्य भृत्याः पार्श्वादथाचलन् ॥१५३४॥
प्रावर्तताथ नगरे त्रिंशद्भिर्विभवोज्ज्वलैः । सुलभं सुलभे काले वरयात्रेव डामरैः ॥१५३५॥
वीक्ष्याच्छचतुरगैरेकैकं पार्थिवाधिकम् । सुस्सलक्ष्मापतेर्धैर्यं नैद्धुर्थं तुष्टुवुर्जनाः ॥१५३६॥
औदार्याकारतारुण्यवेषसौन्दर्यमन्दिरम् । कोष्ठेश्वरोधिकं स्त्रीणां प्रययौ प्रेक्षणीयताम् ॥१५३७॥

---

१५०९. [1]) Thus corr. by A₁ from °भगः. १५१०. [1]) Emended; A कम्पनेशं. १५११. [2]) Emended with C; A °जवनिका लक्ष्य°. १५२८. [1]) Emended with C; A संमर्द्दुं; cf. viii. 1193. १५३०. [1]) Emended with C; A सर्वेत°.

प्रशान्तविप्लवे देशे यथावृत्तवचायताम् । विशङ्कैरिलवन्यौघतूर्यघोषो दिवानिशम् ॥१५३८॥
क्षीराद्या लक्ष्मकेणापि सर्वे मडवराज्यतः । आनीताः पार्थिवाभ्यर्णं सैन्यार्णवभयंकराः ॥१५३९॥
अपि भूपालवाल्लभ्यादभूद्राजोपजीविनाम् । प्रतीहारगृहद्वारप्रवेशो बहुमानकृत् ॥१५४०॥
लवन्यलुण्ठितग्रामतया दुर्भिक्षदुःसहः । व्ययोत्तरङ्गः कालोभूत्स राज्ञो धनदप्रियः ॥१५४१॥
डामरेभ्यो नृपः पारास्संगृह्णन्कृतवेतनः । निनायाभ्यन्तरं वृद्धिं बाह्यं चापत्त्रयं जनम् ॥१५४२॥
तिक्यवैश्यार्घदेवाद्या ज्ञातयो जनकद्रुहाम् । राजद्रोहोचितां राज्ञा विपत्तिमनुभाविताः ॥१५४३॥
मासैश्चतुर्भिः स पितृप्रमयाद्यादनन्तरम् । अनन्यशासनं राष्ट्रं स्वमेव समपादयत् ॥१५४४॥
निर्धाम नगरं पौराः सर्वसामर्थ्यवर्जिताः । अनन्तै राष्ट्रमाकीर्णं डामरैः पार्थिवोपमैः ॥१५४५॥
बद्धमूलो नातिदूरे सर्वभारसहो रिपुः । सबाह्याभ्यन्तरा मन्त्रिसामन्ता वैरिसंश्रिताः ॥१५४६॥
मन्त्रोपदेशो वृद्धस्य नैकस्यापि नृपास्पदे । अधर्मबहुलाः सर्वे भृत्या द्रोहैकवृत्तयः ॥१५४७॥
राज्यारम्भे बभूवेयं या सामग्र्यस्य भूपतेः । सा स्मर्तव्यान्तराज्ञातुं प्रत्युदन्तं विवेक्तृभिः ॥१५४८॥
ग्रामप्रसङ्गात्तदिदं गुणग्रामोपवर्णनम् । वक्ष्यमाणं सुबहुशोप्यत्र लेशात्प्रदर्श्यते ॥१५४९॥
पूर्वापरानुसंधानबन्ध्यैर्दृष्टान्तवत्कथाः । नाबुद्धातिगभीराणां शक्या रसयितुं गुणाः ॥१५५०॥
प्रत्यक्षस्य गुणाञ्जातो विचिन्वन्तो यथास्थितान् । अनीर्ष्यस्य भविष्यामो विवेकस्यानृणा वयम् ॥१५५१॥
स्थितस्य तत्त्वविज्ञाने नान्यस्य हि पटुर्जनः । अमानुषानुभावस्य राज्ञः किं पुनरीदृशः ॥१५५२॥
हितानां दाराणां सदृशसुखदुःखस्य सुहृदः कवेः सोल्लेखस्य प्रियसकललोकस्य नृपतेः ।
स्थितानां कोप्यत्र व्यवहितविवेकः स्वकुकृतैरसामान्यं ज्ञातुं सुभगमनुभावं न कुशलः ॥१५५३॥
भवेत्प्राग्रप्रसरणा परिणामेप वा मतिः । कथं सर्वस्याकुतायां निष्ठायां गुणदोषयोः ॥१५५४॥
सन्त्येवास्यापि विषमाः स्वभावा दोषतां जनः । येषां विपाकभव्यत्वमजानन्गणयत्ययम् ॥१५५५॥
विकासः केषांचिन्नयनविषमैर्विद्युदुदयैः परेषामुद्भूतिः श्रवणकटुभिर्दीर्घरसितैः ।
न चेष्टा काप्यन्योपकृतिपरिहीना जलमुचो जडो वर्षादन्यं गणयति गुणं नास्य तु जनः ॥१५५६॥
गुणांल्लोकोत्तराञ्शृण्वन्नस्यानुभवगोचरान् । भविता पूर्वभूपालकृत्ये सप्रत्ययो जनः ॥१५५७॥
अनुद्धतानपि स्थानाद्भूभङ्गेन चकार सः । विलोलान्क्षोभकम्पेन दिङ्नाग इव भूधरान् ॥१५५८॥
विरहद्वाहिनीवृन्दा गूढं यन्नयसंभवम् । वहन्ति तापं भूपाला और्वाग्निमिव सिन्धवः ॥१५५९॥
भूमिभृद्भास्वतस्तस्य तेजसाप्यायितो गतः । पूर्वराजयशश्चन्द्रो भुवनेष्वप्रकाशताम् ॥१५६०॥
यो यस्तं पश्यति स्वात्मसंमुखं स स सर्वतः । जानात्यवक्रोल्लिखितं देवबिम्बमिवेश्वरम् ॥१५६१॥
स्थिरप्रसादो दत्ते यत्तदादत्ते न स क्वचित् । भयं पुनः प्रणमतां दत्तं हरति विद्विषाम् ॥१५६२॥
कृष्टासेः प्रतिबिम्बं स्वं हित्वा नान्योस्य संमुखः । नापरः प्रतिशब्दाच्च गर्जतः प्रतिगर्जति ॥१५६३॥
तस्य नातिशितं कोपे प्रसादे निशितं पुनः । धत्ते तीक्ष्णैकधारस्य तरवारेस्तुलां वचः ॥१५६४॥

१५३८. [1]) Doubtful emendation; A °घोषा; G °विश्वयी वैशी and °घोषाधिवा°. १५४२. [1]) Thus A; C पौरान्सं° १५४३. [1]) Cf. दूतौ डिक्कस्याग्रवैवस्तिकपैदवा° (A) viii. 1305. १५४५. [1]) Thus $A_1$; R C निवासन°, as apparently corr. by later hand in A. १५४७. [1]) Conjectural emendation; A मन्त्रोपदेशवृद्धस्य. १५५०. [1]) दृष्टान्त supplied by $A_3$ in space left by $A_1$. १५५८. [1]) Emended with C; A °भ्रूभङ्गेन.

तस्यार्कजन्मनो नित्याम्लानलक्ष्मीविकासिनः । प्रभवन्स्वाश्रिताः कल्पशाखिनः पल्लवा इव ॥१५६५॥
राज्ञि गाम्भीर्यदुर्लक्ष्यमाहात्म्यप्रभविष्णुताम् । विवेद मन्त्रिणां लोकः सिषेवे तांश्च सर्वतः ॥१५६६॥
प्रकटस्तु प्रतीहारो न विषेहेन्यमन्त्रिणाम् । पार्श्वद्रुमाणामेषाश्वौषधिस्तम्भ इवोन्नतिम् ॥१५६७॥
तस्योत्पाटयतः सर्वांस्तृणानीवावहेलया । स्फूर्जञ्जनकसिंहोभूदशक्योन्मूलनः परम् ॥१५६८॥
आ बाल्यात्संस्तुतो राज्ञः स कृत्स्नव्यवहारवित् । अधृष्यस्तरुणीभूततनयो ह्यास सर्वतः ॥१५६९॥
अद्वैधं यौनसंबन्धाद्विश्वस्तस्तत्सुतो मदात् । कुड्डाभिधस्तस्य ततः कृतावज्ञोतनोत्त्रपाम् ॥१५७०॥
रन्ध्रान्वेषी स तद्दोषानुपजापैः क्षणे क्षणे । सद्मनी जनके यथारूपं द्वेषमजिग्रहत् ॥१५७१॥
राज्ञस्तुल्यवयःस्थौ हि जननीगाढसंस्तवात् । राज्यकाले हि सोत्सेकावास्तां तदवकाशदौ ॥१५७२॥
तुरंगयोग्योपस्कारयानाहारादि राजवत् । अकालज्ञावकुरुतां राजधान्यन्तरेव तौ ॥१५७३॥
सह स्ववृद्धैः समशीर्षिका प्रभोर्न युज्यते मानसमुन्नतेः क्वचित् ।
भिन्नोन्नतैर्दर्दुरवृन्दलङ्घनं सरोजषण्डस्य महाविडम्बना ॥१५७४॥
तद्विस्तिलाभसंरूढपैशुनालेख्यकल्पनाः । तद्वर्गेप्यखिले चक्रुस्तद्विषः कलुषं नृपम् ॥१५७५॥
अथ राजा विजयिनं सत्कर्तुं कम्पनापतिम् । कृतज्ञः श्रावणे मासि जगाम त्रिजयेश्वरम् ॥१५७६॥
अत्रान्तरे पिञ्छदेवादागच्छन्गिरिगह्वरे । प्राप शूरपुरद्रङ्गाधीश्वरादुत्पलो वधम् ॥१५७७॥
पुञ्छाणनाडादुत्पिञ्छकृतये पुनरागतः । द्रङ्गाधिपेन गुटिकान्वेषिणा स न्यपात्यत ॥१५७८॥
क्षितौ निपतितः पार्श्वप्राप्तमेकं द्विषद्भटम् । मुमूर्षुर्विशिखाविद्धजानुमर्मापि सोवधीत् ॥१५७९॥
प्रत्यावृत्तस्य सत्कृत्य कम्पनेशं महीपतेः । शार्यत्रर्न्तिपुरस्थस्य द्रङ्गेशोरिशिरो व्यधात् ॥१५८०॥
स दृढग्राहिकामुष्टिरसुहृन्मुण्डमुद्गरः । चक्रे तस्य दृढामर्षशोकशङ्कुविपाटनम् ॥१५८१॥
आद्यायामेव यात्रायां जातारातिक्षयो जनैः । स निःशेषयिताशेषकण्टकानामगण्यत ॥१५८२॥
तस्मिन्प्रविष्टे नगरं विद्रुताः केपि सागसः । प्रापुर्जनकसिंहाद्याः केपि कारागृहस्थितिम् ॥१५८३॥
कैश्चित्पलायितैः शङ्कां माहिताः पृथिवीपतेः । ततः कोष्ठेश्वरमुखाः प्रातिलोम्यं प्रपेदिरे ॥१५८४॥
ग्रामाल्लां निर्गतः श्रीमान्कार्तिकेथ कृती नृपः । तत्र तत्रासुहृद्ग्रामं संग्रामोग्रमबाधत ॥१५८५॥
यत्र सुस्सलभूपाद्याः प्रापुर्भग्नप्रतापताम् । तं हाडिग्राममदहत्सुज्जिरूर्जितविक्रमः ॥१५८६॥
महीभुजा पीड्यमानैराहूतः कोष्ठकादिभिः । अथ भिक्षाचरो राज्यगृध्नुर्भूयोप्युपाययौ ॥१५८७॥
एकेनाह्ना योजनानि प्रोल्लङ्घ्य दश पञ्च च । शिलिकाकोट्टनामानं गिरिग्राममवाप सः ॥१५८८॥
क्षुत्पिपासाक्रमारातिभीतिमार्गश्रमोद्भवम् । क्लेशं नाजीगणन्मानी धावितः स जिगीषया ॥१५८९॥
कार्यमायाति वैमुख्यं जिगीषोर्विधुरे विधौ । प्रस्थितस्य पुरोवाते रथस्येव ध्वजांशुकम् ॥१५९०॥
आरम्भमात्रमपि कस्यचिदेव सिद्ध्यै कश्चित्प्रयत्नपरमोप्यफलप्रयासः ।
मन्थाद्रिणामृतमवाप्युदधेर्मुहूर्तात्सक्तिं चिराद्विदधता न हिमाद्रिजेन ॥१५९१॥

१५७९. ¹) Emended; A वृषी. १५८०. ¹) Emended with C; A °पुरस्थस्य. १५८१. ¹) Emended; A विपाटनम. १५८४. ¹) Emended with C; A कैश्चित्प°.

अहा सरित्स्वबसतेर्जलधिप्रवेशे वेलोर्मिवेल्लनवशेन विवर्तमाना ।
मिथ्यैव यच्छति धियं पुनरुद्गतेति नोत्थानमस्ति तु विधिव्यपरोपितानाम् ॥१५९२॥
तस्यै तावन्महायत्नकठोरस्योदयक्षणे । सिद्धेर्विबन्धो विधिना विधुरेण व्यधीयत ॥१५९३॥
आयातं तमबुद्ध्वा तुं तस्मिन्नेव क्षणेऽभवत् । पृथ्वीहरानुजः प्राप्तभङ्गः कृताञ्जलिर्नृपम् ॥१५९४॥
1595 कोष्ठेश्वरः स चावेद्य संप्राप्तं तमतिष्ठताम् । कृत्याक्षमौ ततः सर्पाविव मन्त्रनियन्त्रितौ ॥१५९५॥
ताभ्यां स्थानेन सोऽन्यस्मिंस्त्याजितोऽध्वपरिभ्रमम् । कार्कोटद्रङ्गमार्गेण निर्गतः सुल्हरीं ययौ ॥१५९६॥
आसीच्च तत्र प्रोद्दण्डदर्पकण्डूलदोर्द्रुमः । ऊष्मायमाणः काश्मीराकान्तिसंततचिन्तया ॥१५९७॥
उदीपसलिलस्येव तस्य रन्ध्रगवेषिणः । पुरं प्रविष्टो राजापि प्रतीकारमचिन्तयत् ॥१५९८॥
अद्वितीयस्त्वमात्येषु प्रतीहारो महोमताम् । सुज्जेरसहमानोऽभूच्छलान्वेषणतत्परः ॥१५९९॥
1600 आययावथ विस्रम्भावष्टम्भं वल्गतः प्रभोः । धन्यात्मजः पूतमूर्तिर्जाह्नवीजलमज्जनात् ॥१६००॥
तदाद्याः संस्तुता राज्ञश्चिरसंभाविताः ततः । अनामुवन्तोऽभीकारान्पर्यतप्यन्त चिन्तया ॥१६०१॥
कुर्वाणे कार्यतस्तस्मिन्भरं पित्र्येषु मन्त्रिषु । कालप्रतीक्षाक्षमतामूहुस्ते गहनाशयाः ॥१६०२॥
प्रतीहारस्तु दुर्लक्ष्यसुज्जिनिर्लोठनोद्यतः । अप्रियानपि तान्प्रीत्या जग्राहोपयोगिनः ॥१६०३॥
व्यतीतेष्वथ मासेषु केषुचिद्दैवयोगतः । अकस्मादभवद्भूभृत्स्फीतलूतामयातुरः ॥१६०४॥
1605 विस्फोटशोफातीसारज्वरहिमान्द्याद्युपद्रवैः । संदिग्धाभ्युदये तस्मिन्देशः पर्याकुलोऽभवत् ॥१६०५॥
इत्थं स्थितः कुलस्यैकभर्तुः स्वामी बली रिपुः । तत्पक्षा डामरा राष्ट्रं दुष्टमेव व्यचिन्तयन् ॥१६०६॥
आयत्यां च तदात्वे च हितकृत्यं विचारयन् । राज्ञः श्रीगुणलेखाया जातमेकसुतं शिशुम् ॥१६०७॥
पश्चाद्देदेश्यं पर्माण्डि सुज्जिभूमिपतिं तदा । चिकीर्षुर्मन्त्रयामास मातुलेनास्य गार्गिणा ॥१६०८॥
इत्थं भूतस्य बुभुक्षुःससूनुः सुज्जिरद्य ते । पञ्चचन्द्रादिभिः सार्धं युक्त्या मन्त्रयतेऽनिशम् ॥१६०९॥
1610 लब्धरन्ध्रः प्रतीहारो धन्याद्याश्च तदीरिताः । इत्यवोचंस्ततो भूपं स तथेत्यग्रहीच्च तत् ॥१६१०॥
पूर्वप्रजासृजं इवाद्भुतवस्तुतस्त्वव्यावर्णनेन कुतुकं जनयन्ति तज्ज्ञाः ।
बाला इवाल्पमतिहार्यधियश्च सन्ति प्रायो नृपा नियमभून्यमनोऽनुभावाः ॥१६११॥
शौचस्थाने कृतवसतिभिः स्त्रीव्यवायालये वा निःशङ्को यश्छलनकुशलैर्मानसं संप्रविश्य ।
नीतो भूतैरिव विवशतां निर्भरं गर्भचेटैर्भद्रं भूपालकथमिव ततः स्यादवष्टब्धचेष्टात् ॥१६१२॥
निर्हेतु प्रहसन्स्थिटः प्रविशति क्षोणीपतेरन्तिकं प्रीत्युत्फुल्लदृगेव किं किमिति तं पृच्छत्यनच्छाशयम् ।
ब्रूते किंचिदसौ कथानय कथन्सर्वंकषं मानिनां मानप्राणगुणेषु यत्सरभसं दम्भोलिपातायते ॥१६१३॥
सविभ्रमगतागतः किमपि भाषमाणः भ्रुवौ प्रभोर्वलितलोचनं जगदवज्ञयालोकयन् ।
निजस्य मुखविक्रियाप्रणयताडनाद्यैर्विदन्नुमहमिवाहितं नृपतिवल्लभो दुःसहः ॥१६१४॥
1615 अपि जातु स दृश्येत निःसंक्षोभमतिर्नृपः । यो यन्त्रपुत्रक इव व्यक्तं धूर्तैर्न नर्त्यते ॥१६१५॥

१५९४. ¹) Here one *akshara* is wanting in A; तु supplemented with C. १६०२. ¹) Emended; A °क्षमतां मुहुस्ते. १६०६. ¹) Thus corr. by A₁ from कुलेस्यै°. १६०८. ¹) Emended; A गर्गिणा. १६११. ¹) Emended; A °क्षज.— ²) Emended with C; A °स्तत्वं व्या°.

यतो भृत्यान्तराज्ञानाज्जातः सर्वस्वसंक्षयः । तत्प्रमादुष्कृते राज्ञां हा धिक्चापि शाम्यति ॥१६१६॥
सुज्जिरारोग्यमन्वेष्टुमागच्छन्पूर्ववत्प्रभोः । विन्यस्तरक्षिणः पश्यन्नविश्वासमखिद्यत ॥१६१७॥
दाक्षिण्यं वामतां वानमाशये प्रतिबिम्बितम् । दर्पणस्येव राज्ञः स विभाव्याभूत्पराङ्मुखः ॥१६१८॥
तस्मिन्राजगृहे खेदान्मन्दीकृतगतागते । नृपतेस्तद्गतां प्रीतिं निःशेषां जह्रिरे खलाः ॥१६१९॥
भृत्यः सुज्जेश्चित्ररथोप्यास्थानद्विजभूः शठः । प्रातिलोम्याद्वैर्भर्तुर्मन्त्रैरासीच्छिद्रयोन्तकृत् ॥१६२०॥ 1620
नीरोगे राज्ञि दृष्टः स दिष्टवृद्ध्यै नृपास्पदे । वत्सवर्षी विनिर्याय प्रार्थनार्थी गृहान्ययौ ॥१६२१॥
न तं प्रासादयद्राजा विशालबलवाहनः । आक्रम्यैषोसौ कथं नः स्यादित्युपायं त्वचिन्तयत् ॥१६२२॥
त्यज्येत हतकार्योसौ निराशैरनुजीविभिः । मत्वेति तदधीकारानन्येभ्यस्तूर्णमार्पयत् ॥१६२३॥
राजस्थानात्स्वजं धन्यमुदयं कम्पनादपि । अजिमद्भरपतिः खेरीकार्थे च रिल्हणम् ॥१६२४॥
हृताधिकारे प्रव्यक्तवैकृते नृपतौ ततः । अल्पावशेषानुचरः सुज्जिरासीद्विशङ्कितः ॥१६२५॥ 1625
विमानितः पुरान्नङ्गायात्रामुद्दिश्य मानवान् । सोथ सुस्सलभूभर्तुरस्थीन्यादाय निर्ययौ ॥१६२६॥
औत्सुक्यात्प्रार्थनाकाङ्क्षी राजधान्यन्तिके न सः । निर्गच्छन्राजपुरुषैर्न राज्ञा वाप्यरुध्यत ॥१६२७॥
तन्निर्वासनगर्वस्य स्थापनायानुयात्रिके । प्रतीहारस्तस्य गुप्त्यै कोशार्थैः स्वात्मजं व्यधात् ॥१६२८॥
निग्रहानुग्रहावस्मदायत्तावित्ति रक्षिणम् । पुत्रं प्रादाल्लक्ष्मको मे इति ध्यायन्स विव्यथे ॥१६२९॥
निवृत्तो लक्ष्मको हारात्पर्णोत्सं शनकैर्गतः । अथारोपयद्द्रोहो भागिकं लोहराचलात् ॥१६३०॥ 1630
प्रतीहारविसृष्टाय धात्रेयाय महीभुजः । प्रेमाभिधाय तत्कोष्ठाधीकारं च समार्पयत् ॥१६३१॥
उत्खाय लोहरत्यागाच्छङ्काशङ्कां महीपतेः । स ग्रीष्मविषमं कालं राजपुर्यामलङ्घयत् ॥१६३२॥
अमात्यकन्दुकव्रातपातनोत्पातनक्षमः । आयस्तडामरः प्राप प्रथां कामपि लक्ष्मकः ॥१६३३॥
द्वारेथाकारयत्सुज्जिप्रतिमल्लविधित्सया । कृष्यमाणो राजवंशपौरुषं राजमङ्गलम् ॥१६३४॥
अनन्यदेशजः सुज्जेः भूरो मत्कोशपोषितः । कीर्तिमेष हरेद्ध्यावितीर्ष्याकलुषो हि सः ॥१६३५॥ 1635
खड्गमात्रसहायः स क्षुण्णः पर्यटितुं पथि । निःशङ्कखोपहास्यश्च तेन कार्यार्पणात्कृतः ॥१६३६॥
कर्तुं पदव्यां योग्यानामयोग्यान्प्रभवेन्न कः । तेषां गुणैस्तान्संयोक्तुं न शक्यं कारणैरपि ॥१६३७॥
पदे श्रीखण्डस्यानुचितमुचिते वर्त्मनि निजे वृषाङ्कः प्रक्षेप्तुं प्रभवति चिताभस्म रभसात् ।
न तत्स्वेच्छायत्तत्रिजगदुदयापायघटनोप्यसौ तद्गन्धेन स्फुटमिह पटुः संघटयितुम् ॥१६३८॥
तस्मिन्सुज्जिप्रतिस्पर्धामप्रौढे वोढुमक्षमे । दूतानसृजदानेतुं सज्जपालं दिगन्तरात् ॥१६३९॥
निर्वीरे मण्डले ह्येष्योप्यवापत्कार्यगौरवात् । कोष्ठेश्वरो नरपतेर्नितरामन्तरङ्गताम् ॥१६४०॥ 1640
प्रीतिदायैस्तोष्यमाणस्तैस्तैस्तुष्टेन भूभुजा । विस्रब्धो नगरे तस्थौ सोपि लूतामयातुरः ॥१६४१॥

---

१६१९. [1]) Emended; A जज्ञिरेखिला:. १६२२. [1]) Emended; A आक्रम्यासौ.—[2]) Thus corr. in A from न. १६२४. [1]) Emended; A धान्य°. १६२५. [1]) Emended; A द्विशा°. १६२९. [1]) Conjectural reading; A °कोष; R C °कोय. १६३१. [1]) Emended; A समर्पयत्. १६३३. [1]) Thus $A_1$; $A_2$ °पातनोत्थापनक्षम:. १६३५. [1]) Thus $A_1$; $A_2$ सुज्जिः.— [2]) Thus corr. by $A_2$ from $A_1$ मत्कोश°.—[3]) Thus corr. by $A_2$ from $A_1$ स्पर्धामेष वहे – – विती°. १६३८. [1]) पटुः supplied by $A_2$ in space left by $A_1$.

एवं क्रमकदम्बैक्यं राशि कुर्वति कार्यतः । बालकैः सोमपालाद्यैः सुज्जिर्नान्येव वैकृतम् ||१६४२||
प्रतिज्ञाय लतामात्रसाध्यं कश्मीरनिर्जयम् । सोमपालाय तद्राज्यं सोऽङ्गीचक्रेऽवमानितः ||१६४३||
प्रतिभुभाव तस्मै च भागिनेयीं स कन्यकाम् । धीमानत्रान्तरे सामदाने प्रयुयुजे नृपः ||१६४४||
द्वौ तावल्पाश्रयौ राजकन्ययोः स्वीक्रियां तदा । रभसाद्याचकुर्वाणावदत्तामन्तरं द्विषाम् ||१६४५||
उपायैर्जयसिंहस्य शकुनैश्च निरीक्षितैः । प्रेरितः सोमपालोऽथ सुज्जेर्मन्दादरोऽभवत् ||१६४६||
स्वयमेत्य प्रतीहारस्तत्र राजपुरीपतिम् । सीमान्तर्भुवमानिन्ये कन्यकोद्वाहसिद्धये ||१६४७||
जातां कल्हनिकाख्यायां महादेव्यां महीपतेः । उपयेमे नृपसुतां सोमोऽम्बापुत्रिकाभिधाम् ||१६४८||
याते तस्मिन्कृतोद्वाहे नागलेखाभिधां सुधीः । तत्स्वस्रेयीं[1] प्रतीहारो भूभुजे प्रत्यपादयत् ||१६४९||
इत्थं राष्ट्रद्वये बद्धसंधौ निरवकाशताम् । प्राप्तः प्रतस्थे हेमन्ते सुज्जिस्त्रिपथगोन्मुखः ||१६५०||
जालंधरे संघटितो ज्येष्ठपालो निनाय तम् । गाढावमाननिर्नष्टसौष्ठवं भिक्षुपक्षताम् ||१६५१||
त्वयि भिक्षाचरे चैकसैन्यनायकतां गते । नोपेन्द्रो वा महेन्द्रो वा समर्थौ प्रत्यवस्थितौ ||१६५२||
राज्यप्रदस्य ते यश्च चक्रे राजा विमाननाम् । तस्थुषो यश्च विषये प्रतिकुर्मस्तयोर्द्वयोः ||१६५३||
इति संप्रेरितस्तेन देङ्गपालान्तिकस्थितेः । यियासुः सोऽन्तिकं भिक्षोर्भागिकेन न्यषिध्यत ||१६५४||
अनिक्षिप्तवतोऽस्थीनि स्वामिनो जाह्नवीजले[1] । न युक्तमेतत्ते कृत्यमित्यावेगादशासि[2] च ||१६५५||
स्नात्वा पुनरथागमिष्यामि पार्श्वं व इति निश्चयम् । स पीतकोशः कृत्वास्य ययौ प्रस्तुतसिद्धये ||१६५६||
प्रतीहारकरन्यस्तसर्वभारस्तु भूपतिः । मन्दाक्रान्तितया राज्यमसुस्थितममन्यत ||१६५७||
यो यो हि व्यपरोत्स्यत् तं संधाय सविधस्थितः । तमन्वहं प्रतीहारः सानुग्रहमिवैक्षत ||१६५८||
प्रगल्भमाने शास्त्येवमुदयः कम्पनापतिः । अवधीच्छद्मना द्यमं प्रकटं कालियात्मजम् ||१६५९||
अविश्वासोल्बणान्सर्वलावन्यानथ लक्ष्मकः । निर्मर्यादान्कम्पनेशर्मीषत्सान्त्वमजिघ्नन् ||१६६०||
स्नात्वाभ्येष्यति गङ्गायां यावत्सुज्जिर्विसृष्टव्रताम् । यावत्कथं मया नेया कश्मीरा इति चिन्तयन् ||१६६१||
तावन्मात्रान्तरव्याप्त्या राज्ञो विज्ञाय डामरान् । भिन्नान्भिक्षाचरोऽविक्षद्विषल्लाटां हिमागमे ||१६६२||
मण्डलस्यान्तरे तस्य विविक्षो रुद्रडामरः । प्रतीहारो हिमर्तुश्च निषेद्धा समपद्यत ||१६६३||
स टिक्केन पितृद्रोहादेकान्तद्वेषिणा रिपोः । आनीतः संमतैर्दत्ताप्यायः सर्वैश्च डामरैः ||१६६४||
प्रतीक्षमाणो राज्याप्तिहेतुं सुज्जिसमागमम् । निर्भयाष्टिकजामातुर्भागिकस्य खशप्रभोः ||१६६५||
बाणशालाभिधे दुर्गे वसन्नल्पोऽपिछिन्नतावपि । दूतैर्विभेदमनयन्सर्वं डामरमण्डलम् ||१६६६||
प्रमोदं सुहृदां त्रासं द्विषां च विसृजन्पुरः । व्यावर्तताथ गङ्गायाः सुज्जिर्विहितमज्जनः ||१६६७||
पूर्वविप्रकृते भिक्षाचारेऽस्मिन्नथाभेदमागते । यथामुष्य महीभर्तुस्तथास्माकं भयं भवेत् ||१६६८||
ध्यात्वेति सिंहदेवेन प्रार्थितो व्याजमारधे । सुज्जिस्वीकरणोद्योगे सोमपालो भयाकुलः ||१६६९||
सुज्जिर्जालंधरं प्राप्तः प्रातर्भिक्षाचरान्तिकम् । यावद्यास्यति तं सायं तद्दूतस्तावदासदत् ||१६७०||

१६४९. [1]) Emended with C; A स्वस्रेयी. १६५५. [1]) These two *pādas* have been twice written by $A_0$.— [2]) Emended with C; A °शाधि. १६५९. [1]) Thus A; perhaps read शास्त्यैवमु°.

प्रेरितो ज्येष्ठपालेन निषिद्धो भागिकेन च । विरराम स तस्योक्त्या विपक्षाश्रयणग्रहात् ॥१६७१॥
मार्गं देशान्तरोपान्ते तत्र भूपोऽपनेष्यति । स्वं च दास्यत्यधीकारं मन्मुखप्रहितार्थनः ॥१६७२॥
इति दूतमुखेनोक्तः सोमपालेन चान्वहम् । विपक्षौत्सुक्यमुत्सार्य तद्देशाभिमुखो ययौ ॥१६७३॥
उदयः कम्पनाधीशो वैशाखे तीर्णसंकटः । खशान्वितेन संग्रामे प्रत्यपद्यत भिक्षुणा ॥१६७४॥
प्राक्कस्युष्यल्पपृतने जाते पृथुबले ततः । तस्मिन्कोट्टान्तरं भिक्षुः प्राविशत्प्राप्तवेष्टनः ॥१६७५॥
राजाथ त्रिजयक्षेत्रं निर्यातः प्रत्यपूरयत् । कम्पनेशस्य कटकं तास्ताः संप्रेषयंश्चमूः ॥१६७६॥
यन्त्रोपलशरासारविविधायुधवर्षिणी । दुर्गस्थितैर्नृपचमूः प्रत्ययोध्यश्मवर्षिभिः ॥१६७७॥
पतत्स्वश्मसु भिक्षोश्च नामलक्ष्मसु पत्त्रिषु । ग्रहीतुं दुर्गजान्राजसेना दीर्घापि नाशकत् ॥१६७८॥
दिनैरभ्यधिके मासमात्रे यातेमहीन्ततः । विदार्य मूलं दुर्गस्य धन्यैः खाताम्बु संभृतम् ॥१६७९॥
दुर्गभाजो बलासाध्या राज्ञ्युपायपरे धियम् । जाततद्वैरिबाधेच्छा धनलुब्धामदर्शयन् ॥१६८०॥
विससर्ज प्रतीहारमथ तद्वस्तुसिद्धये । राजा डामरसामन्तमन्त्रिराजात्मजैः समम् ॥१६८१॥
कोष्ठेश्वरत्रिल्लकाद्याः कृच्छ्रस्थस्य विमोक्षणम् । करिष्यामो वयं भिक्षोरिति बुद्ध्वा तमन्वयुः ॥१६८२॥
पश्यन्संकटशैलाग्रादधः कोट्टं निम्नोन्नति । जितं मेने प्रतीहारो वीक्ष्यानन्ताः स्ववाहिनीः ॥१६८३॥
पूर्वस्थितैः प्रतीहारानुगैश्चान्यत्र वासरे । अयोधि सर्वसैन्यस्य बलात्कोट्टं जिघृक्षुभिः ॥१६८४॥
ते तावन्तोऽप्यश्मवृष्ट्या तथा तैः प्रतिचक्रिरे । नास्तीदं विक्रमेणेति यथागृह्णन्विनिश्चयम् ॥१६८५॥
श्रीरदेहद्रुमाग्रेभ्यो न्यपतन्नश्मभिर्हताः । निर्यदस्रौघसरघाः शीर्षभ्रमरगोलकाः ॥१६८६॥
कोष्ठेश्वरस्य मूढत्वं निर्व्यूढं तत्र किंचन । स्वस्य भिक्षोर्लवन्यानामन्येषां च विनाशकृत् ॥१६८७॥
नास्त्यत्र मत्समो वीर इत्येतावत्प्रसिद्धये । स प्रयुक्तोद्धतं भिक्षोर्यत्प्राणक्षयकार्यभूत् ॥१६८८॥
बुभुक्षूणां खशानां स संकटे धैर्यमादधे । कोष्ठेश्वरोऽस्मि चाभिज्ञो तद्दृश्या डामराः परे ॥१६८९॥
यदेतद्दृश्यते भूरि सैन्यमस्मद्धिताय तत् । पर्यवस्येदिति वदन्सम्भाव्यमन्यथा च तत् ॥१६९०॥
विस्रम्भभूरमुष्यारिर्यन्न कोष्ठेश्वरोऽप्यसौ । अन्येषु तत्र कैवास्थेत्यथ ते निश्चयं दधुः ॥१६९१॥
भूभृत्पितृद्रुहः कार्यवशेन स्वोपवेशने । अङ्गीकृताधिकारस्तु धीमांष्टिक्कस्य लक्ष्मकः ॥१६९२॥
खशाधीशं महाग्रामस्वर्णादित्यागसंभयात् । स्वीकृत्य भिक्षुबुभुक्षाबद्धकक्ष्यमकारयत् ॥१६९३॥
आनन्दाख्यः खशाधीशस्यालः कृतगतागतः । नीत्वा टिक्कं प्रतीहाराभ्यर्णं भूयोऽप्यरोपयत् ॥१६९४॥
प्रतीहारस्य टिक्केन सहैक्यं वीक्ष्य डामरैः । निःसंशयं हतोऽज्ञायि भिक्षुः कोष्ठेश्वरादिभिः ॥१६९५॥
संरब्धास्तद्विमोक्षाय प्राहिण्वंस्ते खशान्तिकम् । दूतानुरीकृतस्वर्णदाना भूरिधनैः समम् ॥१६९६॥
खशस्तु दध्यावुत्कोचं गृहीत्वास्माभिरुज्झितः । जानाति रक्षितान्प्राणान्भिक्षुः कोष्ठेश्वरादिभिः ॥१६९७॥
समन्युः भ्रामराज्योऽथ देङ्गपालोऽथ दूरगः । हन्यान्मां जयसिंहस्तद्दृश्यः पथ्यः प्रयत्नतः ॥१६९८॥
मत्वेति तेन प्रत्युक्ता भिक्षुं[1] शीघ्रस्थितं गृहात् । विपाद्यातः फलहकं निर्गच्छेत्यूचिरेऽपि ते ॥१६९९॥

१६७६. 1) Emended; A संप्रेषयधमूः. १६७९. 1) Emended; A धान्यः; C धान्यका?; cf. viii. 1624. १६८१. 1) Emended: A राज्ञां. १६८२. 1) Thus corr. by A₂ from A₁ कृच्छ्रासत्त्व. १६९२. 1) Emended; A °पृथु°. १६९७. 1) Emended with R; A दध्यायु°. १६९९. 1) Emended; A भिक्षुर्°

स स्वमेध्योपलिप्ताङ्गः श्वेतावस्करवर्त्मना । यात इत्ययशो लोके व्यापन्मायी न निर्ययौ ॥१७००॥
कोष्ठेश्वरोऽम्यकाकुत्स्थः सैन्यक्षोभेच्छयाक्षिपन् । रूक्षं कालविदा प्राह्ने प्रतीहारेण सान्त्वितः ॥१७०१॥
भीत्या खशाधीर्दत्तायामा प्रत्यूषादगृह्यत । व्यवसायः प्रतीहारमुख्यैर्भिक्षुप्रमापणे ॥१७०२॥
गच्छद्भिरागच्छद्भिश्च राजा दूतैः प्रतिक्षणम् । अन्विष्यन्विजयक्षेत्रे वार्तां पर्याकुलोऽभवत् ॥१७०३॥
नावद्भिराहवैस्तैस्तैः साहसे दश वत्सरान् । कृतयत्नस्य साध्योऽभून्न यो वृद्धमहीभुजः ॥१७०४॥
डिम्बो राजानुगा डिम्बास्तस्य भिक्षोः प्रमापणम् । साध्यमेते हि मन्यन्ते हन्त किं केन संगतम् ॥१७०५॥
विहस्य नीयते वित्तं खशैरस्य क्षणादमी । भग्ना नूनं प्रयास्यन्ति मुषिताश्चाखिलाः परैः ॥१७०६॥
पृथग्भूतः कोष्ठकोऽयं त्रिल्लकोऽस्यैव बान्धवः । एते भिक्षाचरोच्छिष्टपुष्टा आभ्यन्तरा अपि ॥१७०७॥
को नूतनोऽत्र संग्रामो यो राज्ञः साधयेद्धितम् । सामग्री नूनमायाता सेयमस्यैव सिद्धये ॥१७०८॥
इत्यूचुः शिबिरे यावज्जनास्तावदवेष्ट्यत । कटकैर्मन्त्रिणां दुर्गं विकोशायुधवाहिभिः ॥१७०९॥
एकाकी चिरसंक्लिष्टो हन्तव्यस्तत्कृतेऽखिलैः । हा धिक्परिकरो बद्धो निर्लज्जैः सर्वशस्त्रिभिः ॥१७१०॥
त एवेत्यूचुरासीच्च कच्छस्त्रोर्मिनिर्मलः । स्फुरद्घोषाक्षिशफरो निःशब्दः सैन्यसागरः ॥१७११॥
व्योम्नोड्डीयेत वा सैन्यं लङ्घयेद्वा मृगप्लुतैः । दुष्टाभ्रवृष्टिरिव वा निखिलांस्ताडयेत्समम् ॥१७१२॥
साश्चर्यशौर्यैः पर्यन्ते स्वीकुर्वन्भिक्षुरायुधम् । संभ्रान्तश्चकितश्चासीदित्यन्तश्चिन्तयञ्जनः ॥१७१३॥
एतावन्मन्त्रिणां सिद्धमथ प्रत्यूहसंभवः । तच्छान्तिः कार्यसिद्धिश्च प्रतापैर्नृपतेरभूत् ॥१७१४॥
सैन्ये भिक्षाचरापातं पश्यत्यूर्ध्वार्पितेक्षणे । कोट्टान्निष्कृष्टशस्त्रीकः पुमानेको विनिर्ययौ ॥१७१५॥
रुदतीभिः परीतस्य नारीभिस्तस्य चिक्षिपुः । पृष्ठे केऽपि वपुर्लोलकौसुम्भाधरवाससः ॥१७१६॥
बद्धः पलायमानोऽत्र सोऽयं भिक्षुरिति ब्रुवन् । उन्मुखः स जनोऽभीर्ष्याहिक तमथ निर्गतम् ॥१७१७॥
स हि[1] भिक्षोः कृतद्रोहतुमुले प्रस्तुतो[2] वधम् । तस्माद्राजानुगेभ्यो वा स्वस्याशङ्क्य विनिर्ययौ ॥१७१८॥
अद्रोहोऽस्मीति लोकस्य प्रत्ययाय चकर्ष च । कृपाणीमुदरं हन्तुं रक्ष्यमाणो निजानुगैः ॥१७१९॥
सानुगस्त्यक्तमार्गो स विलङ्घ्य नृपवाहिनीम् । आद्रिप्रस्रवणोपान्ते नातिदूरेऽभ्युपाविशत् ॥१७२०॥
उच्छ्रसंधिरसंप्राप्तैरम्भोभिर्दुर्गनिर्गतः । मायां प्रयोक्तुं प्रारेभे प्रेरितः सोऽन्यडामरैः ॥१७२१॥
संजातं लम्बमानार्कमहस्तत्प्रेक्ष्यतां क्षणम् । भिक्षुः क्षपायामास्कन्दमपनेष्यन्ति डामराः ॥१७२२॥
इति तद्वाचिकात्तीक्ष्णा नीतिविभिर्मन्त्रिणां समम् । खशीस्त्यजद्भिर्दैवहो न्यरुध्यन्ताहरक्षव[1]: ॥१७२३॥
ततः किलकिलारावमुखरैः करतालिकाः । योधैर्ददद्भिः सचिवा व्यगृह्यन्ताकुलाशयाः ॥१७२४॥
मुक्ताः स्वामिद्रुहः कृच्छ्रगता राज्यं प्रसाधितुम् । द्विषतो मन्त्रिभिः स्वार्थो[1] दत्त्वार्थान्को नु साधितः ॥१७२५॥
राजकार्ये च भानी च लम्बमानेऽथ लक्ष्मकः । किमेतदिति तं नीतिं खशास्यालमभाषत ॥१७२६॥
सोऽभ्यधात्कुम्भदास्यापि रोद्धुं शक्यं चिकीर्षितम् । खशानां प्रत्यवस्थाता कथं तत्रास्त्यसंनिधिः ॥१७२७॥
स हन्तुं वैपरीत्यं तं खशानां त्वं व्रजेत्यथ । उक्त्वा व्यसृजदानन्दं अहसे चान्यमन्त्रिभिः ॥१७२८॥

---

१७०४. [1]) Emended; A °वत्सर. १७१८. [1]) Emended; A सह.—[2]) Thus A; perhaps read कृतद्रोहस्तुमुले प्रस्तुते.
१७२३. [1]) Emended with C; A न्यरुध्यन्ता°. १७२५. [1]) Emended; A स्वार्थी.

दूरदर्शिना राज्ञा विषलाटाध्वपातनः । देङ्गपालगृहा - -¹रम्भः समभाव्यत ॥१७२९॥
अतः प्रधानकोट्टेशस्त्रैलः समनगृह्यत¹ । मार्गेणार्धैस्तदर्थं पप्रता दीर्घवागुराम् ॥१७३०॥
संक्षोभावसरे क्षत्ता ततो निःसंभ्रमोऽभवत् । शिक्षितं पक्षिणमिव स्वयं प्राप्यं विवेद तम् ॥१७३१॥
स तानूचे न हास्यं मे नष्टे कार्येत्र साहसम् । सर्वनाशो हतेऽमुष्मिन्खशस्त्वालेऽपि किं भवेत् ॥१७३२॥
अकुण्ठया भाग्यशक्त्या राज्ञः स्यालः खशास्य सः । सर्वानियन्त्र्य दुर्गाप्तीक्ष्णादीनाजुहाव तान् ॥१७३३॥
दस्यूनामसवः कण्ठे संदेहं मन्त्रिणां धियः । स्वःस्त्रीणां प्रीतयः काष्ठां तीक्ष्णाश्चारुरुहुर्गिरिम् ॥१७३४॥
स चर्मकौपीनपटीबन्धस्तास्त्राभिशाङ्कितैः । इषुभिः स्वामिवत्स्वस्य व्यापन्नं सर्वतो युधि ॥१७३५॥
स ताम्बूलाधरः सक्तः सा केशहस्तभृद्योजने । याभूदनुमुमूर्षूणां भिक्षुराजो¹पजीविनाम् ॥१७३६॥
निश्चितान्ते ततस्तस्मिन्स तेषां सम्यवर्तत¹ । कोष्ठेश्वरादिशिबिरं तूर्णं शरणमीयुषाम् ॥१७३७॥ तिलकम्²॥
एकैकशो लक्ष्मकेण लुब्ध्वा स्वैः प्रेरितैर्भटैः । टिक्कः स्वं वीक्ष्य चलितं निष्कर्ताङ्गुलिं भयात् ॥१७३८॥
खशैरस्मिन्नवसरे स पलायनशङ्किभिः । रक्ष्यमाणस्तेष्वहःसु मनस्तापादभुक्तवान् ॥१७३९॥
वीरस्त्वम्यन्विलम्बेन तीक्ष्णानामाहवोत्सुकः । तस्थौ भिक्षाचरः स्वान्तमक्षयत्वा विनोदयन् ॥१७४०॥
हर्म्यप्राङ्गनमायाते तीक्ष्णलोके युयुत्सया । उत्तिष्ठता तेन दावः स्तोकशेषः समाप्यत ॥१७४१॥
दीव्यतः¹ कान्तया साकं कामिनः सुहृदागमे । प्रत्युत्थातोरिव क्षोभो नान्तस्तस्य व्यजृम्भत ॥१७४२॥
किमद्यापि वधेन स्याद्बहूनामिति चिन्तयन् । स विहाय शरावापं सासिधेनुर्विनिर्ययौ ॥१७४३॥
सुदीर्घश्चिन्तागलितायामश्यामलिभिः कचैः । चञ्चच्चित्रपताकाङ्कमिव वीरपटाञ्चलैः ॥१७४४॥
गण्डताण्डवितात्विन्नशङ्कुताडङ्करोचिषा । चन्द्रनोल्लेखकान्त्या च द्योतिताहंक्रियास्मितम् ॥१७४५॥
विस्तीर्णं चित्रचार्यन्ते विपर्यस्ताङ्गिताङ्गनम् । द्योतयन्तमिवालातैः शास्त्रीनेत्राधरांशुकैः ॥१७४६॥
कौसुम्भाधरवासोभवद्धौताधराञ्चलैः । लोलैर्वीरहरिं बद्धसटाटोपमिवांसयोः ॥१७४७॥
तृङ्गनःपाणिपादैक्ययन्त्राद्भ्रमतुरङ्गचारिभिः । चरन्तं मण्डलैश्चित्रैर्लघुचित्रस्थिरक्रमैः ॥१७४८॥
औचित्यस्योचितां चर्या¹मलंकारमहंकृतेः । अभिमानविभूतीनां नित्योत्सेकमनत्ययम् ॥१७४९॥
अलक्षिताक्षिप्रपातं स सर्वोऽप्युन्मुखो जनः । विचरन्तं तमैक्षिष्ट भिक्षुमग्रे विरोधिनाम् ॥१७५०॥
राजबीजी मधोर्मग्ना तं प्रवीरः कुमारियः । भ्रातापि ज्येष्ठपालस्य निर्यातो रक्तिकोऽन्वगात् ॥१७५१॥
हर्म्यान्निर्गोऽचलैस्तैस्तैर्वेशतः परिपन्थिनः । दरोधकः शरासारैर्गार्गिको भिक्षुसंश्रितः ॥१७५२॥
ते धावन्तो व्यभाव्यन्त¹ शरैस्तच्चापनिर्गतैः । वर्णोपलैः पुरोवातप्रेरितैरिव दन्तिनः ॥१७५३॥
स रोद्धा प्रतियोधानां पापैः क्षिप्राश्मभिः खशैः । क्षताङ्गो भग्नचापश्च चिरेण विमुखीकृतः ॥१७५४॥
तस्मिन्प्रचलिते मार्गैः प्रविश्योत्थात्रयैर्भटाः । ते च भिक्षाचरादीनां सर्वे गोचरमाययुः ॥१७५५॥
भिक्षोरेकं क्षणालक्ष्यधैर्यं पार्श्वभूतायुधम् । अधावत्तूर्णमादाय शूलमेको बृहद्भटः ॥१७५६॥

१७२९. ¹) A₁ omits here two *aksharas* without indicating the *lacuna*; C देङ्गपालगृहारम्भावारम्भः; perhaps read °गृहाभ्यर्णारम्भः. १७३०. ¹) Thus A; C स समगृह्यत. १७३६. ¹) Emended with C; A राज्ञीपजी°. १७३७. ¹) Emended; A तेषां सन्धव°.—²) A₁ writes here ३ instead of तिलकम्. १७४२. ¹) Emended with C; A दीव्यतः. १७४९. ¹) चर्या supplied by A₂ in space left by A₁. १७५३. ¹) Emended; A व्यभा°.

तस्य प्रहरतः शूलं भिक्षुराच्छिद्य वत्सलः । शिल्पापहस्तेनावेगात्केशाग्रमाह धावितः ॥१७५७॥
प्रजहार कृपाण्या च निर्वल्गाने पतिष्यति । तस्मिन्प्रहर्तां भूयस्तौ कुमारियरक्षिकौ ॥१७५८॥
निर्विभागैर्हते तस्मिन्निर्विधायुधवाहिभिः । विरोधियोधैः संनद्धैस्त्रयो युयुधिरे च ते ॥१७५९॥
अजायन्त विभिन्नाश्च शस्त्रसंपातिताहिताः । कोटराजगरापातसरन्ध्रा इव द्रुमाः ॥१७६०॥
अथाकुर्वन्त तान्हन्तुं खड्गशूलादिभिर्द्विषः । अपसृत्य शरासारैस्ततो दूरादवाकिरन् ॥१७६१॥
भिक्षाचरमृगेन्द्रस्य भञ्जतः शरपञ्जरान् । ततो हर्म्याग्रखशैर्मुक्ताः पुष्टाः पाषाणवृष्टयः ॥१७६२॥
धावतस्तस्य घोराश्मवृष्टिकुट्टितवर्ष्मणः । निममज्ज यकृत्पिण्डं भञ्जन्पार्श्वे शिलीमुखः ॥१७६३॥
क्रान्त्वा त्रीणि पदान्याशु स पपात दिशान्क्षितेः । ततश्चिरप्ररूढं द्राक् कम्पं विद्विषतां हरन् ॥१७६४॥
कुमारियोऽपि बाणेन विद्धवङ्कणवर्मणा । प्रणितोऽपपतद्भर्तुः पादोपान्तेऽपजीवितः ॥१७६५॥
रक्किकस्तु शरेणैव विद्धो मर्मणि विह्वलः । सजीवितोऽपि निर्जीव इव भूमावुपाविशत् ॥१७६६॥
महाकुलीनैः सहितो हतो भिक्षुरशोभत । यथावभुमः शिखरि पुष्पितैरिव पादपैः ॥१७६७॥
हयतो राजचक्रस्य मध्ये हर्षनृपात्मनः । नावमानस्य मानस्य स्वभूद्भिक्षोः[2] परं पदम् ॥१७६८॥
विधाता नित्यविधुरस्तेनान्तेऽप्यभिमानितः । अकुण्ठेन ध्रुवं चक्रे गृहीतात्मपराजयः ॥१७६९॥
को वराको महर्द्धीनां सोमे पूर्वमहीभृताम् । उदासेनान्तकस्येव ते स्वस्थाये न किंचन ॥१७७०॥
अहोपुरुषिकामत्तैरारोहद्भिर्द्विषद्भटैः । तदवस्थस्तदार्तोऽपि शक्त्यायुध कुमारियः ॥१७७१॥
स्फुरन्योद्धव्यमित्येव स महारावघस्तथा । विज्ञातस्त्वैररिभिर्वितस्य बहुशो हतः ॥१७७२॥
त्रिपक्षेस्मिन्नलं मूढाः प्रहारैरिति निन्दिताः । खशैः प्रजहुर्बहुशो हते भिक्षौ द्विषद्भटाः ॥१७७३॥
अविवेकायुधस्त्रीभ्रमणवेदनयाधमैः । कैश्चिन्निर्जीवितप्रायो रक्किकः शस्त्रिभिर्हतः ॥१७७४॥
वयसस्त्रिंशतिं वर्षांश्च मासांश्च भुक्तवान् । न पञ्चाशासितज्येष्ठदशम्यां नृपतिर्हतः ॥१७७५॥
निदानं विप्लवे दीर्घे सर्वनाशेऽपि कारणम् । येषा बभूव तेऽप्येवं तुष्टुवुः सत्त्वविस्मिताः ॥१७७६॥
नेत्रस्पन्दं भ्रुवोः कम्पं स्मेरास्यत्वं च नामुचत् । सजीवमिव तन्मुण्डं कियतीरपि नालिकाः ॥१७७७॥
एकं व्योम्न्यविशद्बिम्बभानुं भूमौ पुनः परम् । तद्देहमप्सरःसङ्गं धराम्बुं च विदङ्गजम् ॥१७७८॥
सचिवा विजयक्षेत्रस्थितस्याग्रे महीपतेः । तेषां त्रयाणां मुण्डानि ततोऽन्येद्युरुपाहरन् ॥१७७९॥
श्रीद्धधारभवन्त्यवधशाकाद्दिमकाशने । दृष्टचित्रस्वभावोऽभिर्यथायं पार्थिवस्तथा ॥१७८०॥
तत्र तथाद्भुतं भावं दर्शयन्भुवनाद्भुतम् । परिच्छेद्यानुभावस्त्वं न केषामपि गच्छति ॥१७८१॥युग्मम्॥
नाद्यापि हसोसाध्मः पितुर्मे योऽप्यभूदिति । न जहर्ष विनष्टोऽयं राजकण्टक इत्यपि ॥१७८२॥
नाकुप्यन्मत्पितुर्मुण्डमेष भ्रमितवानिति । वीक्ष्य भिक्षोः शिरोऽव्याजभावौदार्यस्त्वचिन्तयत् ॥१७८३॥ युग्मम्॥
आकारस्यास्य संभाव्यं सत्त्वं न ह्येववैकृतम् । वैशद्यं स्फटिकस्येव नार्कालोकोपतप्तताम् ॥१७८४॥

---

१७५८. 1) Emended; A मह°. १७६५. 1) Emended; A पादोपान्तौ. १७६६. 1) Emended with C; A अक्किकस्तु. १७६८. 1) Thus A; C °त्मजः.—2) Perhaps read °द्भिक्षुः. १७७०. 1) Thus A; B C °नान्तकृत्येन. १७७५. 1) Emended with C; A ज्येष्ठ°. १७७६. 1) Emended; A सत्त्वविस्मितः. १७७८. 1) Emended; A धारा°. १७८२. 1) $A_1$ २. १७८३. 1) Emended; $A_1$ had first written नाकुप्यन्मत्पितु° and subsequently corrected this to नाकुप्यन्मत्पितु°.—2) Emended; $A_1$ °भावौ – – स्त्वचि°, writing in margin भावोदार्य; B G C °भावोदार्यस्त्व°. Cf. अव्याजौदार्यपार्थस्य iii. 308.—3) $A_1$ २. १७८४. 1) Emended; A °तप्तताम्.

उत्कर्षात्प्रभृति व्यक्तममुं यावन्महीभुजम् । हा धिक्स्वमृत्युना दृष्टं नेह देशविसर्जनम् ॥१७८५॥ 1785
प्रसादवित्ता येप्यासन्पूर्वमस्योर्वराभुजः । तटस्था इव वीक्षन्ते तेपि मुण्डावशेषताम् ॥१७८६॥
इति क्षितीशोसामान्यसौजन्योन्तर्विचारयन् । आदिदेश रिपोः क्षीणं तादृशस्यान्त्यसत्क्रियाम् ॥१७८७॥
निद्राच्छेदे च निशि स्वं ध्यायंस्तस्योदयात्ययौ । भवस्वभाववैचित्र्यं मुहुर्मुहुरचिन्तयत् ॥१७८८॥
अपि वर्षसहस्रेण देशो दायाददुःस्थितिः । नूनं न भविता भूय इति लोकोप्यमन्यत ॥१७८९॥
दग्ध्वा तृणं तनु घनं प्रतनोति शष्पं वृष्टिं सृजत्युपचितोष्म दिनं प्रदर्श्य ।
वैचित्र्यसंस्पृशि विधेर्नियमेन कृत्ये न प्रत्ययः क्वचन चञ्चलनिश्चयस्य ॥१७९०॥ 1790
कृत्यं निर्वर्त्य विभ्रान्त्यै धीरस्यावभ्रतो मनः । विधिर्विधत्ते दीर्घान्यकार्यभारसमर्पणम् ॥१७९१ ॥
आरोढुं प्रथमस्य दीर्घदमनंप्रत्रक्रमस्याङ्घ्रिणा नो संत्यज्यत एव पादकटको यावद्द्वितीयोखिलः ।
बाह्यस्यासनरक्षिणः कलयतो भारावतारात्सुखान्यारोहेण परेण तावदसहाधिष्ठीयते पृष्ठभूः ॥१७९२॥
एवमेव क्षपामात्रं राज्ये निःशत्रुतां गते । शोकमूको नृपस्यार्थं प्राविशल्लेखहारकः ॥१७९३॥
पृष्टः सभ्यैः स संभ्रान्तैर्वस्मिन्नेत्राह्नि भूपतेः । यातो भिक्षाचरः शान्तिमरातिर्दत्तदुःस्थितिः ॥१७९४॥
भ्रातरौ लोहरगिरौ बद्धौ द्वैमातुरौ पुरा । न्यस्तौ सुस्सलभूपेन यौ तौ सल्हणलोठनौ ॥१७९५॥ 1795
ज्येष्ठे मृते कोट्टभृत्यैः कनिष्ठं लोठनं हठात् । तमिहाद्य त्रियामायामभिषिक्तमभाषत ॥१७९६॥
मुक्तभ्रातृद्वितैर्द्वीमे राज्यार्थैः सह पञ्चभिः । निर्यातं बन्धनादूचे कोशेषु स तमीश्वरम् ॥१७९७॥
दूतेन मुखेराक्रन्देत्प्रसारितभुजः पतेत् । स्वप्यादिक्षतो निःस्पन्दहृत्कं गच्छेदथ ध्रुवम् ॥१७९८॥
दीर्घदौःस्थ्यश्रमक्षिप्रमृदूकृतमना नृपः । असौ तत्कालनिपतद्वार्तावज्रचूर्णितः ॥१७९९॥
इति संभाव्य दिक्पालैरपि साकूतमीक्षितः । नाकाराचारचेष्टाभिः प्राग्वस्थां जहौ नृपः ॥१८००॥ 1800
न ह्यनन्याभिभूतेन सर्वतोसत्त्ववर्तिना । तादृशा वैशसेनान्यः सृष्टपूर्वो हि भूपतिः ॥१८०१॥
पित्रास्य यद्बलाभ्रष्टं राज्यं भूयः प्रसाधितम् । अनेनापि हताराति विहितं पैतृकं पदम् ॥१८०२॥
हारितौ दुर्गकोशौ तौ नष्टनामापि दारकः । दायादशेषो यत्रैको निर्धनो वीतबान्धवः ॥१८०३॥
धनमानान्तकृद्भूरिवर्षान्व्यसनमादधे । उपक्रममिषे देशो तत्रैकस्मिन्हतेहिते ॥१८०४॥
भिन्नदुर्गार्थसंपन्नाः प्रोद्धृताः पङ्क्तिरोधिनः । भिन्नप्रकृतिकं कोशशून्यमेतच्च मण्डलम् ॥१८०५॥ 1805
तादृक्कृच्छ्रनिस्तीर्णमाहात्म्यस्य महीपतेः । धैर्येण स्पर्धितुं जाने राघवोपि सलाघवः ॥१८०६॥
प्राक्पोषितं हि साम्राज्यदाने निर्वासने च तम् । तुल्यानुभावमस्मार्षीत्स्थितैर्व गणयन्गुणान् ॥१८०७॥
आहूतस्याभिषेकाय विसृष्टस्य वनाय वा । न मया लक्षितस्तस्य स्वल्पोप्याकारविभ्रमः ॥१८०८॥
कान्तेषु काननान्तेषु सकान्तं सानुजं च तम् । भूयः श्रियं प्रतिभुत्व स्थातुं सावधि सोभ्यधात् ॥१८०९॥
एकक्षणानुभूतेस्मिन्संघट्टे सुखदुःखयोः । ईदृक्तत्तद्दशाभेदादनयोरन्तरं महत् ॥१८१०॥ 1810
नियतं निरुपायानां शक्तिं दर्शयितुं जने । नानोपकरणग्रामं संनद्धोस्याच्छिनद्विधिः ॥१८११॥

---

१७८८. 1) च omitted in A; supplemented with C.—2) Emended with C; A °वान्वयौ. १७९०. 1) Thus corr. by A₁ from °दिन्न चिरं. १७९२. 1) Emended; A दीर्घमदन°. १७९५. 1) Emended; A सुल्हण°. १८०३. 1) A °कोषौ. १८०५. 1) Emended; A °मेतं च.

अत्यद्भुतानि कृत्यानि वक्ष्यमाणानि भूपतेः । कोमुष्य बहु मन्येत सामर्थ्ये सति संपदाम् ॥१८१२॥
धैर्योज्झिना कार्यशेषं ज्ञातुं राज्ञा सविस्तरम् । पृष्टोथ कोट्टवृत्तान्तमाचख्यौ लेखहारकः ॥१८१३॥
उत्सृज्य भार्गिकं कोट्टं प्रयाते मण्डलेश्वरः । लुब्धोयोगोभवत्तुष्टौ प्रेमा संपत्प्रमत्तधीः ॥१८१४॥
मण्डनाभ्यवहारश्रीभोगैकामो मदोन्मना । स धृत्वा भृत्यवैमुख्याद्याभव्यं व्यवाहरत् ॥१८१५॥
कुल्यानुकम्पिना दृष्टघुल्पाटनादेः स वारितः । देवेनं नादादुद्धानां कांचिद्रक्षाक्षमां क्रियाम् ॥१८१६॥
मायाभ्युदयनो नाम कायस्थः स्थूललाञ्छितः । माञ्जिकश्च प्रतीहारो बद्धमूलस्य मन्त्रिणः ॥१८१७॥
पुत्रो भीमाकरस्येन्द्राकरश्चाभ्यन्तरे समम् । बुभुक्षवस्तत्र तत्र वधं प्रेम्णो व्यचिन्तयन् ॥१८१८॥
अलब्धौ हन्तुमप्राप्तावसरैस्तैः कदाचन । कोट्टादट्टालिकां कार्यवशादवरुरोह सः ॥१८१९॥
कश्मीरेभ्यो नृपेणाल्पावशेषप्राणवृत्तिना । प्रैषि शासनमेतादृगिति प्रत्ययसिद्धये ॥१८२०॥
कोट्टौकसामशेषाणां गूढलेखान्विधाय ते । भिन्नसंविदः पूर्वमभिषेच्यस्य भार्यया ॥१८२१॥
दृष्ट्वा दुर्गात्स्वनिर्निगडं कृत्वा च निशि लोठनम् । सिंहराजस्वामिविष्णुप्रासादायेभ्यवेशयन् ॥१८२२॥ तिलकम् ॥
शारदाख्या वधूरेका कापि सुस्सलभूपतेः । तत्र स्थिताभवत्क्षुद्रा तेषामनुमतप्रदा ॥१८२३॥
मर्दार्पितैरयोयन्त्रभञ्जनैरर्गलानि ते । कोशाभिवार्य पर्याप्तं कोशरक्षादि जह्रिरे ॥१८२४॥
सभृत्यैः सप्रभिस्तत्सत्साहसं द्रुमहत्कृतम् । दानेन त्याजिता या सा चण्डालैः प्रतिकूलता ॥१८२५॥
भेरीतूर्यादिनिर्घोषैर्नाभिज्ञाः कोट्टवासिनः । कृत्वा राजोचिताकल्पमपश्यन्नथ लोठनम् ॥१८२६॥
अदृष्टपूर्वतादृक्षोदात्तवेषः स विस्मयम् । निन्ये जनान्नृपामात्ययोगेन दीपैः प्रकाशितः ॥१८२७॥
प्रेम्णः पार्श्वस्थितस्ताभ्यामानयेशारकोन्तिकम् । ससैन्यौ स्वभुजध्वर्मपासिकाख्यौ च ठक्कुरौ ॥१८२८॥
मदास्थयाहितास्कन्दभङ्गस्तेषामशोचनः । रात्रिशेषश्च चन्द्रांशुस्पर्शपाण्डुरशीर्यत ॥१८२९॥
प्रातः प्रेमाथ दुर्वार्ताश्रवणेनोष्णदारुणः । संताप्यमानश्चोष्णांशुकरै रोद्धुमुपाययौ ॥१८३०॥
तं प्रतोलीतलप्राप्तं निर्यातैर्वैरिसैनिकैः । पराङ्मुखीकृतं वीक्ष्य चलितोस्म्यान्तिकं प्रभोः ॥१८३१॥
भुक्तेति भूभृत्त्वरया लुण्ठं लोहरमन्त्रिणम् । विससर्जोदयद्वारपतिमानन्दवर्धनम् ॥१८३२॥
भूमिष्ठौ तौ हि कोट्टस्य विवेकानन्यदेशजौ । सोल्पावस्थादिरन्ध्राणां लक्ष्यगाहरणक्षमौ ॥१८३३॥
प्रविष्टश्च पुरं दृष्ट्वा प्रीतिदायार्थिभिः शिरः । भ्राम्यमाणं भटैर्भिक्षोराक्षिप्यैतानदाहयत् ॥१८३४॥
राजादेशादसंरुद्धैः स्त्रीभूयिष्ठैरसौ जनैः । नग्ना पैतामहे देशे दह्यमानोन्वशोच्यत ॥१८३५॥
काले भीष्मोदयोद्रिक्तभानौ सुविषमे नृपः । सिद्धिमश्रद्धानोपि प्रहिणोति स्म रिल्हणम् ॥१८३६॥
स शौर्यस्वामिभक्त्यर्थनैस्पृह्यादिगुणोज्ज्वलः । तेन प्रमोघप्रारम्भः समभाव्यि जिगीषुणा ॥१८३७॥
भवितव्यतया दत्तव्यामोहः प्रेरितोथ वा । शठामात्यैरभूद्भूभृत्स व्यक्तायुक्तमन्त्रितः ॥१८३८॥
हीनोर्थदुर्गामात्यैर्यश्चिरैरुत्कव्यस्य वैरिणः । अनुमेने कुमारश्चीन्भृत्यान्भीष्मोल्बणे क्षणे ॥१८३९॥
उदयः कम्पनाधीशो राज्ञोमे पर्याशिष्यत । सर्वामात्याः प्रतीहारमन्वगच्छन्पुनः परे ॥१८४०॥

१८१३. ¹) A कोट°. १८१६. ¹) Emended with C; A दृष्टघुल्पाटन°. —²) Emended with C; A देवेनादाद° with haplography. १८१८. ¹) Emended; A °चिन्तयन् १८२२. ¹) Emended; A °वेशयन् —²) A, B. १८२९. ¹) Emendation doubtful; A °सावामा. १८३०. ¹) Emended with C; A चोष्ण°.

राजात्मजद्वयारोहडामरामात्यभिन्नया । दैन्यं तस्येमयावापि सर्वसामग्र्युदग्रया ॥१८४१॥
सविद्रवमहल्लिकानिविष्टकटको दिशः । संप्रहीतुं प्रववृते सर्वोपायैर्निरोधिनः ॥१८४२॥
लुह्लाद्यः फुल्लपुरे कोट्टोपान्ताश्रये स्थिताः । भयभेदाद्यवध्यमान्प्रकम्पमनयन्रिपून् ॥१८४३॥
यस्सल्लक्ष्मापतिर्वेङ्क्षं लोठने तस्य तामदात् । यस्मै प्राक्पद्मलेखाख्यां बहुस्थलधराभुजे ॥१८४४॥
साहायकाय प्राप्तस्य तस्य सैन्यैर्हिषद्भूमूः । भूराभिधस्य युद्धेषु प्रत्यमाहि प्रतिक्षणम् ॥१८४५॥
तेषूपद्वराष्ट्रेषु भयदोलायमानधीः । भङ्कीनके नरपतेर्नीतं दण्डं च लोठनः ॥१८४६॥
एतावत्सिद्धमफलारब्धीनामत्र दुःसहे । काले व्यावृत्तिरस्माकमुचितास्मिन्नलापत्रा ॥१८४७॥
शारदारम्भसुभगे क्रमात्काले बलोर्जिताः । अथारब्धं विधास्यामः सर्वारम्भेण शोभनाम् ॥१८४८॥
इत्यन्वहं लक्ष्मकेण महितं नाददे नृपः । अन्ये च मन्त्रिणो मन्त्रं शास्रादभ्यर्णवर्तिनः ॥१८४९॥ तिलकम् ॥
सर्वाधिकार्युदयनः प्रतिभुस्थ धनं बहु । साहाय्यकार्थमानिन्ये सोमपालमपि प्रभोः ॥१८५०॥
अपाङ्क्तेयः स संबन्धबद्धोऽपि धनलुब्धधीः । ब्रुवाति स्म महाध्यापन्निमग्नाय महीभुजे ॥१८५१॥
यदर्थदो लोठनश्चेत्किं मे संबन्ध्यपेक्षया । अन्यथा भवतामस्मीत्यन्यांन्वक्ष्यामि कैतवात् ॥१८५२॥
दम्भमित्यभिसंधाय सोमपालोऽभ्युपाययौ । समर्थने हेतुरासीत्सुज्जेर्ध्याजे कियानपि ॥१८५३॥ युग्मम् ॥
स हि भिक्षाचरोन्मुख्यान्निवार्यानायितो यदा । सोमपालमुखेनोर्वीभुजा राजविसर्जितः ॥१८५४॥
दूतः प्रार्थयमानस्य तस्यार्थान्माक्ष्मतिभुतान् । क्षणिकस्योत्तमर्णेभ्यः प्रदातुमनुबध्नतः ॥१८५५॥
तदा भिक्षाचरं जानन्हतकल्पमनेन नः । व्यसनप्रशमे कोऽर्थ इत्यवज्ञां प्रकाशयन् ॥१८५६॥
मदेन न ददौ किंचित्सोऽथ भिक्षाचरं हतम् । श्रुत्वा निरुपयोगं स्वं राज्ञो ज्ञात्वा सशोकताम् ॥१८५७॥
यावदेकाहमभङ्गाह्वरव्यसने भयम् । तावन्निशम्य संप्राप्तोत्सेको भूयोऽपि मन्युभाक् ॥१८५८॥
लोठनं बद्धसंधिं वः करिष्यामीति भूभुजः । उक्त्वा दूतं लोठनेन दापयिष्यामि काञ्चनम् ॥१८५९॥
युष्मभ्यं कथयित्वेति सोमपालं चिकीर्षितुम् । बलितामबलत्वं च सर्वेषां स्वार्थसिद्धये ॥१८६०॥
समं सोमेन तत्सैन्यमध्यप्रस्थितस्यलक्षितैः । मितैरनुगतो भृत्यैर्घोरमूलकमासदत् ॥१८६१॥ कुलकम् ॥
यहानौचित्यदुष्पांसुप्रवर्षदूषितकीर्तिना । भोगलुब्धतया तेन हता चिततसत्त्वता ॥१८६२॥
तुषारशर्कराभुक्तजलपानादवुर्जरम् । त्यक्तुं भोज्यं मृदु स्निग्धं काश्मीरं न शशाक सः ॥१८६३॥
सतुषं शुष्कसक्त्वादि बहिर्भोक्तुमपारयन् । यैस्तैरुपायैः काश्मीरान्प्रविविक्षुरतोऽभवत् ॥१८६४॥
काश्मीरकाः कार्यशेषमदृष्ट्वा भीष्मशोषिताः । आकर्ण्य च तदापातमाकुलत्वमशिश्रियन् ॥१८६५॥
भुञ्जानैर्भृष्टमांसानि पिबद्भिः पुष्पगन्धि च । प्रनीहाराग्रतो हारि मार्द्वीकं लघु शीतलम् ॥१८६६॥
आनेष्यामो जवात्सुज्जिमाकृष्य श्मश्रु संयुगे । इत्थं विकत्थनैस्तैस्तैराहोपुरुषिकाः कृताः ॥१८६७॥
काश्मीरकैर्मितंयुक्तं खशैः सैन्धवकैरपि । अभिषेणयितुं शेकुर्न तेऽस्युंद्यमिनोऽपि तम् ॥१८६८॥
भ्रातृव्याय च मुक्ताय भूभुजां च करार्पणम् । चिदध्यां जयसिंहाय वरमित्यभिमानिनाम् ॥१८६९॥

१८४१. ¹) Emended with C; A सर्वे. १८४२. ¹) Emended, A सर्वोपायावि°. १८४४. ¹) Emended; A °वेङ्कुं. १८४७. ¹) Emended; A °लापत्र; C °लापत्र॰. १८४९. ¹) Emended, A प्रत्व°.—²) A₁ ३. १८५२. ¹) Emended with C; A °स्मीत्यान्य°, with haplography. १८५३. ¹) A₁ २. १८५५. ¹) Emended; A °मानस्यार्थान्मा°, omitting two *aksharas*; C °मानस्य तान्मर्थान्य°. १८६१. ¹) Emended; A °मन्त्रम°. १८६५. ¹) Emended; A °शिभ्रयन्. १८६६. ¹) A पिबद्भि. १८६८. ¹) Emended; A सैन्धुव°.

बद्धर्थमर्थ्यमानेन लोठनेन तिरस्कृतः । सोमपालः प्रियं किंचिद्राजपक्षे न्यदर्शयत् ॥१८७०॥
मयि श्वशुरसैन्यानां भ्रमाणां वैरिविग्रहे । सज्जे हिताय त्वं रन्ध्रमन्विष्यसि किमाश्रितः ॥१८७१॥
इति निर्भर्त्सितस्तेन सुज्जिः स्वाहंक्रियोचितः । सर्वानुल्लङ्घ्य संनद्धो राजसैन्यमहेऽभवत् ॥१८७२॥
अरद्धाघातसंजातशीतज्वरमहाभयः । वरूथिनीमथोत्थाप्य विद्रुतो निशि लक्ष्मकः ॥१८७३॥
विसृष्टदूताः कटकं नष्टं वक्तुं प्रभोर्द्रुतम् । केचिदन्वसरन्सुज्जिं सैनिकास्ते जिघांसवः ॥१८७४॥
पारेणैकेन भूपालसैन्यमन्येन वैरिणः । वर्त्मनः श्वभ्रदुर्गस्य तुल्यमेव प्रतस्थिरे ॥१८७५॥
शारम्बरपथं वैरिद्वयं त्यक्त्वा यियासवः । स्थोर्वीं कालेनकाख्येन संकटेन तदन्तिके ॥१८७६॥
तस्मिन्नहन्यस्खलिता वनिकावासनामनि । ग्रामे सैन्या न्यविक्षन्त लोकैस्त्यक्तगृहैः समम् ॥१८७७॥युग्मम्॥
अनुप्रस्थायिनोऽभ्यर्णग्रामकेष्वपि बुभुजुः । भुक्त्वा पीत्वाथ ते निन्युर्निशार्धमकुतोभयाः ॥१८७८॥
अथापातं विद्विषद्भिः स्वस्य भावयितुं द्रुतम् । क्षोभभृत्सुज्जिरभ्येत्य तूर्यघोषमकारयत् ॥१८७९॥
क्षणदाशेष एवाशु पलायां चक्रिरे ततः । तैस्तैः शैलपथैः सेना निरवष्टम्भनायकाः ॥१८८०॥
चित्राम्बराणि मुष्णद्भिः ग्राहैस्त्यज्यन्त मन्त्रिणः । भूप्रकम्पैर्गण्डशैला नानाधातुद्रवैरिव ॥१८८१॥
लुण्ठ्यमानाश्चमूल्यानुं नादधे कश्चिदायुधम् । तदा तु येन वा तेन स्वात्मा नान्यस्तु रक्षितः ॥१८८२॥
उत्प्लुत्य लङ्घयन्तोऽद्रीन्केऽपि शोणाधरांशुकाः । रक्तस्फिजो गतौ प्रापुर्मर्कटा इव पाटवम् ॥१८८३॥
केऽप्यम्बरपरित्यागविकचश्रीरविग्रहाः । हरितालशिलाखण्डा इव वातेरिता ययुः ॥१८८४॥
भूलवेणुवनाकीर्णैः शैलैरकृशविग्रहाः । केऽपि श्वासोत्थपूत्काराः करिपोता इवाव्रजन् ॥१८८५॥
किं नामोदीरणैर्मन्त्री स नासीत्तत्र कश्चन । तिरश्चेवं विपर्यस्तधैर्यैर्यैर्न पलायितम् ॥१८८६॥
भृत्यस्कन्धाधिरूढोऽथ गच्छन्मुहुः प्रधावितुम् । प्रतीहारो द्विपद्योधैर्दूरात्कैश्चिद्व्यलोक्यत ॥१८८७॥
निरंशुकः स सूर्यांशुकचत्केयूरकुण्डलः । प्रतिज्ञायानुसक्ते तैः सर्वप्राणप्रधावितैः ॥१८८८॥
अश्माहतेन भृत्येन त्यक्तः स्कन्धाद्गृहक्षतः । स निस्पन्दवपुस्तिष्ठंस्तैरग्राहि महाजवैः ॥१८८९॥
नवबन्धनशोकार्तशारिकाकृशविग्रहः । स ⁻लगैलिरिव व्यस्त्रह्रियः संकुचितेक्षणः ॥१८९०॥
वधस्य मे मानधनमहर्तुर्वैशसान्तरम् । इतोऽधिकं ध्रुवं सुज्जिर्विदध्यादिति चिन्तयन् ॥१८९१॥
स्कन्धेऽधिरोप्य निःशेषीकृतप्राकारभूषणः । नदद्भिः सोपहासं तैः सुज्जेरग्रं व्यनीयत ॥१८९२॥तिलकम्॥
प्रच्छाद्य सत्त्ववान्वक्त्रं सोंऽशुकेनैष नोर्जितः । वृद्धराज इवेत्युक्त्वा तस्मै स्वान्यंशुकान्यदात् ॥१८९३॥
प्रावारिताम्बरं कृत्वा हयारूढं च तं पुनः । धैर्येणायोजयत्स्निग्धैर्वचोभिः परिसान्त्वयन् ॥१८९४॥
निर्लुण्ठिततुरंगासिकोशैः परिवृतः खशैः । ततो गृहीत्वा तं श्रीमान्सोमपालान्तिकं ययौ ॥१८९५॥
इमा व्योमाङ्गनाक्रीडत्तडित्तरलविभ्रमाः । भाग्यमेवानुयायिन्यः स्थायिन्यः कस्य संपदः ॥१८९६॥
आराधनधिया स्वैरं यस्यामेभोजि भृत्यवत् । गात्राणि कुङ्कुमालेपैरुपार्चयन्त च स्वयम् ॥१८९७॥

१८७३. 1) Emended; A अरदा°. १८७६. 1) नका written by $A_3$ in space left by $A_1$. १८७७. 1) Emended; A न्यविक्षन्त.—2) $A_1$ २. १८८१. 1) Emended with C; A नानानुधातु°. १८८२. 1) Conjectural reading; A स्वात्ममान्यस्तु. १८८६. 1) Emended; A तिरश्चैवं. १८८७. 1) A °स्कन्धा°.—2) Thus corr. by $A_1$ from प्रधावितुम्. १८९०. 1) A °कृशावि°.—2) Thus A without indicating the *lacuna*; perhaps read गल्मलिरिव.—3) Thus $A_1$, apparently corr. from व्यस्त्रह्निषः; doubtful. १८९२. 1) $A_1$ ३. १८९७. 1) Emended with C; A °रुपचर्यन्त.

सोमपालादिभिः भट्टैः स मासैरेव पञ्चषैः । तेषामपि तथाभूतस्तिलक्लोकैर्व्यभाव्यत ॥१८९८॥
कुब्जोपि पलितश्वेतोपान्तश्यामाननः परैः । बलीका इव बद्धोभूच्छोकमूको वनान्तरे ॥१८९९॥
अर्पितं सुज्जिना सोमपालः स्वीकृत्य लक्ष्मकम् । आनन्गृहीतान्कश्मीरान्निजराष्ट्रं न्यवर्तत ॥१९००॥ 1900
लोठनस्यान्तिकादेत्य स भूरैर्माञ्जिकादिभिः । प्रतिभुत्य प्रभूतार्थैः प्रतीहारमबाध्यत ॥१९०१॥
कश्मीरा हि प्रतीहारशिक्षापक्षानुयायिभिः । तदा न कैरमन्यन्त संभाव्या डामराण्डजैः ॥१९०२॥
लुब्धेनापि प्रतीहारावर्त्तं राष्ट्रं जिघृक्षुणा । भूरि चादित्सुना वित्तं राज्ञोकारि न तेन तत् ॥१९०३॥
भग्नमानेष्वमात्येषु ग्रामेषु नगरं नृपः । हारिते च प्रतीहारे न धैर्यात्पर्यहीयत ॥१९०४॥
यैः सैन्यसारैर्हैराज्यं पुरा भिक्षाचरोकरोत् । यैश्चाप्युत्कुपिते राष्ट्रे वृत्त्यावर्तिष्ट सुस्सलः ॥१९०५॥ 1905
भूभृता संगृहीतानां शीतज्वररुजा ततः । तेषां दश सहस्राणि योधानां निधनं ययुः ॥१९०६॥
विरराम तदा देशे न मुहूर्तमपि क्वचित् । बान्धवाक्रन्दतुमुलं प्रेतबाधमहर्निशम् ॥१९०७॥
घोरघर्मघृणिभ्रान्ताशेषव्यवहृतिस्थितिः । सोनुत्साहहतः कालो नष्टराज्य इवाभवत् ॥१९०८॥
नानादिगन्तरायातैः ग्रामैः काश्मीरकैरपि । लोहरेव प्रवृद्धर्द्धि राजद्वारमजायत ॥१९०९॥
काकतालीयसंप्राप्तलोकोत्तरनृपश्रियः । अकुण्ठा लोठनस्यासीत्स्फूर्तिर्वित्तपतेरिव ॥१९१०॥ 1910
तस्याकारपरिक्लेशवैशसाभिन्नवृत्तयः । भोगेष्वभाजा भ्रातृव्यभृत्यपुत्रादयोभवन् ॥१९११॥
नास्थानवर्षी स्थाने वा बद्धमुष्टिर्विभूतिमान् । स वचःपाकनिष्कर्मव्यवहारो व्यभाव्यत ॥१९१२॥
छाया निरङ्कुशमतिः स्वयमातपस्तु छायान्वितः शतश एव निजप्रसङ्गम् ।
दुःखं सुखेन पृथगेवमनन्तदुःखपीडानुवेधविधुरा तु सुखस्य वृत्तिः ॥१९१३॥
तादृगभ्युदयावाप्तेर्मासे न्यूनेधिके गते । एकसूनोः सुतो दिल्हो लोठनस्य व्यपद्यत ॥१९१४॥
तमेकपुत्रा शोचन्ती शोकशङ्कुहताशया । ततः प्रपेदे प्रलयं मल्ला लोठनवल्लभा ॥१९१५॥ 1915
एकस्यामभिजभावायां गुणज्येष्ठे तथात्मजे । विपन्ने स तया लक्ष्म्या न कृत्यं किंचिदैक्षत ॥१९१६॥
निःस्नेहत्वस्य भूपालस्तुलभस्य विजृम्भितम् । मोहनी वा श्रियः शक्तिर्यद्दशासीत्पुनः सुखम् ॥१९१७॥
अकारयन्निर्धनोपि तथा वृद्धस्य कालवित् । लक्षैः षट्त्रिंशता मोक्षं लक्ष्मकस्य क्षमापतिः ॥१९१८॥
दिष्टवृद्धिपरिक्षिप्तपुष्पवृष्टी जनैः पथि । तस्मिन्प्राप्ते न कोशासीद्राज्ञा प्रत्याहृतां श्रियम् ॥१९१९॥
स लक्ष्मीमहिमक्षिप्तविस्मृताभिभवव्यथः । प्रभवन्पुनरेवासीन्निग्रहानुग्रहक्षमः ॥१९२०॥ 1920
धनप्रलोभनिर्नष्टसर्वावष्टम्भपाटवः । सुज्जिः साचिव्यमव्याजं भेजे लोठनभूपतेः ॥१९२१॥
वत्तवान्भागिकत्वतामविश्वासमपाहरत् । स तस्याप्रियापायदुःस्थितिव्यथया समम् ॥१९२२॥
अभ्यर्थ्य पार्थिवं पद्मरथं चानीतवान्कृती । तस्य सोमलदेव्याख्यामुद्वाहाय तदात्मजाम् ॥१९२३॥
एवं प्रधानसंबन्धैर्बद्धमूलं विधाय तम् । सोभ्याहतस्य साचिव्यमहस्यानृण्यमाययौ ॥१९२४॥
अचिन्तयच्च कश्मीरप्रवेशं डामरादिभिः । बहुशः प्रार्थ्यमानेन प्रेरितो नवभूभुजा ॥१९२५॥ 1925
इत्थंभूतं कृतैक्यं च समं सीमान्तभूमिपैः । अथ छलयितुं शत्रुं नीतिं प्रायुङ्क्त सौस्सलिः ॥१९२६॥

---

१९०३. ¹) Emended, A. लब्धेन. १९२१. ¹) व omitted in A; supplied with C.

तयोद्यद्वारपतिस्तस्यारम्भे गभीरधीः । अलुप्तसत्त्वः स्तुत्यत्वं शारेतरविदामगात् ॥१९२७॥
तत्स्थः स हि निर्मूहसर्वस्वोऽप्यर्थितोऽहितैः । दानमानादिभिः स्वामिकृत्ये निस्त्रोहितोऽभवत्¹ ॥१९२८॥
वनप्रस्थाभिधे स्थाने लोहराद्दूरगे स्थितः । अखिलोऽच्छिवसंग्रामैर्भेदं निन्ये द्विषद्बलम् ॥१९२९॥
कटाक्षिताभिप्रायेऽस्मिन्निभ्या तथ्येन वा रघुः । भवं लोठनभूपालान्माञ्जिकेन्दारकाद्वयः¹ ॥१९३०॥
द्वन्द्वाभ्यां धाक्रिकानस्मात्सुज्जी न्यस्ताशयो नृपः । वेत्ति तत्प्रेरणेनासौ तदाशाङ्कितेति ते ॥१९३१॥
संजाते सहजाख्यायां राज्यां सुस्सलभूपतेः । कुमौ मल्लार्जुनं भूपं लोहरेऽस्मिन्हिताय वः ॥१९३२॥
तत्प्रेमाणमिवाकस्मादभिसंधत्त लोठनम् । संदिदेशाथ तान्धीमाञ्जयसिंहो महीपतिः ॥१९३३॥
व्याजेन राज्ञा संदिष्टं तत्कोट्टं स्वीचिकीर्षुणा । प्रतिभुतमविश्वस्तैस्तस्मिंस्तैश्च तथैव तत् ॥१९३४॥
मल्लार्जुनं लोठनोऽथ ज्ञात्वा प्रारब्धधाक्रिकम् । तदाप्तान्भ्रातृसूनुंस्ताधाक्रिकानप्यबन्धयत् ॥१९३५॥
अवरुद्धातनूजेन¹ शङ्कां सौस्सलिना भजन् । परं विग्रहराजेन प्रातिहार्यमजिग्रहत् ॥१९३६॥
राजा व्याजाप्तिलुब्धेन बद्धसंधिरुपायवित् । तत्वरे हारितं राज्यं तैस्तैः स्वीकर्तुमुद्यमैः ॥१९३७॥
विसृज्य भूरं निष्कम्पराज्यः सुज्जेः परिभ्रमात् । मासान्कांश्चिदसंक्षोभो वृत्त्यावर्तिष्ट लोठनः ॥१९३८॥
सुज्जिः पद्मरथापत्यं प्राक्कन्यामानिनाय याम् । अनूढाया विवाहाय तस्या¹ मातरमागताम् ॥१९३९॥
आकर्ण्य तेजलादीनां¹ प्रसङ्गेऽस्मिन्सगौरवाम् । सामात्यो² दर्पितपुरं कृतप्रत्युद्गता ययौ ॥१९४०॥
माञ्जिकाद्यैरथ प्राप्तरन्ध्रैर्निर्गत्य बन्धनात् । मल्लार्जुनः कोट्टराज्ये¹ संहतैरभ्यषिच्यत ॥१९४१॥
ठक्कुरैः प्राग्वदानीतैः प्रतोलीतलमागतान् । भृत्यांस्ते सिंहभूभर्तुः प्रविविक्षून्यवारयन्¹ ॥१९४२॥
षष्ठेऽब्दे लोठनः शुक्लत्रयोदश्यां स फाल्गुने¹ । यथायुज्यत राज्येन तथैवाशु व्ययुज्यत ॥१९४३॥
अनूढां कन्यकां मूढः संपदं चाध्यवीकृताम् । प्राप्तां परस्य भोग्यत्वं भाग्यहीनः शुशोच सः ॥१९४४॥
अटिल्लाहालिकादिभ्यो¹ देशेभ्यो नष्टशक्तिना । तेन सुज्जिबलात्कोशशेषः कश्चिदवाप्यत ॥१९४५॥
पूर्वाहृतान्सिंहभूभृत्स्वाप्यकृत्य माञ्जिकः । निनायाप्रतिमल्लस्तं मल्लार्जुनमहीभुजम् ॥१९४६॥
तेनातिव्ययिना नव्यवयसा भूभुजा कृतम् । मौक्तिकैः पूगविच्छेदे ताम्बूलार्पणमेकदा ॥१९४७॥
वर्धतो विषयैस्तुल्याढ्याटकं कुट्टनादिषु । त्यागित्वं तस्य तत्त्वज्ञैः सदोषमुदघोष्यत ॥१९४८॥
प्रजोपतापोपचितः कोशः सुस्सलभूपतेः । तेनातिव्ययिना स्वैरमनुरूपव्ययः कृतः ॥१९४९॥
गणिकाचारणद्रोग्धृविटचेटादिपेटकम् । साधून्विधूय सोपुष्णाद्दर्पोष्मा¹ कुमतिर्यतः² ॥१९५०॥
सपत्नसादहितसादपि वा वह्निसाद्भवेत् । द्रविणं क्षोणिपालानां जनतोपद्रवार्जितम् ॥१९५१॥
प्रजापीडनजं वित्तं जयापीडमहीभुजः । दास्याः पुत्रैरुत्पलाद्यैर्विलुप्तं नमुरन्तकैः¹ ॥१९५२॥
लोकसंक्षोभनोद्भूतः कोशः शंकरवर्मणः । प्रभाकरादिभिः स्वैरं जायाजारैरभुज्यत ॥१९५३॥

१९२८. ¹) Thus A; perhaps read निस्त्रोहतो°. १९३०. ¹) Thus corr. by A₁ from °केन्दाकाद्वयः. Perhaps read °केन्दाकरा°; cf. viii. 1818. १९३३. ¹) Emended with C; A °सन्धत्त. १९३६. ¹) Emended; A अवरुद्धतनू°. १९३९. ¹) Emended with C; A तस्य. १९४०. ¹) Thus A; doubtful.—²) Doubtful emendation; A सामात्यौ. १९४१. ¹) Emended; A कोट्टराज्ये. १९४२. ¹) Emended A °वारयन्. १९४३. ¹) A फाल्गुणे. १९४५. ¹) Thus A₁; A₂ °ल्लाटि-हिका°; cf. viii. 581. १९५०. ¹) Thus A₁ in margin; in text °ष्मादुर्मौष्मः.—²) Thus corr. by A₁ from कुपति°. १९५२. ¹) Emended with C; A₁ नमुरसकैः; the reading नमुरन्तकैः, given by A₂ in margin, has been struck out.

अनङ्गवशगाः पञ्चोरङ्गना वृजिनार्जितम् । ददुः सुगन्धादित्याय धनं संभोगभागिने ॥१९५४॥
राज्ञो यशस्करस्यार्थान्क्षयी चक्रेतिसंचितान् । अङ्गनानङ्गवैवश्यादालिङ्गितजनंगमा ॥१९५५॥
पूर्वराजार्जितं पार्थगुप्तिः प्राप्य धनं मृतः । हाता आर्वीपपत्येन तुङ्गादीनामजायत ॥१९५६॥
संग्रामराजः श्रीलेखामुखाश्मश्रुपैर्धमी । मुषितो व्यड्डसूहाद्यैर्मिविडोपार्जनस्पृहः ॥१९५७॥
अपत्यवैशसक्षपितप्रजस्य जगदूर्जिता । अन्तेनन्तमहीभर्तुर्विभूतिर्भस्मसादभूत् ॥१९५८॥
पुत्रेणापात्रसात्कार्या जारसात्तरसा कृतः । कुकलाकौशलोद्भूतः कोशः कलशभूपतेः ॥१९५९॥
सह गेहैः समं स्त्रीभिः सद्यः पुत्रैरभूद्धनम् । अभ्रान्तार्जनतर्षस्य हर्षदेवस्य वह्निसात् ॥१९६०॥
चन्द्रापीडोच्चलावन्तिवर्माद्यैर्धर्मनिष्ठुरैः । निष्ठा न्याय्यस्य कोशस्य नावाप्यनुचिता क्वचित् ॥१९६१॥
चौरचाक्रिकसीमान्तभूभृद्वेश्याविटादयः । लुण्ठिं प्रारेभिरे पुष्टां नवे मल्लार्जुनोदये ॥१९६२॥
वञ्चयित्वाप्यरीन्भूभृत्साम्यन्निर्घटितेप्सितः । अथ चित्ररथं तूर्णमास्कन्दाय व्यसर्जयत् ॥१९६३॥
हारपादाग्रयोस्तुल्याधीकारेण प्रवर्धितः । सोनन्तसामन्तसुतः पदं फुल्लपुरे व्यधात् ॥१९६४॥
उत्सेहिरे न विरता अपि दुर्गसमाश्रयात् । मल्लार्जुनचमूर्जन्ये जेतुं तदनुजीविनः ॥१९६५॥
भेदाय कोट्टमारूढस्तद्भृत्यो राजसंमतः । मल्लार्जुनानुगै राज्ञो हतः संवर्धनाभिधः ॥१९६६॥
युद्धासाध्येपि तिष्ठन्तः कोट्टे भयविधेयताम् । कोष्ठेश्वरेन्यगाधाने तत्रामित्राः प्रपेदिरे ॥१९६७॥
प्रतिभूतकरो बद्धसंधिः स व्यसृजत्ततः । सभाजनाय जननीं तेषां मल्लार्जुनोन्तिकम् ॥१९६८॥
सा वैधर्म्यविविक्तेन वेषेणैश्वर्यशोभिना । कोष्ठेश्वरादीन्सोत्कण्ठांश्चक्रे चपलचेतसः ॥१९६९॥
तस्यां गृहीतविस्रम्भं व्यावृत्तायां तदन्तिकात् । हारेशाय ददावूरीकृतं मल्लार्जुनः करम् ॥१९७०॥
आकृष्टो राजजननीचक्षूरागेण कोष्ठकः । दिदृक्षाकपटात्कोट्टमारुरोह मितानुगः ॥१९७१॥
अवंक्वेन सहितस्तेन चित्ररथस्ततः । संभृतप्राभृतो भूमिभर्तुः सविधमाययौ ॥१९७२॥
राजा तु संमन्त्र्य ततः प्रायुङ्क्तादतिशालिना । उदयद्वारपतिना नीतिं जेतुमरीन्पुनः ॥१९७३॥
धीतास्कन्दो लोठनेपि गते पद्मरथान्तिकम् । लेभेभिनवभूपालः किंचित्पादप्रसारिकाम् ॥१९७४॥
उदूढवान्सोमलाख्यां तां पद्मरथकन्यकाम् । उपयेमे धृताचामो नागपालात्मजामपि ॥१९७५॥
तस्माद्दहंक्रियामूढाल्लेभिरे गूढकैतवाः । भूभुजः सोमपालाद्या भृत्यभावेन वेतनम् ॥१९७६॥
कविगायनजल्पाकबोधचारणचेष्टितैः । बहवो मुमुषुर्धूर्तास्तेपि तं राजबीजिनः ॥१९७७॥
स बाल्यान्निष्परीपाकप्रज्ञो दृष्टो रटन्बहु । जज्ञे वाल्मीकिमात्रेण बालिशैः कुशलाशयः ॥१९७८॥
केतोरिवाभ्रहेतोः प्रदीप्तं वदनं श्रिया । अनिष्ठुराकृतेर्दृष्टं तस्यान्यत्र न सौष्ठवम् ॥१९७९॥
अत्रान्तरे नृपः सुज्जिं संजपाद्दोःप्रविक्रमम् । माभून्मल्लार्जुनेनापि भिन्नोसाविति चिन्तयन् ॥१९८०॥
निर्वासने प्रवेशे च प्रभुः सुज्जेस्ततोधिकम् । तात्कालिकीं प्रतीहारः शक्तिं कांचिददर्शयत् ॥१९८१॥
स कम्पनाद्यधीकारस्रजं राजविसर्जिताम् । वितरन्सुज्जये राजस्थानकार्यस्रजं विना ॥१९८२॥
निस्तोषाय गृहायातसोमपालानुरोधतः । प्रतीच्छन्वामहस्तेन निजजूटस्रजं प्रदात् ॥१९८३॥

१९५९ ¹) A कोषः. १९६९. ¹) Emended; A वैधर्म्य वि°.—²) Emended; A वेषैर्भ्य°. १९७२. ¹) Emended; A अर्धकृतेन. १९७८ ¹) A वाल्मिकी.

आकृष्य प्रददौ तस्य तस्मात्प्रियपरितोषिणः । आप्तावसान्द्रया दृष्ट्या वत्संपदीवधो व्यधात्॥१९८४॥कुलकम्॥
अर्थे हिताय लौहारे विधूद्योदयधन्ययोः । अभजद्विल्हणः सुज्जेः प्रवेशे प्रतिलोमताम् ॥१९८५॥
प्रत्युद्गमेन संमान्य सुज्जिं प्रावेशयन्नृपः । देशाधिरास्यद्धन्यादीन्मानसाच तु तद्गिरा ॥१९८६॥
कृतागाः क्ष्मापतौ लब्धक्षणे तीक्ष्णैर्जिघांसति । कोष्ठेश्वरः पलायिष्ट ज्ञातोदन्तस्तदन्तिकात् ॥१९८७॥
आस्कन्दायागते राज्ञि गृहीतमनुजेश्वरे । स्वपक्षभेदोपहतः सोथ देशान्तरं ययौ ॥१९८८॥
लोठनस्तु निजग्राह कांश्चिदालम्ब्य ठक्कुरान् । बप्पनीलाभिधे स्थाने वसन्मल्लार्जुनं बलात् ॥१९८९॥
तत्र दृष्टमसंभाव्यमेवास्य खलु पौरुषम् । परिभ्रष्टोपि यद्द्रुपदं तमजयत्सदा ॥१९९०॥
जहार तुरगांल्लुण्ठि चकाराहिलिकापणे । मार्गद्रङ्गादिभङ्गं च – –¹ सर्वत्र सोकरोत् ॥१९९१॥
राजराजाभिधानेन डामरेणार्थितस्ततः । कश्मीरराज्यसंप्राप्त्यै क्रमराज्यमगाहत ॥१९९२॥
तद्वेत्य समीपस्थे हते चित्ररथेन सः । तस्मिन्क्षणेन्ये प्रययौ बप्पनीलभुवं पुनः ॥१९९३॥
तस्मिन्नास्कन्दमसकृद्दत्त्वस्यहलिकामपि । अवरोद्धुमशक्तोभूत्कोट्टे मल्लार्जुनो वसन्² ॥१९९४॥
भ्रातृव्येण पितृव्यस्य दापयित्वा धनं बहु । ततः कोष्ठेश्वरो यात्रासज्जः संधिं न्यबन्धयत् ॥१९९५॥
लोहरे विहितस्थैर्यो¹ गृहीत्वा लोठनं ततः । कश्मीरोर्व्यां पपातासौ विजिघृक्षुः² क्षमाभुजा ॥१९९६॥
गिरीनुल्लङ्घ्य कार्कोटद्रङ्गे विहितवास्पदम् । निपत्य मार्गेनुद्याने यावद्वन्धैष डामरैः ॥१९९७॥
नावाप योगं निर्णेय क्षिप्रकारी क्षमापतिः । सर्वोद्योगेन तं तावत्तुस्थानोपहतं व्यधात् ॥१९९८॥
अत्रान्तरे प्रतीहारः प्रापास्तमपवीरतां¹ । न संपत्स्वल्पपुण्यानामनपायिस्थमायुषः ॥१९९९॥
उत्सारणप्रियतया परिवक्तसर्वद्वारं गृहे निरनुरोधतया वसन्तः ।
संपन्नपूर्णकृतधियोमतिथप्रवृत्तेर्धिग्जायते न रभसाखियतोर्निपातम् ॥२०००॥
कुर्वाणोत्सारणं तस्य गृहजा सततं नृणाम् । नाज्ञासीत्स्खलद्धमस्य पृष्ठे पतितमन्तकम् ॥२००१॥
ज्वरितः स हि निष्ठ्यूतज्वरः स्वपिति विज्वरः । विदित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा ॥२००२॥
सलोठने कोष्ठकेथ प्रयाते नृपतिः पुनः । न स मल्लार्जुनो नापि कोष्ठको न स लोठनः ॥२००३॥
छद्मनोद्यन्तं पार्श्वस्थितं मल्लार्जुनोवधीत् । तस्मै चुक्रोध माध्यस्थ्ये स्थापितस्तेन कोष्ठकः ॥२००४॥
अनुनिन्ये न तं खिन्नं स संभृतबलस्ततः । अभिषेणयितुं क्रोधादधावत्ससलोठनम् ॥२००५॥
कोष्ठको मल्लकोष्ठाद्यैर्मितैर्युक्तोपि सादिभिः । तीर्त्वा परोष्णीं तत्सेनां निर्ममाथाप्रमाथिनीम् ॥२००६॥
हतेषु तेषु संग्रामे खशसैन्धवकादिषु । वधं प्रापः सिंहभूभृद्देवात्र स नृपो हतः ॥२००७॥
आरूढः कोट्टमूर्धानं¹ मानमूर्धः परिच्युतः । भग्नप्रतापो भूयोपि समधत्त स कोष्ठकम् ॥२००८॥
विसृज्य लोठनं तिष्ठन्निर्वैरमगमत्पुनः । अनिर्वाहितदैवेन तेन द्वैधं स डामरः ॥२००९॥
वङ्गाधिकारिणः शुल्कं गृह्णताकारि राजवत् । तेन स्वनाम्ना भाण्डेषु द्रङ्गे सिन्दूरमुद्रणम्¹ ॥२०१०॥
जतुसंहतयोः काचकलशीदलयोरिव । क्षणे क्षणे संधिभङ्गस्तयोः समुदपद्यत ॥२०११॥

---

१९८४. ¹) $A_1$ ४. १९९१. ¹) $A_1$ indicates here a *lacuna* of two *aksharas*; C तदा. १९९४. ²) Emended; A °वसन्. १९९६. ¹) Emended; A °स्थेर्यो. — ²) Emended with C; A °विजिगृक्षु°. १९९९. ¹) Emended with C; A °हारप्रापास्तमपवीरता. २००८. ¹) Emended with C; A कोष्ठमू°. २०१०. ¹) Emended; A °मुद्रणाम्.

निर्व्यूढविभून्यैर्वामीद्रस्यैर्विरागं लोहरेश्वरः । निन्ये लवन्यं सोप्येनं स्पर्धाबन्धैरनङ्कुशैः ॥२०१२॥
डामरेण ततो दत्त्वास्कन्दं तत्कटकान्तरम् । पराध्यायुधधुर्याश्वहरणाद्ध--[1]ं कृतम् ॥२०१३॥
दत्त्वा ह--[1]रायत्यां विषमैर्हठपौरुषैः । एवं तं कोष्ठको मूढः खलोच्छेदं व्यधाद्द्विषाम् ॥२०१४॥
तनयादानसंबन्धाच्छ्वशुरं मुख्यमन्त्रिणाम् । अत्रान्तरे नृपो हन्तुं माणिक्यं स व्यचिन्तयत् ॥२०१५॥ 2015
आसीत्कठोरतारुण्यतरङ्गितमनोभवः । सुभ्यक्तं स हि तन्मातुरौपपत्येन संमतः ॥२०१६॥
आहारावसरे तीक्ष्णाः कृतसंज्ञाः क्षमाभुजा । दत्तप्रहरणाः प्राणैर्भुञ्जानं तं व्ययोजयन् ॥२०१७॥
धुन्वन्नसिपटं बद्धवीरपट्टो रटन्बहु । निर्लुण्ठयन्स तल्लेनां तां तामारभटीं व्यधात् ॥२०१८॥
अवाशिष्यत न द्रोहमध्यादिन्द्राकरोप्यहो । राज्ञा विषमितस्तेन रसदानेन स स्वयम् ॥२०१९॥
दैवतोत्सारितारातिस्ततः सिंहमहीपतिः । संदधे कोष्ठकं सुज्जि प्राहिणोद्विजयाय च ॥२०२०॥ 2020
मार्गस्य याममात्रेण गम्यस्यान्तिकमाप सः । यावत्तुरंगहरणात्कोष्ठकेनाकुलीकृतः ॥२०२१॥
अन्तर्भेदाकुलस्तावत्सत्यवस्थातुमक्षमः । गृहीतकोशः संत्यज्य कोट्टं[1] मल्लार्जुनो ययौ ॥२०२२॥
राज्यभ्रष्टः स निर्लुण्ठ्यमानो मार्गेषु तस्करैः । अत्रनाहोन्मुखो रक्षन्कोशशेषं कथंचन ॥२०२३॥
अष्टमष्टादशशरद्येऽथाष्टमवत्सरे । राज्यात्तेन द्वितीयस्यां वैशाखस्यासितेऽहनि ॥२०२४॥
दाता शिखामृतकृन्तैरमृतं विलब्ध--[1]ण्यकृत्समिति लूनशिराः कृतश्च ।
ईशेन यत्र तदकार्युपकर्तुरस्तु तत्रापरः क इव संनिहितद्विजिह्वः ॥२०२५॥ 2025
मुक्ता इमा इति जलं नलिनेषु लीनं ज्ञातृत्वमेतदिति जाड्यमिनेषु लग्नम् ।
यज्ज्ञायते किमपि हन्त विमोहनी सा शक्तिः श्रियः स्फुरति कापि तदाश्रयायाः ॥२०२६॥
ग्रन्थ्यङ्कुतप्रहरणा विपिनेषु केपि घ्राणेन केचन दृशाथ रसज्ञयान्ये ।
ते केपि सन्ति तु नरेन्द्रगृहेषु हिंस्रा वाचैव ये विरचयन्ति किलोपघातम् ॥२०२७॥
ज्योतीरसाश्मन इवाश्रितमीश्वरस्य निर्दग्धुमिन्धनमिवाभगतं न शक्ताः ।
पश्चाद्भवेद्यदि स तत्प्रसृतावकाशाः कुर्युः खला रविकरा इव भस्मशेषम् ॥२०२८॥
कापिलं हर्षटं कोट्टं नीतवान्मण्डलेशिताम् । उदयैः कोटभृत्यानां संमर्दं कम्पनाधिपः ॥२०२९॥
कुर्वन्कशय्यां पुनर्नेतुं मण्डलं तद्व्यलम्बत । दिनानि कतिचित्तत्र यावत्प्रकृतिदुर्जनैः ॥२०३०॥ 2030
विटैरसूयाविषमैः प्रसादावसरो नृपः । तावत्कलुषतां तस्मिन्नुपजापैरनीयत ॥२०३१॥ तिलकम्[1] ॥
राजा भवन्परः कोस्तु स्वविचारदृढक्रियः । पयोपि शिशुवद्भूभुजा धूर्तैः मनस्यते ॥२०३२॥
शैशवे बालिशप्रायैः संस्तुतैर्जाड्यमर्पितम् । प्रौढावपि न वा यायात्राज्ञः कार्ष्ण्यं मणेरिव ॥२०३३॥
भृत्यान्तरापरिज्ञानमात्रेण जगतीभुजाम् । निरागसो वधपातः कष्टं राष्ट्रस्य जायते ॥२०३४॥

---

२०१३. [1]) A₁ indicates here a *lacuna* of one *akshara*; C हस्थिरे. २०१४. [1]) Thus or स्व-- A₁; C दत्त्वाभयं तेरायत्यां. २०१९. [1]) Cf. viii. 1818. 1980. २०२२. [1]) Emended; A कोट्टे. २०२४. [1]) Thus A; text evidently corrupt; perhaps read °द्देऽब्दस्याष्टम°.—[2]) Thus corr. by later hand from A₁ °स्यासितेऽहनि. २०२५. [1]) Thus A₁; C विलुब्धकार्पण्यकृ°; perhaps read विलुब्धकारुण्यकृ°. २०३१. [1]) A₂ writes here ४ instead of तिलकम् (?). २०३३. [1]) A बालि°.—[2]) Thus corr. by A₃ from A₁ कार्श्यं.

कृत्ये व्यवसितेसाध्ये हास्यः स्याल्लक्ष्मकादिवत् । सुज्जिः प्रायोजि राजाप्तैर्निर्जेतुमिति लोहरम् ॥२०३५॥
निर्व्यूढाद्भुतकार्येथ तस्मिन्नक्षास्त्रतुल्यया । अमोघया प्रजहुस्ते पापाः पैशुनविद्यया ॥२०३६॥
गाम्भीर्यालक्ष्यविकृतेः प्रीत्यालापैर्महीपतेः । प्रत्यावातः कलुषतां नाज्ञासीत्कम्पनापतिः ॥२०३७॥
प्रकृत्या तस्य निर्द्रोहतया राज्ञश्च तादृशम् । मिथः कृतवतश्च स्यादविश्वासोथ वा कथम् ॥२०३८॥
प्रीतिरासीच्च नृपतेस्तत्कृत्यैरुचितैरपि । अप्रियप्रमदालापैर्विरक्तस्येव कामिनः ॥२०३९॥
जित्वा राष्ट्रद्वयं प्राप्तं हारितं नृपतेरिति । बहुमानेन दर्पाच्च स्वच्छन्दं स व्यवाहरत् ॥२०४०॥
पौरानगारदहरणाद्यपकारैर्निरङ्कुशाः । तद्बन्धवो बाधमाना विरागमनयञ्जनम् ॥ २०४१॥
नैजागःस्मरणात्कोष्ठेश्वरो न व्यश्वसीन्नृपे । न पितृव्येपि भूपालकोपाविष्कृतविक्रिये ॥२०४२॥
कोशं प्रजोपतापेन संचिन्वन्सुज्जिना समम् । संबन्धकृच्चित्ररथो नाभूदभिमतः प्रभोः ॥२०४३॥
धन्योदयौ¹ नृपः सुज्जिदाक्षिण्यालक्ष्यसौहृदः । अपुष्णाद्वणिजैर्गूढं राजपुर्यां¹ कृतस्थिती ॥२०४४॥
तौ चाचालगतां¹ शीतज्वरनष्टपरिच्छदौ । मल्लार्जुनस्य साम्राज्यभ्रंशेपि विपुलश्रियः ॥२०४५॥
सुज्जिद्वेषात्पुरा दूतैराहूतो लक्ष्मकेण यः । आगच्छत्सञ्जपालः स प्राप राजपुरीं तदा ॥२०४६॥
सुज्जिचित्ररथाभ्यां तं तद्वचेष्टेन भूभुजा । अविसृष्टप्रवेशाशं दूतैर्मल्लार्जुनोभजत् ॥२०४७॥
तन्निमित्तं स केनापि सामन्तेन सहाध्वनि । संजातकलहे शस्त्रक्षतो लक्ष्म्या व्ययुज्यत ॥२०४८॥
तथाभूतमपि स्वर्णं भूर्युरीकृत्य नाशकत् । यत्तन्मल्लार्जुनो नेतुं कार्यज्ञैस्तदपूज्यत ॥२०४९॥
सोस्वतन्त्रेण राज्ञा च सौजन्याद्रिल्हणेन च । दूतैः प्रच्छन्नमाहूतो रभसादाययौ ततः ॥२०५०॥
न¹ न्यग्भवं चेद्धन्युर्मामभुच्चेति चिन्तयन् । अमित्रविषमे मार्गे पुरं साहसिकोविशत् ॥२०५१॥
स कन्यकुब्जगौडादिमण्डलेषु महीभुजाम् । स्पर्धया लब्धसत्कारो भूपतेर्मन्त्रियन्त्रिताम् ॥२०५२॥
अनवाप्य निजे देशे सत्क्रियां दुःखितोभवत् । राजधान्यन्तिकैः पौरैः प्रसृताश्रु व्यलोक्यत ॥२०५३॥
भूपालोगणयित्वाथ मन्त्रिणो दत्तदर्शनः । भेजे स्वहस्तताम्बूलदानप्रक्रिययैव तम् ॥२०५४॥
निष्किंचनोपि संख्यातिमात्रेणानुगतो जनैः । यातायातं नृपगृहे कुर्वञ्छत्रूनकम्पयत् ॥२०५५॥
व्याहारव्यवहारादि व्यालोक्यालौकिकाकृतेः । पुरुषान्तरवित्सुज्जिस्तस्य स्वैरमवेपत ॥२०५६॥
दध्यौ सोथ ध्रुवं राष्ट्रखर्वसर्वंकषक्रियम् । नैवमेवाद्भुतं भूतमेतादृक्शान्तिमेष्यति ॥२०५७॥
तांस्तान्देशान्तरे वीरानुत्सिक्तान्दृष्टवान्स च । तं पर्यालोच्य विश्रान्तिं सोत्सेकानाममन्यत ॥२०५८॥
भवितव्यतया दर्पेणाथ नीतः स्वतन्त्रताम् । परिवादावहं सुज्जिस्ततो यत्तद्व्यवाहरत् ॥२०५९॥
स्वानुगैर्लुण्ठितं रूक्षमाचक्षाणं रुषा द्विजम् । प्रातैर्मडवराज्यस्थः स शृगालमिवावधीत् ॥२०६०॥
बाढं कुकर्मणा तेन विश्राव्य जनमागतम् । तं प्रत्युपाक्रियं लोको विरागं नगरेप्यगात् ॥२०६१॥
अत्रान्तरे बन्धुमेकं व्यधुः कमलियादयः । अगण्यप्रायमुत्सेकादुत्तमप्रक्रियास्पदम् ॥२०६२॥
मयि सत्यपरेपि स्यात्किमनुग्राहकः स्मयात् । अकारि चारणप्रायस्तादृक्कोपीति सुज्जिना ॥२०६३॥

---

२०४४. ¹) Emended; A धन्योदवौ. २०४४. ¹) Emended; A राजपुर्यौ. २०४५. ¹) Doubtful emendation; A चाचालगतौ; G चाचालगतो. २०५१. ¹) न supplied with C; A न्यग्भ — च.

संजातयौनसंबन्धबन्धः कमलियादिभिः । अथास्यसंश्रितोल्पयं सामर्थ्याद्रिल्हणोप्यभूत् ॥२०६४॥
अल्पेन हेतुनोद्भूतं द्वैतं तेषां च तस्य च । खलपैशुनसेकैस्तत्प्रापाशु शतशाखताम् ॥२०६५॥ 2065
प्रकृत्योत्सिक्तमुत्सेकावहैः समुददीदिपत्[1] । दुर्मन्त्रैर्विमर्दैकाध्ये साहदेविस्तमुल्हणः ॥२०६६॥
असमानां[1] सहास्माभिः क्षमते समशीर्षिकाम् । कृतघ्नोयमिति स्वैरं मन्युं राज्यपि सोग्रहीत् ॥२०६७॥
बिभ्यत्तु भूपतिस्तस्माद्रिल्हणं बाह्यभृत्यवत् । मन्त्रस्वैरकथाद्येषु विश्रम्भेषु व्यवर्जयत् ॥२०६८॥
स तु धूर्तत्वदुर्लक्ष्यतादृक्स्वामिविकृतः । स्वेषां धैर्यं परेषां तु संत्रासं माययातनोत् ॥२०६९॥
समप्रशक्तिराकाङ्क्ष्यसंस्तवः पक्षयोर्द्वयोः । तस्य तु प्रथयौ सज्जपालो दानेन मित्रताम् ॥२०७०॥ 2070
संनद्धयोः प्रविशतोरन्योन्यस्पर्धया तयोः । क्षणे क्षणे राजधानी ययौ संभ्रमलोलताम् ॥२०७१॥
सुज्जिः सभूपानाक्षेप्तुं प्रतिपक्षान्युयुत्सया । महीमानोत्सवास्थाने संक्षोभमुदपादयत् ॥२०७२॥
कृकाटिकान्यस्तहस्तो ह्यःस्थेनावेदितो हि सः । तं निर्भर्त्स्य शिलाक्षेपं क्रोधक्षमाक्षरोकरोत् ॥२०७३॥
लिखितैरिव तान्सर्वैः सोढुं रक्षणमीशितुः । मिथ्या तथ्यमिवोदीर्य संप्रत्यग्निः समर्थताम् ॥२०७४॥
उपावेशयदभ्यर्णे भूपतिः परिसान्त्व्य तम् । सत्यस्मिन्नास्ति नः किंचिदित्यन्तस्तु व्यचिन्तयत् ॥२०७५॥ 2075
चक्रे मड्वराज्यस्थैरथ प्रायो द्विजातिभिः । न सुज्जेः कम्पनेशत्वमिच्छाम इति वादिभिः ॥२०७६॥
अन्विष्य विद्विषः शङ्कां मन्त्रविशिशि रिल्हणः । संनद्धसैन्यमानिन्ये पञ्चचन्द्रं तदप्रियम् ॥२०७७॥
शशङ्के सज्जपालाच्च तस्माच्च बहुसैनिकात् । सुज्जिरन्यानगणयन्नप्युदास्य च तद्रिपुः ॥२०७८॥
आस्कन्दभीत्या निर्गत्य हयारोहैः समं गृहात् । व्यूढानीको निरुद्धातो जयागाराच्च सोध्वनि ॥२०७९॥
भूपतिप्रातिलोम्येन वर्तमानस्तदाभवत् । कोष्ठेश्वरोपि संनद्धः सुज्जिना बद्धसौहृदः ॥२०८०॥ 2080
स्थितमप्रातिलोम्येन सोवधीन्मनुजेश्वरम् । इति द्वेष्योपि नितरां द्वेष्यतां नृपतेरगात् ॥२०८१॥
तथा स्थिते निशीथिन्यामाचख्युस्[1]तस्य विद्विषः । दुधुक्षाहेतुतां राज्ञः स्वगुप्त्यै तेन या कृता ॥२०८२॥
अतथ्यं तथ्यवद्वस्तु तथ्यं चातथ्यवन्नृपः । यः पश्येन्मूढवत्सोर्थैस्त्यक्तोनर्थैः कदर्थ्यते ॥२०८३॥
रत्नज्योतिर्हुतवहधिया त्यज्यते दृष्टिपातः श्यावाक्षाणामितरविषयः स्वस्य संभाव्यते च ।
वस्त्वेकैकं यदिह न मृषा तन्मृषा यन्मृषा तत्तथ्येनेत्थं किमिव न जनैर्दृश्यते तत्त्वशून्यैः ॥२०८४॥
राजाथ तद्वधायान्यदानन्दीत्यथभेरजम् । न्ययुङ्क्त तस्य तीक्ष्णत्वे सज्जपालं महौजसः ॥२०८५॥ 2085
स कापुरुषवद्वीरः प्रहर्तुं क्षमनाक्षमः । काङ्क्षाक्षिप्य तं हन्तुं तत्र नवैक्षत क्षणम् ॥२०८६॥
मायाप्रयोगानन्योन्यमुद्दिश्य स्पृशतोर्द्वयोः । क्षणे क्षणेभजद्राष्ट्रं श्वासोल्लासविलोलताम् ॥२०८७॥
प्रत्याशङ्क्योदयं रात्रौ सुज्जौ जाग्रति पूर्ववत् । अव्यग्रयामिकग्रामं राजधामाप्यजायत ॥२०८८॥
राष्ट्रान्निर्वासने रिल्हणस्य सुज्जेरभीप्सिते । पार्थिवोप्यनुमन्ताभूदनीशः प्रत्यवस्थितौ ॥२०८९॥
स निर्विवासु[1]रामन्त्र्य तत्खेदात्क्षुभिताः प्रजाः । संदर्श्य द्वारपतिना राज्ञो गुप्त्या समर्थितः ॥२०९०॥ 2090
संमन्त्र्य नृपतिं मैत्रीप्रार्थिना सुज्जिना समम् । पीत्वा कोशं सज्जपालः प्राप्तो रात्रौ व्यजिज्ञपत् ॥२०९१॥

---

२०६६. [1]) Thus corr. by $A_2$ from $A_1$ समुददीपित्. २०६७. [1]) Emended; A आसम°. २०८२. [1]) Emended with C; A °चाख्युः. २०९०. [1]) Emended with C; A निर्वासु°.

प्रेरणादुल्हणादीनां स्वोत्सेकाद्येव वर्तते । राजन्सुज्जेरभिप्रायः[1] स्पर्धिनोन्यानमिच्छतः ॥२०९२॥

निर्द्रोहस्योपकर्तुश्च मते स्याद्यदि मे नृपः । निर्वास्य रिल्हणं चित्ररथं बद्ध्वा महाधनम् ॥२०९३॥

लोहरारक्षिनिर्नष्टानश्वान्कोशं च भूपतेः । नयेयं संभृतो हन्यां दुर्वृत्तमपि कोष्ठकम् ॥२०९४॥

कार्योपरोधान्निर्बन्धः संबन्धेष्वेव नास्ति मे । दाक्षिण्यं स्वामिनः कृत्ये यस्य प्राणास्तृणोपमाः ॥२०९५॥

मध्येथ प्रतिराजादिनिर्जयस्वीकृतोद्यमे । युवाधिभ्रान्तचित्तोयं नृपश्रीभोगभाग्भवेत् ॥२०९६॥

साहायकाय द्वारेशमुल्हणं रिल्हणाभये । कार्यप्रान्ते च मामीशमाकारयितुमिच्छति ॥२०९७॥

ब्रूते च मामुल्हणश्च त्वं चाहं चाविभेदिनः । मिलिता यत्र तत्रास्ति गण्यः को नु नृपास्पदे ॥२०९८॥

इहस्था नवदायादमेकमानीय कंचन । निदध्मोस्य पदे राज्ञो नानुतिष्ठेदिदं यदि ॥२०९९॥

गुणान्प्रसरणत्रासाद्रुन्धानेव गिरा सृजन् । द्विजांशुभङ्ग्या राजाथ विनिश्वस्याब्रवीद्वचः ॥२१००॥

यथाह स तथैवैतन्न द्रोहो नासमर्थता । नौदासीन्यमथैतस्मिन्संभाव्यमभिमानिनि ॥२१०१॥

निष्प्रतिद्वन्द्वभावोस्य दुरुच्छेदो भवेदिति । इयमप्यन्यतस्तावदस्त्वपायधियः कथा ॥२१०२॥

किं तु ब्रूते यदाको[1]पप्रायम्यात्तथ्यतोपि वा । निर्द्रोहस्य वधो ध्यातो योस्यासौ कार्य एव तत् ॥२१०३॥

अर्थोयमल्पसत्त्वानामपैस्माभिर्हि मन्त्रितः । नूनं तेनोपलभ्येत तानावर्जयता धनैः ॥२१०४॥

पुण्यैरपरिहार्यैः स्वैर्जाड्यैर्वा मादृशाममी । जानतामपि जायन्ते निर्गुणा भोगभागिनः ॥२१०५॥

बा[1]लिशान्गृह्णतां प्रायश्चित्तमेतन्महीभुजाम् । तन्मौर्ख्यस्य फलं मूढैरेतैर्यदनुभूयते ॥२१०६॥

दुर्गमो भूमिभृन्मार्गो विटैर्हृद्वृषैरिव । ... ........................[1] ॥२१०७॥

तन्वाना व्रतवैमुख्यं रसनालौल्यशालिनः । परपिण्डोपहर्तारः खलाः कौलेयका अपि ॥२१०८॥

इत्थं खलोपतापेन प्रयुक्तं तद्भयात्पुनः । असंहार्यं कुकर्मेदं पश्चात्तापाय नो भवेत् ॥२१०९॥

इत्युदीर्य नृपः सुज्जेः सज्जो व्यापारसिद्धये । तमजागारयच्छश्वज्जागरं चाग्रहीत्स्वयम् ॥२११०॥

विश्रम्भमन्त्रसुप्तेः शङ्कां जिघांसुः सुज्जिरित्यपि । तथ्यं भृत्यवचो जानंस्तस्थौ दौःस्थ्येन पार्थिवः ॥२१११॥

गत्वा स्वयं गृहान्यौनसंबन्धं कुरुतं[1] युवाम् । इत्युक्त्वा रिल्हणेनाथ स सुज्जिं समयोजयत् ॥२११२॥

विश्वास्यापि तथा हन्तुं तं प्रसङ्गमनाप्नुवन् । उदताम्यद्दिवारात्रं तल्पोपर्यवशो लुठन् ॥२११३॥

सञ्जपाले गृहाद्बन्धुनाशदुःखिन्यनागते । आशङ्क्य साहसासिद्धिमधिकं पर्यतप्यत ॥२११४॥

निपत्य वीरशयने सुस्सलक्ष्मापसत्क्रियाम् । भ्रातरो यस्य कल्याणराजाद्या व्यस्मरन्युधि ॥२११५॥

स[1] गर्गः कुल्लराजः स ख्यातो व्यायामविद्यया । प्राणैरानृण्यमिच्छंस्तमपृच्छच्छोककारणम् ॥२११६॥ युग्मम्॥

स संस्थापयितुं हन्तुं वाप्यशक्यं न्यवेदयत् । तस्याप्रतिसमाधेयं कम्पनाधीश्वराद्भयम् ॥२११७॥

कियदेतन्निजप्राणमात्रलभ्यं महीभुजाम् । इत्याभाष्य स जगाह साहसाध्यवसायताम् ॥२११८॥

दिनद्वयमनायासो गृहेभ्यः कम्पनापतिः । न प्रातिभाव्यमभजत्तस्य मृत्योः श्रियोथ वा ॥२११९॥

विस्रम्भभृत्यः शृङ्गारनामा चाप्यब्रवीत्प्रभोः । तं दृष्टवांस्तृतीयेह्नि शयनेवगणं स्थितम् ॥२१२०॥

२०९२. [1]) Emended; A °प्रायस्पर्धिनो°. २१००. [1]) Emended with C; A वचम्. २१०३. [1]) Emended; A च आकोप°; G *sec. manu* यत: को°. २१०६. [1]) A बालि°. २१०७. [1]) Here two *pādas* are missing; C supplements कः स नीतिज्ञविद्देव । क च ते खलवृत्तयः. २११२. [1]) Emended; A कुरुतां. २११६. [1]) A₁ २.

शोभोपयोगिनो भर्तुर्नित्यं सततसेवकाः । कर्तुं साहससाचिव्यं विदूरेण तु पार्यते ॥२१२१॥
करे पिनाकी मकराङ्कशत्रोः शोभाविशेषाय सदानुषक्तः ।
पुराहवे कार्मुककर्म तस्य तत्कालमात्रेण तु मन्दरेण ॥२१२२॥
ताम्बूलहारकव्याजात्ततो राजा व्यसर्जयत् । कुलराजं तमव्याजधैर्यासंलक्ष्यविक्रियम् ॥२१२३॥
ध्रुवं मृत्युः पुनर्नाहमागन्ता तत्ततोस्य कः । आरप्स्यतेति स निन्ये न ताम्बूलं स्वर्णभाजने ॥२१२४॥
व्यसनप्रशमं राज्ञः स्वदेहत्यागतोनुगाः । एवं कर्तुं यतन्तेन्ये निर्व्यूढौ स्खलिताः पुनः ॥२१२५॥
सगणोवगणो वास्तु निहतो नियतं मया । जागर्त्यतः परं देव इत्युदीर्य विनिर्ययौ ॥२१२६॥
गतस्य साहससिद्धौ शक्यं शङ्क्यं पलायनम् । ..........................[1] ॥२१२७॥
व्रजन्स्वामिहितं कृत्वा पुनः पश्चान्निनाय सः । शस्त्रिणौ द्वौ मिषाच्छस्त्र्यौ बन्धस्थाने परामृशन् ॥२१२८॥
स्वयं गृहीत्वा ताम्बूलं राज्ञा प्रहित इत्यथ । द्वाःस्थेनावेदितः सुज्जेः पार्श्वं दृढानुगोविशत् ॥२१२९॥
ददर्शोच्चाव्यैस्तं च मितैः परिजनैर्युतम् । यूथनाथमिवाल्पाल्पैर्द्वीपिरहितान्तिकम् ॥२१३०॥
गृहीतवन्दितस्वामिताम्बूलः सस्मितं स तम् । पृष्ट्वा कृत्यादि नृपतेः सत्कृत्य व्यसृजत्क्षणात् ॥२१३१॥
जनप्रवेशाशङ्की स त्वरमाणस्तमब्रवीत् । कृतागाः कोपि कैवर्तशस्त्रभृन्मत्समाश्रितः ॥२१३२॥
तस्याक्षेपपरान्भृत्यान्स्वान्निवार्याधुना तव । संमान्या वयमित्यपेलक्षयन्प्रकृतिक्षणम् ॥२१३३॥
सोत्सेकामिव तां वाचं स दर्पादवधीरयन् । तस्य रूक्षाक्षरं नाहं कुर्यामित्यब्रवीद्वचः ॥२१३४॥
स रोषादिव निर्गच्छन्मान्योसाविति वादिभिः । तं सान्त्वयित्वा तद्बन्धै रुद्ध्वा व्यावर्तितः पुनः ॥२१३५॥
तेनायादि ततः कर्तुं विज्ञप्तिं वस्तुतोमुतः । सञ्जयोरादिश द्वारप्रवेशं भृत्ययोर्मम ॥२१३६॥
अवशेनेव तेनाथ वीक्ष्य तौ संप्रवेशितौ । सहायलाभाद्बुभुक्षुः प्रजिहीर्षुरवर्तत ॥२१३७॥
यानाद्य कुर्यां प्रातर्वो विधेयमिति तान्वदन् । दत्तपृष्ठो निद्रासुस्तल्पे सुज्जिर्जहौ वपुः ॥२१३८॥
गत्वाथ किंचिद्व्यावृत्तो निष्कृष्टक्षुरिको जवात् । प्राहरत्कुलराजोस्य वामे पार्श्वे कृतत्वरः ॥२१३९॥
तस्य धिक्कुर्वतो द्रोहमधावत्क्षुरिकां प्रति । यावत्पाणिः प्रहरणं तावत्सर्वेपि ते व्यधुः ॥२१४०॥
विमर्शैः[1] पश्यतां यावदाशङ्क्यं तत्र नोथ्यौ । स तावदेव सुचिरापेतश्वास इवाभवत् ॥२१४१॥
भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं नवैकः पिञ्छदेवः परं तदा ॥२१४२॥
प्रहरंस्तैस्त्रिभिस्तुल्यप्रतिप्रहतिभिः क्षतः । भ्राम्यन्सुतासृक्तस्मात्स मण्डपान्निरवास्यत ॥२१४३॥
स्थितान्दत्तार्गले भाग्नि दृढद्वारतमोरयः । जिघांसवः सुज्जिभृत्यास्ततस्तान्पर्यवारयन् ॥२१४४॥
तमोरिप्रतिकुर्वाणा भज्यमानैररिभिर्व्यधुः । ते द्वारे तूलशय्यां तां प्रोत्सार्य शवमुद्धृतम् ॥२१४५॥
खङ्गेषुशूलपरशुक्षुरिकाश्माभिवर्षिणः । तान्समभ्रमयन्मार्गैरनेकैस्ते विविक्षवः ॥२१४६॥
नैराश्यहेतोर्विशतां तेषां संकटवर्तिभिः । पृष्ठाच्छित्त्वा शिरः सुज्जेरङ्गनेक्षिप्यताथ तैः ॥२१४७॥
अश्रुनिःसरणाभीक्ष्णशुक्लेक्षणपुटभ्रुनि । उत्तरौष्ठकचच्छन्नसत्प्राणपुटद्वयम् ॥२१४८॥

२१२४. [1]) Thus emended in C; A आरंभेति. २१२५. [1]) Emended; A °तोन्वगाः. २१२७. [1]) Here two *pādas* are missing; C supplements इति विस्मयतस्तस्य मन आसीद्विशृङ्खलं. २१२८. [1]) Emended; A °मृषन्. २१२९. [1]) Emended; A द्वास्थेन. २१३१. [1]) Emended; A दृष्ट्वा. २१३९. [1]) Emended with C; A कुजरा°. २१४१. [1]) A विमर्शः. २१४६. [1]) Emended; A तान्स सम्भ्रम°.

अक्ष्णोर्बम्भ्रम्यमाणस्य लोकस्य प्रतिबिम्बकैः । संभाव्यमानसंस्पन्दस्तोकमध्यस्थतारकम् ॥२१४९॥
स्वपुरस्याक्रमच्छेदाच्छलमांसस्य संधिषु । हरिद्रार्द्रैरिवाद्यवामभेदोग्रन्थिभिरुल्बणम् ॥२१५०॥
धूलिध्वस्तकचश्मश्रु तदेतदिति निश्चयम् । परं भालतलस्थेन दददत्कुङ्कुमबिन्दुना ॥२१५१॥
तद्वीक्ष्य तिर्यक्पतमव्यक्तसंध्यन्तराहितम् । वक्त्रलत्तुमुलाक्रान्ता भृत्याः क्वापि विदुद्रुवुः ॥२१५२॥कुलकम्॥
तीक्ष्णान्प्रयुज्य क्ष्मापस्तु तिष्ठन्व्याकुलधीस्तदा । बहिर्वीक्ष्य जनक्षोभं साहसं निश्चिकाय तम् ॥२१५३॥
सुज्जौ हते क्षते वापि कार्यमेतदिति श्रुतम् । संनह्य सैन्यस्यादिक्षत्स तन्मन्दिरवेष्टनम् ॥२१५४॥
मिथ्यैव सुज्जिर्निस्तीर्ण इति श्रुतवता जनात् । स्वयमपाहि भूपेन ततः समरसंभ्रमः ॥२१५५॥
निःसंशयं हतं ज्ञात्वा सुज्जिं राजोपजीविनः । तत्र स्थितं शिवरथं सर्वेऽप्यमबन्धयन् ॥२१५६॥
हिल्लात्मजन्मनः सुज्जिभ्रातृस्यालस्य कौशलम् । कलशस्यांश निर्वर्ण्यं वाणीयं पुण्यभागिनी ॥२१५७॥
आक्षिप्यमाणैर्भिक्ष्वाचैरन्ते वीरोचितं कृतम् । तेन त्वसंशयस्थेन सदाचाराच्च विच्युतम् ॥२१५८॥
राजौकस्थेव तां वार्तां श्रुत्वा स व्यपलायितः । हतस्य स्वामिनोऽभ्यर्णे जिहासुर्जीवितं ययौ ॥२१५९॥
द्वारं पदप्रहतिभिर्भञ्जन्तं राजसैनिकाः । अपसार्य कथंचित्तं तीक्ष्णाः कृच्छ्रादरक्षिषुः ॥२१६०॥
प्रविष्टेऽस्मिन्ननिर्व्यूढपीडिते मण्डपान्तरम् । लभ्यमाना नृपाभ्यर्णे कुलराजादयो ययुः ॥२१६१॥
हत्प्रविष्टो हतत्रास्त तत्रैकं महाभटम् । शरैरेव हतो दूरात्कथंचित्परिपन्थिभिः ॥२१६२॥
आयातं क्षुभिते देशे सज्जपालं महीपतिः । रिल्हणं चोल्हणं हन्तुं प्राहिणोद्विहितत्वरः ॥२१६३॥
यातो मार्गात्पलाय्यायं परिशङ्क्यैति रिल्हणः । क्षिप्तिकातटपर्यन्तमटित्वा यात्रवाययौ ॥२१६४॥
पूर्वायातः सज्जपालो गृहद्वाराद्विनिर्यतः । उल्हणस्य पथो रुन्धन्नुद्वहन्महरत्रणे ॥२१६५॥
तात्रदेकस्य खड्गेन निकृत्ते दोष्णि दक्षिणे । स्वङ्गाग्रशेषे छिन्नास्थिस्नायुग्रन्थिरजायत ॥२१६६॥तिलकम्॥
अगण्यमायतां ग्रामे वंशे यत्कौशलादसौ । दिगन्तरेषु स्वस्मिंश्च देशे प्राप प्रथां पुनः ॥२१६७॥
फलकाले समासन्ने शौर्यप्रतिभुवाभजत् । स तेन दोष्णा वैकल्यं धिगिच्छां विधुरां विधेः ॥२१६८॥
स प्राग्वदुद्यातावेष्टौ भवेदविकलो यदि । फलेन तस्य जानीयादिच्छां लोकोऽयमद्भुताम् ॥२१६९॥
पीतामृतस्य क्षतविमहत्त्वं न प्राभविष्यद्यदि नाम राहोः ।
अज्ञास्यदिच्छां तदमुष्य लोकः सामर्थ्यभाजः सुचिरप्रवृद्धाम् ॥२१७०॥
दृष्टः शीलाभिधो वृद्धः पितृव्यः साहदेविना । तत्पृहं निहतः साधु --[1]जानत्रणार्तिना ॥२१७१॥
तस्यार्त्या त्रिशतो वेश्म जज्जलाख्योऽमगो हतः । मान्योऽनुगो भटौ द्वौ च यामिकश्च जनंगमः ॥२१७२॥
बालं तनयमालोक्य निषण्णस्याङ्कनस्थिनेः । तस्यानिर्गच्छतो गेहे रिल्हणोऽग्निमदापयत् ॥२१७३॥
आनीयमानो धूमान्धो बद्ध्वा मुख्यैः स सैनिकैः । गृहद्वारे हतः कैश्चिदमाकृतैर्व्रणविक्लवः ॥२१७४॥
तस्य प्रधानप्रकृतिक्षयहेतोर्महीपतिः । मुण्डमप्यवलोक्यासीदशान्तक्रोधविक्रियः ॥२१७५॥
व्यापाद्यमानाः साकोपं भूपतिप्रेरितैर्भटैः । उच्चावचाः सुज्जिभृत्याः कृत्यं सत्त्वोचितं व्यधुः ॥२१७६॥

---

२१५०. [1]) Emended with C; A काल ‒ स्याद्य. २१६४. [1]) A, इ. २१७१. [1]) Before or after साधु two *aksharas* are missing; the *lacuna* not indicated in A; C supplements सम्बन्जा°.

अनुजो लक्ष्मकः सुज्जेर्बद्धा नीतः स विक्रियाम् । नृपं वीक्ष्याद्वयैः कैश्चिद्राजधान्यङ्गने हतः ॥२१७७॥
भ्राता पितृव्यजस्तस्य संगटाख्यो नृपाङ्गने । अट्टट इव प्राणानौचित्येनामुचत्कृती ॥२१७८॥
प्रविष्टः शरणं बाणवंश्यैः पापैः प्रमापितः । उन्मत्तो मुम्मुनिस्तस्य भ्राता कैश्चित्स्वमन्दिरे ॥२१७९॥
सुज्जिजस्यालस्तु भृङ्गारवृत्त्या भङ्गुरया हतः । महाकुलीनो विचरन्नौचित्येन च क्षत्रियः ॥२१८०॥
साङ्गिकाख्यः प्रतीहारो व्रणितः शनकैर्हतः । अन्येपि संश्रिताः सुज्जेस्तत्र तत्र प्रमिम्यिरे ॥२१८१॥
जात्यवाजिजवप्राप्तप्राणाः कोष्ठेश्वरान्तिकम् । आसाद्य वीरपालाद्या द्विजा मृत्युभयं जहुः ॥२१८२॥
व्रजञ्शारदियो[1] दुष्टोत्थानरुद्धतुरंगमः । प्रपेदे संगटभ्राता बन्धनं सुभटामठे ॥२१८३॥
सूनुश्च सज्जलः सुज्जेः श्वेनिकश्चापजात्मजः । उल्हणस्य तनुजश्च कारागारं प्रपेदिरे ॥२१८४॥
इत्थं राजन्यमात्ये[1] च प्राप्ते पिशुनवश्यताम् । नवमेऽब्दे शुचेः शुक्लपञ्चम्यां विप्लवोभवत् ॥२१८५॥
कार्ये क्वापि विपर्यस्तसत्त्वं संस्मृत्य मन्त्रिणम् । तमद्यापि नृपस्तादृग्भूयोपेक्षोनुतप्यते ॥२१८६॥
वेतालोत्थापनाच्छ्वभ्रलङ्घनाद्विषचर्वणात् । व्यालाश्लेषाच्च विषमं सत्यं राजोपसेवनम् ॥२१८७॥
अनात्मायत्तनिस्तीर्णगुणानां चक्रवर्तिनाम् । शकटानामिवावस्थो विभ्रस्तः को न भज्यते ॥२१८८॥
अयुक्तं नृपतिः सुज्जिजवधं मेने प्रजाः पुनः । युक्तं ज्ञात्वा तमुद्रिक्तशक्तितां विविदुः प्रभोः[1] ॥२१८९॥
भेजे राजा सज्जपालं कम्पनाधिपतिं ददत् । कुलराजे च नगराधीकारित्वं समार्पयत्[1] ॥२१९०॥
त्यक्त्वा मल्लार्जुनं[1] धन्योदयौ नगरमागतौ । प्राग्वत्पुनरजृम्भाते प्रियौ विश्वंभराभुजः ॥२१९१॥
इतराश्रयविच्छेदाश्रितपारिप्लवस्थितिः । श्रीः सर्वाकारमकरोत्स्थिरं चित्ररथे पदम् ॥२१९२॥
अद्भुतैश्वर्यधुर्योपि राष्ट्रं दण्डेन पीडयन् । शमं नेतुमशक्योभूत्स भूपस्याप्यनङ्कुशः ॥२१९३॥
गन्धर्वानाभिधे ग्रामे टिक्कं हत्वा व्यसर्जयत् । पारविशोकं कोट्टेशस्तच्छिरः पार्थिवान्तिकम् ॥२१९४॥
निसर्गद्वेषिणा प्राप्तप्रतापे नितरां नृपे । तदानीं तप्यमानेन टुंनेनाप्यायितोसकृत् ॥२१९५॥
कोष्ठेश्वरेण रभसादल्पैः परिजनैर्युतः । निशि लोठनदेवः स हाडिग्रामं ततोविशत् ॥२१९६॥
महाकथितकन्थान्यैः संरुध्ये राज्ञि सर्वतः । बद्धसंधिर्लवन्यस्तं विससर्ज यथागतम् ॥२१९७॥
उच्चलादिवदादातुं राज्यं स रभसं भजन् । निर्युद्धिभून्यदायोगान्मूढो लोकस्य हास्यताम् ॥२१९८॥
तीक्ष्णप्रयुक्तिभिः सैन्यभेदैरन्यैश्च कोष्ठकम् । उपायैर्नृपतिस्तैस्तैस्ततो हन्तुं व्यचिन्तयत् ॥२१९९॥
प्रतिघ्नन्तीव तीक्ष्णानां पाटिताक्षः क्षमाभुजम्[1] । न संप्रासादयत्[2]क्रुद्धः प्रतियोद्धुं त्वचिन्तयत् ॥२२००॥
स्वैः स्वैः प्रदेशैराविश्य प्रवेष्टुं पृतनापतीन् । स्वयमुद्यावमैः सैन्यैरवचस्कन्द तं पुनः ॥२२०१॥
स भूपं रभसायातं ज्ञात्वाल्पपृतनं बली । ग्रामश्छलयितुं तस्थौ प्रतापैः परिहारितः ॥२२०२॥
लेभे रणे चित्ररथः पृथुसैन्योपि दैवतः । तस्य सैन्यैकदेशेन निन्ये जयविपर्ययम् ॥२२०३॥
भङ्गनामङ्गलोंकारकल्पेन[1] किल तेन सः । ततः प्रभृत्यभूद्दृप्यदवष्टम्भो दिने दिने ॥२२०४॥
रिल्हणादीन्योधयित्वा व्यूढव्यस्ताखिलानुगः । लवन्यो न्यपतत्सार्थं कम्पनाधिपतेर्बले[1] ॥२२०५॥

२१८३. 1) C शारदि यो. २१८५. 1) Emended with C; A °मान्ये. २१८९. 1) Conjectural emendation of G. (*sec. manu*); A प्रजाः. २१९०. 1) Emended with C; समर्पयत्. २१९१. 1) Emended; A मल्लार्जुनो. २२००. 1) Emended; A °भुजाम्.—2) Emended; A संप्रसाद°. २२०४. 1) Doubtful emendation; A भङ्गनामङ्गलों°; C भङ्गनामङ्गलोङ्कार°. २२०५. 1) Emended; A °बली.

क्रमैः शतादपि भटैर्युतो विद्रुतसैनिकः । सेहे[1] तत्सैन्यरोधं स गजक्षोभमिवाचलः ॥२२०६॥
किं वाच्यः स नरव्याघ्रः प्रवृद्धिं याति संगरे । निजवर्मतनुत्रादि यस्य मानि न वर्ष्मणि ॥२२०७॥
मन्दीकृतारिसंरम्भमवष्टम्भेन तादृशा । तं त्रिल्लकादयः प्रापुर्लवन्याः सैन्यशालिनः ॥२२०८॥
तैः सजातीयदाक्षिण्यात्तटस्थैरपि संकटे । तस्येषदुपयोगोभूत्स्ववीर्यापास्तविद्विषः ॥२२०९॥
काले संनहनं रात्रिजागरः सामतो बलैः । समये ग्रहणत्यागनत्युक्तिविकल्पनम् ॥२२१०॥
लब्धभूम्यपरित्यागो जिगीषोरीदृशैर्गुणैः । ग्लेयुररयोप्यस्य का वैर्याक्रमणे स्तुतिः ॥२२११॥
अविश्वसम्भिन्नभृत्यस्तादृक्संरम्भपीडितः । पलायनोन्मुखः शैलात्कोष्ठकोथ व्यगाहत ॥२२१२॥
मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनाम् । गन्तुं तस्योद्यमं जघ्नुः पृष्ठलग्ना विरोधिनः ॥२२१३॥
अत्रमाणोपनतोथ परिमेयपरिच्छदः । स ययौ जाह्नवीं स्नातुं राज्ञा राष्ट्रादपाकृतः ॥२२१४॥
सोमपालोथ भूपालनाम्ना पुत्रेण खेदितः । दीर्घैराज्यदुःखार्तः शरणं नृपतिं ययौ ॥२२१५॥
पुत्रौ दत्तवतो नीविं नागपालस्य तस्य च । अभयं प्रतिशुश्राव भूभृदाश्रितवत्सलः ॥२२१६॥
बृहद्राजस्य जिह्मोयं दौःस्थ्यहेतुरभूदिति । स तदापदि नास्मार्षीदव्याजौदार्यधुर्यधीः ॥२२१७॥
साहायकाय सर्वं सैन्यं दत्तवांस्तं महीपतिः । भूयः प्रतिष्ठामनयद्दर्पप्रशमनाद्द्विषाम् ॥२२१८॥
स्नात्वा धुनद्यां व्यावृत्तः कोष्ठकोत्रान्तरे पुनः । मल्लार्जुनं गृहीत्वाभूद्राज्योत्थापनोद्यतः ॥२२१९॥
अर्कोपरागे प्राप्तः स कुरुक्षेत्रमवाप तम् । लवन्यं कार्यतस्त्यक्तपूर्ववैरो नृपात्मजः ॥२२२०॥
आहूतो लोठनः पूर्वमायातस्तेन डामरम् । निशम्य तं संघटितं[1] खिन्नः प्रायाद्यथागतम् ॥२२२१॥
विजयेशाप्तः पीतकोशोपि नृपतिद्विषः । प्रविविक्षूनुपैक्षिष्ट सोमपालो दुराशयः ॥२२२२॥
आराधनाय भूभर्तुस्तत्पुत्रः कोष्ठकं पुनः । प्राप्तं स्वविषयैस्तैस्तैष्टक्कुरैर्निरलुण्ठयत् ॥२२२३॥
अत्रान्तरे चित्ररथं संवृद्धायासदुर्मदम्[1] । अनिच्छन्तोवन्तिपुरे प्रायं चक्रुर्द्विजातयः ॥२२२४॥
उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा । ज्वलिते ज्वलने देहान्बहवो जुहुवुः शुचा ॥२२२५॥
चरके धर्मधेनूनामुत्तब्धेपि तदाश्रितैः । वह्निं गोपालकोप्येकः कारुण्यप्रवणोविशत् ॥२२२६॥
भट्टस्योद्भटवंशस्य पृथ्वीराजस्य नन्दनः । युवा विजयराजाख्यः सानुजो गाढदुर्गतः ॥२२२७॥
देशान्तरं जिगमिषुर्विषमं वीक्ष्य तत्र तत् । व्याजहारानुजन्मानं कारुण्याश्रुकणान्किरन् ॥२२२८॥
उपेक्ष्यमाणा दाक्षिण्यस्तम्भितेन महीभुजा । विशः सचिवपाशेन विवशाः पश्य नाशिताः ॥२२२९॥
छन्दानुवृत्त्यामात्यानां[1] यत्र क्ष्माभृदुपेक्षते । कस्तत्रान्यस्तु दीनानामापच्छमयिता विशाम् ॥२२३०॥
यद्वा न्याय्योयमन्योन्यस्पर्धया यदुपप्लुतम् । शमिता दण्डयेच्छाम्यं शमितारं परोथ वा ॥२२३१॥
विशृङ्खलं नयेच्छम्यां दार्ढ्यसारं विघट्टनैः । कदाचिल्लोहमश्मानमश्मा लोहं कदाचन ॥२२३२॥
दोषेणैकेन न द्वेष्यो राजा सर्वगुणोज्ज्वलः । यथा चित्ररथस्यान्यद्विधेयं नावभाति मे ॥२२३३॥
धर्मः सर्वोपकार्येकक्षुद्रक्षपणमुच्यते । जघानाजगरं सोपि जन्तूनामन्तकं जिनः ॥२२३४॥

---

२२०६. [1]) Emended; A सह. २२२१. [1]) Emended; A सङ्घटितुं. २२२४. [1]) Emended with C; A सयृद्धायास°.
२२३०. [1]) Emended with C; A apparently °मान्वानां.

दुर्वृत्तदमने[1]ऽस्माभिः कृते तेजस्विनो जनात् । भूयोऽप्यधिकृतो बिभ्यन्न कश्चित्पीडयेत्प्रजाः ॥२२३५॥
कायस्थास्य परित्यागमदनन्ता जन्तवो यदि । सुखिनः स्फुरतो भ्रातर्वणिज्या ज्यायसी न किम् ॥२२३६॥
संभुभुवांस स तथेत्यथ तं कोशापीथिनम् । विधायानुसरत्स्व हन्तुं चित्ररथं तदा ॥२२३७॥
कालेऽस्मिन्धर्मदौर्बल्यकलुषेऽपि कलेः किल । प्रभावो भूमिदेवानां द्योततेऽद्याप्यभङ्गुरः ॥२२३८॥
ब्राह्मणैरपरिक्षीणपूर्णपुण्यो न कश्चन । धैर्यमारभते भ्रष्टदुष्टोत्पाटनपाटवैः ॥२२३९॥
द्विजानुद्वेजयन्सुज्जिर्द्विजादेशात्सदा वधम् । विप्रेणैव हतश्चित्ररथो विप्रावमानकृत् ॥२२४०॥
द्विजोत्थापितयाक्रान्तश्चित्तोऽसौ कृत्यया ध्रुवम् । दध्यौ तस्य वधं प्राणान्विना कारणमुत्सृजन् ॥२२४१॥
कृशानुसादकृपत विप्रा देहान्यदैव ते । तद्देहस्तुल्यसंघर्षे तद्विषाक्रीडतानुगः ॥२२४२॥
अनासादयतश्चित्ररथं पृथुबलान्वितम् । गणरात्रमभूद्धन्तुर्दिवारात्रं प्रजागरः ॥२२४३॥
स अपर्यन्तसामन्तसीमन्तितपथो व्रजन् । अभूददृश्यो दृष्टश्च जनसंबाधमध्यगः ॥२२४४॥
तेन साधयंनेऽथल्यनिष्ठुरेणैकदा जवात् । सोऽनुसक्ते व्यतिक्रान्तनिःश्रेणिर्नृपवेश्मनि ॥२२४५॥
विलम्बितस्य स्तम्भाग्रे[1] कृपाण्या मूर्ध्न्यथास्य सः । सामन्तमध्यगस्यैव प्राहरत्तीव्रसाहसः ॥२२४६॥
मुमूर्षोरिव तत्रास्य वैकल्यगलितस्मृतेः । उद्भ्रान्तचक्षुषो पर्यश्रवणं समपद्यत ॥२२४७॥
प्रमापितोऽयं राज्ञेति ज्ञात्वा सद्यबहिष्कृताः । विश्वस्तास्तं तथाभूतमत्यजन्ननुजीविनः ॥२२४८॥
तं वीतजीवितं ज्ञात्वा न तीक्ष्णः प्राहरत्पुनः । प्राप्तं द्वितीयनिःश्रेण्या भ्रातरं निषिषेध च ॥२२४९॥
न पलायिष्ट निर्विघ्नसर्वमार्गोऽपि घातितः । राज्ञा चित्ररथः शस्त्रदिग्धैः प्रोक्षकार सः ॥२२५०॥
प्रनष्टे[1] भृष्टमांसादिराज्यभोगपुरःसरैः । सर्वैः कापुरुषैस्त्यासादय चित्ररथानुगैः ॥२२५१॥
ज्यायांश्छोठरथस्तस्य भ्राता भीत्या पलायितः । शरण्यं नर्तकीमेकां ययौ वक्त्रार्पितस्तनः ॥२२५२॥
तादृक्प्रवेशितश्चित्ररथोऽभ्यर्णे महीभुजा । मा भैषीः[1] प्राहरत्कस्त्वामित्युक्त्वाश्वासितः स्वयम् ॥२२५३॥
नृपाज्ञया को निहन्ता द्वारेऽस्येति वादिभिः । तीक्ष्णोऽन्विष्टो भटैः सोऽहमित्युक्त्वा स्वं न्यदर्शयत् ॥२२५४॥
धीरो बोधान्स्वधैर्यात्तलङ्घनश्लाघ्यविक्रमः । त्रिंशद्भिस्ताम्र हस्त्वाय प्रहस्य चरणे हतः ॥२२५५॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे[1] ॥२२५६॥
लब्धा लिखिततत्कृत्यकारणा पत्रिका करात् । तस्यान्तकमयाशंसा श्लोकेनानेन पावनी ॥२२५७॥
अहच्युन्मादहीनस्य युतश्चित्ररथस्ततः । स्वयमेणोऽपि लालाटसंधिवेधादजायत ॥२२५८॥
स मासान्ग्रस्तवाम्यात्म निरात्मायकृशाकृतिः । विवेक्ष्यमाणोऽतितिष्ठं शायनीयतलेऽन्वहम् ॥२२५९॥
मल्लार्जुनं पुरस्कृत्य कोष्ठको विग्रहोन्मुखः । तन्मध्ये तरुसंबाधं गिरिदुर्गमगाहत ॥२२६०॥
मां मामधमर्मं भ्राम्यन्त्यवृष्ट्यमसनोद्यमात्[1] । अविस्मृताचरं लोकं पुनर्दीराज्यशङ्किनम् ॥२२६१॥
अकाण्डाम्बुदजालेन पीडिताङ्ग इवाभजत् । परचक्रोदयेनाशु लोकः शिथिलशङ्किताम् ॥२२६२॥
तद्दुर्गं तद्दृशक्रोशी[1]व्याप्याथ सर्वतः । व्यामोपान्तवसमामैः सन्निवैः स न्यरोधयम् ॥२२६३॥

---

२२३५. [1]) Misread in C दुर्वृत्तदमने°. २२४६. [1]) Emended; A स्तम्भाग्रे. २२५१. [1]) Emended with C; A प्र-ष्टे. २२५३. [1]) Emended with C; A भेषीत्मा°. २२५६. [1]) Compare for this verse *Bhagavadgītā* iv. 8. २२६१. [1]) The text of the first *pāda* is corrupt; perhaps read स समभ्रमवङ्क्रा°. २२६३. [1]) A °क्रोष°.

सज्जपाले यवनकैः स्कन्धावारं निबध्नति । अनुबध्नन्दिपोत्पन्नाखिलापत्तिमितांस्तकम्[1] ||२२६४||

धन्योपि शिलिकाकोट्टपर्यन्तकटकोभवत् । गन्धद्वेषी गजारिपुः सिन्धुरस्येव[1] वैरिणः ||२२६५||

आवासितबलो राजा गोवासे रिल्हणोकरोत् । अटवीं पर्यटन्भूकानिवार्को क्षुडितानरीन् ||२२६६||

तीव्रशक्तेर्नृपस्यैवमारम्भैः स्तम्भितोभजत् । कोष्ठेश्वरस्त्रिचतुरान्मासान्संचारशून्यताम् ||२२६७||

क्लिष्टो देशान्तरे राष्ट्रानन्तरैर्व्यर्थकृतो नृपैः । भिन्नस्ववर्गो भूभर्तृभृत्यव्यर्थीकृतोद्यमः ||२२६८||

कालिंशल्यारकुशलो ज्ञातुं वृत्तिं महीभुजाम् । स विस्मृतागाः संधातुमैच्छच्छिन्नपदो नृपम् ||२२६९||

उज्जिहीर्षोः प्रभोर्मन्युं वाच्यं तद्धन्नमाहिरन् । भक्त्येकामः सज्जपालस्तस्येच्छां तामपूरयत् ||२२७०||

तथार्तोपि रिपुं राज्ञः संधित्सुर्न्यवधीन्न सः । पृथ्वीहरप्रसूतानां निर्द्रोहत्वं न कौतुकम् ||२२७१||

तेन प्रहिण्वता राजवैरिणं स्वकराङ्गुलिम् । छिन्दतापि महीभर्तुर्मन्युश्छेत्तुं न पारितः ||२२७२||

कण्ठबद्धशिरःशाटः शीर्षेणोपानहं वहन् । भुक्तवेलोपि भूपालं कर्तुं नाशकदक्रुधम् ||२२७३||

अस्वीकृतहिरण्यभूभुजाच्छन्नः स हि राजवत् । तथात्यस्त्युक्तभूपाशः सर्वं गर्वाद्व्यवाहरत् ||२२७४||

श्रुत्वाथ बद्धं तन्मध्ये यातं मल्लार्जुनं नृपः । अनुबध्नाति मध्यानामुदयेभ्युदयान्तरम् ||२२७५||

नीयमानः स हि स्कन्धमधिरोप्यानुजीविभिः । अजाङ्किकतया मार्गोल्लङ्घनायासनिःसहः ||२२७६||

ततस्ततो भयस्थानान्निस्तीर्णो लोहराश्रितम् । सावर्णिकाभिधं ग्रामं प्राप्तो विन्यस्तरक्षिणा[1] ||२२७७||

निरुद्धो जग्गिकाख्येन ठक्कुरेण महीपतिः । प्रियंकरं तं च भृत्यं शुभावाप्तिकमागतम् ||२२७८||

बद्धप्रायोरिणा दुर्गान्निर्गतः स कथंचन । बद्धस्तेन पुनः शक्तिः[1] कस्य भाव्यर्थलङ्घने[2] ||२२७९||

गङ्गा धुमार्गलुठिता जठरात्कथंचिदेकस्य संहतवतो निसृता महर्षेः ।

प्रस्तापरेण कृतसागरगर्तपूर्तिः शक्तो न कोपि भवितव्यविलङ्घनायाम् ||२२८०||

जग्गिके[1] बद्धसंग्रामिपर्यन्तोपान्तरक्षिणि । राज्ञोद्यद्द्वारपतिः प्रायोजि प्राज्यबुद्धिना ||२२८१||

तं विना धैर्यगाम्भीर्यशौर्यधुर्यं महाधियम् । संकटे न ह्यवष्टम्भो राज्ञाज्ञाप्यन्यमन्त्रिणाम् ||२२८२||

स ह्यतिक्रम्य साबाधान्मार्गाननुभवचेतनैः । तमोरिस्थितमद्राक्षीत्तं क्षमापतिविद्विषम् ||२२८३||

निष्ठाशून्येन धैर्येण शौर्यसंभावमावहः । स्तुवन्स तं बहिः प्राप्तं तत्तदुक्त्वाब्रवीत्पुनः ||२२८४||

सर्वतो ज्यायसीं भर्तृभक्तिं यो बहु मन्यते । भवान्धुर्यो मतिमतामाहतो लोभनातुरैः ||२२८५||

कृता रक्षामणिसमं सहायं त्वादृशं विना । हानिर्मे दुर्नरेन्द्रस्य बाल्ये राज्ये बहुच्छलैः ||२२८६||

दुष्प्रेक्ष्याणां भवस्येव नियमाद्राजभास्वताम् । प्राप्याप्तद्देमन्तदिने जननेत्रविलङ्घ्यता ||२२८७||

शोभते रुधिराताम्रमण्डलाभो यथोदये । तथा चोस्तमये भास्वानिव धन्यः स भूपतिः ||२२८८||

धन्योवतारो यस्यासीत्शुभ्रवपीराङ्गनाजनः । उदयेस्तमयेप्युभे रागव्यमाप्सरोगणः ||२२८९||

पदे प्रयोगं लब्धार्थं किंचित्कृत्वा कुलीनवत् । अहं कविरिव प्रौढः प्राप्तो निर्व्यूढिमूढताम् ||२२९०||

सत्यंकारोधुना भूत्वा विधत्तां स्वाम्यहत्स्थितिम् । साध्यत्वामतिकृतेन वरेणैकेन मे भवान् ||२२९१||

२२६४. [1]) A. स्कन्धा° २२६५. [1]) A सिन्धुरस्येव. २२६९. [1]) A कालि°. २२७६. [1]) Emended; A स्कन्धम°.—[2]) Emended; °जङ्गनाव स नि°. २२७९. [1]) Emended; A शक्ति.—[2]) Emended; A भावार्थ°. २२८१. [1]) Doubtful; A जग्गके; cf. viii. 2278.

इत्युक्त्वा प्रत्ययोत्पत्त्यै संस्प्रष्टुं स्फाटिकं ततः । सपीठं पुरतो द्वारपतेर्लिङ्गमुपानयत् ॥२२९२॥

अच्छलाहवसंमर्दप्रासभल्लेषुवर्षिणः । योधान्योद्धुं वरं मार्यं मानवाकूतमिच्छति ॥२२९३॥

इति संभाव्य संस्पृष्टशिवलिङ्गः स वाञ्छितम् । वरं तस्योररीचक्रे स च भूयो जगाद तम् ॥२२९४॥

आकृष्टदृष्टिरहतः क्ष्माभुजोन्तिकमक्षतः । यथेदृगेव प्राप्नोषि तथा त्वामर्थयेधुना ॥२२९५॥

कार्पण्योपहतं तस्य वचः श्रुत्वा त्रपाजडाः । सर्वेप्युर्वीभुजास्तस्थुर्वृष्टधाराहताः पक्ष्मा इव ॥२२९६॥

अन्तक्षणस्ततो भिक्षोः स्मर्यमाणः सचेतसाम् । विकासहेतुतां प्राप स्वस्थस्य मनसः पुनः ॥२२९७॥

मनुष्ययानमारूढः पत्त्रं निन्ये स निस्त्रपः । तेन स्वपालितांल्लोकानपि पश्यन्नविक्रियम् ॥२२९८॥

अहीनाहारनिद्रादिवैवश्यः पशुवत्पथि । कृष्यमाणः स केनापि न विकल्पेन पस्पृशे ॥२२९९॥

पश्यन्नानीयमानं तं गोप्तृभिस्तादृशं जनैः । दयार्द्रहृदयश्चासीन्नाभ्यनन्दच्च भूभुजम् ॥२३००॥

उवाच चानुकम्प्येस्मिञ्जन्मज्येष्ठस्य भूपतेः । नैतावद्भाति नैर्घृण्यमनुजे पितृवर्जिते ॥२३०१॥

असेचनकमेतस्य मेचकाब्जदृशो वपुः । क्लेशागर्भमनिस्त्रिंशचेताः कः कर्तुमर्हति ॥२३०२॥

पूर्वापरानुसंधानवन्ध्यस्तं दृष्टवांस्तदा । विस्मृतागा नृपं तत्तदित्युपालभताध्वनि ॥२३०३॥

गणना काप्य वा वालवालिशादौ विधीयते । न निसर्गवैरैकाम्यं महतामपि सर्वदा ॥२३०४॥

श्रोतॄणां युनपाञ्चालीकेशकृष्ट्यादि शृण्वताम् । पाण्डवेभ्योधिकः क्रोधो धार्तराष्ट्रेषु जायते ॥२३०५॥

कुरूणां क्षतजापाने भग्नोरोर्मूर्धताडने । श्रुते पाण्डववििद्वेषस्तेषामेव च दृश्यते ॥२३०६॥

परावरज्ञः कार्याणां न कश्चिन्मध्यमं विना । तटस्थेनुभवाभेदस्तत्र तत्र कथं भवेत् ॥२३०७॥

स पौरान्नोदयञ्छङ्के छिन्नाङ्गुल्यङ्गुमुद्वहन् । युग्याधिरूढो मृत्पात्रं सायं नगरमासदत् ॥२३०८॥

न्यधत्ताश्रयुजाशुक्लपञ्चदश्यां महीपतिः । एकादशेब्दे तं रक्षितुं नवमठान्तरे ॥२३०९॥

त्यक्ताहारस्य च निशाः पञ्चषट्स्तस्य ताम्यतः । पार्श्वे जगाम कारुण्याच्चरणस्पर्शनार्थिनः ॥२३१०॥

अवादीदर्थितं तस्मै प्रतिशुश्रुवुषेभयम् । द्रोहावेकान्ततो वध्यौ स चित्ररथकोष्ठकौ ॥२३११॥

राजा निर्जग्मुषः स्वोर्वीं कोष्ठकस्याथ बन्धनम् । विधित्सुः पञ्चषानामानिल्हणादीनचूचुरत् ॥२३१२॥

सर्वेषु गलितौजःसु स्वयं राज्युद्यमस्पृशे । अथ तं रिल्हणो दोर्भ्यां क्षणं माह ह्यग्रहीत् ॥२३१३॥

हृतशस्त्रः स बलिनस्तस्य दोष्पञ्जरान्तरे । तस्थावचेष्टो निद्रान्धो भूतेनेवासनीकृतः ॥२३१४॥

भ्रातृव्यो भिःखराजाख्यः कुलराजस्य कोपनः । भुभूद्रक्षया कृपाण्यास्य निर्बिभेद कृकाटिकाम् ॥२३१५॥

परश्वधेन मूर्धन्यैनं पृथ्वीपालश्च ताडयन् । राजबीजी स च क्रोधात्क्षयषिध्यत महाभुजा ॥२३१६॥

कृकाटिकास्थिसंजातमर्मवेधोपचेष्टितः । विवेष्टमानोवर्तिष्ट क्षितौ स रुधिरोक्षितः ॥२३१७॥

महाबलैः कमलियप्रमुखैस्तस्य सोदरः । चतुष्कः पातितोप्युर्व्यां गण्डशैल इव द्विपैः ॥२३१८॥

विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ[1] तथा । कृष्टासिधेनुरुत्तस्थौ द्विजन्मा मल्लकाभिधः ॥२३१९॥

उच्चावचेषु प्रहरन्स भूपालोपजीविषु । अंतर्क्यमाणस्तुमुलं राज्ञीवालक्ष्यतापतत् ॥२३२०॥

२२९९. [1]) A माउर्व. २३००. [1]) Emended; A जभा: २३०४. [1]) A °वाले°. २३१५. [1]) A भि×ख°. २३१९. [1]) Emended with C; A स्वामिनी.

नृपान्तिकादापततस्तांस्तान्घ्नन्तं महाभटान् । अथाभ्यस्तासिधेनुस्तं कुलराजो महौजसम् ॥२३२१॥
प्रतिप्रहरतिषु क्षिप्रापतत्पाणिमधारयन् । निहन्तुं संहरोधेन भित्तौ व्यायामविस्मृतम् ॥२३२२॥
अपयातुमवस्थातुं प्रहर्तुं वाप्यशक्नुवन् । तस्थौ स बहुसंधानः संस्तभ्यैन[1]मविक्षतम् ॥२३२३॥
चरणास्फालनोत्कालदोःशब्दमुखरोन्तिकम् । धाविते पद्मराजेथ मल्लकोक्षिपदीक्षणम् ॥२३२४॥
प्राहरत्कुलराजोस्य लब्धरन्ध्रोथ वक्षसि । प्रहृत्य गच्छतः पाणेः स तस्याङ्गुष्ठमक्षिणोत् ॥२३२५॥
तौ बिज्जराजे[1] दर्पोष्णनिबिडे प्रहरत्युभौ । तस्मिन्प्रतिप्रहरति क्षिप्रं प्राहरतां ततः ॥२३२६॥
स क्षीणन्यभियोक्तॄंस्तांस्त्यक्त्वा दृक्पथमागतम् । चतुष्किकाद्वारगतं राजानं समुपाद्रवत् ॥२३२७॥
लक्ष्यीभूते नृपे शीघ्रमनुधावन्ससंभ्रमम् । चकार कुलराजस्तं स्फिगस्थिक्षतिनिर्जवम् ॥२३२८॥
ततः सर्वैर्वृतो योधैः क्रीडाक्रीडान्स सत्वरम् । हत्वाभजद्वीरशय्यां रक्तस्यन्दोत्तरच्छदाम् ॥२३२९॥
जीवद्व्यापहृतस्वामिव्रीडितः श्लाघ्यविक्रमः । स एवास्पृहणीयान्तक्षणो वीरेष्वगण्यत ॥२३३०॥
बहिः कोष्ठकभृत्येषु विद्रुतेष्वदरिद्रताम् । परं जनकचन्द्राख्यो धैर्येणोवाह डामरः ॥२३३१॥
निरायुधो राजभृत्याद्भृत्यैकस्मात्परश्वधम् । स प्रयुद्धामद्रूतस्तं नयन्भूरीन्यमान्तिके ॥२३३२॥
पिपासोस्तस्य चण्डांशुमण्डलं परशुः करे । सुषुम्णासंविभागार्थी शशिखण्ड इवाविशत् ॥२३३३॥
नाद्राक्ष्म नाश्रौष्म वापि बद्धे भर्तरि यत्तदा । कोष्ठकस्य वधूरन्यतिष्ठन्मानवती सती ॥२३३४॥
जीवन्भूयोपि लभ्येत त्वया स पतिरित्यसौ । बन्धूनामवधीर्योक्तिं प्राविशद्धुताशनम् ॥२३३५॥
समार्थयोषिदाश्लेषतर्षकिल्बिषदूषितः । तस्याः सतीलोकगाथाः पादाभ्यां पावितोनलः ॥२३३६॥
वसन्तस्य सुता धन्योदयभ्रातुः पुपोष सा । शुचिर्वंशाभिमानेन न डामरवधूव्रतम् ॥२३३७॥
लब्धान्यललनाः कुर्युर्वैधव्येपि धनेच्छया । ग्रामकार्थिकुटुम्ब्यादीन्नितम्बाभोगभागिनः ॥२३३८॥
मतिव्यामोहनिर्व्यूढवैकृत्यस्वाभिमानिनः । तथानुगाभ्यां च कृतं कोष्ठकस्योच्चकैः शिरः ॥२३३९॥
स्वधर्मणोपि क्रिमिसाकूनः कैरपि किल्बिषैः । निष्प्राणो गणरात्रेण कारायां कोष्ठकोभवत् ॥२३४०॥
अथ चित्ररथः शोषकृशः कलुषितं नृपम् । श्रुत्वा मल्लार्जुनेनाभुग्नयाद्दत्यन्तदुःस्थितः ॥२३४१॥
पत्नी तस्यैकभार्यस्य प्रिया सूर्यमती सती । परलोकातिथिः पूर्वं विभवप्रतिभूरभूत् ॥२३४२॥
देहे वाप्यहताप्याये गेहे गतपरिग्रहे । पत्यौ वैमत्यकलुषे नेषद्व्येष पिप्रिये ॥२३४३॥
तीर्थस्थितस्य न स्यान्मे सापत्योप्यप्रियं नृपात् । इति संचिन्त्य स प्रायान्निषान्मन्तुं सुरेश्वरीम् ॥२३४४॥
अथ मानार्थभूयिष्ठां धनाधीशाधिकश्रियः । स्थानात्ततस्ततस्तस्य पार्थिवोपाहरच्छ्रियम् ॥२३४५॥
कनकांशुकसंनाहवाजिरत्नायुधादिभिः । स्वा स्वा प्रकाशिता लक्ष्मीः स्पर्धयेवाधिकाधिका ॥२३४६॥
लोहरद्रोहधर्मोष्मशोषितो राजपादपः । तल्लक्ष्मीशैलतटिनीसेकेनाप्यायितोभवत् ॥२३४७॥
विभ्रमे चिरनष्टेपि श्रीकल्याणपुरं न यः । वनवासोचितत्रासः शाल्वः[1] सौभमिवात्यजत् ॥२३४८॥
श्वेतच्छत्रांशुपूरेणेव चिन्तापाण्डुरवर्तत । बन्दीकृता नरेन्द्रश्रीर्भीर्निद्रा यस्य मन्दिरे ॥२३४९॥

---

२३२३. [1]) Emended with C; संस्तम्भ्यैनं. २३२६. [1]) Emended; A बिज्जराजो. २३४८. [1]) Emended; A साल्वः सौभमिवा°; C साल्वोऽस्तुमिवा°.

राज्ञा प्रयुक्तं विज्ञाय विजयः स भवोद्भवः । तीक्ष्णमानन्दनामानमवधीत्तेन चावधि ॥२३५०॥तिलकम्॥ 2350
इत्थं स पप्रथे तादृक्प्रजापालनशालिनः । सर्वोत्साहमयोनेहा जयसिंहमहीभुजः ॥२३५१॥
तीर्थस्थिते चित्ररथे पादाग्रग्रहणैषिणी । भृङ्गारजनकावास्तां तद्भृत्यौ व्यक्तचक्रिकौ ॥२३५२॥
प्रचुरोत्कोचदानेन स्वीकृत्य नृपतिं ययौ । भृङ्गारो मन्त्रजनकः स्वामिश्रीभोगभागिताम् ॥२३५३॥
चिरप्रज्वलितं हारमुदये निदधे पुनः । मेघकालः सरित्पूरं प्रतीर इव पार्थिवः ॥२३५४॥
अवश्यभोग्यदुष्कर्मदत्तमर्मव्यथश्चिरम् । कथाशेषोभवच्चित्ररथो मासैरथाष्टभिः ॥२३५५॥ 2355
हास्यावहोप्यविकृतो विकृतोनपास्यो दुर्गन्धिरप्यनिजडोपि गृहीतवाक्यः ।
पूर्वानुभावजयिनो भवति प्रभावाद्यस्य स्तुमस्तमनिसंस्तवमप्रतर्क्यम् ॥२३५६॥
निर्व्याराधूतनाथैर्यैश्चेष्टितैः प्रागभीष्टताम् । बाल्ये दुर्ललितस्यागाद्भर्तुश्चित्रचेतसः ॥२३५७॥
विसृज्यमानः संग्रामसाम्राज्येन दिवानिशम् । क्रमात्स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिकम् ॥२३५८॥
दुष्टैः कृत्यान्तरज्ञत्वं प्राग्रवानाप्रतां गतः । तदन्ते घटयन्नाज्ञस्तद्भृत्यान्कोशदर्शकान् ॥२३५९॥
तदा सर्वोन्नताशेषमन्त्रिशून्ये नृपास्पदे । सज्जकस्यात्मजः प्राप भृङ्गारो मुख्यमन्त्रिताम् ॥२३६०॥चक्कलकम्॥ 2360
तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृताम् । नागुः पात्रार्पणात्सुच्छत्यागित्वेनापि संपदः ॥२३६१॥
योषित्कशिपुभोग्येन धन्यंमन्योपि सोभवत् । धान्यदानवदान्यत्वं गुरूणामाजगाम यत् ॥२३६२॥
पीतं कृतवतो रूप्यं संयोज्य रजतैर्निजैः । विद्यमानं सुरेश्वर्यां सायुज्यं तस्य युज्यते ॥२३६३॥
उर्वीशैरपि नार्वाग्भिर्योनुगन्तुमशक्यत । आषाढधामाद्यसंभारो निबिडद्रविणव्ययः ॥२३६४॥
नन्दिक्षेत्रे स तत्राद्यैः प्रणीतश्चणपक्वादिभिः । तेन कालानुसारेण पोषितः पञ्चषाः समाः ॥२३६५॥ 2365
नर्माङ्कतायां निःसारो ज्ञातो यः सोधिकारभाक् । अचिन्त्यकृत्यकार्यासीत्स्वामिस्नेहप्रभावतः ॥२३६६॥
केलीसज्जैर्युवतिकरजैः कण्ठभूषादशायां यस्याज्ञायि त्रुटनमसकृत्क्ष्माधरेष्वासकृष्टौ ।
सोप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी शक्त्याधायी क्वचन न परो भर्तुराज्ञाप्रभावात् ॥२३६७॥
तं च रिल्हणधन्यौ च समाश्रित्यैतरेतरम् । कार्यं जनकभृङ्गारावुत्कोचेनापजह्रतुः ॥२३६८॥
कदाचिज्जनकं बद्ध्वा सार्धं भूषणमौक्तिकैः । सपुत्रदारं भृङ्गारो बाष्पबिन्दूनमोचयत् ॥२३६९॥
स तं च जातु निर्विद्य मानहीनमकारयत् । रूक्षरक्ष्यार्पितोत्कोचधनाभ्यर्थितमैथुनः ॥२३७०॥ 2370
अङ्गुष्ठनखनिर्घर्षनर्तितानामिकोर्मिकः । वदन्वामोत्तरौष्ठामोदञ्चनैः कुञ्चितेक्षणः ॥२३७१॥
भ्रूभङ्गोद्वेल्लितत्वलीनिम्नोन्नतललाटभूः । पुनरेकस्तयोर्लब्धकार्यो लोकमहासयत् ॥२३७२॥तिलकम्॥
अव्यक्ताक्षरवाग्मौग्ध्यमीलिताक्षो रटन्बहु । हसन्सकरतालं च संपश्यन्यो व्यभाव्यत ॥२३७३॥
सोल्लेखप्रतिमोन्मीलितत्वानां हास्यवस्तुनि । कथाशरीरं पर्याप्तं नेदृशां किमचेतसाम् ॥२३७४॥
सर्वस्मिन्वस्तुतोवाचि काले विगतयोग्यते । जाने तृणनृणां तुल्ये भृङ्गारोर्हत्यगर्वताम् ॥२३७५॥ 2375
यः सर्वकषनिष्कम्पशेमुषीकः क्षमापतिः । धुर्यतां धर्मत्र्यर्थिभिर्गतः सुकृतशालिनाम् ॥२३७६॥

२३५०. [1]) $A_1$ ३. २३६०. [1]) $A_1$ ४. २३६१ [1]) Emended; A दुष्कृताम्.—[2]) Thus A; R G C नागुः. २३६२. [1]) A °वदन्य. २३६३. [1]) Emended with C; A रूप्यं. २३६९. [1]) Emended; A भृङ्गारं. २३७०. [1]) Thus A; C emends रूक्षरक्षा°. २३७१. [1]) Emended; A कु°लेक्षण:; C कुहत्त क्षणः. २३७२. [1]) Thus A; perhaps read with C °हेल्लित°.—[2]) $A_1$ ३. २३७४. [1]) Emended; A °त्वानां.—[2]) Emended; A न दृशां.

लब्धबोधिरिवार्थैश्चक्रे व्यापद्युपक्रियाम् । दावप्लुष्टस्य दग्धाङ्गोल्लाघत्वमिव चन्दनः ॥२३७७॥
गुरुसूरिद्विजान्मथप्रभृत्युचितयापि यः । प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकम् ॥२३७८॥
प्रासादान्विजयेशादिदेवानां तस्य शुद्धधीः । सुधादानेन निन्ये च धन्यः कैलासतुल्यताम् ॥२३७९॥
मठदेवगृहारामह्रदकुल्यादियोजने । जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा ॥२३८०॥
सकूर्चाशीतविद्वेषकार्यैः सब्रह्मचारिणाम्¹ । स क्रौर्यधाम पर्याप्तमीदृगप्युच्यते जडैः ॥२३८१॥
विश्वाप्यायनसप्तसिन्धुभरणब्रह्मादिसंप्रीणनप्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्मणा ।
स्वःसिन्धोर्लघुतां गतं सगरजश्रेणीवितारार्थिना—²ता येन जनाः श्मशानमिव सा योग्या किलास्थ्नां स्थितौ॥२३८२॥
तदन्तरे¹ शिवरथो द्विजः प्रचुरचक्रिकः । कायस्थपाशः पाशेन गलं बद्ध्वा व्यपद्यत ॥२३८३॥
इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटनम् । अपेतविघ्नं सौजन्यनिघ्नो ऽथभित मण्डलम् ॥ २३८४॥
विपक्षावरणापायप्रायेण पृथिवीभुजः । तैक्ष्ण्यमायान्ति जीमूतमुक्ता रविकरा इव ॥२३८५॥
परिणाममनोज्ञत्वं राजत्वं स्वयं नृपः । माधुर्याधिक्यमुत्पाको द्राक्षाद्रुम इवाययौ ॥२३८६॥
प्रावर्तयत सातत्यात्कतून्विततदक्षिणान् । विवाहतीर्थयात्रादीन्महितांश्च महोत्सवान् ॥२३८७॥
संविभेजे स्वसंभारैः स क्रिया धर्मचारिणाम् । तेजोभिः कुलशैलानामोषधीरिव चन्द्रमाः ॥२३८८॥
प्रतिशातं सुतोद्वाहप्रतिष्ठादौ पुरौकसाम् । तेनौपयिकसामग्रीदानमव्यग्रचेतसा ॥२३८९॥
दारुणामाकराः कोशवृद्धये ये धराभुजाम् । नवीचक्रे पुरं सर्वं स्वाधीनान्स विधाय तान् ॥२३९०॥
मज्जतो राजकार्येषु तस्यविज्ञैर्हरार्चने । विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव ॥२३९१॥
प्राह्णादारभ्य सायाह्नपर्यन्तं चास्य दृश्यते । न तत्कृत्यं गता यत्र नाध्यक्षत्वं विचक्षणाः ॥२३९२॥
अविचारान्धतमसे विद्या व्यद्योततास्वरा । जयापीडादिमेघश्रीसौदामन्या विलोलया ॥२३९३॥
तेन श्रियं तु विश्राण्य स्थास्नु रत्नप्रभामिव । गुणवैचित्र्यचित्रस्य प्रकाशोनश्वरः कृतः ॥२३९४॥
सूरयो येन ---¹ विक्षतक्षेत्रसंपदाम् । ग्रामाणामामहार्केन्दु² सान्वयाः स्वामिनः कृताः ॥२३९५॥
विदुषां विततोत्सेधसौधास्तद्विहिता गृहाः । व्यामाः सप्तर्षिभिर्द्रष्टुमुत्कर्षमिव मूर्धसु ॥२३९६॥
प्रतिग्रामभ्रंशे प्रशोपशे न पथि पान्थता । सार्थवाहं समालम्ब्य निर्दोषा विदुषां स्थिता ॥२३९७॥
आसीद्यथार्थराजस्य शयानस्याप्यनिमिषः¹ । कामं लिङ्गाभिषेकाम्भःसंक्षोभप्रभवो ध्वनिः ॥२३९८॥
निद्राणस्य तथा वेणुवीणादिपरिहारिणः । दयितं तस्य निर्द्वेषविट्जल्पविकल्पनम् ॥२३९९॥
काले श्रीललितादित्यावन्तिवर्मादिभूभुजाम् । सिद्धं न यत्प्रतिष्ठादि निःस्वं तदधुना गतम् ॥२४००॥
मठदेवगृहेष्वेवं स्वकालप्रभवेषु यत् । सर्वेष्वेव कृता तेन निर्व्यपाया व्ययस्थितिः ॥२४०१॥
रत्नादेव्या वृद्धाच्छभर्तृवल्लभताभुवः । सर्वप्रतिष्ठाप्रष्ठत्वं विहारः प्रथमं गतः ॥२४०२॥
रिल्हणोऽथ गुणग्रामबान्धवो धर्मपद्धतौ । बभूव पूर्वपथिकः समस्तामात्यसंततेः ॥२४०३॥

२३८१. ¹) A °कार्येसब्रह्मचारिणा, evidently corrupt; emendation doubtful. २३८२. ¹) Conjectural reading; A सरगज°; C सुरगज°.—²) Thus A; perhaps read °स्पर्शमास्पृता; C °माम् आता. २३८३. ¹) Emended; A °न्तरं. २३९०. ¹) A कोष°. २३९२. ¹) A सायाह्न°. २३९५. ¹) A, indicates a *lacuna* of three *aksharas*; C supplements संचारे.—²) Emended with G (*sec. manu*); A °महा×कन्दु. २३९८. ¹) Emended; A °प्यनिमिषः; *cf.* the passage ii. 126, to which evidently reference is made here. २४०१. ¹) Perhaps read °ष्वेवं.

तपोधनांल्लब्धवर्णान्धर्मवृद्धांश्च शुद्धधीः । विस्तम्भभवनस्थोऽपि शक्तस्त्यक्तुं न यः क्वचित् ॥२४०४॥
कृष्णाजिनोभयमुखीदानमुख्यैः सुकर्मभिः । धर्मकन्याविवाहैश्च यस्याभून्सत्यमायुषः ॥२४०५॥ 2405
सर्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना । सर्वयागोपकरणैर्येन विधापिताः क्रियाः ॥२४०६॥
भोगान्बुभुजिरे भव्यान्सत्रे सुचितविस्मये । यस्य वर्णाश्चतुःषष्टिः कुटुम्बस्पृष्टचेतसः ॥२४०७॥
अग्रहारगणोदग्रैर्नूतनैर्मठसेतुभिः । पुरे परिष्कृते येन द्वयोः प्रवरसेनयोः ॥२४०८॥
आद्ये प्रवरभूभर्तुः पत्तने प्रसृतविस्मयः । प्राप्तः प्रतिष्ठाप्रकर्षं यत्कृतो रिल्हणेश्वरः ॥२४०९॥
लोकान्तरगतां कान्तां कृतिनोद्दिश्य सुस्सलाम् । भल्लेरकप्रपास्थाने विहारस्तेन कारितः ॥२४१०॥ 2410
मार्जारोऽसि तिर्यगुचितद्रोहविस्मृत्यपोहतः । मृतामनुमृतायास्तत्कान्ता यः ख्यातिमागतः ॥२४११॥
तद्भर्तुरीर्ष्याकालुष्ये तस्या दूरागमा पुरः । प्रदेशो मानुषीवासीत्प्रिया क्रीडाविडालिका ॥२४१२॥
तीर्थप्रस्थानदिवसादारभ्यास्या विराविणी । उत्सृज्य भक्ष्याहृतं भोज्यं सा भुक्त्वा जीवितं जहौ ॥२४१३॥
आरोहति परां काष्ठां प्रतिष्ठाविविधाध्वना । दिद्दा नृपतिपत्नीषु मन्त्रिस्त्रीषु तु सुस्सला ॥२४१४॥
श्रीचङ्कुणविहारं या यातं नामावशेषताम् । अश्मप्रासादवेश्मादिकर्मणा निर्ममेऽधुना ॥२४१५॥ 2415
अरघट्टप्रबन्धान्धुच्छात्रशालादिकर्मभिः । तस्याः संपूर्णतां पुण्यप्रकारा निखिला गताः ॥२४१६॥
पूर्वराजकुलाखण्डस्थण्डिलव्यापिनाखिलम् । तद्विहारेण नगरं नीतं नेत्राभिरामताम् ॥२४१७॥
प्रापि प्रतिष्ठयेत्याशु यक्ष्मक्षपितया तया । विपत्तिः श्रीसुरेश्वर्यां प्राज्यसायुज्यदूतिका ॥२४१८॥
मठाग्रहारा धन्येन वल्लभाभिधया कृताः । नाभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः ॥२४१९॥
अग्रहारमठांस्तद्वदुदयः कम्पनापतिः । कृत्वापि स्वाभिधामेव तत्संबद्धां सदाभृणोत् ॥२४२०॥ 2420
उदयश्रीद्वारपतिना सह ब्रह्मपुरीगणैः । कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः ॥२४२१॥
भृङ्गारतन्त्रपतिना श्रीद्वारेऽप्यग्र्यजन्मना । प्रत्यष्ठापि मठोद्यानदीर्घिकाघनघात्मना ॥२४२२॥
स्नानकोष्ठमठब्रह्मपुरीसेत्वादिकर्मणा । सोऽलंचकारालंकारो बृहद्गञ्जाधिपो धराम् ॥२४२३॥
बुधः सदौषधीशान्तिहेतोर्जातः कलावतः । यः कविर्दानवर्त्मं च ख्यातस्त्यागेन योजयत् ॥२४२४॥
नृसिंहसेवी निःसिंहहिरण्यकशिपुप्रदः । वराहसमये दत्तगौश्च योऽपूर्ववैष्णवः ॥२४२५॥ 2425
भट्टारकमठाभ्यर्णे पूर्णवार्धाश्रित प्रहिः । मठः भृङ्गारभट्टस्य ख्यात्यानौश्चित्ययोज्झितः ॥२४२६॥
सांधिविग्रहिको दार्वाभिसारोर्वीभुजोऽकरोत् । अष्टमूर्तेर्जह्ननामा प्रतिष्ठां पुण्यकर्मठः ॥२४२७॥
पुष्पाकरप्रणयभूः सुभगा विभूतिरेकस्य हन्त करवीरतरोर्द्रुमेषु ।
पुष्पाणि यस्य सफलीकुरुते स्वयं तत्प्रादुर्भवत्किमपि लिङ्गमनङ्गशत्रोः ॥२४२८॥
त्रिभूत्या संविभक्तेषु भूभुजाखिलमन्त्रिषु । उत्कर्षकोटिं भुट्टाख्यः परं अल्हानुजोऽर्हति ॥२४२९॥
स्वयंभूः प्रकटीभूय पूजां स्वीकुरुते स्वयम् । ज्येष्ठरुद्रो वसिष्ठस्य यस्य वा बालकेश्वरः ॥२४३०॥ 2430
सविहारमठोदग्रवेश्मभिः कलुषोज्झितम् । तेन तत्र कृतं भुट्टपुराख्यं पुटभेदनम् ॥२४३१॥

२४०४. [1]) Emended with C; A तपोधनाक्ष°. २४१०. [1]) Thus A; cf. vii. 1239, where बलेरकप्रपा°. २४१३. [1]) Emended with C; A उत्सज°. २४१४. [1]) Emended; A °भुवा. २४२५. [1]) Doubtful emendation; A °कशिपुप्र:, without indicating the *lacuna*; C °कशिपुष्मिप्र:. २४२९. [1]) Emended; A उत्कट्टकोर्टि. २४३१. [1]) Emended; A °षोज्झित:.

नगरेपि हरः प्रत्यष्ठापि भुट्टेश्वराभिधः । सरथ मडवाग्रामे धर्मविभ्रमदर्पणः ॥२४३२॥
नीत्वा प्रतिष्ठां वैकुण्ठमठादि स्वविहारभूः । रत्नादेव्या दृढं चक्रे स्वार्थप्रथनसुस्थिरा ॥२४३३॥
रत्नापुरे बहुद्वारमहार्घे निरघो मठः । धत्ते सुकृतहंसस्य स्फीतनीतंसविभ्रमम् ॥२४३४॥
मृत्युंजयो राजतेस्याः सुधाधौतान्भजन्गृहान् । जनस्यानित्यतोच्छित्त्यै श्वेतद्वीपं सृजन्निव ॥२४३५॥
गोकुलानां विधातारो गोकुले विहिते तया । गणिताः शूरवर्माद्याः सतृणाभ्यवहारिणः ॥२४३६॥
गवामव्याहतस्वैरसंचारचरकाश्चिते । तत्र वैलस्ततोयाढ्ये यदपोढामयं वपुः ॥२४३७॥
मुकुन्दस्तत्र साश्चर्यसौन्दर्यौदार्यमन्दिरम् । अथा गोवर्धनधरः सिद्धो ना विश्वकर्मणः ॥२४३८॥
मठ ¯ ¯ ¯ कृत्वा सा नन्दिक्षेत्रेकरोत्क्षितिम् । ¯ ¯ जयवनाद्येषु स्थानेषु च मनोरमान् ॥२४३९॥
दार्वाभिसारेष्वुर्वीशसुन्दरौदार्यमन्दिरम् । स्वनामाङ्कं पुरं चक्रे तया शक्रपुरोपमम् ॥२४४०॥
उद्दिश्योपरतान्मान्यमहत्तरमुखानपि । प्रतिष्ठा विविधाश्चक्रे सा राज्याश्रितवत्सला ॥२४४१॥
एवं सर्वाङ्गमामुक्तालंकृतेरथ स क्षितेः । विशेषकाभं भूभर्तृत्रपा स्वमकरोन्मठम् ॥२४४२॥
अनुरक्तेन यो दत्तभूरिग्रामो महीभुजा । तज्ज्ञैरारोपितः ख्यातिं मुख्यः सिंहपुराख्यया ॥२४४३॥
व्यभात्कारपथेशस्य दौहित्रः सिन्धुजान्द्विजान् । निबिडान्द्रविडांश्चात्र प्राक्सिद्धच्छत्रमध्यगान् ॥२४४४॥
किं वा मठादिनिर्माणस्तुत्या तस्य व्यधत्त यः । भूयः सग्रामनगरं कृत्स्नं कश्मीरमण्डलम् ॥ २४४५॥
जीर्णारण्यसधर्मायं कालदौरात्म्यतो भवन् । देशो धनजनावासैस्तेन भूयोपि योजितः ॥२४४६॥
आरम्भात्प्रभृति क्ष्मापे दीक्षितेभीष्टदस्तिषु । शिल्पिप्रायैरपि प्रायो मठदेवगृहाः कृताः ॥२४४७॥
सत्कोशांशुकरत्नादौ निरत्ययेन भूभुजा । साधारणीकृते पौरास्तांस्तांश्चक्रुर्महोत्सवान् ॥२४४८॥
अकाण्डतुहिनापातोदीपाद्यैरप्युपद्रवैः । नष्टेषु शालिषु क्षीणं सुभिक्षं तत्र न क्षणे ॥२४४९॥
अद्भुतं त्वाभवद्रात्रः श्रुता यन्निशि रक्षसाम् । केत्वाद्युत्पातजातं च दृष्टं नष्टाश्च न प्रजाः ॥२४५०॥
कोष्ठेश्वरानुजश्चुडुनामा विहितविप्लवः । आहवैर्गूढदण्डैश्च राज्ञा निन्येन्तकान्तिकम् ॥२४५१॥
चक्रे त्रिक्रमराजादीन्भूपानुन्मथ्य पार्थिवः । प्ररोहं गुल्हणादीनां राज्ञां वल्लापुरादिषु ॥२४५२॥
प्रजेशान्कान्यकुब्जादावजय्येण नृपार्यमा । स व्यधाद्भव्यभूभोगवैभवानभिमानिनः ॥२४५३॥
विद्योतमाने निश्चौर्यैर्मन्त्रिस्तत्रैवमेकदा । भेजे जीवितदारिद्र्यं दरद्राजो यशोधरः ॥२४५४॥
स भूम्यनन्तरोप्यन्तरज्ञो राज्ञोतिसेवया । विपत्तौ प्रकृतिक्रान्तसंतानश्चिन्त्यतामगात् ॥२४५५॥
निकृत्यास्य निजामात्यो विड्डसीहाभिधो यतः । संभुज्य दयितां राज्यमग्रीढतनयेग्रहीत् ॥२४५६॥
वशीकृत्य शनैर्देशं नाममात्रनृपं शिशुम् । उच्छेत्तुमिच्छयावत्तं स जिघृक्षुः स्वयं क्षितिम् ॥२४५७॥
अन्योमात्यः पुरस्कृत्य यशोधरसुतं परम् । तावत्तेन समं भेजे पर्युकाख्यो विपर्ययम् ॥२४५८॥युग्मम् ॥

२४३८.—२४३९. ¹) The last two *pâdas* of verse 2438 and the following verse are found in the above, mutilated form in A at the foot of fol. 290, having been added subsequently by $A_1$; C reads: मठप्रतिष्ठां कृत्वा सा नन्दिक्षेत्रेऽकरोत् स्थितिं । विहारान यवनाद्येषु स्थानेषु च मनोरमान्. २४४०. ¹) The first two *pâdas* of this verse have been subsequently added by $A_1$ at the top of fol. 291.—²) Emended; A दार्वासारे°; C दार्वागारिष्वप्नु°. २४४५. ¹) Emended; A सङ्ग्राम°. २४४९. ¹) Thus $A_1$ originally; corr. by $A_1$ to शालिष्वक्षीणं. २४५१. ¹) Emended with C. A निन्येन्तिका°. २४५३. ¹) Emended; A प्रजेशा×का°. २४५८. ¹) $A_1$ २. २४५७. ¹) Emended; A °मात्रशिशुं नृपह.;

कश्मीरान्प्रस्थितः कृत्वा द्वैराज्यं तत्र कुर्वति । उत्सृज्य सज्जपालादीन्सर्वकार्यभरक्षमान् ॥२४५९॥
देवाकप्रतिपत्त्यान्याभिधमौग्ध्यनिरुद्धधीः । सर्वाधिकारासारोपान्मन्यमानोभिमानिताम् ॥२४६०॥ 2460
पर्युकाजर्यतः साज्जेरभीष्टमनुजं निजम् । प्रविश्वस्तोनुमन्त्रित्वं मन्त्रज्ञोप्यभजन्नृपः ॥२४६१॥तिलकम्॥
अपूर्वमण्डलारम्भाबाटोपायासशालिनः । क्व सर्वंकषनिष्कम्पप्रतिभाः कार्यवेदिनः ॥२४६२॥
क्व बालबालिशप्रायो नष्टव्यवहृतिर्जनः । धिक्परीपाकविषमं स्वाच्छन्द्यं मेदिनीभुजाम् ॥२४६३॥युग्मम्॥
कार्यापेक्षविपक्षैः स्वैरिच्छन्त्युद्धिक्षताच्छिदाम् । सैन्यक्ष्मादुर्गकोशाद्यैर्न – शान्त्यन्तरक्षताम् ॥२४६४॥
प्रक्रियामात्रतो मन्त्रं गृह्णन्ति क्षितिमन्तराः । कृतसाहायकैरेव भित्त्वा भिन्नमुखा द्विषः ॥२४६५॥ 2465
युक्त्यारब्धविधौ तत्र वैरिसाहायकग्रहे । क्व वैधेया बकमायाः कार्यसंदर्भवेदिनः ॥२४६६॥
दरद्राजद्रुमोन्योन्यभेदकूलक्षयाद्युतः । कर्तुं नाशक्यतामीदैः स्रोतोभिरिव मध्यगः ॥२४६७॥
पर्युकात्संकटे कार्ये तं नमुल्कोचमिच्छतः । स दुग्धघातमादातुमप्यासीदलसक्रमः ॥२४६८॥
पर्युकेण समं विड्डसीहः संधिं निबद्धवान् । यथागतं गते साज्जौ कश्मीरेन्द्रमहीभुजम् ॥२४६९॥
सर्वाधिकारप्रथमाचिरसंचारभूरहः । प्रतङ्के तत्र भृङ्गारो मृत्युसौहित्यकार्यभूत् ॥२४७०॥ 2470
आ लक्ष्मकान्तात्सर्वाधिकारोस्यादद्वितीयता । वृत्त्वा ततस्तु शतधा निर्झराम्भ इवाभवत् ॥२४७१॥
अन्येप्यमात्याः सांमत्याज्जग्मुर्माहात्म्यभागिनः । प्रमर्दं समये तस्मिन्दैवात्किमपि लेभिरे ॥२४७२॥
प्रशंसामानृशंसस्य किं विदध्मो धराभुजः । मृतामात्यार्भकापत्यं निधत्ते यः पितुः पदे ॥२४७३॥
प्रवर्तिता त्वमात्यानां भृत्यैः पद्धतिरञ्जुता । निर्विलक्ष्याः प्रभोर्लक्ष्मीं जहुः स्वगृहिणीमिव ॥२४७४॥
भूभर्तुः प्राभृतीकृत्य मृतस्य स्वामिनः श्रियम् । संतानस्य विभूत्यर्थं कृत्वा कार्यं हि तेहरन् ॥२४७५॥ 2475
गङ्गाधिपे त्रिभ्वनाम्नि विपन्ने रक्षिता परम् । एकेन सहजाख्येन सहायानां महार्थता ॥२४७६॥
नाध्यारुरोहाधिकारं पार्थिवेनार्थितोपि यः । स्वामिसूनोष्टिष्टनाम्नो बुद्धौ साहायकं व्यधात् ॥२४७७॥
निष्ठायामप्रतिष्ठस्त्वं दृष्ट्वापि प्रभविष्णुभिः । धिक्परंपरया भृत्याः प्रावर्धन्तेधिकाधिकम् ॥२४७८॥
आसीदाचमनोपयोगि कलशे भुजंगमल्लकुनकान्ताङ्घ्रिक्रमहार्थयाद्वररिपोस्त्रैस्रोतसं यत्पयः ।
शंभुस्तन्निदधे स्वमूर्धनि जडेष्वेकप्रयुक्तादृतौ स्युः सर्वेप्यवशा गतानुगततया गाढादराः स्वामिनः ॥२४७९॥
सुज्जिर्निर्वासनप्राप्तप्ररोहो दुर्नयद्रुमः । साज्जिजायाकृतान्वायः क्रमेणासीत्फलोन्मुखः ॥२४८०॥ 2480
द्विशाः समाः समन्युः स विड्डसीहस्ततोभवत् । अकुण्ठराज्यायुत्कण्ठं दूतैरकृत लोठनम् ॥२४८१॥
दूरादखण्डितोत्थानः प्रूरमाश्रित्य भूपतिम् । जीर्णकृषिवणिज्यादिकर्मणा स सबान्धवः ॥२४८२॥
दरदां मन्त्रिणां जातज्ञातेयैरभियोगभाक् । चक्रेलंकारचक्राद्यैर्डामरैः सह चक्रिकाम् ॥२४८३॥युग्मम्॥
सोम्बाद्रिदुर्गस्वाम्यस्य प्रथमप्रस्थितौ क्षुवत् । क्षुद्रो जनकभद्राख्यः पार्श्वं लिप्सोर्व्यपद्यत ॥२४८४॥
कर्णाहकारावभवस्त्याने स्थाने विलोक्य तम् । प्रसिद्धं कस्यचिद्द्रोहे बुद्धिः कस्यापि साधुता ॥२४८५॥ 2485

२४६१. ¹) Emended; A सज्जे°.—²) $A_1$ ३. २४६३. ¹) A °बालि°.—²) $A_1$ २. २४६४. ¹) Thus A; perhaps read क्षितान्तरम्°, C म शांसन्त्य°. २४६६. ¹) Emended; A apparently वैधेवान्यकमायान्कार्य°, as read in R C. २४६७. ¹) Emended; A °न्योन्य भेद°. २४६९. ¹) Emended; A सज्जौ. २४७१. ¹) Emended with G (*sec. manu*); A निर्भरा. २४७३. ¹) Emended with C; A °मात्यर्भका°. २४८०. ¹) Emended; A सुज्जिर्नि°. २४८२. ¹) A दूरा–खण्डि°.—²) Emended; A जीवत्कृषि°. २४८३. ¹) $A_1$ २. २४८४. ¹) Doubtful emendation; A साम्बाद्रि°.

तं तथा विपुलारम्भमपि शाठ्यादसंभ्रमम् । प्रविविक्षुमुपैक्षिष्ट कौसीद्यानुद्यमो नृपः ॥२४८६॥
पोषिते प्रेषितश्रीकैर्हास्यिपञ्जे विप्रवैविभिः । अथोदयद्वारपतिः प्रैषि विश्वंभराभुजा ॥२४८७॥
संगृहता समूस्तेनं[1] पुरे शंकरवर्मणः । ग्रामोलंकारचक्रस्य पार्श्वमभावि लोठनः ॥२४८८॥
अपि विग्रहराजाख्यः सूनुः सुस्सलभूपतेः । भोजः सल्हणजन्मा[1] च भुतौ तेन सहागतौ[2] ॥२४८९॥
अथोपह— —[1] स्थान एव तेषां स सत्वरः । मार्गं बहुदिनोल्लङ्घ्यमेकेनाह्ना व्यलङ्घयत् ॥२४९०॥
सयूथ्यकन्थायथनाखिडैर्यातो विधेयताम् । तदास्कन्दहतस्पन्दः स पलायिष्ट डामरः ॥२४९१॥
सिन्धोर्मधुमतीमुक्ताभिया अन्तःस्थितं[1] ततः । शिरःशिलाभिधं कोट्टमथ तैरधिशिश्रिये ॥२४९२॥
गहने श्रुडितः कोट्टे स्थितः किं वा स इत्यसौ । न निश्चिकाय द्वारेशो भ्राम्यन्दीर्घासु भूमिषु ॥२४९३॥
अथोपालब्धदुर्गारोहणेऽस्मिन्नशङ्क्यत । दैवेनापि न भूभर्तुः प्रभावो निष्पराभवः ॥२४९४॥
उत्थानोन्मुखतां सर्वेष्वपि स्पञ्जे तत्र दस्यवः । पाल्वलास्तिमयो वर्षपृथक्कृत इवाभजन्[1] ॥२४९५॥
तैस्तिल्लकादिभिर्गूढवैकृतैरथ लोठनः[1] । पार्थ्वीहरिः[2] पुनश्चक्रे मायाचतुरचाक्रिकैः[3] ॥२४९६॥
पुरग्रामादिदग्धारमसाध्यमथ धावताम् । पदे पदे कृच्छ्रगतं स्वपक्ष्यास्तमरक्षिषुः ॥२४९७॥
दिक्चक्रे निपतेर्भ्राम्यन्नश्वारूढयः स सर्वतः । कल्पात्ययोदयी ब्रह्मपुत्रः केतुरिवाभवत् ॥२४९८॥
भ्रान्तैरमात्यैर्निर्बन्धे संधौ कालानुरोधतः । मेने मडवराज्योर्वी हारितेवाखिला जनैः ॥२४९९॥
असंवृत्तप्रतीकारतयारोहस्य वैरिषु । तदन्तरेव संमन्त्र्य धन्यं प्रास्थापयन्नृपः ॥२५००॥
तस्कन्धारोपिते[1] कार्ये प्रीडां गच्छेत्तटस्थताम् । विपर्यासमथ द्वाराधीश इत्यभ्यधाज्जनः ॥२५०१॥
भिक्षुर्मल्लार्जुनस्त्वासीदेक एव श्रवस्त्वमी । संहता हन्त दुःसाधा दस्युभिरयखिलाः प्रजाः ॥२५०२॥
द्वाराधिपस्त्वहेवाकव्यवहारो महीपतेः । सिद्धिं स्वस्यामसिद्धयापि वाञ्छन्नद्योगमोभवत् ॥२५०३॥
एकाकी यः किल न भजते मूढतां भर्तृकार्ये नौदासीन्यं भयति च रुपा बद्धधीने च तस्मिन् ।
निर्हेवाकव्यवहृतितया साध्यसिद्धिं किलेच्छंस्तावृङ्कन्त्री प्रभवति परं नाल्पपुण्यस्य राज्ञः ॥२५०४॥
पद्मचन्द्रे मृते तस्यानुजं राजोपवेशने । न्यधाद्यं पद्मचन्द्राख्यं सोप्यारब्धे विनिर्ययौ ॥२५०५॥
द्विवाहुकादयो मुख्य— — —[1]: सह गायकैः । धन्यमेवान्वयुर्वाप्याथान्ये राजोपजीविनः ॥२५०६॥
धन्यादिषु तिलग्रामं कोटसिन्धुतटाश्रयम् । भव— — —[1]द्वारेशो दुर्गस्थः पृष्ठपद्धतीः ॥२५०७॥
हठप्रवेशायोग्याजिमुख्यहेवाकवर्जितः । शोषयन्द्विषतो धैर्यगम्भीरं स व्यवाहरत् ॥२५०८॥
कुठारिकादिभिः कारुवृन्दैर्मन्दिरपद्धतीः । धन्यो मधुमतीतीरे नगरस्पर्धिनीर्व्यधात् ॥२५०९॥
निर्ध्वान्तं द्रुमसंबाधं सनिकेता वनस्थलीः । कटकं सर्वभोगाढ्यं शक्तः परिवृढोकरोत् ॥२५१०॥
देशे भूरितुषारोपहिमर्तौ भाग्यसंपदा । भूभर्तुरभियोग्यैव भूरभूद्धानुभूषिता ॥२५११॥
भुवनाद्भुतसंभारप्रेषणं विजयैषिणः । हैराज्यमीलिताक्षेपि काले राज्ञो न खण्डितम् ॥२५१२॥

२४८८. [1]) Emended; A च मूर्तेन. २४८९. [1]) Emended; A सुल्हण°.—[2]) Emended with C; A °गता. २४९०. [1]) Thus A; perhaps read अथोपहस्त्या उत्थान; cf. viii. 2513; C अथोपचित उत्थान. २४९२. [1]) Conjectural reading; A °भियाग्रन्त-स्थितं; C (sec. manu) °भिय अन्तो स्थितं. २४९५. [1]) Doubtful emendation; A °भवन्. २४९६. [1]) Comp. for this name viii. 2799. 2912. 3318.—[2]) Emended; A पा हरिः; cf. viii. 2748. 2750. 2793. 2837.—[3]) Emended; A °क्रिके:. २५०१. [1]) A तस्कन्धा°. २५०६.[1]) A does not indicate the *lacuna*; C मुख्यास्थानेः. २५०७.[1]) Thus A; perhaps read with C भवत्स्वगच्छद्दा°.

उत्थान एवोपहर्ति[1] भवे यात्यत्वगात्परम् । भारोद्विपीडितमाभ्याक्रन्दः शान्तिचक्रं[2]पमाम् ॥२५१३॥
दीर्घप्रवासनिर्वेदाद्वलितान्[1]दर्शयन्नृपम् । स्थास्नूंश्च तोषयन्दायैः स्थैर्ये निन्ये नृपश्चमूः ॥२५१४॥
इत्थं त्रिचतुरान्मासांस्तिष्ठद्भिरपि निष्ठुरैः । नैवादातुमशक्यन्त कटकैः कोट्टसंश्रयाः[1] ॥२५१५॥
तेषां हि शीतधासारनिरोधादीनि कृच्छ्रताम् । अप्रियाणि न जातानि दैन्यदायीनि कानि चित् ॥२५१६॥
त्रिकोटीवसुधारान्ते स्वविभूतिप्रकाशनम् । तस्थुरङ्कुरितोल्लासाः पर्वता इव डामराः ॥२५१७॥
कृषिं कृषीवलैर्वेदपाठमुत्सृज्य च द्विजैः । उष्णिष्णसज्जैर्ग्रामेषु सर्वतः शस्त्रमाददे ॥२५१८॥
प्रतीक्षमाणाः प्रालेयप्रलयं मार्गभूभृताम् । दारदास्तुरगानीकैः सज्जैस्तस्थुर्जिगीषवः ॥२५१९॥
मिहिकासंहतेः[1] कालतूलतल्पाकृतेर्दधत् । पातभीतिं जनो राजसेना शश्वदवेपत ॥२५२०॥
इत्थं प्रत्यर्थिसामर्थ्यपरमार्थपरीक्षणात् । क्ष्माभृन्मिथ्यैवमारेभे संदेहं च जयेऽभजत् ॥२५२१॥
वैदग्ध्यदिग्धमनसामयमेक एव कोऽप्यस्ति बन्धनविधेरुचितः प्रकारः ।
येनात्मना किल विशङ्कितशक्तयस्ते मुग्धेऽपि वैरिणि विचारहतोद्यमाः स्युः ॥२५२२॥
प्रमादमात्रसाराश्च त्रसेत्परिकरादरैः । स्वयैव तस्य त्रिक्ष्येत सिद्धिश्चिन्तान्धया धिया ॥२५२३॥
विध्येदाशु शिलीमुखैः प्रतितरेत्पत्त्रैरवस्कन्दनं बध्नीयात्तदिदं गुणैः परिकरैर्मिथ्या प्रसिद्धैरिति ।
स्याच्चेदम्बुरुहं द्विपस्य भयकृच्चिन्तासहैः साहसं प्रत्यूहेत ततो निजैरपघनैरप्येतदुन्मूलने ॥२५२४॥
लोठनार्थोऽपि कर्णाहान्[1]निस्तीर्णैस्तैः कथंचन । प्राप्तेऽलंकारचक्रेऽपि राज्यमशायि निर्जितम् ॥२५२५॥
मिथ्यैव प्रथिता कन्था स्वयूथ्यैः कथमन्यथा । तस्मिन्नमन्दमास्कन्द धावन्द्वाराधिपो ददौ ॥२५२६॥
प्रत्यर्थिस्थित्यसामर्थ्यात्ततः कोट्टं व्यसर्जयत् । स राजबीजिनस्तांश्च परेद्युः स्वयमन्वगात् ॥२५२७॥
कोट्टाद्रिः सलिलस्यान्तः कृशोधः[1] पृष्ठैर्थ्यभाक् । स तैर्वैसारिणं[2]प्रासच्यमो बक इवैक्ष्यत ॥२५२८॥
निःसामर्थ्यं तद्विलोक्य गजागारमिवागजम् । तत्यजुर्विजयाशंसां भयं चोदवहन्हृदि ॥२५२९॥
ततः शरैर्[1]दृप्तद्वैर्बाध्याश्चेतो विरोधिनः । अर्गलो रक्षणमितो रक्ष्या यन्त्रोपला इतः ॥२५३०॥
इत्थं स तैरभिदधद्वैर्यादादाय[1] डामरः । मेने स्वगुप्तिमात्रार्थी न युद्धे बद्धनिश्चयः ॥२५३१॥युग्मम्[2]॥
ततः कन्दलितास्कन्दे तिलग्रामे द्विषद्बले । प्रतीकाराक्षमे तस्थौ ते चिन्ताक्षामतां दधुः ॥२५३२॥
विस्रब्धावितुमप्रशासौष्ठवो लोठनः पुनः । डामरं कृत्यसंपूर्णमगूढं तमगर्हत ॥२५३३॥
भोजंस्तु[1] द्विजितं यत्नो ग्रोहो रोहेदिति ब्रुवन् । दृष्ट्वा पितृव्यं तं व्याजस्तुत्या नित्यमुपाचरत् ॥२५३४॥
विमुखे लोठने कुण्डशाखस्तस्य तु सान्त्वनैः[1] । मेने मन्त्रक्षतां किंचित्सोवार्तिष्ट[2] च संविदि ॥२५३५॥
हन्यान्मां भूभृदित्येष यातेष्वेतेषु संत्यजेत् । नास्मानुक्त्वेत्यरीत्सीत्स पितृव्यं गमनार्थनात् ॥२५३६॥
स्वव्यस्मान्न च सर्वेषु वेष्टितेषूत्कटा द्विषः । पृष्ठकोपमसंभाव्य कुतश्चिन्निश्चलोद्यमाः ॥२५३७॥

२५१३. [1]) Doubtful emendation; A एवोपह भव; C एवोपहतभवे.—[2]) Emended; A °क्रन्द शान्ति° (the letter क is of unusual shape and resembles द्रा); C शान्तिचक्र°. २५१४. [1]) Emended; A चलितां; another possible emendation would be चलिता दर्शयन्नृपम् । स्थास्नूंश्च. २५१५. [1]) Emended; A संश्रयाः. २५२०. [1]) Emended with G (*sec. manu*); A हिमिका°. २५२५. [1]) Thus A; cf. कर्णाहका° viii. 2485. २५२८. [1]) Emended; A कृशोध:.—[2]) Emended with C; A सैवैसारण°. २५३०. [1]) Emended; A शरैर्द्विष°. २५३१. [1]) Emended; A तैरभिदधैर्या°; C तैरभिदधैर्य्यादाय°.—[2]) A₁ २. २५३४. [1]) Emended; A भोजं; R भोजो. २५३५. [1]) Emended; A सान्त्वने:; C सान्त्वने.—[2]) Doubtful emendation; A °स्तवर्तिष्ट च; C °स्तमवर्तिष्ट सं°.

व्याहितेन्धुः सिञ्चेत्त्वदेकं त्वज माश्रितः । अन्यांश्चान्यानानीय दरदो वा जवेन वः ॥२५३८॥
बन्धनं त्वपनेष्यामि युक्तमित्युक्तवांश्च तम् । डामरं विदधे किंचिदिव सांमत्यमाश्रितम् ॥२५३९॥
विमोक्ष्यामि क्षपायां त्वामद्य श्वो वेति तं ब्रुवन् । स त्वसंक्षीणदाक्षिण्यो विप्रलेभे प्रतिक्षणम् ॥२५४०॥
अध्वरोधे ह्युरस्थैर्यावदक्रूनेरिभिः । बाह्यमामाहतैरथैस्ते त्वहान्यत्यवाहयन् ॥२५४१॥
दुरुदर्कमथाशङ्क्य समयं ते व्यजिज्ञपन् । धन्यादयोऽहितैः संधिर्विधेय इति भूपतिम् ॥२५४२॥
तैस्तैर्निमित्तैः संधानमविधेयं विदन्नृपः । तानादिदेश कर्तव्यं कोट्टाट्टालकवेष्टनम् ॥ २५४३ ॥
संदिदेश च दायादा मल्लेरन्वयातिमागताः । निजास्पदे नाक्रमति दर्पोत्कोचेथ डामरे ॥ २५४४ ॥
भूत्वा कठोरेर्ष्यारम्भानिष्ठा निःसौष्ठवा ध्रुवम् । क्रियातिपत्त्युपालम्भैर्यास्यामोऽनुशयं विशाम् ॥२५४५॥
नास्त्यसहर्षदेवध्वंसमाहात्म्युद्यमं ततः । दुग्धप्रवाहं प्राप्स्यस्त्वं भुक्त्वेत्यन्योऽपि तप्यते ॥२५४६॥
प्राभव्यं प्राभवान्सर्वो निजैः कृत्यैः शुभाशुभैः । क्रियातिपत्तिर्लोकेऽत्र त्रैलोक्यं तु मुखेर्प्यते ॥२५४७॥
पादेषु पक्षेषु च सत्स्व नोर्व्यां न व्योम्नि वा पक्षपिपीलकस्य ।
पङ्गुत्वबन्धक्रमणं तु गर्ते किं संपदा स्यान्नियमे गतीनाम् ॥२५४८॥
सहस्रपादस्य गतेर्निमित्तमनूरुभावेऽप्यरुणः प्रजातः ।
तस्याभविष्यद्यदि पादयुग्मं ततोऽधिकं तत्किमिवाकरिष्यत् ॥२५४९॥
अपेक्ष्य साक्षितां तस्मात्कृत्स्नां कोऽहं विवेष्ट्यताम् । प्रयातु तत्रैवास्माकं तेषां च पुरुषायुषम् ॥२५५०॥
अविश्रान्तो वातो दहन इव सोऽयं जनयति प्रसक्तिं सातत्याद्दलयति कुलाद्रीनपि जलम् ।
प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढसुदृढा फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् ॥२५५१॥
क्रूरां नरपतेराज्ञां श्रुत्वा धन्यादयस्ततः । कोट्टप्रतोलीं कूलं तं त्यक्त्वाप्यारुरुहुर्जवात् ॥२५५२॥
कथं युद्धं विधास्यन्ति कथं स्थास्यन्ति वेति तान् । शरान्किरन्तः कोट्टस्था यावत्प्रैक्षन्त कौतुकात् ॥२५५३॥
अधः सोऽप्यूर्ध्वगान्युद्धैर्निष्पीड्य निबिडैर्व्यधात् । धन्यः प्रदेशं तात्रत्यं निकेतैः पत्तनोपमम् ॥२५५४॥युग्मम्॥
अविश्रान्तैस्ततः संख्यैरसंख्येयचमूक्षयः । प्रतिक्षणं प्रववृते सैन्ययोरुभयोरपि ॥२५५५॥
परेद्युः शारदां दृष्ट्वा संप्राप्तो गर्गनन्दनः । संक्रन्दनपुरीपौरवृद्धिं योधैर्हतैर्व्यधात् ॥२५५६॥
अलंकाराभिधो बाह्यराजस्थानाधिकारभाक् । अधृष्यो मानुषैर्युद्धैर्विरुद्धान्बहुधावधीत् ॥२५५७॥
क्व भूधरचरैः स्पर्धा वसुधातलचारिणाम् । तथापि पृतनायन्त्रानन्त्यं चिन्त्यमचिन्त्यकृत् ॥२५५८॥
अल्पीयांसः कोट्टनिष्ठा भूयिष्ठाः कटकाश्रयाः । अतः पूर्वे बहून्घ्नन्तोऽप्यासन्कृत्याल्पया क्षताः ॥२५५९॥
श्लिष्टद्वाराररिपटं छिद्रैः पीडितमाहवैः । मीलिताक्षमिव त्रासात्ततो दुर्गमजायत ॥२५६०॥
गोभृभेदान्तरद्वैधमुखच्छिद्रानुसारिणः । धन्यादीन्वीक्ष्य विश्वासं कोट्टस्था नोपलेभिरे ॥२५६१॥
निद्राच्छेदार्थमन्योन्यं क्रोशन्तो नास्वपन्निशि । स्वपन्तोऽह्नि तु निःशब्दशून्यं कोट्टमदीदृशन् ॥२५६२॥

२५३८. [1]) Emended with G (*sec. manu*); A वा॰वेन; C ववेन. २५४०. [1]) Emended with C; A श्वो.—[2]) Emended with C; सत्वसङ्क्षी°. २५४५. [1]) A कठो॰ष्या°; C कठोरेऽष्या°.—[2]) Could be read in A also °निष्ठानि°.—[3]) A °स्यामो॰शयं C °स्यामोऽसंशयं. २५४६. [1]) Emended; A प्राप्स्यन्स. २५४७. [1]) Emended; A °लौके त्रैलो°.; C °लौकेऽपि. २५४८. [1]) Emended with G (*sec. manu*); A गर्भे. २५५१. [1]) Emended; A °सौख्यन्त. २५५४. [1]) Thus A; perhaps read अधःस्थो.—[2]) A, २. २५५६. [1]) Emended with G (*sec. manu*); A °पौरयोधैर्वृद्धिं हतै°

निशासु तत्रस्तुतमा यामतूर्यरवैरपि । चटकाः कोटरगता मेघशब्दैरिवात्रसन् ॥२५६३॥
अहर्निशं भ्रमन्तीभिर्नौभिः संरुद्धपाथसः । तान्समभ्रमयन्सर्वप्रकारं राजसैनिकाः ॥२५६४॥
ते रुद्धपाथसस्तर्षशोषं कंचिद्विषेहिरे । निःसंचारास्तु संक्षीणे भोक्तव्ये क्लैब्यमाययुः ॥२५६५॥
बुभुक्षवः क्ष्मापयोग्यान्भोज्यान्भाग्योर्जितांस्ततः । कदन्नैर्नृपदायादा अशनाशंसमं व्यधुः ॥२५६६॥
दूरे स्पर्धास्तु निस्तीर्णाः क्षुधितास्तेधिकं व्यधुः । भूभर्तुर्भोगभागिभ्यो भृत्येभ्योप्यन्वहं स्पृहाम् ॥२५६७॥
व्यूहेष्वस्मान्न पर्याप्तमकार्यमिति भाषिणम् । भोजं व्यधान्मध्यभृङ्गे दुर्गस्याथ स तं पृथक् ॥२५६८॥
एकस्य वार्द्धकाद्देवापुत्वादपरस्य च । जानन्नयोग्यतां मेने द्वैराज्यार्हं तमेव सः ॥२५६९॥
विनामुं यामयोः सम्यक्संरम्भेरन्न वैरिणः । इति मिथ्या प्रथां निन्ये तद्विनिःसरणं बहिः ॥२५७०॥
कान्तालंकारचक्रस्य काकुन्ती क्षयमित्वरी । चक्षूरागात्स्वच्छचन्द्रे सान्द्रखेदार्द्रतां गता ॥२५७१॥
बहिराभ्यन्तरं भेदं नयन्ती मन्त्रमायया । साल्हणेः कर्णसरणिं सर्वमन्विष्यतोन्वहम् ॥२५७२॥ युग्मम्॥
रागध्वान्तान्वितधियः प्रतिभेदभयेन सः । तस्य प्रकाशयन्नेनां गन्तुं तु प्रार्थनां व्यधात् ॥२५७३॥
क्षमाचाड्डिशिक्षितोपेक्षो मैत्रीस्थैर्ये मुदं भजन् । नागः सागस्यपि दधे बोधिसत्त्व इव कृपाम् ॥२५७४॥
प्रियामन्युः सरागेण मृत्युहेतुर्महानपि । हृदि विस्मर्यते पृष्ठे शरभेणेव वारणः ॥२५७५॥
अथ प्रस्थापितो भोजः स्वारिशिबिरान्तरात् । यातमात्रोप्यलंकारतनयेनानुयायिना ॥२५७६॥
द्रोहेच्छया प्रयाहापि ध्वस्तसत्त्वेन सत्वरम् । व्यावृत्यारोपितो भूयः कोट्टस्थस्यान्तिके पितुः ॥२५७७॥ युग्मम्॥
निर्भर्त्स्य पुत्रं गन्तासि श्वो निशीत्यभिधाय तम् । कञ्चमस्थापयत्सोह्नि यात इत्यखिलान्वहम् ॥२५७८॥
प्रोद्यल्यानिश्चयादेकः प्रायाद्ध्रौ श्वः प्रयास्यतः । बोधितैरथ धन्याचिरजागार्यखिलैर्निशि ॥२५७९॥
प्रस्थास्नुः स निशीथेथ कोट्टाट्टालाद्व्यलोकयत् । आमतः कटके सर्वान्परितो दीपितानले ॥२५८०॥
प्रकाश्य वह्निना दुर्गं प्रतोलीनिर्गतो यथा । पिपीलकोप्यलक्ष्यस्त्वं नोन्मुखानां द्विषां व्रजेत् ॥२५८१॥
ज्वालाप्रकाशचाञ्चल्याद्विलोला इव रक्षिताः । न्यषेधन्मूर्धकम्पेन साल्हणिं साहसाहृताः ॥२५८२॥
तद्गन्तुमक्षमं क्षिप्रं क्षपामात्रे स डामरः । अधोवातीतरच्छ्वभ्रमालिङ्गितवटाकरम् ॥२५८३॥
क्षेमराजाभिधानेन डामरेशेन सोन्वितः । शिलां वितर्दिकातुल्यामध्यास्त श्वभ्रमध्यगाम् ॥२५८४॥
आरुह्यासनमात्रे तां पर्याप्तां पातभीतितः । निर्निद्रौ पञ्चरात्रीस्तावत्यत्राहयतामुभौ ॥२५८५॥
निर्वर्तितप्राणयात्रौ करस्थैः सक्तुपिण्डकैः । तत एव व्यजहतां विष्ठां नीडादिवाण्डजौ ॥२५८६॥
अव्यक्तव्याकृती चित्रालिखिताविव तौ स्थितौ । वीक्ष्यारिकटके लक्ष्मीं प्रष्ठाविस्मयमीयतुः ॥२५८७॥
तयोराश्रीयत स्फीतशीतविस्मृतिकारिणा । जयसिंहप्रतापाभिसंतापेनोपकारिता ॥२५८८॥
षष्ठेह्नि तत्र निःशेषीभूतभोक्तव्ययोरथ । क्षतक्षार इवारम्भि तुषारं वर्षितुं घनैः ॥२५८९॥
अगूढतोचिते दन्तवीणावाद्योद्यमे तथा । शीतासादितसादेन पाणिपादेन भ्रमता ॥२५९०॥

---

२५६४. 1) Emended with C; A तान्सससम्भ्रम°. २५६५. 1) The letter ष is indistinctly written; C °शोषं; R °शोषं. २५६६. 1) Emended; A °समेत्यधुः. २५७२. 1) A₁ २. २५७३. 1) Emended with C; A प्रार्था°. २५७६. 1) A °शिबिरा°. २५७७. 1) A₁ २. २५७८. 1) Emended with C; A निर्भत्स्यं. २५८२. 1) Emended; A °प्रकाशं चाञ्च°. २५८९. 1) Emended; A °घनः. २५९०. 1) Emended with C; A पाणिपादेन.

तावच्चिन्तयतामद्य भुञ्जीताभिहतौ ध्रुवम् । पतिष्यावोऽरिकटके पाशबद्धाविवाण्डजौ ॥२५९१॥
क पृथुकुर्वः कस्य वार्तां विदितौ यो विनिर्हरेत् । ततः पङ्कान्तरामग्नौ यूथपः कलभाविव ॥२५९२॥
विषमस्थावपेत्थं तौ नक्तमभ्यर्थ्य डामरः । आरोप्य रज्ज्वावसथे शून्ये स्थापयति स्म सः ॥२५९३॥
कृतशीतप्रतीकारौ पलालानलसेवनैः । दुःखं व्यस्मरतां तत्र निद्रया चिरलब्धया ॥२५९४॥
ततोऽप्यभ्यधिका व्यापज्जज्ञे लोठनविग्रहौ । अचक्षुष्यौ जनास्निग्धां[1] गिरमप्यापतुर्न यौ ॥२५९५॥
यवकोद्रवपूपादि तयोः सतुषमश्नतोः । गात्रैर्वस्त्रैश्च वैवर्ण्यं शुद्धिवन्ध्यतया दधे ॥२५९६॥
धन्योऽलंकारचक्रस्य क्षीणभोज्यस्य[1] सर्वतः । स्वीचकारान्नदानेन तुल्यौ होल्यग्रास्करौ ॥२५९७॥
ततः स दूतैर्विक्रेतुमङ्गीचक्रे नृपद्विषः । बुभुक्षाक्षुभितो भृत्यभेदभीतश्च डामरः ॥२५९८॥
दुस्तरव्यापदुद्रेकद्रुतसत्त्वतयात्यजत् । पापोपलिप्तचित्तमधर्माकीर्तिसाध्वसम् ॥२५९९॥
भूपतेर्विद्विषच्छेदस्थापनात्स्वस्य रक्षणम् । ख्यातिशुद्धौ चिकीर्षुश्च कुशकाशावलम्बनम् ॥२६००॥
भृत्यस्योदयनाख्यस्य धिया प्रच्छादितं तथा । ररक्ष साल्हणिं भोज द्वौ तु दातुं स तत्वरे ॥२६०१॥
तं विना च तयोर्भूपाद्दण्डं जानन्नसांप्रतम् । अबाधं स्वस्य चाशेषकृत्यं युक्तममन्यत ॥२६०२॥
भोज्याभावकृतां[1] तस्य व्यापदं तत्र मन्त्रितम् । तदा नाशासिषुर्धन्यादयः संधिं विधित्सवः ॥२६०३॥
भिषाश्चित्रलिपा तेषां कस्माच्चिदभवत्ततः । किं पुनस्तेन दायादद्वये दातुं प्रतिश्रुते ॥२६०४॥
देयविश्राणनानीकोत्थानादिपणसिद्धये । भ्रातृव्यमनयद्धन्यः कल्याणमवकल्प्यताम् ॥२६०५॥
प्रबन्धं निर्बधन्नरिमुपचरञ्छादितरुषं महार्हैः संगृह्णन्नयकुटिलचेष्टं व्यवहरन् ।
स भूमिः सिद्धीनां दधदुचितकर्तव्यपरतां भवेद्यो निर्व्यूढावपि सुदृढसंरम्भरभसः ॥२६०६॥
दुःखैर्दीर्घप्रवासोत्थैरपसारितसौष्ठवाः । तदा संरम्भशैथिल्यं भूभृद्भृत्याः प्रपेदिरे ॥२६०७॥
स सत्यं सचिवोऽप्राप्यः संग्रहीतुं प्रगल्भते । कथाशरीरमिव यो निर्व्यूढौ कार्यमाकुलम् ॥२६०८॥
संधिं निबद्धं विज्ञाय सैनिकाः स्वगृहोन्मुखाः । उपेक्ष्य स्वामिदाक्षिण्यं क्षणादेवप्रतस्थिरे ॥२६०९॥
तद्विक्रीतमवाध्वानं ल्लवन्यः कार्यमन्थरः । धन्याद्याः स्वल्पसैन्यत्वादासन्कृच्छ्रगतासवः ॥२६१०॥
प्रतोलीकीलितदृशः प्रार्थितागमनाशया । तदहः सोऽभियोक्तृंस्तानदत्त्वावतापयत् ॥२६११॥
रथाङ्गाक्रन्दिनी रात्रिस्तेषां कृच्छ्रेण सागमत् । विना जीवितसंन्यासमन्यत्कार्यमपश्यताम् ॥२६१२॥
प्रयत्नसंभृते कृत्ये नष्टे मन्दतया धियः । अस्मत्संभावनादूरीकृतवाक्यादरं प्रभुम् ॥२६१३॥
नष्टानुशोचनव्याजात्तत्रधुत्युपहासिनः । सदयं नो ध्रुवं दुःस्थीकरिष्यन्त्यन्यमन्त्रिणः ॥२६१४॥
सद्यो यात्रातारतम्यात्साम्यन्तो नस्त्रपार्पणम् । कार्यनिष्ठामपश्यन्तः कुर्युर्नेत्यपरेऽब्रुवन् ॥२६१५॥
मायामेतां विहितवांस्तैः संमन्त्र्य नृपाहितैः । सिद्धसाध्योऽधुना दस्युर्हसन्नस्मान्ध्रुवं स्थितः ॥२६१६॥
अल्पेतरांस्तु संकल्पानेवं तेषां वितन्वताम् । दत्तानन्ततनुज्यानिः प्रभाता सा विभावरी ॥२६१७॥ कुलकम् ॥
प्रातश्च राजस्थानीयोऽलंकारः साहसोत्सुकः । डामरं कोट्टमारुह्य निन्ये नयभयैर्वशम् ॥२६१८॥
एकाहं गमने सोऽथ विलम्बस्तत्र वासरे । लोठनं[1] क्षीणदाक्षिण्यः स गच्छेत्यब्रवीत्स्फुटम् ॥२६१९॥

२५९५. [1]) Emended; A जनाम्लिग्धां. २५९७. [1]) Emended; A °भोज्यस्य. २६०३. [1]) Emended; A भोज्यभाव°. २६११. [1]) Emended with G (*sec. manu*); A °कीलित°. २६१५. [1]) Emended with C; A °पद्यन्त. २६१९. [1]) Emended; A लोठने.

उपन्यास्यंस्ततस्तस्य म्लानिप्रक्षालनक्षमम् । मानिनः कोपि कर्तव्यं कीर्तिव्ययनिबर्हणम् ॥२६२०॥

कालः सोयं सकलजनतालोचनध्वान्तदायी निस्तालोकप्रकटनपटुः किंतु सत्त्वप्रियाणाम् ।
अभ्रश्यामाकुलमसिलता स्वर्वधूसंगतापि व्यक्तं सर्कि विशति रभसान्मण्डलेनोष्णभानोः ॥२६२१॥

संप्राप्नुवन्ति ननु मण्डलमेकमेव क्ष्मापा जये समरसीम्नि वपुस्तु हित्वा ।
चण्डांशुमण्डलमथाभिमतानि कामं प्रेमार्द्रनिर्जरवधूकुचमण्डलानि ॥२६२२॥

नास्मिन्संततवेष्टनोल्बणतलैस्तल्पैरुदेति व्यथा मन्त्रिभ्यश्चलितैर्न चालमद्भिर्मर्मव्यथा जन्यते ।
क्रन्दद्बन्धुजनार्तनादचकितस्वान्तं न वा स्थीयते नन्वेतन्मरणं सुखस्य सुभगा काप्येव संग्रामभूः ॥२६२३॥

मार्गैः खड्गलतावितानगहनैर्यातः पिता ते दिवं भ्रातृभ्यामसिधेनुकण्टकवने भ्रान्त्वार्जिता सद्गतिः ।
वंशाक्षुण्णमिमं निषेव्य रभसादध्वानमुत्सन्नया वृत्त्या व्योम्नि विशार्कमण्डलमिह स्वान्तं च तेजस्विनाम् ॥२६२४॥

साम्राज्यं विधिनोपनीतमसकृत्क्लैब्येन यद्धारितं तत्रापि प्रशमोचिते वयसि यत्संचेष्टितं बालवत् ।
प्रायश्चित्तममुष्य लब्धमधुना तद्वैधसापादितं मा भूद्राज्यमिवैतदप्यसुलभं कर्तव्यमूकस्य ते ॥२६२५॥

राज्यं प्राप्तमपि प्रनष्टमसमोच्छिष्टाशनैर्यापितः कालः सर्वजनक्षयस्य विषये याता स्थितिर्हेतुताम् ।
इत्यासीत्किमिवोचितं प्रभवतो भिक्षाचरक्ष्मापतेर्निर्व्यूढं तु तदस्य देहविरतौ येनैव सर्वोन्नतः ॥२६२६॥

स तथोत्तेजितोप्योजो नाददे तेजसोज्झितः । न ज्वलत्यभिसङ्गेपि निर्वीर्यं वानरेन्धनम् ॥२६२७॥

शान्ताहंतस्तु संवृत्तनिद्राभङ्ग इवार्भकः । ऐच्छदुद्भयोद्वेगो रोदितुं प्रसृताधरम् ॥२६२८॥

डामरेणार्पितं नेतुं प्रवृत्तास्तं नृपाश्रिताः । तादृशं वीक्ष्य कारुण्याद्धैर्याधानार्थमभ्यधुः ॥२६२९॥

मा विषीद न देवस्य दयाचन्द्रोदयोज्ज्वले । हृदि प्ररोहति स्वैरं विकारतिमिरान्धता ॥२६३०॥

स सौजन्यसुधासिन्धुः स स्थिरस्वधुराचलः । स प्रपन्नार्तिसंतापच्छेदचन्दनपादपः ॥२६३१॥

पुण्यां मुद्रां च संलक्ष्य शारदीव सुवाहिनीम् । मूर्तिं तस्योल्बणं चेतः समाधास्यत एव ते ॥२६३२॥

निष्कलङ्कैर्विशपूर्वैर्निर्विशेषं सभाजयन् । चारित्रं लाघवभुवो ह्रियस्त्वां सोपनेष्यति ॥२६३३॥

अपकर्तॄन्विपन्मग्नान्दयमानः परानपि । क्षमापरीक्षाहेतुत्वात्स वेत्ति ह्युपकारिणः ॥२६३४॥

उक्त्वेति दृष्टलोलस्थूलकूर्चो गृहान्ततः । व्यालम्बकम्बलो गोष्ठाद्वृद्धोक्ष इव निर्ययौ ॥२६३५॥

निर्भूषणं म्लानजीर्णवस्त्रशस्त्रं निरीक्ष्य तम् । युग्याधिरूढमायान्तं धन्यो हीनततां दधे ॥२६३६॥

दीर्घास्पन्देक्षणं रूक्षघनकूर्चांसविग्रहम् । व्यलोकयद्दिवोलूकमिव नष्टं गुहागृहात् ॥२६३७॥

रेजे शैलस्थलक्लिष्टैः शिबिरोद्दीपितानलः । भूपप्रतापस्वर्णस्य कषाश्मत्वमिवागतः ॥२६३८॥

स्कन्धावारे गते वर्षत्तुषारं प्रसभं नभः । अमर्त्यभावे भूभर्तुर्विशां चिच्छेद संशयम् ॥२६३९॥

प्राक्रंस्यतेद्धिमं तावन्म्रियेरन्कुडिशाः क्षणात् । पिष्टातकान्तर्गर्तीटाः प्रविष्टा इव सैनिकाः ॥२६४०॥

एवमेकान्नविंशेब्दे दशम्यां शुक्लफाल्गुने । न्यूनाब्दषष्टिदेशीयो निबद्धो लोठनः पुनः ॥२६४१॥

दीर्घप्रवासादायातं सत्कर्तुं कटकं पुनः । निर्ममो हर्म्यमुत्तुङ्गमारुरोह महीपतिः ॥२६४२॥

---

२६२०. ¹) Emended; A उपन्यस्यंस्त°. २६२८. ¹) A₁ gloss शान्ता अहन्ता अहंभावो यस्य. २६३०. ¹) Emended; A दैवस्य. २६३७. ¹) Emended; A °कूर्च स°. २६३८. ¹) A °शिबिरो°. २६३९. ¹) A स्कन्धावारे. २६४०. ¹) Emended with G (*sec. manu*); A प्राक्रंस्य°. २६४१. ¹) A °फाल्गुणे.

यथोचितं दानमानसंभाषणविलोकनैः । संतोष्य व्यसृजत्सैन्यं धन्यादीन्प्रैक्षतागतान् ॥२६४३॥
तेषां पुनश्च दोर्दण्डमूले क्षिप्तकरं भटैः । न्यस्तेनानासिकं वासःप्रान्तेनाच्छादिताननम् ॥२६४४॥
निर्भूषणश्रोत्रपालिप्रविष्टैः श्मश्रुलोमभिः । वलक्षरूक्षैः[1] प्रव्यक्तकार्श्यक्लेशौ कपोलयोः ॥२६४५॥
तथावलोकिमुखरे पौरलोकेऽन्तरान्तरा । व्यापारयन्तं नेत्रान्तौ ह्रीस्तिमिततारकौ ॥२६४६॥
कातर्यदैन्यभीक्षान्तिक्षुद्रलक्ष्मीकटाक्षितम् । वेपमानविनिद्राङ्गं गां शीतेनार्दितामिव ॥२६४७॥
भ्रान्तामिव क्ष्मां पर्यस्तानिवाद्रीन्पतितामिव[1] । विदन्तं च दिवं शोष - - - - [2]दरच्छदम् ॥२६४८॥
दैविको[1] ऽन्तरायोऽस्तु ध्वान्तं व्योम प्रवर्तताम् । राजीकोऽभ्यर्णतां यातं याता का गत्यन्त्विदम् ॥२६४९॥
सर्वापकारकृद्राज्ञः स्थास्यामि पुरतः कथम् । पदानि संनिरुन्धानं निर्ध्यायेति पदे पदे ॥२६५०॥अन्तर्युगलम्॥
बहुलोकावृततया स्तोकसंलक्ष्यमैक्षत । प्रतीहारैरथावेद्यमानं लोठनमङ्गने ॥२६५१॥कुलकम्॥
भूसंज्ञया वितीर्णाज्ञो राज्ञा तामारुरोह सः । सभां पारिप्लवाम्भोजामिव प्रेक्षकलोचनैः ॥२६५२॥
दृष्ट्वा निर्दिष्टपार्श्वोर्वीस्थितिः पृथ्वीभुजस्ततः । अस्थात्क्षितिनिक्षिप्तजानुर्मूर्ध्नाङ्घ्रिपङ्कजे ॥२६५३॥
हस्ताम्बुजाभ्यामालम्ब्य ललाटतटमानतम् । सत्वात्संभ्रमनम्रस्य तस्योदनमयच्छिरः ॥२६५४॥
रत्नौषधीभुजोः स्पर्शः पाण्योस्तापं स चेतसः । दौर्भाग्यमहरद्देहाच्चास्य[1] श्रीखण्डशीतलः ॥२६५५॥
पुण्यानुभावात्कारुण्यभाजो भूभर्तुरञ्जसा । विश्रम्भसंभावनया स क्षणात्स्वस्थो हृदि ॥२६५६॥
मा भैषीरिति दृष्टोक्तिः सुखं संप्राप्स्यसीति वाक् । अगाम्भीर्येण भयेव मन्युर्न त्वयि सोधुना[1] ॥२६५७॥
इत्युक्ते पूर्ववैराणां भवेदुद्घाटनं कृतम् । बान्धवो नस्त्वमित्यस्मिन्परीहास इव क्षणे ॥२६५८॥
क्लिष्टोऽसीति त्वत्प्रतापप्रभावाभाषणं भवेत् । ध्यात्वेति भूभृद्दृष्ट्यास्य साध्वार्यं तु गिराकरोत् ॥२६५९॥तिलकम्॥
अभयार्थनया पाणी स्प्रष्टुं नमयतः शिरः । संस्पर्शी मौलिषु पुनर्विग्रहस्याङ्गिणाकरोत् ॥२६६०॥
का योग्यता सत्क्रियायां ममेति वदतो बलात् । अजिग्रहत्पितृव्येण ताम्बूलं स्वकरार्पितम् ॥२६६१॥
नवं हारेशभूर्वे भूषणमो च इति सस्मितम् । धन्यं पृष्ठं च पस्पर्श प्रष्ठं सव्येन बाहुना ॥२६६२॥
दाक्ष्यदाक्षिण्यगाम्भीर्यविनयाद्यैर्विभाव्य तम् । भूभृद्गुणैः परीतं स्वं लोठनोऽमन्यतावरम् ॥२६६३॥
आदिश्य सान्त्वनं धन्यमुखेनाथ[1] प्रपानतम् । पितृव्यं प्राहिणोद्धेम भ्राजिष्णु विनयाञ्जलिः ॥२६६४॥
अभियोगे च एवास्य नीतौ चिन्त्यत्यतो दृशम् । मुखरागः स एवाभूत्कलावाप्रावविप्लुतः ॥२६६५॥
नाथाति वाडवशिखिकथनेन तापं शैत्यं हिमाद्रिपयसा विशता न चाब्धिः ।
कश्चिद्गभीरमनसां सततं विषादकाले प्रमोदसमये च समोऽनुभावः ॥२६६६॥
प्रीतिस्थैर्यैर्ज्ञातियोग्यैर्थोपचारैरकृत्रिमैः[1] । क्रमाद्राजाहरल्लज्जां पौरुषभ्रंशजीवयोः ॥२६६७॥
दायादोऽद्यापदेव राष्ट्रे कष्टेऽपि मन्त्रवित् । भोजेनोत्पिञ्ज[1]सर्पस्य दन्तं सोऽन्तरचिन्तयत् ॥२६६८॥
प्रत्यासायासभीत्या स्वैरस्वच्छसंरम्भसंभ्रमैः । जिगीषुर्विद्विषच्छेदैश्चक्रे यत्निप्रजागरः ॥२६६९॥
साल्हणिः[1] स तु निस्तीर्णः[2] श्वभ्राच्छून्यगृहे वसन् । पितृव्यविग्रहोदन्तमुपलेभे न कंचन ॥२६७०॥

२६४५. ¹) A वलक्ष°. २६४८. ¹) Emended with C; A °पतिताभिव.—²) Thus A; C supplements शोषबहुशुष्कदर°. २६४९. ¹) Emended with C; A दैविको ऽन्तरा°. २६५५. ¹) Emended; A °देहवास्य; C °देहवास्य. २६५७. ¹) Emended with G (sec. manu); A मन्युना त्वयि साधुना. २६६४. ¹) Emended; A धन्वं मु°. २६६७. ¹) Emended; A °कृत्रिमः. २६६८. ¹) Conjectural reading; A भोजनोत्पिञ्ज°. २६७०. ¹) Emended; A सल्हणः.—²) Emended; A विस्तीर्णः.

राजगृहं स्वलंकारं डामरान्तिकमागतम् । पृष्ठाद्दीक्ष्याभवद्द्रोहद्रोहसंभावनस्तदा ॥२६७१॥

ददर्श च क्रमाद्दूरतया दुर्लक्ष्यविस्तृति । स्कन्धावारं बद्धमालं मार्गे नगरगामिनि ॥२६७२॥

अज्ञातेन विदूरस्थापि नृपेणाश्रितं ततः । युग्यं चासौ धन्यषष्ठयुग्ययोरन्तरैक्षत ॥२६७३॥

अचिन्तयच्च को हेतुः कटकमस्थितेरिति । युग्यारूढश्च कोऽथ स्यात्तृतीयो धन्यषष्ठयोः ॥२६७४॥

पृष्टस्तेनावदत्कश्चित्पामरोऽथ प्रमोदभाक् । संधिर्निबद्धो नगरं गतौ लोठनविग्रहौ ॥२६७५॥

संदेहीजहतद्रोहो भयमुन्मुखतां भजेत् । ज्ञातिस्नेहेन तस्यासीन्मुहूर्तमपहांस्तितम् ॥२६७६॥

सैन्ये गते शून्यतया मिलितैर्विहगैः सरित् । दयार्द्रस्तेन तौ नीतौ क्रन्दन्तीव व्यकल्प्यत ॥२६७७॥

त्वमन्य एव मे वध्याद्यास्त्वेहस्यमवेत्य ते । पुनर्नयेयुर्धन्याद्याः क्रमाद्ध्यायन्नथेति सः ॥२६७८॥

स्वं नेतुं पार्थिवचमूं प्रत्यावृत्तां निनादिनीम् । श्रुतेन्तरान्तरा घोषे निर्झरागामशङ्कत ॥२६७९॥

अथाजायत जीमूतवितीर्णतिमिरं जगत् । वन्ध्यं मध्यंदिनेनेव निशीथव्यथितश्रिया ॥२६८०॥

राधमासावधि दधुस्ततः प्रभृति वारिदाः । दीक्षां क्षोण्यां तुषारौघसत्रासूत्रणकर्मणि ॥२६८१॥

विस्रब्धघात्यभव्योऽहं निर्ब्रह्मण्यो ह्रियोज्झितः । निन्दन्स्वमिति भोजाग्रे ततो दस्युरुपाविशत् ॥२६८२॥

समयापेक्षयाक्षोभो मन्युं संस्तभ्य साल्हाणेः । सान्त्वयन्निव नास्त्यागस्तवात्रेति जगाद तम् ॥२६८३॥

ऊचे च संश्रितापत्यघात्याघापह्नवं त्वया । मानुमेतत्कृतं तत्र गर्हां नार्हसि कस्यचित् ॥२६८४॥

तत्र द्रोहस्पृहा स्याच्चेन्नानृशंस्यं भवेन्मयि । परत्रलाभवत्तस्मादियं कालानुरोधतः ॥२६८५॥

राज्ञश्च हर्षभूभर्तृवंश्या इव न वा वयम् । उच्छेद्याः किं तु संयम्या राजधर्मानुरोधिनः ॥२६८६॥

स्वस्याख्यातिस्तयोर्बाधा राज्ञश्चामार्गगामिता । शेषं मां रक्षता हन्त निषिद्धा धीमता त्वया ॥२६८७॥

इत्युक्तवन्तं तं त्यक्तलज्जाभार इवावदत् । साक्षी त्वमेव सर्वत्र ममेति सततं स्तुवन् ॥२६८८॥

क्षणेन च प्रहिणु मामधुनेत्यभिधायिनम् । तमेव हिमवृष्टयन्ते कर्तास्मीत्युक्तवान्ययौ ॥२६८९॥

त्वयि दस्युर्विपर्यस्येन्मन्थुं जानन्नभोजनम् । भोजस्तत्रेति केनापि कथितो व्यधिताशनम् ॥२६९०॥

स्पृशाथाश्च चिरात्प्राप्तमिदं विक्रीय ताविति । ध्यायञ्ज्ञात्योर्देहमांसं तयोर्भुक्तममन्यत ॥२६९१॥

दस्युस्तु हिमवृष्टयन्ते त्वां प्रहेष्यामि निश्चयात् । श्वो वाद्य वेति कथयन्द्वौ मासौ न मुमोच तम् ॥२६९२॥

मां शाल्वेह स्थितं राज्ञः कुमारश्चोर्ईमास्यये । विक्रीणात्येष मत्वेति भोजोधाद्गमने त्वराम् ॥२६९३॥

मिषं यं यं निषेधाय गमनायोदपादयत् । दस्युस्तं तं समुच्छेद्य सापराधं व्यधत्त तम् ॥२६९४॥

तेजोनाम्नो बलहरास्संजातो भ्रात्रमातुरः । अभ्यधाद्धाल्यमाशास्य लम्बकम्बलकावृतः ॥२६९५॥

तेजोविस्फूर्जितं मंचहीरोत्कर्षकपोपले । हैराज्ये सौस्सले सैन्ये पङ्क्तिपावनतां गतः ॥२६९६॥

पितुरामतया राज्ञा वर्धितस्तदनन्तरम् । एवंनकादिविषयाधीकारित्वं क्रमाद्भजन् ॥२६९७॥

---

२६७१. [1]) Emended; A राजा गृहं स्वलङ्कारडामर°; cf. viii. 2925. 2618. २६७२. [1]) Emended; A °विस्तृति.—[2]) A स्कन्धा°. २६७५. [1]) Emended; A पृष्टसेना°. २६७६. [1]) Thus A; the text of this *pâda* appears to be corrupt; perhaps read संदेहं जहतो द्रोहमयस्तु°.—[2]) भजेत् corr. by $A_1$ from भजेत. २६७७. [1]) Emended; A व्यकल्पत. २६८३. [1]) Emended with C; A संस्तभ्य. २६८७. [1]) Emended; A शेषं मां; C स्वां सर्वां. २६८८. [1]) Emended with G; A तमेव. २६९०. [1]) Emended; A दस्युर्विप°. २६९१. [1]) Conjectural reading; A विक्रीयताविति; cf. for the context viii. 2598 flg. २६९२. [1]) Emended with C; A वेति. २६९३. [1]) Emended; A राज्ञा. २६९५. [1]) Emended; A भोजो°; cf. viii. 2862 and the *vv. ll.* तेजो, भोजो viii. 1084.—[2]) Emended; A °जातं.—[3]) The text of this *pâda* is corrupt. २६९६. [1]) Emended with G; A °स्फूर्जितास्त°.

विमुखे राज्ञि नागेन खुयाश्रमभुवा कृते । तं राजवदनो नाम निजिघृक्षु ररक्ष तम् ||२६९८|| चक्रलकम् ||
आनृशंस्यं भृत्यभावाद्वलवन्यतयास्य च । प्रत्यवस्थित्यसामर्थ्यं राज्ञि सर्वे शशङ्किरे ||२६९९||
अतोलंकारचक्रेण कुर्वतोर्वर्थमर्थनाम् । द्वैराज्येच्छो राजबीजी तदा न स समर्प्यत ||२७००|| युगलकम् ||
नीतः प्रत्यक्षतां दूरस्थितेप्युदयने स तम् । विसृष्टवति बुभुक्षुस्त्यक्तुमेनं न सोशकत् ||२७०१||
राज्ञा कर्तुं विनियमं भोजस्य प्रहितो धनैः । प्राप प्रज्ञामलंकारो विषयाधिकृतस्ततः ||२७०२||
तत्पार्श्वमुद्यतं गन्तुं मां समुत्सृज्य यासि चेत् । त्यक्ष्यामि तदसूनेवमूचे भोजस्तु डामरम् ||२७०३||
श्वस्त्वां प्रभाते द्रक्ष्यामीत्येतावत्तत्र जल्पति । कोट्टादनुक्त्वैव निशस्तुर्ययामे विनिर्ययौ ||२७०४||
घनघर्षेऽप्यमर्षेण मार्गान्वेषी गवेषणम् । यावच्चक्रे क्षपान्ते तं तावच्छुश्राव निर्गतम् ||२७०५||
असाध्यप्रतिषेधोथ तमह्न्यनुजगाम सः । प्रस्थितं शारदादेवीस्थानं यावन्मितानुगः ||२७०६||
एकसार्थगतौ ज्ञाती विना तौ ज्ञातियोचिताम् । दाक्षिण्यादक्षमः स्थातुमग्रे साग्रा भवन्निव ||२७०७||
प्रययाः पश्चात्प्यारान्व्यधादारब्धिमेव तु । युवाप्यकल्यः कौलीनमिति स्वस्य च चिन्तयन् ||२७०८||
दुराण्डगमने खण्डितेच्छः संश्रित्य दारदान् । संयुगुत्स्वर्मधुमतीरोधसा मार्गमग्रहीत् ||२७०९|| तिलकम् ||
क्वापि श्यानाश्मसूच्यभिमृत्युदंष्ट्राङ्कुरोत्कटान् । क्वचिद्धुदप्रकाशाभ्रकालपाशान्धकारितान् ||२७१०||
प्रभ्रश्यद्धिमसंघातगजव्यूहोल्बणान्क्वचित् । क्वापि निर्झरफूत्कारनाराचक्षतविग्रहान् ||२७११||
क्वचित्क्षुरस्पर्शपवनस्पष्टस्फुटदसृग्धरान् । क्वाप्यातपक्षतहिमज्योर्मिनिहतंदृक्पथान् ||२७१२||
दूरावरोहं प्रसृते स्फुटमग्रहते विदन् । ऊर्ध्वावरोहमसकृन्मन्यमानोप्यधोगतेः ||२७१३||
तुषारकालविषमान्वदूसमान्पथि वासरान् । उल्लङ्घ्य स दरद्राष्ट्रसीमान्तग्राममासदत् ||२७१४|| कुलकम् ||
गृहार्पितात्मसामग्रीहताकिंचन्यलाघवम् । तं दुग्धघाट्टकोट्टेशः प्रणम्यानयदर्च्यताम् ||२७१५||
दूरस्थितो विड्डसीहस्तहृतोक्तनदागमः । प्रक्रियां प्राहिणोच्छ्रत्रचामरादिश्राद्धां² नृपोचिताम् ||२७१६||
आदिष्टदिष्टवृद्धिश्च राष्ट्रे कोट्टाधिपेन सः । अचारयत्स्वकोशस्य स्वामित्वं राजबीजिनः ||२७१७||
राजायमानो भोजोथ राजवासगतोर्चितुम् । आनिन्ये राजवदनापत्येनाभ्येत्य पश्यताम् ||२७१८||
स पित्रैकान्ततो राज्ञो भिन्नेन प्रहितोन्तिकम् । तेनाशाप्यरिनीस्युपपाशामस्थापनोपमः ||२७१९||
कार्यगौरवविश्वासाभावव्यतिकरोचितम् । संदिश्य प्राहिणोत्तं स न स्वीकुर्वन्न चोत्सृजन् ||२७२०||
किमागोहं किमेकान्तभिन्नो राज्ञः शनैरिति । मां शास्यसीति तं दूतैः स राजवदनोब्रवन् ||२७२१
तस्य शाठ्यं दर्शयितुं गोत्रिवैरिमिषान्नृपे । ब्रुवाणेथ विदोषत्वं नागायैरमहीव्रणम् ||२७२२||
सामभ्यूनैः शनैः स्थैर्यं ततः साम्यमथ क्रमात् । आधिक्यं चादधे तेषां त्रिमर्दैर्धैर्यनिष्ठुरः ||२७२३||
तथा प्रतिष्ठां स प्राप तस्यापूर्वस्य भूमिजाः । दास्यमेत्य यथा व्रीडां नागुर्नागस्य बान्धवाः ||२७२४||
स हि त्यागक्षमास्तम्भालोभादिगुणभूषितः । अभिगम्योभवन्नित्याभ्यस्तभूतिरिवोन्मिषन् ||२७२५||

२७००. ¹) Emended ; A कुर्वतास्व°. २७०२. ¹) Emended , A प्राप्त. २७०३. ¹) Conjectural reading ; A गन्तुं मागुत्सृज्य ; C मासमुत्सृज्य. २७१२ ¹) Emended ; A °निहित°. २७१३. ¹) Emended ; A °रोहे. २७१५. ¹) Thus A ; cf. दुग्धपातम् viii 2468. २७१६. ¹) Emended with C ; A °गमम्.—²) Emended ; A °चादिश्राद्धानृपो°. २७१८. ¹) Emended ; A °गतोचितुम C °गतोर्चितं ; G °गतोचितान्. २७२२. ¹) Emended ; A °हृपे. २७२३. ¹) Conjectural reading ; A सामग्री नः.

स्थैर्यं पृथ्वीहरादीनां साश्रयाणां न कौतुकम् । आडम्बरो निरालम्बस्यास्य लुस्यस्तु विस्मृतः ॥२७२६॥
मथ्नन्पृथुलान्व्यूहांधीराटविकघोषिकैः । क्रान्तमामोथ तस्थौ स भोजादीन्प्रतिपालयन् ॥२७२७॥
जहुरन्योन्यसंघर्षसेर्ष्यामात्यमतेन यां । ततो लुण्ठिप्रियस्वाहा नीतिमन्येपि डामराः ॥२७२८॥
उद्घातध्वंसितां विप्रवेश्मा लोठनबन्धने । याधास्तेषां तदानीं सा जगाम शतशाखताम् ॥२७२९॥
त्रिल्लको जयराजश्च राज्ञा संवर्धितावपि । अकार्ष्टां नैव तपसा विवशौ चक्रमीलनात् ॥२७३०॥
यो वृकानामिव श्वभ्रमामयानामिव क्षयः । दैत्यानामिव पातालं यादसामिव सागरः ॥२७३१॥
आश्रयः सर्वदस्यूनां त्रिल्लको माययोल्बणः । स देवसरसाधीशं संबन्धिविप्लवं व्यधात् ॥२७३२॥ युग्मम् ॥
काकुन्तोथ तदाक्षेपं क्षोणीत्राणार्थिनो द्विजाः । प्रायं नृपतिमुद्दिश्य चक्रिरे विजयेश्वरे ॥२७३३॥
अकालदस्युनिर्माथं जानतोभ्यर्थनां न ते । राज्ञोगृह्णंस्ततः सोभूद्दाक्षिण्यात्तत्सभानुगः ॥२७३४॥
प्रस्थातु पार्थिवे सज्जे ज्यायान्यो विप्लुतेष्वभूत् । स जातोत्पातपिटको जयराजो व्यपद्यत ॥२७३५॥
भाग्यवानेकतोजातदस्युवैविस्मयमीशिता । ततो मडवराज्यं स विप्रप्रीत्यै विनिर्ययौ ॥२७३६॥
अमात्यदत्तवैमत्यैः स्वशाद्यमठरैरथ । द्विजैर्निषिद्धोलंकारो मन्त्री राज्ञोज्झितोन्तिकात् ॥२७३७॥
स व्यवस्थापने दुःस्थदस्यूनां सोद्यमः सदा । सेर्ष्याणां प्रत्यभात्तेषां तद्दोषपरिपोषकः ॥२७३८॥
त्रिल्लकोन्मूलनं कुर्यां कृत्वा द्वैराज्यभञ्जनम् । प्रतिज्ञायेति नृपतिर्विपाप्मायाव्यवीवरत् ॥२७३९॥
त्रस्तोथ त्रिल्लकस्तैस्तैरप्रियैरुदवेजयत् । अनुद्भिन्नमुखो गूढामयो रोगान्तरैरिव ॥२७४०॥
जयराजानुजं राज्ञा यशोराजं निवेशितम् । तन्मतेनावचस्कन्द भ्रातृव्यं राजकाभिधः ॥२७४१॥
त्रातुं तं देवसरसं द्रुमारात्याभिन्नं गतः । सञ्जपालोल्पसैन्यत्वात्संदिग्धविजयोभवत् ॥२७४२॥
ज्ञातोदन्तस्ततोभ्येत्य रिल्हणो रणमुल्बणम् । जयलक्ष्मीकटाक्षाणां प्रथमातिथितामगात् ॥२७४३॥
मन्दरेणाथ तेनारिवारिराशौ विलोडिते । कल्योभूत्सञ्जपालाब्धंसुच्छारातिजलाहती ॥२७४४॥
जितेपि राजके स्वोर्व्यां विनानुमादकं क्षमः । न बभूव यशोराजः शून्ये बाल इवासितुम् ॥२७४५॥
प्रतीक्षमाणो द्वैराज्यपर्यायं क्ष्माभुजेकरोत् । त्रिल्लकः कालहरणं तैस्तैर्मायामतिक्रमैः ॥२७४६॥
यथाकालं ततो गूढोपेक्षान्मण्डलकण्टकान् । स्वपक्षसूचीविशिखान्दिक्षु श्वाविदिवाक्षिपत् ॥२७४७॥
अथ पार्थ्वीहरिर्योभूत्तनुक्को लोठकानुजः । राज्ञा भ्रात्रा समं बद्धः कारागारात्पलायितः ॥२७४८॥
स तेन निजजामात्रा रक्षितः स्वोपवेशने । असंख्यडामरयुतः शमालां संप्रवेशितः ॥२७४९॥ युग्मम् ॥
आकर्ण्य कुररस्येव निनादं तस्य भेजिरे । व्यक्ततां दस्यवो गूढा ह्रदस्थाः शफरा इव ॥२७५०॥
दृप्यन्तं राजवदनं षष्ठचन्द्रोथ गर्गजः । रुरोध प्रलयोद्भूत वेलाद्रिरिव वारिधिम् ॥२७५१॥
वर्धमानक्षीयमाणसंपदौ तौ त्वजायताम् । घर्मे सजम्बालहिमौ तुषाराद्रितटाविव ॥२७५२॥
षष्ठस्य जयचन्द्रश्च श्रीचन्द्रश्चानुजौ ततः । दूरविप्रकृतौ राजमन्दिराचाप्रवेतनौ ॥२७५३॥
ज्ञातनिःस्वपर्यायौ धुर्यकार्यवशानियात् । प्रतीक्ष्यावपजाह्रासः शङ्कितावशुभागमम् ॥२७५४॥

२७२८ ¹) Emended; A यः. २७३४. ¹) Emended; A जानते°. २७३७. ¹) Doubtful emendation; A स्वशाद्यं मठ°. २७४४. ¹) Emended: A °पालाब्धिसुच्छा°. २७४६. ¹) Emended; A प्रतीक्षमाणो. २७४८. ¹) Emended; A °क्कः कोठका°: comp. for the name of PṚTHVĪHARI's elder son, viii. 2912. 2799. 2496. 3313. २७५०. ¹) A₂ gloss कुररस्येति कुररः मद दूर इति वाचया कहर्मिषु प्रसिद्धः. २७५१. ¹) Thus corr. by A₂ from गर्गजः.

कटकाद्विद्रुतौ राजवदनान्तिकमागतौ । अभूर्वावपि भूभर्तुरागतौ प्रतियोगिताम् ॥२७५५॥
शैलमस्थामपथिकैरसंख्यैरथ खाशकैः । स पूर्वराजकोशार्थी भूतेश्वरमलुण्ठयत् ॥२७५६॥
तस्कराक्रान्त्यशरणं बलवद्विहताबलम् । अराजकमिवाशेषं राष्ट्रं कष्टां दशामगात् ॥२७५७॥
उदयं कम्पनाधीशं रिल्हणं च ततो नृपः । चतुष्कयुग्ममादिश्य नगरं विवशोऽविशत् ॥२७५८॥
पार्थ्वीहरिस्तु दुःसाधो महाव्याधिरिवौषधैः । स्तम्भितोऽभूत्तयोः सैन्यैः संहन्तुं न त्वशक्यत ॥२७५९॥
कालापेक्षां स्वपक्ष्याणां दुर्बुद्धिं चानुरुन्धतः । आसीन्मन्दप्रतापत्वं रिल्हणस्यापि तत्क्षणम् ॥२७६०॥
विड्डसीहस्तु विज्ञातभोजोदन्तो व्यसर्जयत् । दूतानानेतुमुर्वीशान्बहूनुत्तरापथे ॥२७६१॥
अपि विस्तेशवनितारहोविश्वास्यवेदिभिः । अपि किंमानुषपुरीगीतोद्गारिदरीगृहैः ॥२७६२॥
अप्यौष्ण्याहालुकाम्भोधेः शीतावेदिभिरेकतः । अपि भृङ्गानिलैः प्रीतान्कुर्वाणैश्चत्तरान्कुरून् ॥२७६३॥
हिमाद्रिकच्छैर्म्लेच्छेशाः प्रधावन्तोऽधिशिखिभिः । दिशास्तुरंगै रुन्धन्तः स्कन्धावारं दरत्पतेः ॥२७६४॥ तिलकम् ॥
राज्ञां संघटने यावद्व्यधादेवं दरन्नृपः । दिग्भ्यो भोजान्तिकं तावत्तत्सामन्ताः प्रपेदिरे ॥२७६५॥
स पिप्रिये तानज्ञातालापान्वीक्ष्य गिरिव्रजात् । प्रीतिमश्वमणयानवश्कहाङ्कपीनिव ॥२७६६॥
जयचन्द्रादयो राजवदनप्रहिता अपि । कीराः काश्मीरकाः पार्श्वमभजन्नाजवीजिनः ॥२७६७॥
अभ्यर्णस्थान्बलहरप्रमुखांश्च विदूरगान् । अपुष्णात्साल्हणिः स्वर्णैः परां कोशेशतां भजन् ॥२७६८॥
ततः सुजमितोत्पिच्छतया निश्चोपचक्रिकः । भोजेन राजवदनः समगंस्तोपसाध्वसम् ॥२७६९॥
तयोरकृतकर्तव्यविशेषेणेतरेतरम् । जातसौष्ठवयोः क्षिप्रमविश्वासो व्यशीर्यत ॥२७७०॥
अभ्यमित्रीणतां तस्यानिच्छतो दरदं विना । महात्साहायकार्येच्छन्मितानेव स तान्दयान् ॥२७७१॥
स्युश्चेत्सोढाभिमाटोपाः कटकस्यास्य नो द्विषः । तत्साम्यमुन्मिषेद्यद्वा भङ्क्तो भूयोऽपि योगभित् ॥२७७२॥
तस्मात्सर्वाभिसारेण रणमेकं प्रमेच्छतः । विजयाद्वजयाद्वाभिरेकाहान्तरिता मता ॥२७७३॥
व्याजहारेति यद्गोजस्तदेवोध हसन्स्मयात् । निन्ये तद्दारदं सैन्यमुपेक्ष्यागामिनीश्चमूः ॥२७७४॥तिलकम्॥
संकटान्ते विशीर्णानुयात्रस्तेषां प्रसर्पताम् । स राजवीजी शुश्राव दरद्राजमथागतम् ॥२७७५॥
तत्संगमाय व्यावृत्ते तस्मिन्कोट्टान्तिकं पुनः । प्रावेशयद्बल्हरो मातृग्रामं स तद्बलम् ॥२७७६॥
दिशस्ततो वीक्ष्य वह्निभ्रान्तवातमृगा इव । निसर्गधीरधीर्गार्गिर्न धैर्यात्पर्यहीयत ॥२७७७॥
तस्य सर्वेऽपि नीलाश्वडामराः स्वे च सैनिकाः । विपक्षैः सह बद्धैक्याः सैन्यान्बुभुक्षवो ययुः ॥२७७८॥
स तथा विषमस्थोऽपि प्रस्थित्यै प्रार्थितो निजैः । म्लानाननः प्रभुं द्रष्टुं न क्षमोऽस्मीत्यभाषत ॥२७७९॥
स सूर्यवर्मचन्द्रस्य न जातः कश्चिदन्वये । उपयोगाय यो नागान्महद्भाभिजनजन्मनाम् ॥२७८०॥
भोजं सभाजयित्वाथ विड्डसीहः सपार्थिवः । सार्धैः समं स्वसामन्तैर्विजयाय व्यसर्जयत् ॥२७८१॥
ततो म्लेच्छगणाकीर्णा व्रजन्संवाहयंश्चमूः । प्रयाणमात्रान्तरितः पृष्ठे तस्य बभूव च ॥२७८२॥
प्रादुष्कृतजगत्क्षोभे बले तत्रानुयायिनि । उत्साहात्साल्हणिर्मेने कृत्स्नां हस्तगतां महीम् ॥२७८३॥

---

२७५५. [1]) Emended ; A ग्रासवाच्यताम्. २७५८. [1]) Emended ; A कम्पनाधीशरि°. २७६४. [1]) A स्कन्धा°. २७६७. [1]) Emended; A काश्मीरिकाः. २७७४. [1]) Emended ; A° गामिनी°. २७८०. [1]) Emended ; A कैश्चि°.

वाजिभिस्तर्जिते म्लेच्छराजैश्च बलमूर्जितम् । स्थाने समुद्रधाराख्ये निबबन्धाथ तत्पदम् ॥२७८४॥

स राजवदनस्थाग्र्यदुर्जयाभ्यबलोज्ज्वलः । मृत्युदन्तान्तरे दिष्टं षष्ठचन्द्रममन्यत ॥२७८५॥

ततः प्रावृट्पयोवाहकृतोदीर्णपरिप्लुता । संजायते स्म वसुधा समीभूतजलस्थला ॥२७८६॥

धरित्रीपानपात्रेभ्यः सीधुपूर्णे बभुर्द्रुमाः । मग्ना लक्ष्यशिखामात्रा बलक्षीलोत्पलोपमाम् ॥२७८७॥

षष्ठस्य संकटं जानन्भूभृच्छेषैर्बलैः समम् । अथोदयद्वारपतिं तं च धन्यं व्यसर्जयत् ॥२७८८॥

वाहिनीरुद्धमार्गौ तौ पदवीमनुसस्रतुः । मार्गे धनंजयस्येव शैनेयपवनात्मजौ ॥२७८९॥

लम्बाम्बुदेऽम्बरे दूरं वारिपूर्णे च भूतले । स्थूलेव विद्युद्दृशे भिन्नद्योतननिःस्वना ॥२७९०॥

शोभामात्रोदितागर्हपरिबर्हाबहिष्कृतः । तत्राविभक्तकटकः पार्थिवः समजायत ॥२७९१॥

अनास्थो राजवदने सत्त्वावष्टम्भयोः पुरा । अत्रापरो न निक्षेप्यो राजबीजीति दारदान् ॥२७९२॥

त्रिल्लकः संदिशन्दूतैर्वृद्धिं पार्श्वीद्दरिं नयन् । तयोरेकस्य सामर्थ्यादैच्छत्तं हस्तपातिनम् ॥२७९३॥ युग्मम् ॥

अभित्तिलिखितालेख्यकल्पं बलहरस्य तत् । तादृग्विलोक्य सामर्थ्यमथ राज्ञश्च सर्वतः ॥२७९४॥

विभक्ताशेषसैन्यस्य तत्र तत्रारिसंकटे । ज्ञात्वाप्रतिसमाधेयच्छिद्रमुन्मुद्रतुर्नयः ॥२७९५॥

अकृशश्वाविदाघारधिरं स्वाङ्गैः स गोपितम् । बहिर्दुर्धर्षमत्याक्षीद्द्वितीयमपि कण्टकम् ॥२७९६॥ तिलकम् ॥

ध्वान्तेऽम्बुधरजालान्ध्यमहावाते रजोभरः । स्वपक्षभेदयोर्ज्ञातकर्णेजपमहोद्यमः ॥२७९७॥

कुलच्छेदकृतो राज्ञस्तत्र तत्रातिसंकटे । अशान्तजागरोऽत्यर्थमनर्थपरिपोषकः ॥२७९८॥

सोऽथ भूरपुरेकस्माद्बहुभिः सह डामरैः । तेन संपूरितः पृथ्वीहरजो लोठकोऽपतत् ॥२७९९॥ तिलकम् ॥

तस्य संघट्टतः कन्यां प्रयातं वैकृतं चिरात् । पालीभङ्गे तटस्येव प्रावृट्पूर्णस्य लक्ष्यताम् ॥२८००॥

निद्राणोपेन्द्रजठरप्रसादनिसृतं जगत् । समेतमिव तत्सैन्यं प्रत्यभाज्जलदागमे ॥२८०१॥

यावद्भिः पार्यते नेदृक्संख्यातुमपि तद्बलम् । भर्तव्यकल्पैः सुस्वल्पपर्याधमध्यगतैरपि ॥२८०२॥

तावद्भिरनुगैः पिञ्छदेवत्रङ्गाधिपो युधि । तद्योधान्याम्यहरितैः सरितश्चातिथीन्व्यधात् ॥२८०३॥ युग्मम् ॥

तटोज्ज्वलैश्चिताचक्रैर्बिम्बितैस्तटिनीजले । मृतानामपि संस्कारः क्रियमाण इवाभवत् ॥२८०४॥

इति विस्मृतमृत्युः स कुर्वन्नेकाहमाहवम् । कथंचिदाप्तैरन्येद्युर्भग्नसारोपसारितः ॥२८०५॥

पुरे स शून्ये सैन्यानि संगृह्णंस्तत्र सर्वतः । त्रिचैरहोभिर्नगरं गुप्तमाप्तममन्यत ॥२८०६॥

इच्छां पद्मपुरास्कन्दे मन्दत्वं त्रिल्लकोऽनयत् । पृष्ठस्थयोर्यशोराजकम्पनाधीशयोर्भयात् ॥२८०७॥

न भृत्यैस्तद्विधः सिद्धश्चास्यैकस्मिन्नसंमते । विधेयान्यल्लवन्यस्य डामरे होलडोकसि ॥२८०८॥

द्वैराज्ये सुस्सलस्यापि नैवादृश्यत तादृशः । अनर्थौ यादृगुत्तस्थौ तत्सुतस्य समन्ततः ॥२८०९॥

चतुष्कमवधीर्याथ राज्ञा पादगदोपमम् । रिल्हणः प्रैषि तं ग्रीवागण्डतुल्यं व्यपोहितुम् ॥२८१०॥

प्रस्थितस्तत्क्रममाथाय शमालैः सोऽन्वबध्यत । व्रजन्प्राग्ज्योतिषं हन्तुं पार्थः संशप्तकैरिव ॥२८११॥

अथाश्वाभ्यमित्रीणस्ताभ्यावृत्य निपातयन् । पद्माकरोन्मुखः पृष्ठलग्नान्भृङ्गानिव द्विपः ॥२८१२॥

---

२७८४. 1) Doubtful emendation; A °स्तर्जितो. २७८६. 1) Emended with C; A प्रावृड्पयो°. २७८७. 1) A °सीधु°. २७९९. 1) Thus A; comp. for this name viii. 2496. 2748. 2912. 3313. २८०३. 1) Emended with C; A °हरित. २८०८. 1) A होलडोकसि. २८१०. 1) Emended with C; A रिल्हणप्रेषितं.

रणभान्तेन गमिता त्रियामा तेन रामशे[1] । गर्जत्कुल्यार्पितारातिपृतनावाडवसंक्रिये ||२८१३||
तं कल्याणपुरं प्राज्ञे विश्रान्तं सोममागतः । दरोधाभ्येत्य भूयोपि बलैर्भरितदिङ्मुखः ||२८१४||
आपतत्नेव चारातिपदातीन्संमुखागतान् । दृष्टनष्टान्व्यधाच्छागानिवाभेजगलो गिलन् ||२८१५||
उद्वृत्तमारुतस्येव तस्यापाते पदातिभिः । तत्यजे रिल्हणः पर्णैर्हैमन्त इव पादपः ||२८१६||
पश्यतस्तस्य ते विद्रवन्तो जिह्मा न जिह्रियुः । देवस्पृहापारमित्यै कस्यैचित्यमनत्ययम् ||२८१७||
आभिरथापसृत्य स्वैरर्थितो रिल्हणोब्रवीत् । नयन्मजाखजा साम्यं[1] स्वामिभक्तिस्मृतेः स्मितम् ||२८१८||
ह्री[1]--वाविशेषेपि जन्तोर्जन्तोर्यदीशिता । भृत्यभावेपि यो लुप्तकृत्यो धिक्तस्य जीवितम् ||२८१९||
जातं वक्त्रसरः श्मश्रुराजिनीलाब्जभांजनम् । जराकैरवगौरं च राज्ञः पादान्मपच यान् ||२८२०||
म्लायत्सु तेषु भ्रूभङ्गभृङ्गभ्राजिष्णुभिर्भवेत् । कथं लक्ष्मीविलासैस्तदखण्डैरविडम्बितम् ||२८२१||युग्मम्||
एषा कापुरुषासेव्या धीराणां नैव पद्धतिः । यदायासलवत्रासात्सौख्यवैमुख्यभागिता ||२८२२||
वस्त्रापासन एव शीतजनितस्त्रासोथ तीर्थाम्बुभिः स्नाने ह्रादसुखोपलब्धिरसमब्रह्मानुभावोपमा ।
वैह्वल्यं[1] समरे वपुर्विजहतामेवं किलोपक्रमे कैवल्याख्यसुखोपलम्भपरमा[2] पश्चात्पुनर्निर्वृतिः ||२८२३||
एवमुक्त्वा परानीकमेकाकी स व्यगाहत । गृहकशरान्हरिप्रोथश्वाससंदिग्धभूकृतान् ||२८२४||
स्वर्णत्सरुप्रभाजाल[1]हरितालोज्ज्वलोभजत् । खड्गपट्टनटस्तस्य रणरङ्गोत्तरङ्गताम् ||२८२५||
तत्खड्गस्य भ्रतः खड्गाच्छीवैर्जालध्वजलाञ्छनम् । उत्थाय लग्नं शत्रूणां तृणैस्तृणमणेरिव ||२८२६||
आजौ तमनुजग्मुस्ते यैरगण्यन्त वैरिणः । तिर्यञ्चोलक्ष्यतां यातास्तेषां प्राणास्तृणान्यपि ||२८२७||
संप्रविष्टो मुखान्मृत्योः कैश्चिन्मार्गैः स निर्गतः । तिमेः संमीलितास्यस्य श्रोत्ररन्ध्रैरिवोदकम् ||२८२८||
श्वभ्रत्कुर्वन्परावृत्तीः श्रमशान्त्यै विनिर्गतः । प्रक्षीणभूयिष्ठबलो लब्धोत्सेको रिपाभ्रभूत् ||२८२९||
पृष्ठतोथ पपाताथ चतुष्कः पुष्कलैर्बलैः । साहायकागतं प्राक्स यं स्वं कंचिदमन्यत ||२८३०||
तस्योभयमुखस्यारिसैन्यस्याहेरिवेक्षणात् । न संरम्भः[1] शिखण्डीव परं ताण्डवितोभवत् ||२८३१||
तौ व्यूहावथ पर्यायैर्मुखपृष्ठं प्रदर्शयन् । सोक्षिणोद्युधि मन्थाद्रिर्मथनेब्धितटाविव ||२८३२||
कीलनिश्चलयोर्भ्राम्यच्चसकृद्धान्तरे द्वयोः । कुविन्द इव[1] --- तुरंगमत्वरान्वितः[2] ||२८३३||
भासः प्रत्यग्रहीत्तस्य तमेकपृतनारयम्[1] । एकतोम्भोभरं द्वीपस्येव कूलबिलोद्गमः ||२८३४||
तेन वैरिचमूचक्रे लुलितायुधकुण्डला । क्रीडता चण्डवेगेन पुरुषायितुमक्षमा ||२८३५||
श्वासपाण्डून्द्विषां वक्त्रकुम्भान्स्वेदाम्भसाचितान् । स कुर्वन्भूभुजं[1] जाने भूयो राज्येभ्यषेचयत् ||२८३६||
स च पार्श्वीहरिश्चास्तामन्योन्यस्य क्षपाक्षणे । सज्जौ मान्त्रिकवेतालाविव रन्ध्रगवेषिणौ ||२८३७||
साहायकागतान्साक्षीकृत्य[1] क्ष्मापतिसैनिकान् । अन्येद्युः सौकरोच्छत्रुं वनंमार्गावगाहिनम् ||२८३८||
पर्यस्तशौचान्संचिन्त्य त्रिल्लकादीनथाययौ । सल्लपालस्तृतीयस्मिन्दिवसे रिल्हणान्तिकम् ||२८३९||

२८१३. [1]) Should probably be रामुषे, cf. ii. 55.—[2]) Emended; A गर्जन्कुल्या°. २८१४. [1]) Emended; A तत्कल्या°. २८१८. [1]) Thus A; perhaps read with G (*sec. manu*) मजाळजभाक्ष्वं. २८१९. [1]) Thus A; C हीनभावाविशेषे. २८२०. [1]) Emended; A °भौजनम्. २८२३. [1]) Thus corr. by a later hand from A[1] वैह्वल्यं.—[2]) Conjectural reading; A वैकल्या°. २८२५. [1]) Emended with C; A °प्रभाजाल°. २८३१. [1]) Emended; A संरम्भे. २८३३. [1]) Thus A; C supplements पूर्णोत्सुरंग°.—[2]) Emended; A °वमत्तुराम्वितः. २८३४. [1]) Emended with C; A पृतनावलम. २८३६. [1]) Emended with C; A °भुजाय. २८३८. [1]) Emended; A साक्षीकृतक्ष्मा°.

नृपप्रतापग्लपितः स ताभ्यां पर्यशोष्यत । वनान्तः शुचिशुक्राभ्यां घुणक्षीण इव द्रुमः ॥२८४०॥ 2840
चितानल इवासारैर्युद्धैः शममनाश्रितः । उदयेन शनैर्निन्ये चतुष्कोपि मितोष्मताम् ॥२८४१॥
दारदं बलं तृष्यद्धेमसंनाहवाहिभिः । हयैरवतरोद्यद्रिकुहराद्दाहवोन्मुखम् ॥२८४२॥
तुरुष्कलोकेनाक्रान्तान्देशांस्तद्दशमीयुषः । शङ्कमानैर्जनैर्ज्ञाता कृत्वा म्लेच्छावृतेव भूः ॥२८४३॥
प्रयाणमात्रान्तरिते धन्ये द्वारपतावपि । साहसं निःसहायस्य तस्याद्वैरमतोभवत् ॥२८४४॥
ज्वलत्कनकसंनाहं तत्सैन्यं स द्विषोरुधत् । कनज्ज्वालावलिं दावं सनिर्झर इवाचलः ॥२८४५॥ 2845
विधूय जयचन्द्रादीनग्रस्थानरोधिनः । बलबाहुल्यदृप्तास्ते व्यगाहन्ताहवावनिम् ॥२८४६॥
तेषां हयसहस्राणि त्रिंशद्विंशत्तुरंगमैः । रंहसा प्रतिजग्राह निजग्राह च गर्गजः ॥२८४७॥
तस्याद्भुतरुद्धिर्देवृशो पौरुषं तदमानुषम् । एकैकस्यामतो यस्य वैश्वरूप्यमिवाबभौ ॥२८४८॥
अश्वक्रामविन्यस्तवक्त्रास्ते विद्रुताः क्षणात् । जगाहिरे कापुरुषा गिरीन्किंपुरुषा इव ॥२८४९॥
अभूमिज्ञतया शाद्यादेव जातः पराभवः । श्वस्तदस्मान्पुरस्कृत्य जयं प्रत्याहरिष्यथ ॥२८५०॥ 2850
इत्युक्ता राजवदनजयचन्द्रादिभिर्निशि । तथेति मिथ्याकथयन्दारदा विग्रहोन्मुखाः ॥२८५१॥ युग्मम् ॥
प्रवेश्य धन्यद्वारेशौ दूरं बल्हरो बली । ऐच्छत्स्वमभिसंधातुं रुद्ध्वा पाश्चात्यपद्धतीः ॥२८५२॥
स्कन्धावारेण सार्धं च दरदां राजबीजिनम् । विधातुं विदधे बुद्धिं तं ततस्तारमूलके ॥२८५३॥
चिकीर्षति ततस्तस्मिन्मत्तेष्वन्धेषु दस्युषु । उत्सेहे साल्हणिः कृत्स्नं राज्यं निखिल्यं निर्जितम् ॥२८५४॥
जयाभावेप्यनन्तेर्भूत्सामन्तसहितस्ततः । भव्योस्मि भवितेत्येवं विचिन्त्योऽसिविपि च सः ॥२८५५॥ 2855
पद्मोन्माथाद्द्विरददशनैरप्रियैः पद्मबन्धोरिन्दौ स्पर्धिन्युदयति वपुः खण्डशः स्वं भिद्येत ।
तापस्त्यज्येत च रुचिरतांभागिभिः सूर्यकान्तैर्भद्राभद्रं व्यसनसमये संभवेदप्रतर्क्यम् ॥२८५६॥
यो डामरतया भिक्षोः शश्वत्कृच्छ्रेप्युपेक्षणम् । टिक्कादीनां च कौटुम्ब्याद्भर्तुर्द्रोग्धुमूर्धनि ॥२८५७॥
अल्ववन्यतयानन्यसामान्याश्चर्यवर्धनात् । ततः कृष्णोपयोगाच्च विश्वासस्येव मूर्धनि ॥२८५८॥
तौ नागराजवदनौ व्यसनावसरे तदा । चित्रं स्वकार्यतात्पर्याद्भुतादरमां गतौ ॥२८५९॥ तिलकम् ॥
स्वयं विधेयं नागोन्यकृतं तं वीक्ष्य विभ्रमम् । अदूरमर्थमन्येन कृतं कविरिवाभुषत् ॥२८६०॥ 2860
क्ष्माभृद्विपक्षं स्वं पक्षीकर्तुं कुमाननं ततः । संत्यज्य राजवदनं मां भजस्वेत्यभावत ॥२८६१॥
संग्रामं वः प्रतीक्षध्वं तेजोबलहरात्मजम् । युग्याधिरूढं किं नारिसेवतां यामिको यथा ॥२८६२॥
इति ते संदिशन्तं च व्यसहन्स विहाय तम् । कामधेनुसमं नागं छागाश्लेषाद्विधि॰ यत् ॥२८६३॥
सर्वः स्वकार्यतात्पर्यात्प्रवर्तेत प्रियाप्रिये । स्नेहवैरेन्यदीये तु न किंचिदधिगच्छति ॥२८६४॥
ज्योतिस्तर्जितकान्ति दन्तयुगलं बाध्यं सुधादीधितेर्दानास्वादधिया प्रिया मधुलिहां कुम्भस्थली कुम्भिनः ।
वासस्यैवं विरोधभाक्सरसिजस्येत्यत्र नेन्दो रतिस्तस्याध्यायकृतो द्वितीयमिति नाप्यस्य द्विरेफा द्विषः॥२८६५॥ 2865

२८४२. [1]) Thus A; C तत्तुलं.—[2]) Emended with C; A कृत्स्नेकुम॰. २८४४. [1]) Doubtful emendation of C; A तस्याक्रमेरम॰. २८५३. [1]) A स्कन्धा॰.—[2]) Emended; A राजबीजिमाम. २८५४. [1]) Emended with G (sec. manu); A निखिलानि॰. २८५५. [1]) Emended; A ॰सहितांस्ततः. २८५६. [1]) Emended; A रुचिरभाभा॰. २८६१. [1]) Emended with C; A तात्याक्ष. २८६२. [1]) Emended with C; A प्रतीक्ष्यध्वं.—[2]) Cf. कोष्ठेश्वरौ बलहरात्मजाती viii. 2695 and note.—[3]) Thus A; perhaps read नाडीसे॰. २८६३. [1]) The text of this verse is evidently corrupt; A as above. C reads व्यसहन् संविहाय तं । कामधेनुसमं नागं छागाश्लेषा विधिर्न यत् २८६५. [1]) Doubtful; A वा॰स्यैव; C सूरस्यैव.

प्रतिष्ठालोठनं कर्तुं ततो बल्हरस्य सः । आजन्म वैरं संरेभे तेन भूभृद्धितेच्छया ॥२८६६॥
स तथा दारदान्भग्नानभिज्ञो भूभुजैष वः । सभोजान्राजवदनो हन्यादित्यभ्यधाद्विजैः ॥२८६७॥
दरद्राजानकानीतनेतारौ कम्पनापती । प्रख्यातक्षेमवदनमत्ता– –[1]भिधावुभौ ॥२८६८॥
त्रस्यन्नोजसनामा च कोट्टेशो मन्त्रितं रहः । ब्रुवाणास्तद्व्यहस्यन्त भोजेनान्तरवेदिना ॥२८६९॥
स्फाटिकेनेव सैन्येन तेनाऽपे रुद्धमप्यथ । दिधक्षुं[1] राजार्कमहो विडुसीहे[2]न्धनेपतत् ॥२८७०॥
पार्थिवानर्थदुश्चिन्तामययक्ष्मपरिक्षतः । स यत्कृष्णक्षपाक्षीणसोमसाम्यं समाययौ ॥२८७१॥
रोगग्रस्ते रणग्रस्ते पृष्ठगोप्तरि भर्तरि । तथाभियोज्ये स्थाने च भयजर्जरतां गते ॥२८७२॥
आहारस्थं बल्हरं विहाय निखिलास्ततः । पलायिषत[1] तेन्येद्युर्विगाह्य हरिभिर्गिरीम् ॥२८७३॥ युग्मम् ॥
दृष्ट्वा बहुमतं प्रातरागन्तारः पुनर्वयम् । कथयित्वेति संप्रार्थ्य साल्हणिं सह तेनयन् ॥२८७४॥
प्राक्पीतकोशो[1] वैवश्यात्स तेषामनुगोभवत् । भ्रष्टकार्यस्तु वैकल्यं भग्ने मज्जन्निवादधे ॥२८७५॥
मुहुः सर्वशिरोद्रिक्त[1]रक्तपूर्णमिव ज्वलन्[2] । अवरोहदनच्छाम्बुसोपानाश्मनिभं मुहुः ॥२८७६॥
ज्ञातेन पतितेनेव मुहुर्व्योम्ना महीसमम् । व्रजतस्तस्य वैलक्ष्यादलक्ष्याक्षमभून्मुखम् ॥२८७७॥
दध्यौ च धिङ्नो ये शश्वत्प्रभावं वयमीदृशम् । राज्ञो दृष्ट्वाप्यनात्मज्ञा जानीमो मर्त्यधर्मताम् ॥२८७८॥
प्रतिभाप्रौढनिर्भाततत्त्वानां नान्यथा गिरः । महाकवीनामेतादृक्प्रतापानलवर्णने ॥२८७९॥
राज्ञः प्रतापशिखिनः कणाः क्षोणौ न सन्ति चेत् । तत्कस्माद्वयमायाताः पदन्यासेप्यधीरताम् ॥२८८०॥
अनेकशोऽङ्कैर्वीराणां पीतधाराम्बुडम्बरे । शोषः प्रादुष्कृतो न स्यात्तज्ज्वालासंज्वरं विना ॥२८८१॥
किमन्तरेण तद्धूममालान्ध्यं प्रोन्मिषद्दृशः । मार्गामार्गविभागस्य परिज्ञाने विमूढता ॥२८८२॥
मधुमत्यास्तटेऽन्यस्मिन्विवर्ज्य दरदः स्थितान् । वीचीजवनिकाच्छन्नः सोवाप्याथ तटेवसत् ॥२८८३॥
क्रमादुत्खातखेदस्तैर्नीत्वा स्वशिबिरा[1]न्तरम् । तत्रैष्यतेति संधातुं रोहड्रोह[2]स्पृहातुरैः ॥२८८४॥
नृपं तेषां ह्यगण्यार्थवर्षिणं नयनैपुणात् । उपजीवितुमिच्छाभूत्तद्रक्षणवणिज्यया ॥२८८५॥
नानेहा विग्रहस्यायं प्रत्यासन्नो हिमागमः । मधुमासि विधास्यामः पुनरारब्धिमुत्तमाम् ॥२८८६॥
कालक्षेपक्षमस्त्वं चेद्दुहराष्ट्राध्वनाधुना । त्वान्तर्निदध्मो बलिनस्त्रिगह्वकस्योपवेशने ॥२८८७॥
राजानं राजवदनः प्रितस्तैरित्यसावतः । उत्कोप्यत स्वराष्ट्रान्तर्युक्त्या बद्धुं नराधमैः ॥२८८८॥ तिलकम् ॥
अपि राजपुरीयाणां कौटिल्यं तैर्हि जीयते । दैर्घ्यं निदाघघस्राणां[1] वियोगदिवसैरिव ॥२८८९॥
तथा ध्यातमुपालेभे दूतैर्बल्हरोथ तम् । प्रहीं निहितवांस्त्वस्मीति त्रोटितत्रटाकरः ॥२८९०॥
उत्साहादाहवस्थोऽपि स तथा गार्गिमं[1]भिमम् । आयान्तं च नृपानीकमुत्साहार्थं[2] व्यचिन्तयत् ॥२८९१॥
अकस्माद्विद्रुतदरद्राजभोजादिवार्तया । न व्यदीर्यत यद्धैर्यपर्याप्तेस्तत्किलाद्भुतम् ॥२८९२॥
आडम्बरालम्बनस्य भेदेप्यच्छिन्नविग्रहः । यद्युद्धोद्धतं सिध्येत्तत्कस्यामानुषं विना ॥२८९३॥

२८६८. [1]) Thus A; the *akshara* before the *lacuna* could be read also भु; C °वदनमधुभक्राभिधा°. २८७०. [1]) Emended with C; A दिधक्षु.—[2]) Emended; A विडुसूहेन्धने°. २८७३. [1]) Emended; A पलायिसतेन्ये°. २८७५. [1]) A °कोषो. २८७६. [1]) Doubtful emendation; A सर्वशिरोदृक्त°.—[2]) Emended; A °ज्वलत्. २८८४. [1]) A स्वशिबिरा°.—[2]) Emended; A रोहड्रोहः स्पृहा°. २८८९. [1]) Emended; A °स्त्राणां. २८९१. [1]) Emended with C; A गर्गिम°.—[2]) Doubtful emendation; A °कमु – हाम; C °नीकं दृष्टापि मध्य°.

कालानुरोधात्संधित्सुर्धन्यद्वाराधिपोथ सः । सोयोजयद्विलम्बेन भोजप्रत्यागमाशया ॥२८९४॥
ततोलंकारचक्रः स नेतुं साल्हणिमाययौ । ज्ञातेथाहारदानेत्य[1] प्रार्थिता परिपन्थिनीः ॥२८९५॥
बुद्ध्वा तदनुबन्धेपि द्रोहनिर्बन्धिनीः सभाः । अग्रहीन्मार्गसेत्वर्थे निधनाध्यवसायिताम् ॥२८९६॥
भृत्यैः सह युद्धप्रायैर्वीक्ष्य तं मर्तुमुद्यतम् । दरात्पुरं दरद्राजसैन्यं तत्सैन्यमाययौ ॥२८९७॥
व्यपोहन्ती चलद्वीरा बाहुभिः कलहं सरित् । कल्लोलास्फालनोल्लापैर्निनिन्देव दरत्कुलम् ॥२८९८॥
त्रपितः स्वावरोधैश्च सेर्ष्यैश्च म्लेच्छपार्थिवैः । सैन्यैः कदनभीतैश्च विड्डसीहोथ तं जहौ ॥२८९९॥
पुरःसरैर्भग्नसेतुपालैः पारं परं ततः । विद्राव्य तानि[1] स प्राप भिन्दंस्तूर्यरवैर्दिशः ॥२९००॥
असामर्थ्ये वरूथिन्याः[1] स्वस्य प्रार्थितसंधिना । आनीतो विड्डसीहेन दूतः प्रोक्तोथ भूपतेः ॥२९०१॥
अमानुषानुभावेन तावत्स्वस्वामिना[1] भवेत् । प्रातिसीमिकसामन्तबुद्ध्या स्पर्धोद्य धीवरः ॥२९०२॥
अभद्देयानुसंधान एव यान्तौ[1] यमान्तिकम् । जयराजोस्मि चामुष्य प्रभावावेदकौ दिवि ॥२९०३॥
तेन दिव्यानुभावेन निर्जयोपि जयो मम । पान्थस्य कूलविभ्रंशात्तीर्थे पतनमुन्नतिः ॥२९०४॥
अथायातः पुरे स्थित्वा कंचित्कालं निजेविशत् । यमराड्मसत्कीर्तिलसन्नन्दनमालिकम्[1] ॥२९०५॥
अबुद्ध्वा भोजमायान्तं संधिं तत्रैव वासरे । सार्धं हारेशधन्याभ्यां स राजवदनोप्यगात् ॥२९०६॥
अभ्यागतं तं व्यावृत्य षष्ठं षष्ठं मनस्विनाम् । आदाय तावथाभ्यर्णे[1] प्राविशतां क्षमापतेः ॥२९०७॥
अहंकारादिमोहाद्वाविमर्शेन[1] बहिष्कृतौ । उपेक्षामक्षते भोजेभजतां[2] राजबीजिनि ॥२९०८॥
आहूतस्तु हठोत्कण्ठाभाजापि प्रभुणासकृत् । अनिःशेषीकृतारातिर्न व्यावर्तत रिल्हणः ॥२९०९॥
प्रभोः पुरस्तात्कार्यान्ते तेन स्थातुमशक्यत । प्रसादाकाङ्क्षिणा सूदेनेव भोक्तुं न हि क्वचित् ॥२९१०॥
द्विधा कृता येन युद्धे पृथ्वीहरद्वनद्वयी । मगधेन्द्राकृतिर्भीमेनेव कार्याक्षमाभवत् ॥२९११॥
मातृकुक्षिमिव स्वोर्वी तेनाजौ लोष्टकः[1] कृतः । खाण्डवे खण्डितः सर्प इव गाण्डीविनाविशत् ॥२९१२॥
भजंश्चतुष्कः[1] संकोचं दुर्भेदं त्रिल्लकालयम् । स्वकायकर्परं दर्पोज्झितः कूर्म इवाविशत् ॥२९१३॥
निःशेषीकृतकार्यैः स शौर्येणैव महीपतेः । पार्श्वं पादनखज्योतिःपट्टबन्धाप्तये ययौ ॥२९१४॥
प्रतापैर्नृपतेरित्थं त्रिल्लकः शोषितोप्यभूत् । अमात्यमतिदोषेण भूयः प्रादुष्कृताङ्कुरः ॥२९१५॥
दण्डार्हो राजवदनो दानेनाप्यायितो यतः । निर्भयं भोजमायान्तं प्रतिजग्राह तं पुनः ॥२९१६॥
उत्कोचपरिणामान्तं सोथ स्थापयति स्म तम् । दिन्नाग्रामाभिधे स्थाने खाशकानां निवेशने ॥२९१७॥
इत्येनमब्रवीत्कुश्चेदायास्यो नानुगामिनः । मितानुयायी हारेशः प्रायास्यद्गोचरान्मम ॥२९१८॥
सोत्कम्पः साहसस्रोतःपातेनीयत[1] नौरिव । त्रिल्लकेनापि स स्थैर्यं नीतिरज्जुप्रसारणात् ॥२९१९॥
व्यसनोल्लासवैवश्यं विशां पत्युर्व्यचिन्तयत् । येनाभ्यवस्थाप्राथम्यं स आल्मः पुनरग्रहीत् ॥२९२०॥
अलंकारादिभिः स्वास्थ्ये स्थाप्यमानोपि मन्त्रिभिः । अत्यजन्नैव कौटिल्यमजितात्मेव[1] दुर्ग्रहम् ॥२९२१॥

२८९५. [1]) Emended; A °हारदावेत्य; the text is corrupt. २९००. [1]) Emended; A विद्राविमानि. २९०१. [1]) Emended; A वरूथिन्या. २९०२. [1]) Emended; A ताव स्वामिना. २९०३. [1]) Emended with C; A यान्तो. २९०५. [1]) Emended; A °मालिकाम्. २९०७. [1]) The letter corresponding to थ cannot be read with certainty in A; C तावत्ताभ्यर्णे. २९०८. [1]) A °विमर्शेन.—[2]) Emended; A भजते. २९१२. [1]) Comp. note to लोष्टक: viii. 2496. २९१३. [1]) Emended with C; A भजंश्च°. २९१९. [1]) Emended with C; A °स्रोतपाते°. २९२१. [1]) Emended; A अत्यजन्नेव and °जितात्मेव.

यदं मैव इवापार्क तमवज्ञाय पार्थिवः । पक्षगण्डाभिवारेभे रिपून्पाटयितुं परान् ॥२९२२॥
आगन्तव्यं त्वया पथायात्वस्माद्ध प्रकम्प्यताम् । भोजमुक्त्वेत्यलंकारचक्रोगाद्विद्वोधनः ॥२९२३॥
तं जयानन्दवाडाख्यो दस्युरानन्दवाडजः । अन्वयुर्विक्रमोद्यमाः परेपि क्रमराज्यजाः ॥२९२४॥
अग्रस्थितो राजगृह्योलंकारः स्वल्पसैनिकः । वालुकासेतुकल्पस्तैर्जज्ञे सिन्धुरयैरिव ॥२९२५॥
स तु रामचराधाजिक्षोभसंभावनां विद्याम् । वदपादयदेकाकी कुर्वन्बहुभिराहवम् ॥२९२६॥
आपानरभसक्षुभ्यद्वक्षःसंभ्रमदक्षिणम् । रणं जगाम गङ्गाख्यमञ्जसाजपरिप्लुतः ॥२९२७॥
स तूलकूटमिव तत्कटकं विकटं द्विषाम् । किमन्यस्मैरयत्क्वापि प्रभञ्जन इवाञ्जसा ॥२९२८॥
मासाय गृध्रकङ्कादिपक्षिप्रातस्य तस्यजे । आनन्दवाडतनुः स हत्वा तेनेषुणा रणे ॥२९२९॥
भोजस्योत्थातुकामस्य जिघृक्षोः क्ष्माभुजश्च तत् । पङ्कप्रधावत्ककरव्याधन्यायो व्यवर्धत ॥२९३०॥
अनुव्रजनसामर्थ्यः भ्राम्यति क्रकरो यथा । धावन्पङ्के पतन्व्याधोप्यनुधावत्ययान्वहम् ॥२९३१॥
प्रसङ्गे साहसस्यैवं भोजः क्लैब्यमगात्सदा । तं प्राप्तुमिच्छुर्भूपोपि मतिमोहं मुहुर्मुहुः ॥२९३२॥ युग्मम् ॥
दिक्षाग्रामस्थिते भोजे स राजवदनोप्यगात् । पुनः किं चौरचण्डालाः भेत्स्यन्तीत्युक्तिमीशितुः ॥२९३३॥
डामरा भग्नसंघाता भूयः पूर्वाधिकां ततः । कन्थां ते मन्थयामासुर्मुहुर्यो पौर्यशालिनः ॥२९३४॥
ते द्वारपतिमायातं सोढुं शेकुर्न केवलम् । अशक्यैराहवैर्यावत्तात्पर्यादुदवेजयन् ॥२९३५॥
तेषां त्राणार्थमन्येषामुत्थानार्थमथाययौ । कुट्टोलंकारचक्रेण नीविं दत्त्वा स साल्हणिः ॥२९३६॥
तेषां परेद्युः पार्श्वं स यियासुरसकृद्यदा । हायाश्रमं भ्रान्तसैन्यो द्वारेशोबुद्ध तं तदा ॥२९३७॥
अजानन्निव तेषां स व्याजसंधिं निबद्धवान् । मिषात्कुतोप्यगात्स्थिर्यक्ष्यितं सत्तारमूलकम् ॥२९३८॥
तस्मिंस्तत्र स्थिते दूरात्कुतस्त्यामपि पूत्कृतिम् । श्रुत्वा भोजोवदत्सार्थं किमपि व्याकुलीभवन् ॥२९३९॥
निर्भीर्विहस्यमानोपि त्रासात्तस्मादहेतुकात् । व्यरंसीत्संभ्रमाधासौ चक्रे सज्जांस्तु वाजिनः ॥२९४०॥
त्रस्तोलंकारचक्रोथ दशग्राम्यमतो द्रुतम् । क्व राजपुत्र इत्येवं कथयित्वा पलायितः ॥२९४१॥
उदतिष्ठत्ततो ग्राममध्यात्तूर्यध्वनिर्महान् । आस्कन्दावेदकः सेनानिनादश्च क्षपामुखे ॥२९४२॥
अलक्षितो ध्वान्तमध्ये भेजे भोजः पलायनम् । श्वः कर्तव्येष्वलंकारचक्रो युद्धाय संदधे ॥२९४३॥
हन्तो द्वाराधिपनार्मिर्गिरिवर्त्मे प्रकाशयन् । ध्वान्तध्वस्तात्मनां[1] तेषां तदाभूदुपकारकः ॥२९४४॥
द्वाराधिपस्य क्षाम्यन्तः संधिं भोजप्रतीक्षया । श्रुत्वा तमथ वृत्तान्तं भङ्क्त्वा ते डामरा ययुः ॥२९४५॥
असंस्यजनपत्यादिबन्धं धीरोबलाभयात् । आजि स भोजोलंकारचक्रेणामङ्गलाग्रहम् ॥२९४६॥
. . . . . . . . . . . . . . . . . . . . . . . .[1] । भोजस्तत्राप्यभूत्पर्णोत्साहारादिद्वन्द्वान्वितः ॥२९४७॥
बाणाग्निजस्त्रिपुरनिर्दहने प्रतापः पाथोनिधेः प्रमथने वडवाग्निजन्मा ।
आसाद्य मन्दरनगेन समागमं हि न क्वापि पन्नगपतेः सुलसख्यमासीत् ॥२९४८॥

२९२३. [1]) Emended with C; A °चक्रेगाद्वि°. २९२४. [1]) A °वाडाख्यो and °वाडजः. २९२५. [1]) Emended with G (*sec. manu*); A °कल्पस्तं जज्ञे. २९२६. [1]) Conjectural reading; A राम°राधा°; C साहुभिराधा°. २९२९. [1]) Emended A °पतिप्रातस्य; C °पातित्रा°.—[2]) A आनन्दवाड°. २९३५. [1]) Emended; A तस्मात्तु°. २९३८. [1]) Emended; A सन्ता°. २९४४. [1]) Emended; A °स्वना. २९४५. [1]) Emended with C; A °क्षम्यन्तः. २९४७. [1]) Two or more *pâdas* seem to be lost here; A does not indicate the *lacuna*; C supplements संरम्भात्सकर्मारेभे सामर्थ्यं च पत्तने.

क्षुत्पिपासाश्रमं हन्तुं प्राप्तः स्वविषयावनौ । अलंकारात्मजैर्भूयो बन्द्धुं[1] भोजोऽभ्यलष्यत ॥२९४९॥
पितुर्मतेन बुद्ध्या वा स्वया तत्तद्विचिन्तयन् । सोऽभिसाराय निर्यातः प्रापाय विषयान्तरम् ॥२९५०॥
ततो बलहरेणैव कृत्यं निश्चित्य कार्यवित् । अनास्थोऽन्यलवन्येषु दिक्षाग्रामं पुनर्ययौ ॥२९५१॥
द्वाराधिपोऽहितोद्वारधीरोऽप्यवान्तरेक्षमः । चक्षूरोगेण प्रागभियोगोऽकस्मादबाधीयत ॥२९५२॥
भोजाय दातुमैच्छद्यो डामरस्ते हृते वदौ । धर्माण्डये गुल्हणाय राजजाय च निर्जितः ॥२९५३॥
रोगोऽथण्डतया दण्डप्रयोगावसरे कृते । तत्र वाम प्रयुज्यैव द्वारेशो विवशोऽविशत् ॥२९५४॥
अभियोगक्षणे तस्मिन्व्यथी भारसहः क्षयम् । दुर्नामकामयक्षामः षष्ठचन्द्रोऽपि गर्गजः ॥२९५५॥
तत्रामयाविन्येवात्तोद्रेकौ तदनुजौ निजौ[1] । चक्राते वसुधां दुःस्थामास्कन्दाद्यैरुपद्रवैः ॥२९५६॥
त्रिल्लकः प्रबलैरन्यैः सहाभेदं प्रवर्धयन् । नामहीद्विमहैकामः सान्त्वनामपि भूपतेः ॥२९५७॥
षष्ठे निष्ठां गते रोगमये द्वारपतावपि । नियुक्तः क्ष्माभुजा धन्यो[1] निरगात्सारमूलकम् ॥२९५८॥
भोजश्च्युतोऽमुतोऽन्येषां बलिनां गोचरे पतेत् । प्राग्प्रतिष्ठो निस्तीर्णो देशाद्वासाध्यतां व्रजेत् ॥२९५९॥
इति संचिन्त्य सामाद्यैरुपायैस्तं जिघृक्षुणा । क्ष्माभुजामन्दसंरम्भो विदधे सोऽभियोगभाक् ॥२९६०॥ युग्मम् ॥
अज्ञातोदर्कवैषम्या दुर्नीतिः सा महीभुजम्[1] । व्यावृत्यावाधताच्छिन्नपुच्छाकृष्टेव पन्नगी ॥२९६१॥
बलिनं राजवदनं नृपं त्वावेत्य निर्बलम् । आभ्यन्तराश्च बाह्याश्च विक्रियां चक्रमाययुः ॥२९६२॥
छिद्रान्तराणि सुलभानि सदैव हन्त पातालरन्ध्रसरणेरिव दण्डनीतेः ।
बहिर्भवन्प्रसरमन्तरसंप्रविष्टो यास्यप्रतर्क्यनियमात्पतनं भजेद्वा ॥२९६३॥
भोजत्यागोऽर्थितो राज्ञा क्षीणार्योऽसौ व्रजेदितः । उक्त्वेत्यमुं बलहरस्तस्य वृत्तिमकारयत् ॥२९६४॥
तां लब्धप्रसरां मायां राजपक्षे विलोक्य सः । कृत्यन्तराणि संलेभे प्रयोक्तुं नीतिकौशलात् ॥२९६५॥
संधिं पदे पदे बद्ध्वा सार्धं बलहरादिभिः । कुर्वन्गमागमं धन्यो जनस्यावाप हास्यताम् ॥२९६६॥
शश्वद्यावर्तमानस्य राजकार्यस्य नावधिम् । अरघट्टघटीयन्त्रगुणस्येवाससाद सः ॥२९६७॥
तस्य चक्र इवोद्भ्रान्ते कर्तव्ये तैक्ष्ण्यभागपि । भेत्तुं प्ररोढुं वाप्यासीन्नयो बाण इवाक्षमः ॥२९६८॥
नीतराजद्वयो व्यग्रः शेषस्यैकस्य विग्रहे । चतुरङ्ग इव क्रीडन्विवशोऽभूद्दिशां पतिः ॥२९६९॥
बद्धलक्ष्यः प्रदानार्थं ततश्च छद्मना परान् । भञ्जनो वाजिपत्त्यादि नाप्यासीत्प्राप्यजीगणत् ॥२९७०॥
दस्युषु स्थूलसङ्गेषु[1] शीतापायप्रतीक्षिषु । नागाद्बलहरः स्वेषामुन्मूलनमशङ्कत ॥२९७१॥
सामर्थ्यशिथिलाभिन्नभावे सूचितविप्रिये । तस्मिन्धावति धन्ये च शङ्कस्तोऽवेपताकुलः ॥२९७२॥
संमन्त्र्य सार्धं भोजेन धन्यं समदिशत्ततः । बद्ध्वार्पयत नागं मे भोजं दास्यामि वस्ततः ॥२९७३॥
भूरिकार्यकृतं स्वस्य बन्धनार्थान्त्रहां[1] रिपोः । धन्यो व्यसनवैवश्याद्वियं नाबुद्ध तस्य ताम् ॥२९७४॥
पार्थिवाः स्वार्थसंसिद्धित्वरानिरतसत्त्वया । धियाविशुद्धं यत्किंचित्कुर्वन्तीति न नूतनम् ॥२९७५॥
काकुत्स्थोऽपि[1] मिथापार्थी व्यग्रः सुग्रीवसंगदे । वीरोऽविधेयं स्वार्थान्ध्याद्वधं व्यधित वालिनः ॥२९७६॥

२९४९. [1]) A बन्धुं. २९५६. [1]) Emended; A तमनुजं निजम्; cf. पद्यस्य जनकचन्द्रस्य श्रीचन्द्रचानुजौ viii. 2753. २९५८. [1]) Emended; A धन्यैः. २९६१. [1]) Emended; A °भुजाम्. २९६७. [1]) Emended; A °इववर्त°. २९७१. [1]) A has written first घूतसङ्गेषु and subsequently indicated the reading स्थूल°. २९७४. [1]) Emended; A °ग्रहं. २९७६. [1]) Emended with C; A काकुस्थोऽपि.

संहृत्य सत्यनिस्त्रिंशं राज्यगर्वाविशुद्धधीः । आचार्यं पाण्डवो राजा धर्मनिघ्नोप्यघातयत् ||२९७७||
आ भिक्षुविग्रहाख्यिल्यशीघ्रधुर्नागस्य विग्रहः । स्वार्थापेक्षी तटस्थस्य तत्काले न विगर्हितः ||२९७८||
अगृहीत्वा तु भूभर्त्रा कंचिद्भोजार्पणे पणम् । सोत्राक्रम्भीत्यभूत्तस्मिन्मन्युर्मतिमतां मनाक् ||२९७९||
यथा तत्कृत्यमायत्यां हितं जातं तथैव चेत् । विचार्याकारि राज्ञा तच्छेमुषीयममानुषी ||२९८०||
विभिन्न इव भोजस्तु नागं समदिशद्यथा । दिन्नुर्बल्लहरो[1] राज्ञे त्वदर्पणपणेन माम् ||२९८१||
बन्धमभ्यधानोस्य राज्ञस्त्रासादसौ भयेन् । स विदन्नथ माध्यस्थ्यमिति तं हि तथाब्रवन् ||२९८२||
षष्ठचन्द्रे गते निशां जयचन्द्रेण पार्थिवः । संगृहीतेन तं नागं पार्श्वं प्रावेशयत्ततः ||२९८३||
पक्षीकृतः क्ष्माभुजायं हन्यादस्मान्भयादिति । चलन्तमपि तं भोजस्तन्मन्त्रिणमबोधयत् ||२९८४||
तथेति जानन्नपि तं कृष्टोस्म्येतैर[1]नीशताम् । यातः किमपि हन्तेति दूतैर्नागोप्यभाषत ||२९८५||
नियतं नियतिस्रोतोगर्भे जन्तोर्निमज्जतः । कथ्यमानं तटस्थेन श्रोतुं न श्रवणौ क्षमौ ||२९८६||
नागे बद्धे तत्कुटुम्बैर्भीतैरेत्य समाश्रितः । मायाशाली बल्लहरो दुर्दर्शः समपद्यत ||२९८७||
भोजनिष्क्रयविक्रेयं तमादाय ययौ ततः । रिल्हणेन समं धन्यो धावन्बल्लहरान्तिकम्[2] ||२९८८||
सान्तर्हासो मोहयन्तौ[1] प्राङ्नागं दत्त मे ततः । भोजं दास्यामि व इति ब्रुवन्भ्रामयति स्म सः ||२९८९||
बद्धमूलतया दूरं दुर्धर्षो योद्धुमागतम् । सर्वं तत्र तयोः सैन्यं निन्ये कृत्यविधेयताम् ||२९९०||
वर्षयुद्धापकर्षादि खिन्नौ तौ ततोभ्यधात् । हतोपद्रुतयोः कुर्यां युवयोर्मतमित्यसौ ||२९९१||
एकप्रयाणान्तरिते स्थितयोः पथि चाकरोत् । कार्यान्तःपानवैवश्ये तयोर्मतिविमोहनम् ||२९९२||
काचिद्बल्लहरस्यासीत्पर्याप्तिर्धैर्यसत्त्वयोः । निश्चयोद्यतने काले वीराणां विरलैव या ||२९९३||
तथा हारितमार्गाय साहसात्पार्श्वमीयुषे । ब्रुह्यति स्म न धन्याय लोभाद्राजाय नापि यः ||२९९४||
मतिमोहे[1]न नागं चेद्युष्मे सचिवास्ततः । कुर्यां तं स्वपदेभ्यर्थ्य चकारेति च चेतसि ||२९९५||
नागासांनिध्यलब्धार्द्धदार्ढ्यार्थं गूढवैकृतः । भ्रातृव्योपानयन्नागं धन्यायेल्लोष्ठकाभिधः ||२९९६||
सचिवैर्निहते नागे निर्दैत्यहितमोहितैः । दुर्मन्त्रितं नरपतेः स्वैः परैश्च व्यगर्ह्यत ||२९९७||
स्वजातीयवधक्रोधाद्विरुद्धैः सर्वडामरैः । नागानुगैश्चाभितोभूत्ततो बल्लहरो बली ||२९९८||
देहिनो व्यसनापातवैवश्याद्भ्रमतोपथि । अकार्यं कुर्वतः कार्यं सिद्धः संसाधयेद्विधिः ||२९९९||
दुःसहविसतानवतया बद्धावधाने मनस्युन्मार्गभ्रमणैवशस्य रभसाच्छ्वभ्रे परिभ्राम्यतः ।
अन्योपाहितकोशपृष्ठलुठनात्संदर्शिनाङ्क्षनेर्जन्तोर्हन्त तनोति दुर्गतिशमं रम्यानुलोम्यो विधिः ||३०००||
तथा निरनुसंधानं नागं धीसचिवैर्हतम् । नाबुद्ध भोजः संजातत्रासस्त्वेवं व्यकल्पयत् ||३००१||
लब्धवर्णस्य नावर्णावहं कर्मेदमीशितुः । अलब्धपणबन्धस्य वाञ्छितान्यै विशङ्क्यते ||३००२||
[1]यथ युद्धमिति व्यर्थं[2] हर्षादाशामवापि यः । भोजमन्यकरस्थोयमशक्यो ह्यन्यथा मम ||३००३||

२९७९. [1]) Emended; A सोत्राक्रम्भी°. २९८१. [1]) Emended; A °बैलहरे. २९८४. [1]) Thus A, perhaps read °न्मन्त्रितमबो°. २९८५ [1]) Emended; A °स्मीत्यैतैर°. २९८८. [1]) Emended with C; A भोजोनि°.—[2]) Emended with C; A °न्बलहरान्तिकम्. २९८९. [1]) Emended; A मोहयन्तो. २९९१. [1]) Thus A; C °कर्षादिसङ्खिन्नौ.—[2]) Thus corr. by $A_2$ from °व्यधात्. २९९५. [1]) $A_1$ has written मतिमोहे; न supplied apparently by $A_2$. ३००३. [1]) The text of this verse is evidently corrupt; emendation doubtful.—[2]) Perhaps read युद्धमतिव्यर्थं.

उक्तोसि मोहयन्धन्यमुक्त्वा – – द्रिमं संदिशेत्[1] । इति मां राजवदनः स्थितस्तन्नूनमन्यथा ॥३००४॥ युग्मम्॥

आ भिक्षुविग्रहाद्रोहभिक्षस्यानुबन्धिनः । किं राजवदनोप्येष लोभात्संभाव्यते न भूः ॥३००५॥ 3005

अथाविशाङ्किनस्त्रासव्युदासायास्य साशङ्काः । रक्तार्द्रकुन्तिकस्ताङ्गि कोशपानं प्रचक्रिरे ॥३००६॥

प्रादुष्कृतभियः क्षिप्ररक्षिणोमुष्य तिष्ठतः । विश्वासार्थं बलहरो विरलः पार्श्वमाययौ ॥३००७॥

अमात्यमतिजाड्येन नष्टे कृत्येथ कृत्यवित् । स्वयमुत्तम्भने नीतः संरम्भैरसंभ्रमो नृपः ॥३००८॥

चैत्रः पादपमण्डलस्य तटिनीतोयस्य वर्षागमः सत्कारो गुणगौरवस्य नयनप्रेम्णोन्तिकासेवनम् ।
ऐश्वर्यस्य महोद्यमो जयविधेर्गाढाविषादग्रहः कर्तव्यस्य च सिद्धदैवनृपतिर्म्लानौ न तस्यावहः ॥३००९॥

प्रवाहेणेव कृत्यस्य हठेन हरतोन्तरे । प्रातिलोम्यं भिनवता पारं गन्तुं न पार्यते ॥३०१०॥ 3010

अतो धूर्तो नृपो मुग्ध इति ज्ञातोरिभिर्मुधा । मौग्ध्यं प्रदर्शयंस्तेषां यततेस्माभिसंधये ॥३०११॥

स हि यत्नप्रदानेन भजन्भोजान्तिकस्थितीन् । तस्याविश्वासपात्रत्वं मन्त्रस्तस्याभितोनयत् ॥३०१२॥

गन्धेन वासितोत्सङ्गाः कुरङ्गार्यङ्गजन्मना । प्रज्वलन्त्यो विभाव्यन्ते तटिन्योपि कथाटिभिः ॥३०१३॥

नीडस्थान्तः सरन्ध्रस्य सर्वतो हि भयं स्पृशन् । जाले हारावबद्धे च निर्गमे पतनं विदन् ॥३०१४॥

तान्वेद्यथा खगो भोजस्तथान्तःस्थेष्वविश्वसन् । बहिर्भूपेन दत्ताध्वा प्रस्थानेप्यभजद्भयम् ॥३०१५॥ युग्मम् ॥ 3015

तदा स तीरस्थ्यातिथितां प्राप्तः प्रैक्षत न क्षणम् । मनोविनोदनं किंचित्कृत्यं लोकद्वयोचितम् ॥३०१६॥

स्वाभिषङ्गमनुपङ्क्ति परस्य दुःखं हन्ताश्चर्यं व्यथयति प्रसभार्द्रभावम् ।
बद्धः सरोजकुहरे विरहार्तनादैश्चक्राभिधस्य मधुपोधिकमेति दैन्यम् ॥३०१७॥

रणे पूर्णव्रणास्यानशोणितो लूनकुन्तलः । फेणोद्गार्याननः क्रन्दंस्तेनैकः प्रैक्ष्यत द्विजः ॥३०१८॥

स पृष्टो विप्लुतैर्नीतं सर्वस्वं विक्षतं तथा । स्वं डामरैर्निवेद्यैनं निनिन्द भ्रातुमक्षमम् ॥३०१९॥

स्वदौस्थ्यार्तमनास्तस्य दुःखेन व्यथितोन्वहम् । वह्नितार्द्रव्रण इव प्राह स्मेति स सान्त्वयन्[1] ॥३०२०॥ 3020

गर्हार्होस्मि न ते ब्रह्मन्योनुमाद्योहमीदृशः । विषमे वर्तमानश्चेत्यथ सोपि तमब्रवीत् ॥३०२१॥

दुर्मेदेनामुना ब्रूहि कोर्थः पार्थिवपुत्र ते । सारासारविदो यूनः कुले जातस्य मानिनः ॥३०२२॥

प्राणान्संदेहमारोप्य प्रणम्य प्राकृताशयान् । पीडयित्वा विशः क्लेशैः कार्यं किमिव पश्यसि ॥३०२३॥

वध ते प्रतिभात्येव जेतव्यो विहितो न किम् । अभिशीघ्रः स सारङ्गः परशौर्याभिमञ्जने ॥३०२४॥

यत्र शास्त्रशलाकापि विकला तद्विधीयते । इन्दीवरदलद्रोण्या घटनं स्फाटिकाश्मनः ॥३०२५॥ 3025

पृथ्वीहरात्मतारादिप्रत्यनीकिजितः परे । के नामात्र न संघर्षे क्षुद्रमाया दरिद्राति ॥३०२६॥

किं दृप्यां एव कुत्रापि कृत्यं दैराज्यजीविनाम् । भृत्याशयाः फणिग्राहिगृहीता इव भोगिनः ॥३०२७॥

जातैः क्ष्मातलयोर्द्वये फणिकुले धिग्भोगिडिम्भैर्मुदा[2] व्यालग्राहिविकासितास्यकुहरैर्मांसस्य[3] हा गृध्यते ।
एतान्भिक्षयितुं न तु प्रथयितुं ते जीविकार्थे जनश्वासार्थं ननु कारयन्ति हि दृतैर्निर्मज्जनोन्मज्जनम् ॥३०२८॥

इत्युक्तवन्तं तं सान्त्वयित्वा भोजो व्यसर्जयत् । तदैव चास्य व्याकोशविवेकः समपद्यत ॥३०२९॥

३००४. [1]) Thus A; C °मुक्त्वाम्मुग्धोऽस्मि सन्दिशेत्.—[2]) Perhaps read संदिशन्. ३०११. [1]) Emended with C; A °भीतः ३०२२. [1]) सारसा no longer legible in A; foaud in R G C. ३०२०. [1]) Emended; A पृच्छ. ३०२८. [1]) Emended with G (*sec. manu*); A °कुलैर्भौगि°.—[2]) Emended; A मुधा.—[3]) Emended with G (*sec. manu*); A °कासितत्व कुहरैर्मांसस्व ३०२९. [1]) Emended; A तसैव.

भव्यात्मत्वं प्रशममहिमोल्लासने हन्त हेतुर्भावानां तु ध्रुवमपरथा मार्दवं क्रूरता वा ।
3030 स्पृष्टं[1] पादैरमृतमहसः स्यात्कठोरं हिमांशोर्याति ग्रावाप्यहह रभसादार्द्रतां चन्द्रकान्तः ॥३०३०॥
राजन्याभिजने जातोप्यलज्जत्वमशिक्षितः । सोन्तरं स्वस्य राज्ञश्च मुहुर्मेददचिन्तयत् ॥३०३१॥
गुणैः शौर्यनयत्यागसत्यसत्त्वादिभिः प्रभोः । पूर्वेप्युर्वीभुजः खर्वाः क्षुद्राः स्पर्धाय के वयम् ॥३०३२॥
तस्य प्रभाववीर्येपि समये क्षान्तिशीतला । शक्तिः क्षयजडत्वेपि मुग्धानां नो महोष्मता ॥३०३३॥
क्ष्वेडाभितापनिस्त्रिंशोरगसंगमेपि तुङ्गस्य चन्दनतरोरपि शीतलत्वम् ।
काले हिमर्तुपरिपिञ्जरसंज्वरेपि निम्नस्य कूपकुहरस्य महोष्मयोगः ॥३०३४॥
3035 कुतोपि पर्ययात्कार्यं क्षमं नृपममुं विना । प्राप्य कस्य पुनः प्राप्यमप्यभुक्त्या न बाधितम्[1] ॥३०३५॥
भ्रष्टं निर्झरवारि भुभ्रमचलैः स्वीयेन भूयः क्वचिल्लभ्यं लभ्यमथाश्रतः कलुषतादुष्टं प्रकृष्टं न तत् ।
निर्यन्निर्भरनिम्नगाम्बु नभसः प्राप्येत नित्यं दधत्प्रालेयत्वमुपेत्य शुद्धिमधिकां नाद्रेर्हिमाद्रेर्नगैः ॥३०३६॥
तदर्थमेव यथितो योनर्योमथितात्मनः । स तेन स्वस्थतां नेतुमर्थितो न स्पृशेद्रुषम् ॥३०३७॥
प्रोषाय योस्य दववह्निमदावमुष्मिन्स्वस्थे स तेन शिखिना ग्लपितः समीपम् ।
अभ्येति चन्दनतरोर्दववह्निदाहशान्त्यै यदि प्रियकृदेव न तस्य किं स्यात् ॥३०३८॥
समयं[1] दुर्गतावर्हदपकर्तेव भूपतिम् । लोकनाथं तमुद्दतुं धीरं धन्यः पुनः पुनः ॥३०३९॥
3040 राजप्रसादनोपायान्वेषी बलहरान्तिकम् । राजदूतमथायान्तमेकदैकं[1] व्यलोकयत् ॥३०४०॥
दरद्देशो व्रजन्दृष्टवान्प्राक्प्रज्ञातमन्तिकम्[1] । स नमन्तं तमानीय ततः स्मेर इवाब्रवीत् ॥३०४१॥
राज्ञः किमन्यसंधानैः संधिं बध्नात्वसौ[1] मया । प्रार्थ्यैर्हि भिषजा भोज्यमातुराय समर्प्यते ॥३०४२॥
ततस्याभ्रद्धानस्य नर्मस्मेरस्य जानतः । प्रत्ययोत्पादनं तैस्तैरालापैः किंचन व्यधात् ॥३०४३॥
निर्दम्भभाषितैरूढविस्रम्भः स कथान्तरे । अथाभिगम्य राजानं सुतम्भोजमभाषत ॥३०४४॥
3045 राजपुत्राभिजातस्य पादच्छायास्य लभ्यते । स्वर्णाद्रेरिव कल्याणप्रकृतेः पुण्यभागिभिः ॥३०४५॥
अनुवृत्त्यातिमृद्व्यापि तस्यापोढेत[1] वैकृतम् । ज्योत्स्नयेव शरज्ज्ञानुपरितापौष्ण्यमम्भसः ॥३०४६॥
अपि स्मरसि वार्तत्वे[1] नियुक्तोस्मि महीभुजा । त्रिशतस्ते दरद्देशामभूवं पुरतः पुरा ॥३०४७॥
ततो निवृत्तो वृत्तान्तं मुक्त्यमाख्याय तावकम् । कालं क्षेप्तुं कथां[1] दैर्घ्यं नयन्मध्ये तमभ्यधाम्[2] ॥३०४८॥
क्षुत्तृडध्वक्रमभ्रान्तान्देव[1] त्वामवलोकय माम् । निन्दतः स्वानुगान्भोजो[2] निर्भर्त्स्यैवं तदाब्रवीत् ॥३०४९॥
3050 स दैवतमिवास्माकं कुलालंकरणं प्रभो । वयं त्वत्सुकृतो यस्य नामुमः पादसेवनम् ॥३०५०॥
गण्याः पर्यन्तनिःसारास्तत्संबन्धादिमे वयम् । चन्दनभ्रान्तिकृत्काष्ठं यस्यास्तद्गन्धवासितम् ॥३०५१॥
तच्छ्रुत्वैव दयार्द्रत्वं त्वयि यातः स लक्षितः । पृष्टकम्पितेव किं गर्भरूपो वक्तीति मां पुनः ॥३०५२॥
तन्निशम्यैव भोजस्य द्रवीभूतमभून्मनः । सोन्तर्बाष्पोप्य[1]पश्यत्तं सान्त्वयन्तमिवागतः ॥३०५३॥

३०३०. [1]) Emended with C; A स्पष्टं. ३०३५. [1]) Emended; A बाधितुम्. ३०३९. [1]) Emended with G (sec. manu); A समयोदु°. ३०४०. [1]) Emended with G (sec. manu); A °मेकमेकं. ३०४१. [1]) Emended; A °न्दृष्टवाक्यप्रज्ञान्तम°; C °वाक्यप्रज्ञातुम°. ३०४२. [1]) Emended with C; A सन्धिबन्धात्वसौ. ३०४६. [1]) Emended; A °पोढत. ३०४७. [1]) Emended; A चारुत्वे. ३०४८. [1]) Emended; A कथापैर्ध्यं.—[2]) Emended; A तमभ्यधात्. ३०४९. [1]) Doubtful emendation of C; A क्षुन्दखभ्र°.—[2]) Emended; A भोजं. ३०५३. [1]) प्य omitted in A; supplied with C.

तस्य ममाश्वासंबोधमुग्धत्वेन विहीयते । तत्त्ववित्कारणाज्ञानादन्तःकरणवेदनम् ॥३०५४॥
अश्रद्दधानस्तामित्थं भोजस्याकृष्टवर्मिणः । प्रतिद्रूतीकृते तस्मिन्धन्यो न प्रत्ययं दधे ॥३०५५॥
दयिताभुग्यथा नागवृत्तान्ते न भवेत्तथा । महीभुजं मोहयितुं मायया दीव्यते मया ॥३०५६॥
मा भूद्विमोऽयमित्येवमुक्त्वा बलहरं रहः । व्याजार्जवेन भोजस्तु संधिबन्धाय तत्वरे ॥३०५७॥युग्मम्॥
तत्कालयोग्यसाचिव्यशक्तिकाचतुरस्तथा । तेनाशु दैशिकापत्यमेको दूत्ये न्ययोज्यत ॥३०५८॥
स बालकतया नित्यस्वतन्त्रशक्तिकां स्वयम् । आचरेदिति नाशङ्कां भोजे बलहरोभजत् ॥३०५९॥
पार्थिवः प्रार्थितः संधिदूतमाप्तं प्रतीक्षते । प्रत्यागतेन तेनेति ततो भोजोभ्यधीयत ॥३०६०॥
तत्रासंनिहितान्याप्तः स्त्रीत्वादप्रतिभामपि । धात्रीं नोनाभिधानां स्वां राज्ञोभ्यर्णे व्यसर्जयत् ॥३०६१॥
मृतेन पित्रा मात्रा च हीनं तमनुयातया । मातृकृत्यं ययासीच्छैशवे माननीयया ॥३०६२॥
पत्युः प्रीत्यै विसंधानध्वंसाकल्पादिकल्पनात् । सखीकृत्यं सपत्नीनां यया शान्त्यैर्ष्यया कृतम् ॥३०६३॥
ह्रासोल्लासे हि कार्याणां योग्यकृत्याप्रनिश्चयात् । न यां सुक्षत्रियां क्ष्माभृत्संभ्रान्तां जातु वीक्षते ॥३०६४॥
श्वशुरेण प्रजाभिश्च कृतं राज्ञोभिषेचने । आशास्यं यां महादेवीपट्टबन्धं समादधे ॥३०६५॥
अपत्यांप्रयताभोगलोभभर्तृप्रसादनैः । प्रेर्यमाणाप्यकार्येषु बुद्धिर्यस्या न धावति ॥३०६६॥
स्वचान्यत्र च संधाने जाते भर्तुरभिसधीः । भाग्योदयेष्वनुत्सिक्ता या चाखण्डितसद्व्रता ॥३०६७॥
आ बाल्याद्भ्रातृविद्भर्तुः कुसृत्यनुसृती न सा । कार्यमध्यं विगाहेत मानाभिजनरक्षिणी ॥३०६८॥
इति कल्हणिकादेव्या माध्यस्थ्ये स धियं व्यधात् । प्रस्थानपदयात्रां सा सीमान्तप्रापणावधि ॥३०६९॥कुलकम्॥
गुप्त्यै लम्पकविल्लादि पराध्ये मध्यपातिनाम् । पाथेयार्थं पृथुस्वर्णभाजि कोशादि चात्मनः ॥३०७०॥
प्रापयामास किं चाष्टौ प्रकृष्टाभिजनोद्भवान् । पालनार्थं राजपुत्रान्देवी यत्सर्वसंविदम् ॥३०७१॥युगलकम्॥
बालकं तद्गृहीत्वा तामागमत्पार्थिवेन सः । धात्रीं स कारयन्धन्यो बद्धेच्छासिद्धिनिश्चयाम् ॥३०७२॥
विहितप्रत्ययस्तस्याः सद्यः स्याप्तु महीपतिः । राजधर्मस्य च वशवासीद्दोलाकुलाशयः ॥३०७३॥
स हि दध्यौ निर्विरोधो वैराग्येणाथ मायया । संकटान्मोचितव्योसौ यायात्कालेन विक्रियाम् ॥३०७४॥
अनिःशेषितजीमूतजालमाविर्भवन्नपि । अनूनक्लेशदोषं च विवेको न स्फुरेच्चिरम् ॥३०७५॥
मुग्धाचिरनुसंधाननागबाधावशेस्य नः । स्वार्थस्य सिद्धये मांया तेनेयं निरमायि वा ॥३०७६॥
लब्धलक्षेपरिक्षीणे शक्तौ यूनि गणाश्रिते । क्षत्रधर्मस्थिते नेदृग्विवेकः क्वापि लक्ष्यते ॥३०७७॥
अचलि कुङ्कुमं पुष्पमपुष्पं क्षीरिणः फलम् । अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम् ॥३०७८॥
न त्याज्यो राजपुत्रोसावेवं मायानिधिर्यदि । एवंविवर्तश्चेत्तस्मिन्नदृष्टे किं दृशोः फलम् ॥३०७९॥
राज्ञी राजात्मजार्थिते प्रतिज्ञाभङ्गशंसिनः । ऋजुभावात्सुस्पष्टमन्यत्कार्यं न मन्यते ॥३०८०॥
अटन्ती कुटिलं स्पष्टं सरित्सैर्वेन लक्ष्यते । कान्ताकुन्तलनिष्यन्दी तोयबिन्दुरिव क्रमः ॥३०८१॥

३०५४. 1) Emended with G (sec. manu); A °कारणज्ञा°. ३०६२. 1) Emended; A हीने. ३०६४. 1) Emended; A °ह्रासो. ३०६५. 1) Emended; A श्र. ३०६९. 1) Emended; A सीमन्ताप्रा°. ३०७०. 1) Emended; A °पातिनम्. ३०७१. 1) Emended with C; A प्राप्तुयामास.—2) Emended with G (sec. manu); A °न्देवीयत्स°. ३०७४. 1) Doubtful emendation; A °तव्यासौ. ३०७६. 1) Emended; A मुग्धाचिर°. ३०७७. 1) Emended; A शक्तौ. ३०८१. 1) Emended with C, A, has first written अ–न्ती and then supplied टि over the lacuna.—2) Emended with C; A सरस्व°.

इति ध्यात्वा राजधर्मं सत्यप्रशोचितं स्वधात् । धन्यरिल्हणयोः कार्ये भुतावन्यान्विसर्जयन् ॥३०८२॥
स्वस्यैवार्थस्य दार्ढ्याय साल्हणिस्त्वां विरक्षते । समागमायेत्युक्त्वाथ धन्यो दूतैरनीयत ॥३०८३॥
मा भैषीदेव संधित्सुः सैन्यादिति मितानुगः । अवर्तिष्ट तटिन्याः स द्वीपान्तस्तत्प्रतीक्षया ॥३०८४॥
सरित्सा जानुदघ्नाम्भा भूत्वा घर्मद्रुते हिमे । गगनालिङ्गिभिर्भीमा तरङ्गैः समपद्यत ॥३०८५॥
अवाप्ता येर्ध्यवालक्ष्यभावं यान्त्यपि दन्तिनाम् । रुद्धः सिन्ध्वाभवत्सोथ द्विषां रन्ध्रैषिणां वशे ॥३०८६॥
सिन्धोरुभयतस्तोयैर्व्याप्तनीरभुवोन्तरे । ते डिण्डीरोपमां[1] प्रापुः पिण्डिताः पाण्डुवाससः ॥३०८७॥
खाशकानां[1] सहस्राणि भोजस्य पतितं[2] बले । स्थितवन्ति निहन्तुं तं तथास्थितमचिन्तयन्[3] ॥३०८८॥
दृग्भ्यां संभ्रमदीनाभ्यामपशान्त्यै स्पृशन्निव । कर्णे सल्हणसूनुस्तान्संतर्ज्यावृजिनोब्रवीत् ॥३०८९॥
निर्दम्भमस्य विस्रम्भाद्दायतो विहिते वधे[1] । निरत्ययो निपातः स्यान्नियतं निरये पुनः ॥३०९०॥
हतेस्मिन्बहुभृत्यस्य न च शक्तिक्षयः प्रभोः । नैकपक्षक्षये तार्क्ष्यस्यैरंहः संहारमर्हति ॥३०९१॥
अपि वा वाच्यता राज्ञामेवं विस्रब्धबाधनात्[1] । तुल्यस्तुल्येन कर्तव्यं किमनुध्याय बध्यते ॥३०९२॥
यथायं भृत्ययेनन्यकर्मा भूपं[1] निषेवते । तथा ममापि यत्नोयं तत्सेवासादने यतः ॥३०९३॥
युक्तमित्यादि तेनोक्ता अपि निश्चलनिश्चयाः । ते न्यषिध्यन्त निर्बन्धात्प्रतिज्ञायात्मनो वधम् ॥३०९४॥
राज्ञी तथैवादरिद्राभिक्षं तत्प्रक्षितुं ततः । कारिताः कोशपानं ते तमर्थं सोपि बोधितः ॥३०९५॥
तेनावेदितनिर्व्याजतया धीरो महीपतिः । अनुध्यायाथ संदिग्धं संधिसिद्धिममुग्धधीः ॥३०९६॥
अज्ञातनिश्चयः सिद्धेर्विनान्तःकरणं परैः । अथ प्रास्थापयद्देवीं सामात्यां तारमूलकम् ॥३०९७॥
राजधर्मविधेयत्वाद्वार्यक्रूरशङ्किनी । प्रस्थानप्रार्थनां भर्तुः सा स्वीकृत्य ततोब्रवीत् ॥३०९८॥
असामान्येष्वमात्येषु कुसृत्यालोकनात्सकृत् । आर्यपुत्र विचार्योस्ति[1] विस्रम्भः किं विरोधिनाम् ॥३०९९॥
वहा निर्मानुषोन्मेषं[1] शेमुषीत्वं विगाहितुम् । प्रयते नु कथंकारं मूर्तत्वं मर्त्यधर्मिणाम् ॥३१००॥
देहोपकरणत्वं ते प्राणैर्मम विचिन्त्यते । सतीधर्मस्तु सहते राजधर्मस्य नोन्नितम् ॥३१०१॥
त्वच्छिन्नतास्यसदाचारं कलिकृत्यं द्विषि त्वयि । प्रारब्धो देव भोजेन हिमाद्रौ हिमविक्रयः ॥३१०२॥
न गृह्णाति शमं वेत्ति स्वस्यान्यस्य न चान्तरम् । निर्व्यूढमददोषोथ प्रायेण प्राकृतो जनः ॥३१०३॥
पुत्रमन्यविरोधादिबुद्धभुद्धा प्रभावति । साध्वाचारोपि भूपालः क्रुध्यन्विस्रब्धबाधने ॥३१०४॥
समयालङ्घनामोघगिरा देवेन पीयते । लोकत्रयैकपात्रेस्मिन्यशो नूनं मया सह ॥३१०५॥
ज्ञातव्यसंक्षयोपेक्ष्यमाणावास्त्वन्यदाशयः । ममैवास्वादयन्त्यादादात्मंभरिपुरास्थितिः[1] ॥३१०६॥
इत्युक्त्वा विरतां सत्यसंधः साध्वीं धरापतिः । शान्तशङ्कामकृत्वा तां समामन्त्र्य न्ययोजयत् ॥३१०७॥
भङ्क्त्वा सर्वानयं वातुं प्रयोक्तुं वेतनं नृपः । संरम्भे किमयं ध्यायत्यन्तः सर्वोप्यचिन्तयत् ॥३१०८॥

३०८३. [1]) Emended; A °भिस्त्वां. ३०८४. [1]) Emended; A भैषीरिव सन्धित्सव. ३०८७. [1]) Emended with C; A °रोपमतां. ३०८८. [1]) Emended; A खश°.—[2]) Emended; A पतिते.—[3]) Emended; A° चिन्तयत्. ३०८९. [1]) Emended; A °तज्यं वृजिनो°. ३०९०. [1]) Emended; A विधेः. ३०९२. [1]) Emended; A °बोधनात्. ३०९३. [1]) Emended; A रूपं. ३०९७. [1]) The *akshara* स्थां could also be read न्यां; thus C. ३०९९. [1]) Doubtful emendation; A विचार्योस्ति. ३१००. [1]) Conjectural reading; A °न्मायां. ३१०४. [1]) Emended with C; A क्रुध्य वि°. ३१०६. [1]) Thus A; the text of this verse requires emendation. ३१०७. [1]) Conjectural reading; A has written originally ---- न्ययो° and subsequently filled up the *lacuna* with मामा मन्त्र्या; G (*sec. manu*) सोमामन्त्र्य.

उपायेषु प्रयुक्तेषु देवीसंप्रेषणावधि । नान्वहस्व प्रयोक्तव्यं यदवाशिष्यत कश्चित् ॥३१०९॥
स्वपक्षभेदाद्भर्तुः सबलस्याबलस्य यो: । परीक्षकस्याथ केचिन्माध्यस्थ्येनावसन्काचेत् ॥३११०॥
तेप्यल्पे वा महान्तो वा क्षीणदाक्षिण्यभृत्कुलाः । भोजगृह्यैः सहावभन्कन्यां सर्वेपि डामराः ॥३१११॥
ते ह्यविक्षतटस्थत्वाद्वैराज्येस्माभिरीदृशाः । भोजः संजात इत्याशु माध्यस्थ्यं परिजह्रिरे ॥३११२॥
त्रिल्लको भोजसविधं तनूजं प्राहिणोद्धुतम् । प्रावेशयच्चक्रमालां च चतुष्कं पुष्कलैर्बलैः ॥३११३॥
ये भिक्षुविप्रवेप्यासक्ताजदाक्षिण्यरक्षिणः । विरोधिसविधं प्रापुस्तेपि नीलाश्वडामराः ॥३११४॥
लहरादेवसरसाङ्खोल्लडातश्च[1] डामराः । त्रयो नीलाश्वतश्चैका डामरी पर्यशिष्यत ॥३११५॥
न व्यरंसीद्विमं तत्तद्भवन्ये साल्हणेर्बले[1] । पतत्प्रावृट्प्रमत्तौघघोषोम्भोधाविवोद्धतः[2] ॥३११६॥
भोजस्तु देवीमायान्तीं[1] श्रुत्वा मल्लहरं ततः । ध्रुवं संधित्सया बद्ध इति सुव्यक्तमभ्यधात्[2] ॥३११७॥
एतावन्ति दिनान्यासीत्पुंसो भ्रमयिता पुमान् । संबन्धिनीनां माध्यस्थ्ये स्वकुल्यात्कोन्यथा भवेत् ॥३११८॥
कुलचूडामणिः प्रेम्णा स यथैवं प्रवर्तते । किं स्यादगण्यप्रायाणां कार्कश्यं तत्र मादृशाम् ॥३११९॥
यत्र मायामिमां ब्रूथ तत्तथास्त्वस्मि वञ्चितः । विश्वास्यैव भविष्यामि नाकीर्तीनां निकेतनम् ॥३१२०॥
मा च भूद्विजयाशा वः समेता निखिला इति । अद्राक्ष्म चेदृशान्व्यूहानवारुक्षाम[1] वोन्नतेः ॥३१२१॥
युक्तियुक्तमिदं चान्यथोक्तवान्बहु निश्चयात् । नाशक्यतान्यथा कर्तुं भोजो बल्लहरादिभिः ॥३१२२॥
द्विमासान्तरितेमित्रप्रमाथेपरथा कथम् । फलकालेसि संवृत्तमिति तं चावदन्नृपाः ॥३१२३॥
नारमूलस्थितौ[1] राज्ञ्यां ससैन्यौ धन्यरिल्हणौ[2] । राजपुत्रैः सह ततः पाञ्चिग्राममवापतुः ॥३१२४॥
ग्रामाग्रेत्य तौ मधास्तीरेश्चाभि कृतस्थिती । परस्मिन्कूलगहने भोजोप्येतावुपाविशत् ॥३१२५॥
अभ्रान्तं विशतो दिङ्मुखेभ्यस्तत्कटकं भटान् । पश्यन्तः केपि संधिं न श्रद्दधुर्नृपतेर्बले ॥३१२६॥
हठप्रविष्टान्निर्यातुमक्षमानल्पसैनिकान् । धन्यादीन्राजवदनो हन्तुं शश्वदचिन्तयत् ॥३१२७॥
छित्त्वा सुय्यपुरात्सेतुं राज्ञः सैन्यं जिघांसवः । महापद्मसरोमौषु निभृतं केचनावसन् ॥३१२८॥
अन्ये तत्साहसोदन्तान्वेषिणः पतनोन्मुखाः । स्वैः स्वैर्मार्गैस्तत्र तत्र तस्थुर्भूभृदसंमताः ॥३१२९॥
आस्कन्दं भाङ्गिलेयाद्याः पुरे शांकरवर्मणः । शमालाक्षिसिक्कावामिं[1] डामराः समचिन्तयन् ॥३१३०॥
प्राप्यं महासरित्कूलं त्रिल्लकाद्यैरगण्यत । नीलाश्वडामरैर्याशा[1] कार्या च नगरान्तरे ॥३१३१॥
किमन्यद्राजगृह्याणां समं सर्वे जिघांसवः । कारण्डवानां तोयान्तर्वेष्टितानामिवाभवन्[1] ॥३१३२॥
संदिग्धशङ्कितं कार्यं सर्वतः समतां तदा । प्राप वृष्टेरवग्राहग्रहयोगान्तरस्थितेः ॥३१३३॥
पदे पदे राजन्नमूपथायोत्थानमिच्छतः । छिन्दन्बल्लहरस्येच्छां भोजो व्यग्रत्वमग्रहीत् ॥३१३४॥
क्षणे क्षणे विसंधानध्यायिना तेन कथन । बध्यमानास्वन्तरायः[1] संविधास्तु व्यधीयत ॥३१३५॥
घटनामुखयौ यो यो विरोधः कटकद्वयात् । सन्धिकामः स्वयं भोजस्तं तं त्वरितमच्छिनत् ॥३१३६॥

३११५. [1]) A °ङ्खोलक्कातश्च. ३११६. [1]) Emended; A साल्हणे बले.—[2]) Emended with C; A °प्रमत्तोघ°. ३११७. [1]) Doubtful emendation; A सीघ्रीमायान्ती. —[2]) Emended A[2] हरस्ततः. ३१२१. [1]) Doubtful emendation; A चेदृशां व्यूहान-वरुक्षाम; C चेदृशं व्यूहमवरोक्ष्यामि. ३१२४. [1]) Doubtful emendation; A °स्थिते राज्ञ्यां; C °स्थिते राज्ञि.—[2]) Emended with C; A धेन्य°. ३१३०. [1]) A[1] gloss भाङ्. ३१३१. [1]) Thus A; C °रैरीर्ष्या. ३१३२. [1]) Emended with C; A °भवत्. ३१३५. [1]) Emended; A बध्यमानस्वाम्त°.

तुल्ये च कल्यकल्ये वा येऽरुवन्नाजरञ्जकाः । भयेन प्रययुस्ते यद्विकल्पं कार्यसंकटे ॥३१३७॥
कर्णे तत्कथयन्ति दुन्दुभिरवै राष्ट्रे यदुद्घोषितं तन्नव्याकुलतया[2] वदन्ति करुणं[3] यस्मादपायान्भवेत् ।
आयन्ते तदुदीर्यते यदरिणाप्युप्तं न[4] मर्मान्तकृद्येन केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभुजो रञ्जकाः ॥३१३८॥
भण्डस्ताण्डवमण्डपे कटुकथावीथीषु कन्थाकविर्गोष्ठ्या स्वगृहाङ्गने शिखरिभूगर्ते[2] खटाकुः स्फुटम् ।
पिण्डीभूततया विटश्च पटुतां भूभृद्गृहे गाहते गच्छन्ति ह्रदकृष्टकच्छपतुलां चित्रं ततोऽन्यत्र ते ॥३१३९॥
भूरोद्रेकविपर्यासाच्छान्तोष्मक्ष्माभृतस्ततः । वासरः शारणीचक्रे तुङ्गस्योत्तुङ्गमञ्जसा ॥३१४०॥
भानुर्दत्तपदो नूरोर्धातुर्गौवलयान्तरे । क्ष्माभृच्छिरोऽर्पितकरो रक्तमण्डलतां दधे ॥३१४१॥
अहस्त्रियामामुखयो -- [1] मध्यस्थया दधे । संध्यया वन्दनीयत्वं जनस्य[2] व्यञ्जिताञ्जलेः ॥३१४२॥
कन्नाटिदन्तैर्विस्फोटाच्चन्द्रकान्तैः सिरोद्गमः । श्वथथुः पयसां पत्या दधे राज्युदयोन्मुखे ॥३१४३॥
सदैन्येऽम्बरविन्देषु हीनद्वन्द्वोपजीवनैः । कन्नाटिनां घटेष्वेव षट्पदैर्घटितं पदम् ॥३१४४॥
अदृष्टकार्यपर्यन्तास्ततस्ते विषमस्थिताः । सरित्तटे सकटकाः पर्यतप्यन्त मन्त्रिणः ॥३१४५॥
न किंचित्प्रत्यभात्सर्वं लघु भ्रान्तं च जानताम् । ओघेन ह्रियमाणानामिवैषामवलम्बनम् ॥३१४६॥
तीरे परस्मिन्सरितो वसन्मल्लहरः पुनः । रुद्धः कन्दलितास्कन्दबुद्धिः साल्हणिनासकृत् ॥३१४७॥
कार्यातिपातादायातं मन्त्रिणां तन्मितं बलम् । तस्य प्रवर्धमानस्य सुखोच्छेदं बभूव यत् ॥३१४८॥
वितस्तासिन्धुसंभेदयात्रायां नगरे यथा । तथा तथापतन्त्रांत्री लोकोऽभ्रान्तो व्यवर्तत ॥३१४९॥
लेखैर्डामरसंहारखण्डनाय विसर्जितैः । सान्त्वैर्मथिता बाधिर्नानाप्ये राजबीजिनः ॥३१५०॥
शाठ्यान्वितैरनुसरैस्तुमुलोत्पादनैरपि । धीरो धैर्यान्निश्चयाद्वा स्वैः स कष्टुं न पारितः ॥३१५१॥
सामन्तानामागतानामविश्रम्भादसंभ्रमम् । न्यक्कृतोयं निपत्याशु कुर्यादत्याहितं रुषा ॥३१५२॥
कृते च कदनोंकारेनेन --[1] समुन्मिषेत् । द्विजानामिव दस्यूनां समूहस्तेन सर्वतः ॥३१५३॥
इति निर्ध्याय दुर्धुक्षुरिव भोजः क्षपात्यये । कुर्मः साहसमित्युक्त्वा निन्ये मल्लहरं समम् ॥३१५४॥तिलकम्॥
एषां मदर्थायातानां सामन्तानां सभोजनः[2] । दाक्षिण्यादिति नाभोजि तेनाप्यभिजनस्पृशा ॥३१५५॥
तथा स्वमत्यावैमत्यं तमज्ञात्वा तु मन्त्रिणः । निष्प्रत्ययास्तेन जातममन्यन्त नयात्ययम् ॥३१५६॥
पक्षिपक्षस्फुटास्फालशफरस्फुरितेष्वथात् । तेषामासन्निभास्कन्द[1]ः प्रधावदहितभ्रमम् ॥३१५७॥
कूले परस्मिन्कूलिन्याः स्वाभिसंधाननिर्वृतैः । समभाव्यत तैर्नान्यो रथाङ्गेभ्योऽभिषङ्गभाक् ॥३१५८॥
मरुत्काकुत्स्थदूतस्य कपेस्तीर्णाम्बुधेः पिता । ततान तेषां वृत्तानां सरित्पारगती --[2] ॥३१५९॥

३१३८. [1]) This verse and the following are found in *Vallabhadeva's Subhâshitâvali*, 462-463 (ed. Peterson and Durgâprasâda).—[2]) नव्याकुलतया supplied by A₂ in space left by A₁ —[3]) Thus corr. by A₂ from करुणां.—[1]) Thus corr. by A₂ from A₁ अपायाम°.—[5]) Thus in *Subhâshitâvali;* A °च्युमेण.—[6]) Thus corr. by A₂ from A₁ कर्मा°.—[7]) न्नु supplied by A₂ in space left by A₁. ३१३९. [1]) Emended; A कटुकथावीथीषु; *Subhâsh.* चटुकथावीथिषु.—[2]) Thus A₁ in margin and *Subhâsh.;* A₁ in text भूगर्ने. ३१४०. [1]) तुङ्ग supplied by A₂ in space left by A₁. ३१४२. [1]) Thus A₁; C supplements °र्वोरपि.—[2]) Emended with C; A जनबन्धस्य°. ३१४३. [1]) Emended; A °भास्वं. ३१४७. [1]) Emended with C; A °स्कन्धोद्बुद्धि:.—[2]) Emended with C; A साल्हणना°. ३१४९. [1]) Emended A °पतत्राचो. ३१५१. [1]) नेम supplied by A₂; A₁ indicated originally a *lacuna* of four *aksharas*; C supplements सर्व. ३१५४. [1]) A दुधु°. ३१५५. [1]) Doubtful emendation; A एतां मदर्थया.—[2]) Doubtful emendation; A सभोजनिः; C सामन्तानाममीजने. ३१५६. [1]) Doubtful emendation; A समत्यावै°. ३१५७. [1]) Emended; A °स्कन्धम°. ३१५९. [1]) Emended with C; A काकुत्स्थ°.—[2]) Thus A; C fills up the *lacuna* with बलम्.

कीर्णकर्णज्वरांधारीन्पीत्कृतैस्तीरभूरुहाम् । आभित्योन्निद्रकोणैत्थं निन्युस्ते तां निशीथिनीम् ||३१६०||
क्षपान्ते क्ष्माधरोत्संसहेमतामरसभ्रमम् । उद्गच्छतो रवेर्यावच्चिच्छिदुर्न करच्छटाः ||३१६१||
चक्राह्वविरहालोकसशोकानामिवागलत् । कुड्मलाक्षिपुटाद्यावच्छ्रेशं नाम्भश्च वीरुधाम् ||३१६२||
मितपत्तियुतस्तावत्तरुकच्छाद्विनिर्गतः । - - -[1]स्त्वरयन्युद्धं[2]वाहान्मुर्ध्न्यकुङ्क्षिणा स्पृशन्[3] ||३१६३||
रोद्धुकामाण्डामरीयान्वीरान्दृष्टैर्विलोकितैः । सर्वतो धावतः कुर्वन्योधान्प्रतिहतौजसः ||३१६४||
पारश्वधी चारुवेषो युवा संमुखमापतन् । युग्याधिरूढस्तैः प्रैक्षि संभ्रमः सरितस्तटम् ||३१६५||कुलकम्||
अदृष्टपूर्वं तं दृष्ट्वा श्रीखण्डोल्लिखितालकम् । कुङ्कुमालेपिनं चैने भोजोयमिति मेनिरे ||३१६६||
अतिवाह्य निशां राजवदनं तं विमोहयन् । प्रानश्च तरसामन्त्र्य स तथा संमुखोऽभवत् ||३१६७||
प्रविष्टयुग्यं तोयान्तः पाराद्धावितवाजिनः । धन्यादयस्तमभ्येत्य मुदिताः पर्यवारयन् ||३१६८||
उदभूत्तुमुलः शब्दस्ततः कटकयोर्द्वयोः । एकत्राक्रन्दमुखरः परत्रानन्दनिर्भरः ||३१६९||
नादमाकर्ण्य संग्रामबुद्ध्या दिग्भ्यः प्रधावितैः । तं परैर्मिलितं वीक्ष्य मूर्च्छितमिव[1] डामरैः ||३१७०||
तस्याभिनन्दनालापप्रमुखा[1] प्रक्रियाभवत् । अदैन्यभुग्धन्यादिष्वनुज्झितनिजक्रमा ||३१७१||
प्रवमानं मनोहर्षं वेगात्संस्तभ्य[1] सर्वतः । अथेत्थं स्तुवता तत्तस्य धन्येनाभ्यधीयत ||३१७२||
राजपुत्र पवित्रेयं पृथिवी स्थैर्यशालिना । त्वया धाम्ना सुमनसां मरुणा वा महीभृता ||३१७३||
गवां जयति सर्वासां निर्विकारतया वसन् । विक्रियोपहतं गौस्ते क्षीरं -[1] क्षीरवारिधेः ||३१७४||
कस्य पुंस्कोकिलस्येव त्वां विनाधममभ्यतः । निर्गत्य निजकुल्यानां सिद्धं मध्यावगाहनम् ||३१७५||
सदाचारस्य भवता प्रथमं प्रहते पथि । न तच्चित्रं संचरामश्चरमं चेत्ततोऽधिकम् ||३१७६||
इत्यादिप्रसृतालापस्तोत्रापोऽधिरोह्य[1] सः । जयोत्तरङ्गं तुरगं स्तुवद्भिस्तैरनीयत ||३१७७||
लवन्याः कतिचित्कोशान्क्रोशान्तस्तदा[1] ययुः । स्वकुल्यैर्नीयमानं तं काका इव पिकान्तिकम् ||३१७८||
स एवमेकर्विशेऽब्दे ज्येष्ठस्य[1] दशमेऽहनि । त्रयस्त्रिंशद्वर्षदेश्यः समगृह्यत भूभुजा ||३१७९||
राज्ञी कृतप्रणामं तं प्रिये पुत्रमिवागतम् । अभ्यनन्दच्छ्रान्तभृत्यमस्याहारमकल्पयत् ||३१८०||
इन्दुवंशाभिसंवादिगुणग्राममवेक्ष्य[1] तम् । प्रागदृष्टवती मेने वञ्चिते सा विलोचने ||३१८१||
गुणैरशाठ्यदाक्षिण्यमाधुर्यधैर्यकृत्रिमैः । तस्या विशदशीलं स क्ष्मापतिममन्यत ||३१८२||
मुखरागो मनोवृत्तेर्हारोज्ज्वल्यं गृहश्रियः । भर्तृस्वभावस्याचारो योषितामनुमापकः[1] ||३१८३||
दिनक्षयव्याञ्जिनाध्वक्रमं[1] प्रस्थातुमुत्सुकम् । राज्ञोऽभ्यर्णे विशेत्येवं[2] दाक्षिण्यात्कोऽपि नाब्रवीत् ||३१८४||
कथंचिद्बुद्धमाध्यस्थ्यवैमत्यैः सचिवैरथ । स स्वादिक्षवरपतिराशान्तेऽर्थ्योऽभ्यधीयत[1] ||३१८५||
राज्ञोऽभ्यर्णे विशेत्युक्ते[1] रुपोद्धातोपमं वचः । तत्तस्य श्रोत्रशष्कुल्यां -[2] शङ्कुक्रियां व्यधात् ||३१८६||

३१६३. [1]) Thus A; C स वीरस्त्वर°.—[2]) Emended with C; A °न्युद्धयथा°.—[3]) The letter न् cannot be read with certainty; C °स्पृशत. ३१६९. [1]) Emended; A °क्रान्त°. ३१७०. [1]) Thus corr. by A, from डामरैर्मि°. ३१७१. [1]) Emended with G (sec. manu); A °मुखापकि°. ३१७२. [1]) Emended with C; A °स्तम्भ्य. ३१७४. [1]) Thus A; C supplements सं. ३१७७. [1]) Emended; A °स्तोत्रापोधिरोह. ३१७८. [1]) Emended; A °स्कोशादि°. ३१७९. [1]) Emended with C; A ज्येष्ठस्व. ३१८१. [1]) Emended; A इन्दुवंशा°. ३१८३. [1]) Emended; A मुखरागमनो°. ३१८४. [1]) Emended with C; A °क्रमं.—[2]) Emended; A विशत्वेवं. ३१८५. [1]) Doubtful emendation: A स स्वादिक्षुवंरपतिराशान्तेऽर्थ्योभ्य°. ३१८६. [1]) Emended; A विशत्यु°.—[2]) Thus A; C supplements सदा.

चिरात्ताडितमर्मेव समाश्वास्यैक्षताथ सः । मध्यस्थानां स्थितं स्थैर्यं[1] दाक्षिण्यादोष्ठयोः परम् ॥३१८७॥
प्राणान्मुमुक्षोस्ते रूक्षभाषिणस्तस्य सान्त्वनैः । मन्दत्वं विक्रियां निन्युर्विनयानतमौलयः ॥३१८८॥
आचारं चैनमाक्लिग्धमपि न्याय्यं वचस्विनम् । न कोपि प्रतिवाक्येन शक्यं जेतुममन्यत ॥३१८९॥
3190 अथ स्वान्तस्थितस्वामिवैवश्यं दर्शयन्निव । दशनांशुवनैर्धन्यो वीरः स्निग्धमभाषत ॥३१९०॥
पद्धतिं राजधर्माणां सदाचारे स्थितां च ते । जानतोपि कथं मोहः क्रमायातेषु वस्तुषु ॥३१९१॥
किं संधिः सोभिधीयेत यत्र संधेयदर्शनम् । अकृत्वा गम्यत इति प्राज्ञो कथमजीगणः ॥३१९२॥
अनद्यतनभूभर्तृसुलभं[1] भूभुजं[2] नव । ज्ञात्वा सत्त्वोज्ज्वलं ज्ञातिधर्मेजातप्रवर्तनम् ॥३१९३॥
नास्य दम्भस्मयस्तम्भाप्रीतिस्थैर्यखलोक्तयः[1] । आदरादर्शवैशद्ये निःश्वासस्यापि काः श्रियः ॥३१९४॥
3195 अस्योपजीवनाद्या श्रीः साम्राज्यासादनान्न सा[1] । प्रकाशो बिम्बितो[2] योर्काद्दीपास्त्याज्ज्वलतः स किम् ॥३१९५॥
निर्वाणगोष्ठीनिष्ठत्वं शमिनामाश्रयेषु यत् । तत्पर्यवस्य राजर्षेः --[1]न्मृन्दानुबन्धिनः ॥३१९६॥
एवं न्वगृहसंप्राप्यप्रायोनिःश्रेयसस्य ते । स्थानैः श्रियः समाप्याथ किं स्यादन्यैर्महीधरैः ॥३१९७॥
मुग्धा न केचन परे गणिताः फणिभ्यः कालानुकूलनिजकुण्डजलत्यजो[1] ये ।
श्लिष्यन्ति चन्दनतरुङ्गिशशिरान्निदाघे माघेप्यशीतमनघं[2] विवरं विशन्ति ॥३१९८॥
प्राणोपकरणं राज्ञो राज्ञी राजात्मजाश्च ये । तद्धिते यदनौचित्यं तेषामौचित्यमेव तत् ॥३१९९॥
3200 त्यक्तोष्मवैकृतं पाथ इव क्वथितशीतलम् । अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति ॥३२००॥
तथा समर्थी सामर्थ्यादप्रत्याख्याय[1] भारतीम् । कुण्डशाद्वलवस्तस्थौ प्रस्थानार्थं स मन्थरः ॥३२०१॥
पथि संमथितस्तोत्रान्यास्तव्यान्वीक्ष्य सर्वतः । अजायताथ संरूढकृत्यसाधुत्ववदार्द्रधीः ॥३२०२॥
पदातिचरणक्षुण्णरेणुव्याजाददृश्यत । बद्धधरातलं बद्धसंधीव नभसा समम् ॥३२०३॥
दध्यौ ----[1] भोजः कश्चित्संप्राप्नुयां नृपम् । कश्चिदमुष्य विध्येत दर्शनं विप्रलम्भकैः ॥३२०४॥
3205 आराधन --[1]धाम्नि नान्तरान्तरितो विटैः । स्वामिनां क इवाप्नोति गुणाविष्करणक्षणम् ॥३२०५॥
शीतोपचारकरणाद्दयितो भवेयमौर्वार्दितस्य जलधेः प्रसृतं धियेति ।
कोसौ हिमाद्रिपयसो विनिपात एव ग्रासीकृतं तिमिभिराहत ---[1]स्यात् ॥३२०६॥
इत्यादिचिन्तासैमित्यात्पुरक्षोभाचलक्षयन् । सैन्यस्य दृढाभ्रतयाबुद्धासन्नं[1] नृपास्पदम् ॥३२०७॥
नातिप्रांशुं नातिकृशं सूर्यांशुश्यामलाननम् । सरोजकर्णिकागौरं शिथिलश्रथविग्रहम् ॥३२०८॥
ककुद्मत्ककुदोत्सेधिस्कन्धमायतवक्षसम् । दमभुजानतिदीर्घेण व्यक्तगण्डगलोन्नतिम् ॥३२०९॥
3210 उन्नसं पक्वबिम्बोष्ठं विस्तीर्णानुल्बणालिकम् । तिर्यग्विप्रेक्ष्य ---[1]धीरमन्थरगामिनम् ॥३२१०॥
समाहितांशुकोष्णीष --[1]श्रीखण्डव --[2]म् । सीमन्त --[3]त्रुम्बिन्या रेखया चन्द्रगौरया ॥३२११॥

---

३१८७. [1]) Emended with C; A स्थौर्यं. ३१९३. [1]) Emended: A सुलभे.—[2]) Emended; A भूभुजां. ३१९४. [1]) Emended with G (sec. manu); A °स्तम्भप्री°. ३१९५. [1]) Emended with C; A सः.—[2]) Emended with C; A बिम्बतो. ३१९६. [1]) Thus A; perhaps read राजर्षेर्विवृद्धन्मृ°; C °र्षेर्जन्मात् कृन्दा°. ३१९८. [1]) Emended with C; A °जल--जो.—[2]) Emended with C; A °शीतम--वं. ३२०१. [1]) Doubtful emendation; A समर्थासामर्थ्या--प्रत्या°; C °सामर्थ्यात्प्रत्या°. ३२०४. [1]) Thus A; C supplements विज्ञसरो. ३२०५. [1]) Thus A; C आराध्यन् प्रभुं धाम्नि. ३२०६. [1]) Thus A; C °हतमिव तन् स्यात्. ३२०७. [1]) Emended; A °सन्नृपास्पदम्. ३२१०. [1]) Thus A; C °प्रेक्षमाणास्यं. ३२११. [1]) Thus A; C °ष्णीषमौलिं.—[2]) Thus A; C श्रीखण्डवर्तुलं.—[3]) Thus A; C सीमन्तस्थानचु°.

अथावरुह्य हर्म्यस्थसचिवैः परिवारितः[1] । ------[2]मायान्तं तमैक्षत पार्थिवः[3] ॥३२१२॥ कुलकम् ॥
प्रीतिविस्फारितदृशा राज्ञा पृष्टस्ततः सभाम् । सोऽध्यारुरोह संबाधां कौतुकोत्कन्धरैर्जनैः ॥३२१३॥
स्पृष्ट्वा पादौ निषण्णोऽग्रे नृपस्यानीय पाणिना । खड्गधेनुं पाणिबद्धामासनाग्रे समार्पयत्[1] ॥३२१४॥
पाणिं सफणिवल्लीकं बिभ्रतामाङ्गुलिद्वयम् । ततोऽस्य चिबुकोपान्ते विन्यस्यन्पार्थिवोऽब्रवीत् ॥३२१५॥
न विगृह्य गृहीतोऽसि नाधुनापि निबध्यसे[1] । तदङ्ग कस्माद्धीमः शस्त्रमेतत्त्वयार्पितम् ॥३२१६॥
व्यजिज्ञपत्स भूपालं देव शस्त्रस्य धारणम् । स्वामिसंरक्षणं स्वस्य परित्राणस्य कारणम् ॥३२१७॥
देवे निजप्रतापाग्निगुप्तसप्तसरित्पतौ । लेशावकाशो विरलः स्वशस्त्रस्यापि दृश्यते ॥३२१८॥
लोकान्तरेऽपि शरणं चरणाश्रयणं प्रभोः । तथात्र लोके किं कार्यं त्राणोपकरणैः परैः ॥३२१९॥
राजा जगाद तं स्वस्वस्पर्धाबन्धेऽधुना भवान् । निर्व्यूढकृत्यो वादीव कृत्यं नो वर्तते परम् ॥३२२०॥
भोजो बभाषे दाक्षिण्यजननायाधुना प्रभोः । दृष्टान्ते मया किंचिज्ञोपचारार्थमुच्यते ॥३२२१॥
किं ते न चिन्तितं दुष्टं किं किं न कृतमप्रियम् । यदसिद्धं न तद्व्यक्तिमगादित्यवधार्यताम् ॥३२२२॥
किं न मद्वान्वये कश्चित्कारणेष्वुदितो भवान् । विद्मः समानन्यकुल्यं भाग्यं वयं धर्मचक्षुषः ॥३२२३॥
यदा यदा देव वाञ्छामकार्ष्म भवदप्रिये । भूमिस्तदा तदा भूम्ना भूप ---[1] भूयसः ॥३२२४॥
यावत्कवीनां निर्भाति प्रतिभानेन भास्वरः । देवाभवश्च मत्यक्षः प्रतापस्ताद्दशस्तव ॥३२२५॥
न शेखरे न प्रदरे न दरेष्वुज्झितो[1] मया । प्रालेये भूभृतः कुञ्जे संज्वरस्त्वत्प्रतापजः ॥३२२६॥
ततः प्रभृत्यवनतिप्रणयः शरणैषिणः । सिद्धः संध्यादिबन्धत्वादेव दूरस्थितेर्न मे[2] ॥३२२७॥
अथाभेदाभिलाषेण पापार्थात्किल चेष्टितम् । स्फुरत्तामात्रकव्यक्त्यै न तु तद्विप्रहामहात् ॥३२२८॥
त्वत्संबन्धादिमे दिक्षु प्रतीक्ष्याः क्ष्माभुजां[1] वयम् । सङ्क्रान्तगाङ्गाम्भसः काचकुम्भसंभावना भुवि ॥३२२९॥
अद्यापि द्योतते शाहिरांहयेन दिगन्तरे । तत्संतानभवोऽनन्तः समूहः क्षत्रजन्मनाम् ॥३२३०॥
त्वय्यर्पिते पार्वतीयभूभृत्सङ्गेऽन्यदादि[1] नः । कदाशानु --मुखैः[2] खेदोन्मुखैरभूत् ॥३२३१॥
इतीदृशीभिः[1] ---[2] प्रमाणमथ वा प्रभुः । इत्युक्त्वा भूपतेर्मूर्ध्ना सोऽगृह्णाच्चरणौ पुनः ॥३२३२॥
प्रणामसंभ्रमस्रस्तोष्णीषशीर्षं ततो नृपः । तस्योत्थितस्य स्वशिरोवाससा समवस्त्रयत् ॥३२३३॥
स्वां तां च शस्त्रीं तत्कट्यामुत्सङ्गे सान्त्वयन्न्यधात् । तस्यासंक्षोभगाम्भीर्यस्तमूचे च निषेधिनम् ॥३२३४॥
दत्ते[1] मया विभूषि वा स्वमेते पूजयाथ वा । न शस्त्रपदवैमुख्यं कार्यं मच्छासनं त्वया ॥३२३५॥
अवन्ध्यशासने --[1]स्यनुबध्नाति[2] ते न्यधात् । शस्त्रीं[3] राजानुगत्यैव बध्निस्वाङ्के स कालवित् ॥३२३६॥
ततो निर्यन्त्रणस्वस्य मर्मणः सान्त्वनस्य च । चिरसेवीव तत्कालं राज्ञोऽजायत भाजनम् ॥३२३७॥

---

३२१२. [1]) Emended; A °रितम्.—[2]) Thus A; C अनङ्कुशत्वमायान्तं.—[3]) Emended with C; A पार्थिवम्.
३२१४. [1]) Emended with C; A समर्पयत्. ३२१६. [1]) Emended; A न बध्यसे. ३२२३. [1]) Emended with C; A विद्म् स्मा°.
३२२४. [1]) Thus A; C सदा भूत्वा पार्थ कम्पस्य भूयसः; perhaps read भूत्वा भूः प्रकम्पस्य भूयसः. ३२२६. [1]) Emended; A °ज्झितो.
३२२७. [1]) Emended; A संध्यादिव°.—[2]) Emended; A दूरस्थितै न. ३२२८. [1]) Emended with C; A पा°र्थात्किल.
३२२९. [1]) Emended; A क्ष्माभुजा. ३२३०. [1]) Emended; A शाहेयाङ्ग°. ३२३१. [1]) Thus A; doubtful.—[2]) Thus A; C कदाचाशानुर्मौगाहत्यैः खे°. ३२३२. [1]) Emended with C; A इतीदृ°.—[2]) Thus A; C supplements स्तुतिभिः.
३२३५. [1]) Emended; A दत्तं. ३२३६. [1]) Emended; A °शासनो—; perhaps read अवन्ध्यशासने राज्ञीत्यनु°; C °शासनोनामी-त्यनु°.—[2]) Emended; A °त्यनुबध्नाति ते; the *lacuna* not indicated.—[3]) Emended; शस्त्री.

अन्यत्प्रविष्टो धन्योथ स्वार्थाम---[1]बन्कृती । कृतप्रणामो भूपाल त्वद्गुणाकर्णनं विना ॥३२३८॥
न प्राणा द्रविणं नाथ गण्यं निर्विक्रिया पुनः । सत्क्रिया स्वामिनोप्यर्थे[1] तस्मात्पार्थिव चिन्त्यताम् ॥३२३९॥
तथापि कथ्यमानं तत्र स्यात्संभावनाभुवि । यदस्मिं[1]श्चिन्त्यतेस्माभिरिति भूपो व्यभाषत ॥३२४०॥
क्षणमुच्चावचां चर्चां विरचय्य विशां पतिः । भोजेन सार्धं शुद्धान्तं रड्डादेव्यास्ततो ययौ ॥३२४१॥
कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलाम् । स राजपारिजातं तं मेने कल्पलतायुतम् ॥३२४२॥
मान्योयं देवि सौजन्यज्ञातेयाभ्यामिहागतः । विशिष्यतेसौ पुत्रेषु क्ष्माभृच्चोपेत्य[1]भाषत ॥३२४३॥
सभाजनाय सौजन्यनिधिर्भोजान्वितस्ततः । उदूढकार्यभाराणां दाराणामभ्यगाद्गृहान् ॥३२४४॥
अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहागतम् । अधुनैव नृपस्याप्तः संवृत्तोसीति[1] सस्मितम् ॥३२४५॥
लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोक्तिषु । ददत्येवोत्तरं भोजं निर्दिशन्त्यप्यभाषत ॥३२४६॥
आर्यपुत्र न विस्मार्यं प्रत्याख्यातामन्त्रितम् । मानैकशरणस्यास्य ज्ञातिभीतिप्रवर्तनम् ॥३२४७॥
पूर्वोपकर्त्रे सलिलं वृद्धावस्पृशतोन्वहम् । पश्चात्स्वकुलपद्मानां युक्तं जेतुं भवादृशाम् ॥३२४८॥
कार्यकृच्छ्रेवसन्नानाममुष्यागमनं विना । सिध्येद्दौत्यसंरक्षा नेह प्रत्यागमश्च नः ॥३२४९॥
उदीपे[1] रक्षतस्तीरं शरीराभ्यर्थिणी भवेत् । ध्रुवं वनस्पतेर्वीरु[2]त्संनिपातानुपातिनी ॥३२५०॥
पतिगत्यनुगामित्वं प्राणानां परिचिन्तितम् । तथा कार्यं यथा न स्याज्जातव्यस्यान्यथात्मनः ॥३२५१॥
राजा जगाद तां देवि सर्वकर्तव्यसाक्षिणी । अन्यथाप्रतिपत्त्यं[1] मे त्वमप्यस्य[2] न मन्यसे ॥३२५२॥
निगृहीतवतो दुष्टौ सुज्जिमल्लार्जुनावपि । निस्तापं मम नाद्यापि प्राप्तानुशयमाशयम् ॥३२५३॥
अथ राज्ञार्थितः स्थातुं परार्ध्ये धाम्नि सानुगः । भोजो नामन्यतान्यत्र राजधान्याः[1] स्थिरां स्थितिम् ॥३२५४॥
विदूराश्रयनिर्गोप्र्भावाप्रचुरदर्शनैः । आराधनं धराभर्तुरसाध्यं ध्यातवान्हि सः ॥३२५५॥
रक्षितृनमहीक्ष्मापास्थैर्यं[1] च समकल्पयत् । [2]अनया - नृपं कार्या न सुराराधनागमे ॥३२५६॥
विज्ञाय भावं प्रीतेन राज्ञा दत्तं[1] ततो गृहम् । सर्वोपकरणापूर्णं राजधान्यन्तरेभजत् ॥३२५७॥
राजापि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा । उपासितस्तत्र रतिं चिराभिन इवाययौ ॥३२५८॥
भोगवेलोचिताश्चर्यदर्शनादौ नृपोपि तम् । प्रियं पुत्रमिवास्मार्षीद्दूतैः पार्श्वं निनाय च ॥३२५९॥
जगाह दक्षिणे पार्श्वे भुञ्जानं ज्ञातिगौरवात् । स्पर्शास्वादितभोज्यादिदाने नैव व्यवर्जयत् ॥३२६०॥
अकृत्रिमं तथा स्नेहमुवाह ---[2] यथा । लङ्घितं ज्ञातिवृत्तस्मिंस्तद्वा[3]लापत्यकैः समम् ॥३२६१॥
तामेवालम्बत व्यक्तां[1] सोपि वृत्तिं यथा यथा । राजा सपरिग्रहोपि विस्रम्भमविगर्हितम् ॥३२६२॥
आसन्नाभ्यन्तरा भिन्ना ये द्वैधे तानदर्शयत् । राज्ञां[1] विरक्तिं स्वस्यारिबाहुल्यं न व्यसर्जयत् ॥३२६३॥

---

३२३८. [1]) Thus A; C स्वार्थाममलयन्कृती. ३२३९. [1]) Emended with C; A स्वामिनो॰र्थे. ३२४०. [1]) Emended; A यदास्मिं॰. ३२४३. [1]) Emended with C; A क्ष्माभृच्चोपेत्य॰. ३२४५. [1]) Emended; A संवृत्तोर्मीति; C संवृत्तोऽस्मीति. ३२५०. [1]) $A_1$ gloss उदीपः अतिवृष्ट्या अम्बुनिम्नजलागमः.—[2]) Emended with C; A ॰वीरुत्तनि॰. ३२५२. [1]) Emended; A प्रतिपत्त्यं.—[2]) Emended with C; A त्वमप्य॰. ३२५४. [1]) Emended; A ॰धान्यां. ३२५६. [1]) Emended; A ॰क्ष्मापास्थिरं.—[2]) Thus A; the text is here evidently corrupt; C अनयार्त्तं नृपं; G (*sec. manu*) अनुयान्तं नृपं कार्याकृत्सुराराधनागमे. ३२५७. [1]) Emended with C; A दातुं. ३२६०. [1])—[1]) Written by $A_5$ on new paper. ३२६१. [1])—[1]) Written by $A_5$ on new paper.—[2]) Thus A; C supplements जनकौ.—[3]) Emended; A॰ स्तद्वलापत्यकैः. ३२६२. [1]) Conjectural reading; A तमेवालम्बत व्यक्तिं. ३२६३. [1]) Emended; A राज्ञां.

अकृत्रिमात्समाधानात्करणानां सभान्तरे । न मत्यभाग्जडो नापि धृष्टो नापि बकव्रतः ||३२६४||
प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः । कार्ये नावदधे क्षुद्रः कवितेव महाकवेः ||३२६५||
न विक्रमकथासत्र ----[1]ध्यकत्थत । प्राग्वृत्तमन्तरा पृष्टः सोपस्कारं च नाभ्यधात् ||३२६६||
त्रि--कात्मभोः साम्यसकुल्यत्वाद्विचादुभिः । धीराधृष्टैर्दृष्टिपातैरपुनर्भाषिणो व्यधात् ||३२६७||
तथा स्पृष्टोप्यनुत्तानाशयोभूदवगाहितुम् । न शेकुस्तं यथा जाल्मनर्मधिस्पिशुनादयः ||३२६८||
क्षणेष्ववसितालोकक्षोभादिविशरारुषु । प्रा--[1]वसथं गच्छञ्शङ्कां[2] कामपि नातनोत् ||३२६९||
यथा यथास्य विस्रम्भाद्भूपोभूच्छिथिलाग्रहः । तथा तथैव सिद्धोत्थ इव नाधावदुद्धतम् ||३२७०||
सदैवामेसरोन्यत्र पश्चाद्धुद्धपदोभवत् । अनिषिद्धोपि शुद्धान्तमन्त्रागारावगाहने ||३२७१||
विज्ञप्त्यौपयिकावाप्तिप्रार्थनमादरात्स्वयम्[1] । दूरीचक्रे परापेक्षां शान्तसंशयिताशयः ||३२७२||
अना---समये तस्या---[1]रक्षिणः । न स्वमवृत्तमप्यासीद्वनावेद्यं महीभुजे ||३२७३||
मन्त्र्यान्तःपुरिकादीनां परस्परविगर्हणम्[1] । नाव्रर्णयद्विस्मृतिं च दुष्टस्वप्नमिवान्वयत्[1] ||३२७४||
सचेतनोपि दुर्नर्मगोष्ठीष्वनुरणन्वचः । अवदत्स्फुरदप्यन्तर्विटानां नाम लाघवम् ||३२७५||
एवं शुद्धानुभावस्य तस्य कृत्येन कृत्यवित् । पुत्रेभ्योप्याधिकां प्रीतिं बिभ्रन्भेजे[1] क्रमान्नृपः ||३२७६||
कलिकालमहीपालदुस्तरः सिंहभूभुजा । सोयं गोत्रपरित्राणे नवः सेतुः प्रवर्तितः ||३२७७||
इत्थं विद्रावितारोषोपद्रवस्मिन्नृक्कस्ततः । अभि--[1]मपि स्वास्थ्य--[2] भूभृदचिन्तयत् ||३२७८||
असौ हि निर्हिमोर्वीभृन्मार्गे काले पलायनम् । शाठ्यं सत्त्वस्य दुःसाध्यं वद्धं ध्यायन्व्यलम्बत ||३२७९||
अतः सुमेधा यात्रायां यावत्क्षणमपैक्षत । सञ्जपालिनाविचारात्तावत्प्रारम्भि धावनम् ||३२८०||
अल्पाधिष्ठानसुभटः स देवसरसोद्भटैः । बहुभिः सहितः सैन्यैर्मार्ताण्डे विदधे पदम् ||३२८१||
निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनाम् । माद्याश्च योधा निःसारा दर्पान्नेति विवेद सः ||३२८२||
त्रिलक्कानुचरा युद्धमसंनिहितसायकाः । तेन सार्धं विदधिरे न चाहीयन्त पौरुषम् ||३२८३||
निःसीमसैन्यसहितो[1] लवन्योन्यत्र डामरे । तत्र सर्वाभिसारेण धावतो युयुधे क्रुधा ||३२८४||
लुण्ठितद्रविणापूर्णास्ते देवसरसौकसः । सर्वे ततः सञ्जपालं विद्रुताः परिजह्रिरे[1] ||३२८५||
द्विषत्संवर्तवर्षाल्यां सर्वत्र त्रुडितेभवन् । अधिष्ठानभटा[1] एव कुलशैला इवोद्धताः[2] ||३२८६||
ते तीक्ष्णतीक्ष्णतरणौ सोढारातिरुपश्चिरम् । बहुभिर्हतवन्तोन्यांस्तत्र तत्राहवे हताः ||३२८७||
[1]क्षतेषु युधि सर्वेषु विन्ध्यानैर्मण्डलं निजैः । भूरेषु तत्र[1] मार्ताण्डोप्यासीदविरलव्रणः[1] ||३२८८||
रराजाजौ साञ्जपालिर्[1]गयापालो[2] हतेषु यः । त्रिषु वाजिषु[3] चातुर्यात्पदातिर्नोपलक्षितः ||३२८९||

३२६६. [1]) Thus A; C supplements °सप्तशमाद्यैः स्वं व्य°. ३२६७. [1]) Thus A; possible emendations would be विज्ञस्य-कान्प्रभोः or विगर्हकान्प्रभोः; C विचारकात्मभोः. ३२६९. [1]) Thus A; C प्रासौऽस्याव°.—[2]) Emended; A गच्छच्छ--ङ्कां. ३२७१. [1]) Emended with C; A °गाहने. ३२७२. [1]) Conjectural reading; A मार्थन--दरस्त्वयम्; C °मार्थमः स दरस्त्वयम् ३२७३. [1]) Thus A; C अनायासमये तस्य न वधुः पथि रक्षिणः. ३२७४. [1])—[1]) Written by $A_5$ on new paper. ३२७६. [1]) Emended with C; A भीजे. ३२७८. [1]) Thus A; C अभियोगमपि स्वास्थ्यहेतुं भू°. ३२८४. [1]) Emended with C; A निःसीम. सै°. ३२८५. [1]) Emended; A °जहिरे. ३२८६. [1]) Thus corr. by a later hand from $A_1$ अधिष्ठाने भटा.—[2]) Emended with C; A इवोद्धताः. ३२८७. [1]) Emended with C; A बहुभिर्ह°. ३२८८. [1])—[1]) Written by $A_5$ on new paper. ३२८९. [1]) Emended; A सञ्जपालि°.—[2]) Emended; A गयपालः; cf. viii. 3322.—[3]) Emended; A वाजिष्वचा°; C वाजिष्वचा°.

सत्यागयोधोपलब्धाजिर्जर्जरस्तदनुजः शिशुः । निनाय विस्मयं वीरान्दृष्टासंख्यमहाहवान्[1] ॥३२९०॥
दक्षिणं दोर्न तस्याके यद्यामं कम्पनापतेः । मद्देभांस्तापयत्यर्कः कुर्यान्नमरदाम्बिधुः ॥३२९१॥
स धावन्वाजिनाराजदेकदोःस्फुरितायुधः । सधूमदण्डो[1] दावाग्निः सपक्षेद्राविव[2] स्थितः ॥३२९२॥
तं वैरितुमुले बाणव्रणभङ्गेऽवसी पुनः । पृष्ठादलोठयद्वाजी --[1] बाबद्धपद्धतिः ॥३२९३॥
धर्मगौरवभूपृष्ठकाठिन्याघातपीडितः । स विसंज्ञो द्विषन्मध्यात्तनयाभ्यां विनिर्हृतः ॥३२९४॥
कटके सर्वतो नष्टे मार्ताण्डप्राङ्गनान्तरे । विरोध्यसाक्षि क्षिप्त्वा तं ताव्रपासरतां ततः ॥३२९५॥
तत्रस्थं --[1]ना क्ष्माभृत्सस्थितः पृथुलैर्बलैः । तावद्भिः प्राप्यमप्याशु डामरं पिण्डितं व्यधात् ॥३२९६॥
क्ष्मापाले विजयक्षेत्रं प्राप्ते चोटितवेष्टनः । सज्जपालो लवन्यस्य वसतीर्निरदाहयत् ॥३२९७॥
स तादृगपि भूपाले कुर्वे[1] वशीकृतभुवि । अदरिद्रो गिरिद्रोणीश्रेणिभूर्सु[2]लभाशनः ॥३२९८॥
संवृत्तो निःसहायश्च परिग्रहबहिष्कृतः । आपत्सुलभपाण्डित्यभृत्योपालम्भभाजनम् ॥३२९९॥
निकृत्तकरशाखोऽथ क्ष्मापकोपकपेर्व्यधात् । निरालम्भतया --[1] स स्वशीर्षफलार्थनाम् ॥३३००॥
रड्डादेवीतनूजानां ज्यायांसं गुल्हणाभिधम् । श्रीमांल्लोहरराज्येऽथ क्ष्मावृषा[1] सोऽभ्यषेचयत्[2] ॥३३०१॥
षट्सप्तहायनो[1] राजतनयः स वयोऽधिकान् । चूताङ्कुरो जीर्णतरुनिवेशानजयद्गुणैः ॥३३०२॥
अभिषेक्तुं सुतं देव्या यातायाः क्ष्माभुजो व्यधुः । शिरःशोणाश्मकिरणैश्चरणौ यावकारुणौ ॥३३०३॥
तत्राभिषिक्ते वसुधामुभावप्यशोभिताम् । देवीभावाभिषेकार्थमिवासिञ्चत्पयोमुचः ॥३३०४॥
भूयोऽपि राजवदनो विप्लवोत्पादनोत्सुकः । अमन्दमत्रचस्कन्द जयचन्द्रं नृपाज्ञया ॥३३०५॥
नागभ्रातृव्यसहिता गार्गैरनुप्रवेशिनः । पश्चात्प्रसर्पिणीः सेनाः सोऽवधीत्संकटेऽध्वनि ॥३३०६॥
गार्गिः परिभवम्लानाननं तिष्ठन्दिनैस्ततः । नागभ्रातृसुतावप्यर्थमव[1]धाल्लोष्ठकं[2] मृधे ॥३३०७॥
दुर्गमत्वादनाक्रान्तमन्यैर्वेगात्प्रविश्य च । दग्ध्वा च दिव्याग्रामं स निरगाल्लघुविक्रमः ॥३३०८॥
तथापि राजवदनो न शौर्यात्पर्यहीयत । न संदधे न चुक्रोध शक्यमस्य विनिर्गमम् ॥३३०९॥
अहन्यहनि हीनाभिः सेनाभिर्न्यपतन्नृपे । जयचन्द्रमुखाच्छभ्रदसुखान्यत्रधीभवत्[1] ॥३३१०॥
क्ष्मानायकोऽथ निःसीमनखबाहुप्रसारणः । रणान्तरेव तं तीक्ष्णैर्गूढन्यस्तैरघातयत् ॥३३११॥
तन्मुण्डगण्डलेखेन लुठता खण्डशः कृतः । झटिति त्रुटितः स्वास्थ्यविटप्यङ्कुरणोन्मुखः[1] ॥३३१२॥
पृथ्वीहरकुलाच्छेदस्वच्छया मेदिनीपतिः[1] । अवधील्लोठनमपि कम्पं[2]दण्डप्रयुक्तिभिः ॥३३१३॥
एकवारं वेष्टितोऽपि रक्षितस्त्रिलङ्केन सः । भूमिभृद्भीतिपाशस्य निपातेनाभ्यवर्तत[1] ॥३३१४॥
मल्लकोष्ठक्षुरजय्यसज्जु[1]चन्द्रादयोऽभवन् । जीवन्मृताश्च शान्ताश्च दारिद्र्योपप्लवार्दिताः ॥३३१५॥

३२९०. [1]) Emended with C; A °न्दृष्टसङ्ख्य°. ३२९२. [1]) Emended with C; A °दण्ड.—[2]) Emended with C; A °द्राविव. ३२९३. [1]) Thus A; C सहस्वावद्ध°. ३२९६. [1]) Thus A; C कम्पनाध्यमा°. ३२९८. [1]) Emended with C; A कुर्वो.—[2]) Emended with C; A °श्रेण--सुल°. ३३००. [1]) Thus A; C supplements सत्य. ३३०१. [1]) Emended; A श्रीमाल्लो°.—[2])—[2]) Written by $A_3$ on new paper. ३३०२. [1])—[1]) Written by $A_3$ on new paper. ३३०७. [1]) Emended with C; A °सुतामप्यामव°.—[2]) Comp. viii. 2996. ३३०८. [1]) Emended; A स. ३३१०. [1]) Doubtful; thus C; A °ख्यान्यत्रधीभवत. ३३१२. [1]) Conjectural reading; A °विर्वास्त्वङ्कुरो° C °विवास्वंकुरणौ°. ३३१३. [1]) Emended with C; A °पतेः.—[2]) Comp. regarding this name the note to viii. 2496.—[2]) Emended; A कच्छचन्द°. ३३१४. [1]) Emended with C; A °भ्यवर्तिता. ३३१५. [1]) Thus A; misread °सज्जुचन्द्रा° in R C; cf. सज्जुचन्द्रस्य viii. 643.

अविचिन्त्योच्चलक्षोणिभृतः प्राणान्विनश्वरान् । ऐश्वर्यकल्पितमूढत्वादनिर्व्यूढव्यवस्थिती ॥३३१६॥
मतेनुमितकौशल्यं तत्तद्राजाश्रयाद्गते । कुलोद्धतो विहितवान्सिंहदेवो व्यवस्थितिम् ॥३३१७॥युग्मम्॥
सुल्लाविहारं पैतृव्यं पितुर्देवगृहत्रयम् । तत्रार्धेलिखप्रासादं परिपूर्णं व्यधान्नृपः ॥३३१८॥
स एव ग्रामान्संग्रामीमहापणसमर्पणैः । निर्दोषपारिषद्यादिद्विद्याभिषोग्यधीर्व्यधात् ॥३३१९॥
अवरोधेन्दुवदनां मृतामुद्दिश्य चन्दलाम् । मत्यग्रापि मठोनूनभीर्हारेचारितातिथिः ॥३३२०॥ 3320
स्पृष्टो नगरनिर्दाहैः सोपि सूर्यमतीमठः । पूर्वाधिकोपगर्वेण तेनैव निरमीयत ॥३३२१॥
संजाते सज्जपालस्य ततो लोकान्तराश्रये । कम्पने निदधे राजा गयापालस्तदात्मजः ॥३३२२॥
विपाकसुकुमारोपि दुःसहः सूनुनाभवत् । विस्मारितः स सौम्येन शरज्ञानुरिवेन्दुना ॥३३२३॥
ग्रीष्मोष्मदोषविषमेष्वविशेषवृत्तेर्मेघोदये तटतरोस्तटिनीप्रवाहः ।
पश्यन्नकाण्डतडिदापतनेन नाशं नाशंसति स्वसलिलस्य विभूतिलाभम् ॥३३२४॥
आ भिक्षुक्षपणाद्राजभञ्जनादपि भूभुजः । विधुरे कार्यभाराणां योभूद्दृढधुरः परम् ॥३३२५॥ 3325
तस्य तस्मिन्नृपरते क्षीणप्रक्षीणकण्टके । स धन्योनन्यसामान्यप्रेमा प्रमथमाययौ ॥३३२६॥
ताम्बूलमायात्रिकतां नीत्वामुनामयानिव । आर्पिपन्मधुरावद्धं जीर्णं यस्य निजः सुतः ॥३३२७॥
स जगज्जीवितेनापि रक्षणीयः क्षमापतिः । पदे पदे विपन्मग्नः प्रजोद्धरणधीरधीः ॥३३२८॥
व्याधितस्य विनिद्रोपि संसक्रान्मङ्कलेच्छुभिः । नान्तक्षणे तस्य पार्श्वान्कृतशोवाचलन्नृपः ॥३३२९॥
प्रियप्रजस्यामात्यस्य स्वरूपाविपरीतता । तस्य कंचित्क्षणं जाता जनंजीवितदा भवे ॥३३३०॥ 3330
भूभुजामपि मान्धातृमुखानां निधनेन याः । दुःखं ययुः प्रजास्तासां समभावि तदा सुखम् ॥३३३१॥
द्वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत् । अभ्याहतं यत्साचिव्यं तस्य सर्वाभिषङ्गभित् ॥३३३२॥
कालो बली व्यवहृतेर्ननु तद्वशेन पूर्वापराचरणविस्मरणे न कस्य ।
शक्तिः क्षितेर्वहनकर्मणि योग्यतायां निर्दारणे मुरजितस्तु वराहतायाम् ॥३३३३॥
नगराधिकृतो भूत्वा सुज्जेर्निर्वापिते पुरा । चिरप्रक्डां यो देशस्थाव्यवस्थां न्यवारयत् ॥३३३४॥
भ्रष्टः क्रयेषु दीनारव्यवहारोव्यवस्थया । निगृह्य तं भ्रंशकार्येनिर्धितण्डः प्रवर्तितः ॥३३३५॥ 3335
परिणीताङ्गनाशीलभ्रंशो गृहपतेरभूत् । दण्डप्रवृत्तिर्या तेन सा विचार्य निवारिता ॥३३३६॥
एकान्ततो हितो भूत्वा विश्रामेवं पुनर्व्यधात् । नगराधिक्रियां लब्ध्वा स एव परिपीडनम् ॥३३३७॥
बद्धाभिर्नर्तकीभिश्च परिणीतगृहस्थितौ । संप्रयुक्तान्कथ्यमानान्हठेनादण्डयद्बहून् ॥३३३८॥

३३१६. 1)—1) Written by $A_5$ on new paper.—2) Emended with C; A ऐश्वर्यं क°. ३३१७. 1)—1) Written by $A_5$ on new paper.—2) Emended; A° स्थितम्. ३३१८. 1)—1) Written by $A_5$ on new paper.—2) Emended with C; A स्वखा°; cf. viii. 248.—3) Emended with C; A पैतृव्य.—4) Emended with C; A —नृप. ३३१९. 1) Emended with G (*sec. manu*); A ग्रामसा°. ३३२०. 1) Emended with C; A °वदनं.—2) Thus A, R; $A_5$ चन्दलाम्; C चन्द्रलाम्. ३३२१. 1) Emended with G (*sec. manu*); A पृष्टो नगरनिर्मोह (पृष्टो written by $A_5$); cf. viii. 1193. 1528. ३३२३. 1) Emended; A सौम्येन. ३३२६. 1) Emended; A धन्यो मान्यसा°. ३३२७. 1) Thus A; perhaps read नीत्वामुना°.—2) Emended with C; A आर्पिपामधु°. ३३२९. 1)—1) Written by $A_5$ on new paper. ३३३०. 1)—1) Written by $A_5$ on new paper. ३३३२. 1) Emended with C; A अभ्याहतं. ३३३३. 1) Emended with C (*sec. manu*); A निर्मारणे. ३३३५. 1) Doubtful emendation; A प्रवर्तत; C प्रवर्तेत. ३३३७. 1) Emended; A पीडनम्. ३३३८. 1) Emended with C; A बद्धाभि — —कीभिश्च.—2) Conjectural reading, A परि — तगृ°; C परिकीतगृ°.

किंचो---[1]लेशानां तुषाणामिव चिन्तनैः । अक्रोशालोभयोर्भूमिर्न तादृगपरोभवत् ॥३३३९॥

भिक्षुमक्षार्जुनौ[1] कालानुवृ[2]त्त्याभितं[3]वानपि । नासौ जहौ स्वामिहितं[4] न तौ ---[5] नावधीत् ॥३३४०॥

अक्षीणत्यागहीनस्य विभूतिसमयेप्यभूत् । संस्कारौपयिकं नास्य पर्याप्तं निधने धनम् ॥३३४१॥

कृतघ्नतायां राज्ञोन्यत्पर्याप्तं किमुदीर्यताम् । यो जीवित इवामीतान्संविभेजेनुजीविनः ॥३३४२॥

लोकान्तरातिथिं विज्ञाभिधामुद्दिश्य वल्लभाम् । धन्यस्य विज्जनामाङ्क[1]विहारारम्भकारिणः ॥३३४३॥

परलोकं प्रयातस्य निर्माणं[1]प्रतिपूरणम् । स्थितं व्यवस्थितेः कं च विनियोगं चकार सः ॥३३४४॥ युग्मम् ॥

भूभृद्धार्मिकताव्याप्तकृतोत्सेकव्यासवैः । युद्धैकवृत्तिभिरपि प्रवृत्ते पुण्यकर्मणि ॥३३४५॥

विपक्षाणां सुभिक्षेण तुरुष्कविषयाभयात्[1] । जन्मभूमेर्वृत्तये यैः क्रौर्यादन्यत्र शिक्षितम् ॥३३४६॥

येपि वृत्तिं विरोध्यांजिव्यपे[1] सुस्सलभूभुजि । कलहावसरेष्वेवं कश्मीरेषु प्रपेदिरे ॥३३४७॥

गोत्रे तेषां क्षत्रियाणां जातः कर्मलियानुजः । राजबीजी सङ्क्षियाख्यः प्रतिष्ठां[1] स्वाख्ययाकरोत् ॥३३४८॥

वितस्तापुलिने बाणलिङ्गे तेन निवेशिते । जायते स्वर्धुनीरोधःसंप्रवृद्धविमुक्तधीः ॥३३४९॥

तदीयं च मठं चैव तपोधनविभूषितम् । दृष्ट्वा निवर्तते रुद्रलोकालोकनकौतुकम् ॥३३५०॥

लोठनेन्यप्रतिष्ठानामधन्यद्रविणार्पणे । न तेनायतने काले संरब्धं[1] शुद्धबुद्धिना ॥३३५१॥

उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः । पुलिनोर्वीं वितस्ताया विहारेण व्यभूषयत् ॥३३५२॥

प्रासादपञ्चकव्याजात्तद्विहारस्थितः करः । उदस्त इव धर्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ॥३३५३॥

सांधिविग्रहिको मङ्खाख्योलंकारसोदरः । समठस्याभवत्प्रष्ठः श्रीकण्ठस्य प्रतिष्ठया ॥३३५४॥

मठाग्रहारदेवौकोजीर्णोद्धारादिकर्मभिः । अनुजः[1] सुमना नाम रिल्हणस्यासदत्तुलाम् ॥३३५५॥

भूतेश्वरे मठं कृत्वा त्रिप्राम्यामभ्यपादयत्[1] । तोयं कनकवाहिन्या वितस्तायाश्च यः पितॄन् ॥३३५६॥

प्रदेशे[1] कश्यपागाराभिधाने नीलभूः सरित् । जीगीषयेव जाह्नव्या यत्र पूर्वां दिशं गता[2] ॥३३५७॥

उत्ताराय गवादीनां यः सेतुं तत्र बन्धयन् । निर्ममे निर्मलं कर्म संसारोत्तरणक्षमम् ॥३३५८॥

नगरेपि स्वनामाङ्कवृषाङ्कागारकारिणा । मठो येन कृतोभ्रष्टजटाधरघटाश्रयः ॥३३५९॥

मम्मेश्वरं स सौवर्णामलसारं[1] चकार यः । सोमतीर्थं तथा तोयोद्यानादुद्द्योतितान्तिकम्[2] ॥३३६०॥

अत्र क्षमाभुजो[1] वंशे वंशीभूत्स्वधनादिषु । सासूयत्वादमात्यानां[2] धनप्राणादिहारिणः[3] ॥३३६१॥

कुध्यन्नवासनाध्यासासूयया वासवोपि वा । प्राधंशयदिवो देवो[1] मान्धातारं धराभुजम् ॥३३६२॥

अविप्लुतमतिर्भृत्यान्कृत्यौन्नत्यवतोन्वहम् । दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीयते नृपः ॥३३६३॥

कलशक्ष्मापतेः[1] प्राशोपशं[2] भृत्योस्य रिल्हणः । कुर्वन्स्वर्णातपत्राणां प्रतिष्ठां प्रीतिकार्यभूत् ॥३३६४॥

३३३९. [1]) Thus A : C बी भवेद्धलेशानां. ३३४०. [1]) Thus R C; $A_3$ भिक्षमक्षा°.—[2]) —[3]) Written by $A_3$ on new paper.—[3]) Thus $A_3$; C °वृत्त्या भुत°.—[4]) Emended; A स्वामिहत.—[5]) Thus A; C supplements तावपि. ३३४३. [1]) Doubtful emendation; A °मामाकष°. ३३४४. [1]) Emended with G (*sec. manu*); A निर्वाण.° ३३४६. [1]) Emended with C; A तुरुष्कामिषया°. ३३४७. [1])—[1]) Written by $A_3$ on new paper. ३३४८. [1])—[1]) Written by $A_3$ on new paper. ३३५१. [1]) Emended; A संरब्धे. ३३५५. [1]) Emended; A अनुजा. ३३५६. [1]) Emended; A त्रिप्राम्यामभ्यपातवत्; cf. यामेन सिन्धुत्रिप्राम्या वितस्ता दक्षिणेन तु v. 97. ३३५७. [1]) Emended; A प्रवेशत्र.—[2]) These two *pádas* and the following three verses are written by $A_3$ on new paper. ३३६०. [1]) Emended with C; $A_3$ R °मलसारं.—[2]) Emended; $A_3$ R °द्यानाद्युद्योति°. ३३६१. [1]) Doubtful emendation; A क्ष्मामुभुजो.—[2]) Emended; A °स्वमान्यस्यानां.—[3]) Emended; °विहारिण॰. ३३६२. [1]) Emended with C; A देवौ. ३३६४. [1]) Thus corr. by $A_1$ from °पतिः.—[2]) Thus A; cf. vii. 528 ffg.

स्वर्णपत्त्रं[1] सुरेभ्यर्यी शित्रयोः समवेतयोः । सदीपाराविकामत्रमैत्रीमेति सघण्टिकम् ॥३३६५॥ 3365
बन्धोर्हिमाद्रेरर्थिनः सुताजामातरौ शिवौ । स्वर्णच्छत्त्रच्छलान्मेरुर्मूर्ध्नाप्रातुमुपागतः ॥३३६६॥
उद्दिश्य यद्विदधतुर्ममास्मयोर्निर्दग्धो मयाङ्कघटनं दयितेन गौर्याः ।
सिद्धं तदत्र ---[1]मुमयेति हेमच्छत्त्रच्छलाङ्कुरदशधलितोभ्रिरूर्ध्वम् ॥३३६७॥
छत्त्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणीभेयोमन्दिरमूर्ध्नि नवमधुनादभ्रं परिभ्राजते ।
क्षैम्येन क्षतजावपानजनुषा नष्टं ततः स्वामिना प्राप्तं चक्रमवेक्षितुं स्वरुचिरं भास्वानिवाभ्यागतः ॥३३६८॥
तीर्थे मन्मथजित्स्वगध्वजदृढाजयोर्जितावार्यके साधाराभरणं क्रियापरिणति स्वर्णातपत्रं प्रभोः ।
भात्येकस्य शिखाहिफूत्कृतिवलद्गङ्गाम्बरेणूपगं[1] केशान्तस्थितमेघपार्श्वगतडित्पिण्डाभमन्यस्य च ॥३३६९॥
सौवर्णद्रुहिणाण्डकर्परपुरे संसूत्रिता छत्त्रकव्याकोशस्य समुद्गकप्रतिकृती दीर्घार्चित[1] घने ।
सङ्गेनेन्दुकिरीटकैटभरिपुश्यामासितालंक्रिया सद्मकरयोः पिधानकरणिं स्वर्णातपत्रं गतम् ॥३३७०॥ 3370
तं लोहरमहीपालमन्वजायन्त भूभुजः । रड्डादेव्या गुणोदाराश्चत्वारश्चतुराः[1] सुताः ॥३३७१॥
गुल्हणेनापरादित्यो राघवेणेव लक्ष्मणः । अभिन्नभावः संवृद्धिं वर्तते लोहरे भयन् ॥३३७२॥
ललितादित्यदेवेन[1] जयापीडो हि दारकः । भरतेनेव शत्रुघ्नः पाल्यमानः[2] प्रवर्तते ॥३३७३॥
पार्थिवाहस्करावाहनमस्काराद्यशस्करः । पञ्चमः क्षितिभृद्धर्म्यो बालातप इवोदितः ॥३३७४॥
चपलैः शैशवाच्छन्दानुभावस्वात्ससौष्ठवैः । लङ्घितैर्ललितादित्यो भिन्तीरप्यार्द्रयत्यहो ॥३३७५॥ 3375
दशरक्षाञ्जनं ताम्राधरं गौरं तदाननम् । सबालातपभृङ्गाङ्कस्वर्णपङ्केरुहायते[1] ॥३३७६॥
आलापास्तस्य माहात्म्यगर्भा बाल्यास्फुटा[1] अपि । अमृतार्द्रा इवोद्गारा मथ्यमानस्य वारिधेः ॥३३७७॥
महाभिजनसंजातो राजसूनुः स शैशवे । अभिधत्तेनुभावेन भव्येनागामि जृम्भितम् ॥३३७८॥
अत्यक्तमण्डनशिखण्डिशिखोपि तोयस्पर्शासहाञ्चितकलापिकलापभङ्ग्या ।
वापीं निपीतसलिलो वलितं प्रयाति चेष्टोक्तभावमहिमा बरवर्णिभावः ॥३३७९॥
यतस्रो मेनिला[1] राजलक्ष्मीः पद्मश्रिया समम् । संजाताः[2] कमला चास्य कन्याः सत्कृत्यवृत्तयः ॥३३८०॥ 3380
विनोदलीलोद्यानैस्तैर्नित्यकान्तैरपत्यकैः । वियोतितेनवद्यौ[1] तौ प्रावृट्पुष्पाकराविव ॥३३८१॥
तीर्थायतनपूतेस्मिन्मण्डलेखण्डितैर्व्ययैः । रड्डादेव्या एव याता भाग्यभावं विभूतयः ॥३३८२॥
कृतानुयात्रा सा दैवयात्रासु[1] क्षितिपाङ्गना । [2]राजलक्ष्मीरिवाभाति राजसामन्तमन्त्रिभिः ॥३३८३॥
सतीदेशे तीर्थसार्थास्त्यजन्त्यस्या निमज्जने । स्नानासक्तसतीमूर्तिस्पर्शनौत्सुक्यमञ्जसा ॥३३८४॥
चित्रे कालेत्र यात्रासु द्रष्टुं नृपचमूत्तरैः सदा । यत्प्रावृडिव ---[1]यं जीमूतैरनुगम्यते ॥३३८५॥ 3385

३३६५. [1]) Emended; A °पत्त्रं. ३३६७. [1]) Thus A; C करुणामुमयेति°.—[2]) The last *páda* and the following verse written by $A_3$. ३३६८. [1]) Emended with C; $A_5$ R चक्रमिवे°. ३३६९. [1]) Thus A; C °पगं. ३३७०. [1]) Thus A; C °र्चितार्थे घने. ३३७१. [1]) Emended with C; A °श्चतुरस्सुता:. ३३७३. [1]) Emended with C; A ललितालित्य°.—[2]) Emended with C; A पाल्यमान:. ३३७४. [1]) The last two *pádas* and the following verse written by $A_5$ on new paper. ३३७६. [1]) Emended with C; A °भृङ्गाङ्कास्वर्ण°. ३३७७. [1]) Emended; A बाल्यस्फुटा. ३३८०. [1]) Emended with C; A मैनिला; cf. viii. 3394, 3397.—[2]) Emended; A संजाता. ३३८१. [1]) Doubtful emendation; A वियोतत्राजवद्यौ; C योतितावनवद्यौ. ३३८३. [1]) Emended with C: A यात्रास्वपि?.—[2]) These two *pádas* and the first *páda* of the following verse are written by $A_6$ on new paper. ३३८५. [1]) Thus A; C supplements तैरयं.

सा पार्थिवेषु तीर्थेषु स्नानाय प्रस्थितां[1] ध्रुवम् । निष्ठ्यैर्वर्षमिवाशीर्थैः प्रादृश्येत तदीर्ष्यया ||३३८६||
अभ्रंलिहांश्च गिरींश्च कूलंकषा नदीः । मृदङ्गी दुर्गमा मार्गे तीर्थौत्सुक्येन वेक्ष्यती ||३३८७||
सुवर्णीभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया । तया चित्रं चतुरया पङ्कुर्दिष्टा विलङ्घिता ||३३८८||
अद्यापि विस्फुरत्क्षीरार्णवकान्तिच्छटाच्छलात् । यो भातीव सुधासृतिसितश्वेताश्मनिर्गतः ||३३८९||
उपमन्योरुदन्याया दारिद्र्योपद्रवापहः । दध्नो रुद्रेश्वरो नाम्ना श्रीमान्कश्मीरभूषणम् ||३३९०||
जगत्सौन्दर्यसारं स सत्वर्णामलसारकः । शान्तावसादप्रासादोद्धारश्च विहितस्तया ||३३९१||
सत्त्वानामिव भृत्यानां कोपौर्वविकृते नृपे । उदन्वतीव शरणं[1] सिन्धुर्हैमवतीव सा[2] ||३३९२||
स्थिरप्रसादे भूपाले निग्रहानुग्रही क्षणात् । भूभुजामपि संवृत्तावविच्छिन्नौ तदिच्छया ||३३९३||
सोमपालात्मजो भूभृद्भूपालः प्रापितस्तया । मानिन्या मेनिलादेव्या विवाहेन महार्हताम् ||३३९४||
उत्पत्ति[1]भूमिसुलभानुभवो न भूम्ना कस्याप्यहो व्यभिचरत्यनुभावभावः ।
तेजस्तमोविलुठनव्रतमुष्णभानोश्छेदं तदुत्थमकरोत्तमसोपि चक्रम् ||३३९५||
भुवनाद्भुतसाम्राज्यमार्जने[1] भूभुजाभवत् । प्रातिभाव्यं दृढं रत्नाक्रान्तसन्मण्डलावनिः ||३३९६||
ऊढायां मेनिलादेव्यां परिणेतुरभूदपि । पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः ||३३९७||
राज्ञः प्राजिधरस्याजौ नरसा भूभुजोनुजः । वैरिभिर्निहतस्याग्रे वैरसंशोधनोद्यतः ||३३९८||
राज्ञां शरणमेत्योग्रमानीलकंठ्यो घटोत्कचः । भेजे राज्यश्रियं प्राप्य चित्रं राज्यश्रियं पराम् ||३३९९|| कुलकम् ||
कृतसाहायकोमात्यै राज्ञः सप्रज्ञिमङ्गदम् । राज्यात्प्राभ्रंशयद्वानुवृत्तं पञ्चवटं[2] नृपम् ||३४००||
अलङ्घ्यसत्प्रभावात्स्फारदानाम्बुनिर्भरात् । सरितं खड्गवल्लीं च कृष्णां[1] विद्वेषिगोचराम् ||३४०१||
द्वितीयस्योरशाभर्तुरकीर्तिं निर्जयासृजत् । देवप्रभावाद्योधाममत्युग्रपुरमग्रहीत् ||३४०२||
शीतोष्णवारणशशिद्योतककोलितास्ततः । बहवो वाहिनीनाथाः प्रथामित्थं प्रपेदिरे ||३४०३||
समाहार्विंशती राज्यावाप्तेः प्राग्भूभुजो गता । तावत्येवाग्रराज्यस्य पञ्चविंशतिवत्सरे[1] ||३४०४||
इत्यदृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः । परिपाकमनोज्ञत्वं स्थेयाः कल्पातिगाः समाः ||३४०५||
अम्भोपि प्रवहत्स्वभावमशनैराश्यानमस्मायते प्रावाम्भः[1] स्रवति द्रवत्वमुदितोद्रेकेषु चावेयुषः ।
कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेद्भुते कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः ||३४०६||
प्रयाते त्र्यधिकेप्यर्धसमाषट्कशते कलेः । कश्मीरेष्वास्त गोनन्दः पार्थानां सेवया नृपः ||३४०७||
सूनुर्दामोदरो[1]स्याथ तस्य पत्नी यशोमती[2] । गोनन्दोन्यस्तत्सुतोपि ततोतीत्य महीपतीन्[3] ||३४०८||
पञ्चत्रिंशतमज्ञातानुपहाभिजनाभिधान् । राजाभवल्लवो[1] नाम सूनुस्तस्य कुशस्ततः ||३४०९||

---

३३८६. [1]) Emended; A प्रस्थितं. ३३९२. [1]) Emended with C; A सरणं.—[2]) The last *páda* and the following two verses written by A₃ on new paper. ३३९३. [1]) Emended; A₃ B C °विछन्नस्तावि°. ३३९५. [1]) Emended with C; A उत्पत्तिर्भू°. ३३९६. [1]) Emended; A °मार्जनो. ३३९९. [1]) Emended; A °स्त्रोणं मानीरक°. ३४००. [1]) Emended; A राज्य प्रा°.—[2]) Doubtful emendation, A °वटो. ३४०१. [1]) The last *páda* and the following verse written by A₃ on new paper. ३४०२. [1]) Doubtful emendation of G (*sec. manu*); A °कीर्तिनिज°. ३४०४. [1]) Emended with C; A °विंशतु व°. ३४०६. [1]) Emended with C; A प्रावोम्भः. ३४०८ [1]) Emended with C; A दामोदरस्याथ.—[2]) Comp. यशोवती i. 70.—[3]) Emended with C; A °पती. ३४०९. [1]) Emended with C; A राजा वलभको; cf. अथाभवल्लवो नाम i. 84.

द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु । गोधरीयान्यकुलजः सुवर्णाख्यस्तदात्मजः[1] ॥३४१०॥
तज्जन्मा जनकोप्यासीत्सूनुः शच्याः शचीनरः । अथाशोकोभवद्भूभृच्छोस्य प्रपितृव्यजः ॥३४११॥
तज्जो जलौकाः संदिग्धवंशो[1] दामोदरस्ततः । तुल्यं त्रयोथ हुष्काद्यास्तुरुष्काभिजनोद्भवाः ॥३४१२॥
अभिमन्युस्तृतीयोथ गोनन्दोस्य विभीषणः । राजेन्द्रजिद्रावणश्च --चः क्रमशोभवत्[1] ॥३४१३॥
अन्यो विभीषणः[1] सिद्ध उत्पलाक्षश्च[2] तदनु[3] । पश्चात्ततो हिरण्याक्षहिरण्यकुलयोरभूत्[4] ॥३४१४॥
राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा[1] । क्षितिनन्दो बकात्तज्जाद्वसुनन्दस्तदात्मजः[2] ॥३४१५॥
नरोन्योक्षस्ततस्तस्माद्गोप्ता गोकर्णकौ नृपात् । तस्मान्नरेन्द्रादित्योभूत्सूनुरन्धयुधिष्ठिरः ॥३४१६॥
तस्य प्रांशितो भृत्यैरन्याभिजनसंभवः । भूपः प्रतापादित्योभूज्जलौकोपि तदात्मजः ॥३४१७॥
तुञ्जीने[1] निःसुते तज्जे विजयोन्यकुलोद्भवः । जयेन्द्रेस्य सुतेपुत्रे[2] सचिवः संधिमानभूत् ॥३४१८॥
युधिष्ठिरस्य पौत्रेण भूपादित्यात्मजन्मना । श्रीमेघवाहनेनाथ[1] गोनन्दे[2]भ्युदितं कुले[3] ॥३४१९॥
............................. । ............................. ॥
ततः प्रवरसेनोन्यस्तोरमाणात्मजः[1] क्षितिम् । लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिरः[2] ॥३४२०॥
ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः । क्रमादभूतां तत्पुत्रो विक्रमादित्यभूपतिः[1] ॥३४२१॥
बालादित्यश्चोदभवद्[1]रणादित्यस्य[2] नन्दनः । बालादित्यस्य जामाता ततो दुर्लभवर्धनः ॥३४२२॥
सूनुर्दुर्लभकस्तस्य चन्द्रापीडोभवत्ततः । तारापीडोनुजन्मा च मुक्तापीडोस्य[1] चानुजः ॥३४२३॥
भूपावास्तां कुवलयापीडो वैमातुरोस्य च । वज्रादित्यः सुतौ राज्ञो मुक्तापीडस्य तत्सुतौ ॥३४२४॥
पृथिव्यापीडसंग्रामापीडावनु नृपोभवत् । जयापीडोस्य मन्त्री च जज्जः[1] पुत्रावपि क्रमात् ॥३४२५॥
ललितापीडसंग्रामापीडौ[1] ज्येष्ठात्मजस्ततः । श्रीचिप्पटजयापीडः कल्यपाल्युद्भवोभवत् ॥३४२६॥
अभिचारेण तं हत्वा सांमत्यादितरेतरम् । उत्पलाद्यैरसंप्राप्तराज्यैस्तन्मातुलैः कृतः ॥३४२७॥
भ्रातुः पुत्रोजितापीडो जयापीडस्य तत्पदे । अनङ्गापीडनामा च संग्रामापीडजस्ततः ॥३४२८॥
तमुत्पाट्योत्पलापीडोस्याजितापीडनन्दनः । अवन्तिवर्मा शूरेण[1] तं निवार्याथ मन्त्रिणा ॥३४२९॥

३४१०. [1]) The last three *pádas* and the following verse are no longer found in A as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Emended with C; R G (*prima manu*) सुवर्णाकृत्स्ना°; cf. i. 97. ३४१२. [1]) Emended; R C °वंशो; the upper strokes of the letters are not legible in A. ३४१३. [1]) Thus A; C पितापुत्रौ क्रमान्नृपौ. ३४१४. [1]) Here the name of NARA is omitted.—[2]) Emended; A उत्पलाक्षश्च.—[3]) Thus A; doubtful.—[4]) Emended; A हिरण्याक्षोहिरण्यकुलयोर°. ३४१५. [1]) C inserts here two *pádas* श्रीमिहिरकुलो राजा बकाख्यस्तदनन्तरं.—[2]) Emended; A क्षितिनन्दो बकात्मजात्तद्°. ३४१८. [1]) Emended; A तुञ्जने; cf. ii. 11.—[2]) Emended; A जयेन्द्रस्य- -पुत्रे; C जयेन्द्रस्तत्सुतोऽपुत्रः. ३४१९. [1]) Thus A; but compare ii. 145 ffg.—[2]) Emended with C; A गोनन्दाभ्युदितं.—[3]) After this verse C inserts the following: ततः प्रवरसेनोभूद्भूपः काश्मीरमण्डले ॥ तत्सूनुश्च हिरण्योऽभूत् पालयन् क्षितिमण्डलं । मातृगुप्तोऽभवद्राजा तस्मिन् राज्यस्थितेन राज्ञा ॥. One verse containing the names of PRAVARASENA I., HIRANYA and MÁTRIGUPTA appears to have been omitted here by A. ३४२०. [1]) The remaining portion of this verse, the following verse and the first *páda* of verse 3422 are no longer found in A, as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Thus C; R पुत्रो -धिष्ठिरात्, corr. *sec. manu* as above; G पुत्राद्युधिष्ठिरात्. ३४२१. [1]) Thus C R; G ततश्च विक्रमादित्य उर्वरीत्. ३४२२. [1]) Thus C R; G °स्यश्चोदभवद्रणा°.—[2]) Emended with R G; A °दित्यश्च दै°. ३४२३. [1]) Thus C; R G °पीडस्य; in A three *aksharas* after मुक्ता have become illegible. ३४२५. [1]) Emended with C; A जज्जपुत्रावपि. ३४२६. [1]) Emended with C; A °पीडज्येष्ठा.° ३४२७. [1]) Emended with C; A सम्मत्या°. ३४२९. [1]) Here ends the text of A at the foot of fol. 327 *rev.*, the last leaf of the MS. being lost. The text of the remaining verses is given from R G.

